# श्रीमहाभारतम्।




## अनुशासनपर्व।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

युधिष्ठिर उवाच। शमो बहुविधाकारः सूक्ष्म उक्तः पितामह। न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम्॥ १॥ अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह। स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि॥ २॥ शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च। शर्म्म नोपलभे वीर दुष्कृतान्येव चिन्तयन्॥ ३॥ रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम्। त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम्॥ ४॥ अतः कष्टतरं किन्नु मत्कृते यत् पितामह। इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे॥ ५॥ तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः। मत्कृते निधनं प्राप्ताः किन्नु कष्टतरं ततः॥ ६॥ वयं हि धार्त्तराष्ट्राश्च कालमन्युवशं गताः। कृत्वेदं निन्दितं कर्म्म प्राप्स्यामः कां गतिं नृप॥ ७॥ इदन्तु धार्त्तराष्ट्रस्य श्रेयो मन्ये जनाधिप। इमामवस्थां संप्राप्तं यदसौ त्वां न पश्यति॥ ८॥ सोऽहं तव ह्यन्तकरः सुहृद्वधकरस्तथा। न शान्तिमधिगच्छामि पश्यं स्त्वां दुःखितं क्षितौ॥ ९॥ दुर्य्योधनो हि समरे सहसैन्यः सहानुजः। निहतः क्षत्रधर्म्मेऽस्मिन् दुरात्मा कुलपांसनः॥ १०॥ न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ।

अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः ॥ ११ ॥ अहं हि समरे वीर गमितः शत्रुभिः क्षयम्। अभविष्यं यदि पुरा सह भ्रातृभिरच्युत ॥ १२ ॥ न त्वामेवं सुदुःखार्त्तमद्राक्षं सायकार्द्दितम्। नूनं हि पापकर्म्माणो धात्रा सृष्टाः स्म हे नृप ॥ १३ ॥ अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्विषात्। तथा प्रशाधि मां राजन् मम चेदिच्छसि प्रियम् ॥ १४ ॥

भीष्म उवाच। परतन्त्रं कथं हेतुमात्मानमनुपश्यसि। कर्म्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ १५ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। सम्वादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ १६ ॥ गौतमी नाम कौन्तेय स्थविरा शमसंयुता। सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥ १७ ॥ अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः। लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥१८॥ स चाब्रवीदयन्ते स पुत्रहा पन्नगाधमः। ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥ १९ ॥ अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा। न ह्ययं बालहा पापं चिरं जीवितुमर्हति ॥ २० ॥

गौतम्युवाच। विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया। को ह्यात्मानं गुरुं कुर्य्यात् प्राप्तव्यमविचिन्तयन् ॥ २१ ॥ प्लवन्ते धर्म्मलघवो लोकेऽम्भसि यथा प्लवाः। मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ २२ ॥ हत्वा चैनं नामृतः स्यादयं मे जीवत्यस्मिन् कोऽत्ययः स्यादयन्ते। अस्योत्सर्गे प्राणयुक्तस्य जन्तोर्मृत्योर्लोकं को नु गच्छेदनन्तं ॥ २३ ॥

लुब्धक उवाच। जानाम्यहं देवि गुणागुणज्ञे सर्वार्त्तियुक्ता गुरवो भवन्ति। स्वस्थस्यैते तूपदेशा भवन्ति तस्मात् क्षुद्रं सर्पमेनं हनिष्ये ॥ २४ ॥ शमार्थिनः कालगतिं वदन्ति सद्यः शुचन्त्वर्थविदस्त्यजन्ति। श्रेयःक्षयं शोचति नित्यमोहात्तस्माच्छुचं मुञ्च हते भुजङ्गे ॥ २५ ॥

गौतम्युवाच । आर्त्तिर्नैवं विद्यतेऽस्मद्विधानां धर्म्मात्मानः सर्व्वदा सज्जना हि । नित्यायस्तो बालकोऽप्यस्य तस्माद्दीशे नाहं पन्नगस्य प्रमाथे ॥ २६ ॥ न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना । मार्द्दवात् क्षम्यतां साधो मुच्यतामेष पन्नगः ॥ २७ ॥

लुब्धक उवाच । हत्वा लाभः श्रेय एवाव्ययः स्याल्लभ्यो लाभः स्याद्बलिभ्यः प्रशस्तः । कालाल्लाभो यस्तु सद्यो भवेत श्रेयोलाभः कुत्सितेऽस्मिन्न ते स्यात् ॥ २८ ॥

गौतम्युवाच । का नु प्राप्तिर्गृह्य शत्रुं निहत्य का कामाप्तिः प्राप्य शत्रुं न मुक्त्वा । कस्मात् सोम्याहं न क्षमे नो भुजङ्गे मोक्षार्थं वा कस्य हेतोर्न कुर्य्याम् ॥ २९

लुब्धक उवाच । अस्मादेकाद्बहवो रक्षितव्या नैको बहुभ्यो गौतमि रक्षितव्यः । कृतागसं धर्म्मविदस्त्यजन्ति सरीसृपं पापमिमं जहि त्वम् ॥ ३० ॥

गौतम्युवाच । नास्मिन् हते पन्नगे पुत्रको मे संप्राप्स्यते लुब्धक जीवितं वै । गुणञ्चान्यं नास्य वधे प्रपश्ये तस्मात् सर्पं लुब्धक मुञ्च जीवम् ॥ ३१ ॥

लुब्धक उवाच । वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै यज्ञं हत्वा भागमवाप चैव । शूली देवो देववृत्तञ्चर त्वं क्षिप्रं सर्पं जहि मा भूत्ते विशङ्का ॥ ३२ ॥

भीष्म उवाच । असकृत् प्रोच्यमानापि गौतमी भुजगं प्रति । लुब्धकेन महाभागा पापे नैवाकरोन्मतिम् ॥ ३३ ॥ ईषद्‌दुच्छ्वसमानस्तु कृच्छ्रात् संस्तभ्य पन्नगः । उत्ससर्ज्ज गिरं मन्दां मानुषीं पाशपीड़ितः ॥ ३४ ॥

सर्प उवाच । को न्वर्ज्जुनक दोषोऽत्र विद्यते मम बालिश । अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥ ३५ ॥ तस्यायं वचना-

दृष्टो न कोपेन न काम्यया। तस्य तत् किल्बिषं लुब्ध विद्यते यदि किल्बिषम्॥ ३६॥

लुब्धक उवाच। यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम्। कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी॥ ३७॥ मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा। कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग॥ ३८॥ किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग। आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम॥ ३९॥

सर्प उवाच। सर्वे एते ह्यस्ववशा दण्डचक्रादयो यथा। तथाहमपि तस्मान्मे नैष दोषो मतस्तव॥ ४०॥ अथवा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः। कार्य्यकारणसन्देहो भवत्यन्योन्यचोदनात्॥ ४१॥ एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी। किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम्॥ ४२॥

लुब्धक उवाच। कारणं यदि न स्याद्वै न कर्त्ता स्यास्त्वमप्युत। विनाशकारणं त्वञ्च तस्माद्वध्योऽसि मे मतः॥ ४३॥ असत्यपि कृते कार्य्ये नेह पन्नग लिप्यते। तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहु मन्यसे॥ ४४॥

सर्प उवाच। कार्य्याभावे क्रिया नस्यात् सत्यसत्यपि कारणे। तस्मात् समेऽस्मिन् हेतौ मे वाच्यो हेतुर्विशेषतः॥ ४५॥ यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः। अन्यः प्रयोगे स्यादत्र किल्बिषी जन्तुनाशने॥ ४६॥

लुब्धक उवाच। वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत्। भाषसे किं बहु पुनर्वध्यः सन् पन्नगाधम॥ ४७॥

सर्प उवाच। यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः। न फलं प्राप्नुवन्त्यत्र फलयोगी तथा ह्यहम्॥ ४८॥

भीष्म उवाच। तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते। आजगाम ततो मृत्युः पन्नगञ्चाब्रवीदिदम्॥ ४९॥

मृत्युरुवाच। प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम्। विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः ॥ ५० ॥ यथा वायुर्जलधरान् विकर्षति ततस्ततः। तद्वज्जलदवत् सर्प कालस्याहं वशानुगः ॥ ५१ ॥ सात्त्विका राजसाश्चैव तामसा ये च केचन। भावाः कालात्मकाः सर्व्वे प्रवर्त्तन्तेह जन्तुषु ॥ ५२ ॥ जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि। सर्व्वे कालात्मकाः सर्प कालात्मकमिदं जगत् ॥ ५३ ॥ प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तयः। तासां विकृतयो याश्च सर्व्वं कालात्मकं स्मृतम् ॥ ५४ ॥ आदित्यश्चन्द्रमा विष्णुरापो वायुः शतक्रतुः। अग्निः खं पृथिवी मित्रः पर्ज्जन्यो वसवोऽदितिः ॥ ५५ ॥ सरितः सागराश्चैव भावाभावौ च पन्नग। सर्व्वे कालेन सृज्यन्ते ह्रियन्ते च पुनः पुनः ॥५६॥ एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे। अथ चैवं गते दोषो मयि त्वमपि दोषवान् ॥ ५७ ॥

सर्प उवाच। निर्द्दोषं दोषवन्तं वा न त्वां मृत्यो ब्रवीम्यहम्। त्वयाहं चोदित इति ब्रवीम्येतावदेव तु ॥ ५८ ॥ यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते। दोषो नैव परीक्ष्योमे न ह्यत्राधिकृता वयम् ॥ ५९ ॥ निर्म्मोक्षस्त्वस्य दोषस्य मया कार्य्यो यथा तथा। मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनम् ॥ ६० ॥

भीष्म उवाच। सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम्। नानागसं मां पाशेन सन्तापयितुमर्हसि ॥ ६१ ॥

लुब्धक उवाच। मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम। नैव तावददोषत्वं भवति त्वयि पन्नग ॥ ६२ ॥ मृत्युस्त्वञ्चैव हेतुर्हि बालस्यास्य विनाशने। उभयं कारणं मन्ये न कारणमकारणम् ॥ ६३ ॥ धिङ्मृत्युञ्च दुरात्मानं क्रूरं दुःखकरं सताम्। त्वाञ्चैवाहं वधिष्यामि पापं पापस्य कारणम् ॥ ६४ ॥

मृत्युरुवाच। विवशौ कालवशगावावां निर्द्दिष्टकारिणौ। नावां दोषेण मन्तव्यौ यदि सम्यक् प्रपश्यसि ॥ ६५ ॥

लुब्धक उवाच। युवानुभौ कालवशौ यदि मे मृत्युपन्नगौ। हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुम् ॥ ६६ ॥

मृत्युरुवाच। या काचिदेव चेष्टा स्यात् सर्वकालप्रचोदिता। पूर्वमेवैतदुक्तं हि मया लुब्धक कालतः ॥ ६७ ॥ तस्मादुभौ कालवशावावां निर्द्दिष्टकारिणौ। नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ॥ ६८ ॥

भीष्म उवाच। अथोपगम्य कालस्तु तस्मिन् धर्मार्थसंशये। अब्रवीत् पन्नगं मृत्युं लुब्धञ्चार्जुनकं तथा ॥ ६९ ॥

काल उवाच। न ह्यहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः। किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः ॥ ७० ॥ अकरोद्यदयं कर्म्म तन्नोऽर्जुनक चोदकं। विनाशहेतुर्नान्योऽस्य वध्यतेयं स्वकर्म्मणा ॥ ७१ ॥ यदनेन कृतं कर्म्म तेनायं निधनं गतः। विनाशहेतुः कर्म्मास्य सर्वे कर्म्मवशा वयं ॥ ७२ ॥ कर्म्मदायादवाल्लोकः कर्म्मसम्बन्धलक्षणः। कर्म्माणि चोदयन्तीह यथान्योन्यं तथा वयं ॥ ७३ ॥ यथा मृत्पिण्डतः कर्त्ता कुरुते यद्यदिच्छति। एवमात्मकृतं कर्म्म मानवः प्रतिपद्यते ॥ ७४ ॥ यथा छायातपौ नित्यं सुसम्बद्धौ निरन्तरं। तथा कर्म्म च कर्त्ता च सम्बद्धावात्मकर्म्मभिः ॥ ७५ ॥ एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान्। न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणं ॥ ७६ ॥ तस्मिं तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप। स्वकर्म्मप्रत्ययांल्लोकान्मत्वार्जुनकमब्रवीत् ॥ ७७ ॥

गौतम्युवाच। नैव कालो न भुजगो न मृत्युरिह कारणम्। स्वकर्म्मभिरयं बालः कालेन निधनं गतः ॥ ७८ ॥ मया च तत् कृतं कर्म्म येनायं मे मृतः सुतः। यातु कालस्तथा मृत्युर्म्मुञ्चार्जुनक पन्नगम् ॥ ७९ ॥

भीष्म उवाच । ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः । अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी ॥ ८० ॥ एतच्छ्रुत्वा शमं गच्छ मा भूः शोकपरो नृप । स्वकर्म्मप्रत्ययांल्लोकान् सर्व्वे गच्छन्ति वै नृप ॥ ८१ ॥ नैव त्वया कृतं कर्म नापि दुर्य्योधनेन वै । कालेन तत् कृतं विद्धि निहता येन पार्थिवाः ॥ ८२ ॥

वैशम्पायन उवाच । इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः । युधिष्ठिरो महातेजाः पप्रच्छेदञ्च धर्मवित् ॥ ८७ ॥

इत्यनुशासनपर्वणि आनुशासनिकेपर्वणि गौतमीलुब्धकव्यालमृत्युकालसम्वादे प्रथमोऽध्यायः ॥ १ ॥

---

युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्वशास्त्रविशारद । श्रुतं मे महदाख्यानमिदं मतिमताम्वर ॥ १ ॥ भूयस्तु श्रोतुमिच्छामि धर्म्मार्थसहितं नृप । कथ्यमानं त्वया किञ्चित्तन्मे व्याख्यातुमर्हसि ॥ २ ॥ केन मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्ज्जितः । इत्येतत् सर्वमाचक्ष्व तत्त्वेनापि च पार्थिव ॥ ३ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । यथा मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्ज्जितः ॥ ४ ॥ मनोः प्रजापते राजन्निक्ष्वाकुरभवत् सुतः । तस्य पुत्रशतं जज्ञे नृपतेः सूर्य्यवर्च्चसः ॥५॥ दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत । माहिष्मत्यामभूद्राजा धर्म्मात्मा सत्यविक्रमः ॥ ६ ॥ दशाश्वस्य सुतस्त्वासीद्राजा परमधार्म्मिकः । सतेत्र तपसि दाने च यस्य नितंत्र रतं मनः ॥ ७ ॥ मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः । धनुर्वेदे च वेदे च निरतो योऽभवत् सदा ॥ ८ ॥ मदिराश्वस्य पुत्रस्तु द्युतिमान्नाम पार्थिवः । महाभागो महातेजा महासत्त्वो महाबलः ॥ ९ ॥ पुत्रो द्युतिमतस्त्वासीद्राजा परमधार्मिकः । सर्वलोकेषु विख्यातः

सुवीरो नाम नामतः। धर्म्मात्मा कोषवांश्चापि देवराज इवापरः ॥ १० ॥ सुवीरस्य तु पुत्रोऽभूत् सर्व्वसंग्रामदुर्ज्जयः। सुदुर्ज्जय इति ख्यातः सर्व्वशस्त्रभृताम्वरः ॥ ११ ॥ दुर्ज्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः। दुर्य्योधनो नाम महान् राजा राजर्षिसत्तमः ॥ १२ ॥ तस्येन्द्रसमवीर्य्यस्य संग्रामेष्वनिवर्त्तिनः। विषये वासवस्तस्य सम्यगेव प्रवर्षति ॥ १३ ॥ रत्नैर्धनैश्च पशुभिः शस्यैश्चापि पृथग्विधैः। नगरं विषयश्चास्य परिपूर्णस्तदाभवत् ॥ १४ ॥ न तस्य विषये चाभूत् कृपणो नापि दुर्गतः। व्याधितो वा कृशो वापि तस्मिन्नाभून्नरः क्वचित् ॥ १५ ॥ सुदक्षिणो मधुरवागनसूयुर्ज्जितेन्द्रियः। धर्म्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः ॥१६॥ यज्वा च दान्तो मेधावी ब्रह्मण्यः सत्यसङ्गरः। न चावमन्ता दाता च वेदवेदान्तपारगः ॥ १७ ॥ तं नर्मदा देवनदी पुण्या शीतजला शिवा। चकमे पुरुषव्याघ्रं स्वेन भावेन भारत ॥ १८ ॥ तस्यां जज्ञे तदा नद्यां कन्या राजीवलोचना। नाम्ना सुदर्शना राजन् रूपेण च सुदर्शना ॥ १९ ॥ तादृग्रूपा न नारीषु भूतपूर्व्वा युधिष्ठिर। दुर्य्योधनसुता यादृगभवद्वरवर्णिनी ॥ २० ॥ ताम-ग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम्। भूत्वा च ब्राह्मणो राजन् वरयामास तं नृपम् ॥२१॥ दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः। न दित्सति सुतां तस्मै तां विप्राय सुदर्शनाम् ॥ २२ ॥ ततोऽस्य वितते यज्ञे नष्टोऽभूद्धव्यवाहनः। ततः सुदुःखितो राजा वाक्यमाह द्विजांस्तदा ॥ २३ ॥ दुष्कृतं मम किं नु स्यात् भवतां वा द्विजर्षभाः। येन नाशं जगामाग्निः कृतं कुपुरुषेष्विव ॥ २४ ॥ न ह्यल्पं दुष्कृतं नोऽस्ति येनाग्निर्नाशमागतः। भवताञ्चाथ वा मह्यं तत्त्वेनैतद्विमृश्यताम् ॥ २५ ॥ तत्र राज्ञो वचः श्रुत्वा विप्रास्ते भरतर्षभ। नियता वाग्यताश्चैव पावकं शरणं ययुः ॥ २६ ॥ तान् दर्शयामास तदा भगवान् हव्यवाहनः। स्वरूपं दीप्तिमत्

श्रुत्वा शरदर्कसमद्युतिः ॥ २७ ॥ ततो महात्मा तानाह दहनो ब्राह्मणर्षभान् । वरयाम्यात्मनोऽर्थाय दुर्य्योधनसुतामिति ॥ २८ ॥ ततस्ते कल्यमुत्थाय तस्मै राज्ञे न्यवेदयन् । ब्राह्मणा विस्मिताः सर्व्वे यदुक्तं चित्रभानुना ॥ २९ ॥ ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम् । अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान् ॥ ३० ॥ अयाचत वरं शुल्कं भगवन्तं विभावसुम् । नित्यं सान्निध्यमिह ते चित्रभानो भवेदिति ॥ ३१ ॥ तमाह भगवानग्निरेवमस्त्विति पार्थिवम् । ततः सान्निध्यमद्यापि माहिष्मत्यां विभावसोः ॥ ३२ ॥ दृष्टं हि सहदेवेन दिशं विजयता तदा । ततस्तां समलङ्कृत्य कन्यामाहतवाससम् ॥ ३३ ॥ ददौ दुर्य्योधनो राजा पावकाय महात्मने । प्रतिजग्राह चाग्निस्तु राजकन्यां सुदर्शनाम् ॥ ३४ ॥ विधिना वेददृष्टेन वसोर्धारामिवाध्वरे । तस्या रूपेण शीलेन कुलेन वपुषा श्रिया ॥ ३५ ॥ अभवत् प्रीतिमानग्निर्गर्भं चास्या मनो दधे । तस्यां समभवत् पुत्रो नामाग्नेयः सुदर्शनः ॥ ३६ ॥ सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः । शिशुरेवाध्यगात् सर्व्वं परं ब्रह्म सनातनम् ॥ ३७ ॥ अथौघवान्नाम नृपो नृगस्यासीत् पितामहः । तस्याथौघवती कन्या पुत्रश्चौघरथोऽभवत् ॥ ३८ ॥ तामोघवान् ददौ तस्मै स्वयमोघवतीं सुताम् । सुदर्शनाय विदुषे भार्य्यार्थे देवरूपिणीम् ॥ ३९ ॥ स गृहस्थाश्रमरतस्तया सह सुदर्शनः । कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः ॥ ४० ॥ गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो । प्रतिज्ञामकरोद्धीमान् दीप्ततेजा विशाम्पते ॥ ४१ ॥ तामथौघवतीं राजन् स पावकसुतोऽब्रवीत् । अतिथेः प्रतिकूलन्ते न कर्त्तव्यं कथञ्चन ॥ ४२ ॥ येन येन च तुष्येत नित्यमेव त्वयातिथिः । अप्यात्मनः प्रदानेन न ते कार्य्या विचारणा ॥ ४३ ॥ एतद्व्रतं मम सदा हृदि संपरिवर्त्तते । गृहस्थानाञ्च सुश्रोणि

नातिथेर्विद्यते परम् ॥ ४४ ॥ प्रमाणं यदि वामोरु वचस्ते मम शोभने । इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ॥ ४५ ॥ निष्क्रान्ते मयि कल्याणि तथा सन्निहितेऽनघे । नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ॥ ४६ ॥ तमब्रवीदोघवती तथा मूर्द्ध्नि कृताञ्जलिः । न मे त्वद्वचनात् किञ्चिदकर्त्तव्यं कथञ्चन ॥ ४७ ॥ जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम् । पृष्ठतोऽन्वगमद्राजन् रन्ध्रान्वेषी तदा सदा ॥ ४८ ॥ इध्मार्थन्तु गते तस्मिन्नग्निपुत्रे सुदर्शने । अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ॥ ४९॥ आतिथ्यं कृतमिच्छामि त्वयाद्य वरवर्णिनि । प्रमाणं यदि धर्म्मस्ते गृहस्थाश्रमसम्मतः ॥ ५० ॥ इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी । विधिना प्रतिजग्राह वेदोक्तेन विशाम्पते ॥ ५१ ॥ आसनञ्चैव पाद्यञ्च तस्मै दत्त्वा द्विजातये । प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते ॥ ५२ ॥ तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनाम् । त्वया ममार्थः कल्याणि निर्विशङ्कैतदाचर ॥ ५३ ॥ यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसम्मतः । प्रदानेनात्मनो राज्ञि कर्त्तुमर्हसि मे प्रियम् ॥ ५४ ॥ स तया छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया । नान्यमात्मप्रदानात् स तस्या वव्रे वरं द्विजः ॥ ५५ ॥ सा तु राजसुता स्मृत्वा भर्त्तुर्वचनमादितः । तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ॥ ५६ ॥ ततो विहस्य विप्रर्षिः सा चैवोपविवेश ह । संस्मृत्य भर्त्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः ॥ ५७ ॥ अथेध्मानमुपादाय स पावकिरुपागमत् । मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ॥ ५८ ॥ ततस्त्वाश्रममागम्य स पावकसुतस्तदा । तां व्याजहारौघवतीं क्वासि यातेति चासकृत् ॥ ५९ ॥ तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा । कराभ्यां तेन विप्रेण स्पृष्टा भर्त्तृव्रता सती ॥ ६० ॥ उच्छिष्टास्मीति मन्वाना लज्जिता भर्त्तुरेव च । तूष्णीं भूत्वाभवत् साध्वी न चोवाचाथ किञ्चन ॥ ६१ ॥ अथ तां

पुनरेवेदं प्रोवाच स सुदर्शनः । क्व सा साध्वी क्व वा याता गरीयः किमतो मम ॥ ६२ ॥ पतिव्रता सत्यशीला नित्यञ्चैवार्जवे रता । कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा ॥ ६३ ॥ उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् । अतिथिं विद्धि सम्प्राप्तं ब्राह्मणं पावकेः च माम् ॥ ६४ ॥ अनया छन्द्यमानोऽहं भार्य्यया तव सत्तम । तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया ॥ ६५ ॥ अनेन विधिना सेयं मामर्च्चति शुभानना । अनुरूपं यदत्रान्यत्तद्भवान् कर्त्तुमर्हसि ॥ ६६ ॥ कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वगात् । हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् ॥ ६७ ॥ सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा । त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ॥ ६८ ॥ सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम । गृहस्थस्य हि धर्मोऽग्र्यः सम्प्राप्तोऽतिथिपूजनम् ॥ ६९ ॥ अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति । नान्यस्तस्मात् परो धर्म इति प्राहुर्मनीषिणः ॥ ७० ॥ प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु । अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ॥ ७१ ॥ निःसन्दिग्धं यथा वाक्यमेतन्मे समुदाहृतम् । तेनाहं विप्र सत्येन स्वयमात्मानमालभे ॥ ७२ ॥ पृथिवीवायुराकाशमापो ज्योतिश्च पञ्चमम् । बुद्धिरात्मा मन कालो दिशश्चैव गुणा दश ॥ ७३ ॥ नित्यमेव हि पश्यन्ति देहिनां देहसंश्रिताः । सुकृतं दुष्कृतं वापि कर्म धर्मभृताम्वर ॥ ७४ ॥ यथैषा नानृता वाणी मयाद्य समुदीरिता । तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ॥ ७५ ॥ ततो नादः समभवद्दिक्षु सर्वासु भारत । असकृत् सत्यमित्येवं नैतन्मिथ्येति सर्वतः ॥ ७५ ॥ उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः । वपुषा द्याञ्च भूमिञ्च व्याप्य वायुरिवोद्यतः ॥ ७७ ॥ स्वरेण विप्रः शैक्ष्येण त्रींल्लोकाननुनादयन् । उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ॥ ७८ ॥ धर्मोऽहमस्मि भद्रन्ते जिज्ञासार्थं तवानघ । प्राप्तः सत्यञ्च ते ज्ञात्वा प्रीतिर्मे

परमा त्वयि ॥ ७९ ॥ विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति । रन्ध्रान्वेषी तव सदा त्वया धृतत्या वशीकृतः ॥ ८० ॥ न चास्ति शक्तिस्त्रैलोक्ये कस्यचित् पुरुषोत्तम । पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ॥ ८१ ॥ रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा । अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् ॥ ८२ ॥ एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी । पावनार्थञ्च लोकस्य सरिच्छ्रेष्ठा भविष्यति ॥ ८३ ॥ अनेन चैव देहेन लोकांस्त्वमिह पत्स्यसे । अर्द्धेनौघवती नाम त्वामर्द्धेनानुयास्यति ॥ ८४ ॥ शरीरेण महाभागा योगो ह्यस्या वशे स्थितः । अनया सह लोकांश्च गन्तासि तपसार्ज्जितान् ॥ ८५ ॥ यत्र नावृत्तिमभ्येति शाश्वतांस्तान् सनातनान् । अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे ॥ ८६ ॥ निर्ज्जितश्च त्वया मृत्युरैश्वर्य्यञ्च तवोत्तमम् । पञ्चभूतान्यतिक्रान्तः स्ववीर्य्याच्च मनोजवः ॥ ८७ ॥ गृहस्थधर्म्मेणानेन कामक्रोधौ च ते जितौ । स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः । तव शुश्रूषया राजन् राजपुत्त्र्या विनिर्ज्जिताः ॥ ८८ ॥

भीष्म उवाच । शुक्लानान्तु सहस्रेण वाजिनां रथमुत्तमम् । युक्तं प्रगृह्य भगवान् वासवोऽथाजगाम तम् ॥ ८९ ॥ मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च । बुद्धिः कालो मनो व्योम कामक्रोधौ तथैव च ॥ ९० ॥ तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै । ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ ९१ ॥ अतिथिः पूजितो यद्धि ध्यायते मनसा शुभम् । न तत् क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥ ९२ ॥ पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ ९३ ॥ एतत्ते कथितं पुत्र मयाख्यानमनुत्तमम् । यथा हि विजितो मृत्युर्गृहस्थेन पुराभवत् ॥ ९४ ॥ धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम् । बुभूषताभिमन्तव्यं सर्व्वदुश्चरितापहम् ॥ ९५ ॥ इदं यः

कथयेद्विद्वानद्भन्यद्दानि भारत । सुदर्शनस्य चरितं पुण्यान् लोका-
नवाप्नुयात् ॥ ९६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि सुदर्शनोपाख्याने
द्वितीयोऽध्यायः ॥ २ ॥

---

युधिष्ठिर उवाच । ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नरा-
धिप । कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ १ ॥ विश्वा-
मित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ । श्रोतुमिच्छामि तत्त्वेन तन्मे
ब्रूहि पितामह ॥ २ ॥ तेन ह्यमितवीर्य्येण वशिष्ठस्य महात्मनः ।
हतं पुत्रशतं सद्यस्तपसापि पितामह ॥ ३ ॥ यातुधानाश्च बहवो
राक्षसास्तिग्मतेजस । मन्युनाविष्टदेहेन सृष्टाः कालान्तकोपमाः
॥ ४ ॥ महान् कुशिकवंशश्च ब्रह्मर्षिशतसङ्कुलः । स्थापितो नर-
लोकेऽस्मिन् विद्वान् ब्राह्मणसंस्तुतः ॥ ५ ॥ ऋचीकस्यात्मजश्चैव
शुनःशेफो महातपाः । विमोचितो महासत्रात् पशुतामभ्युपागतः
॥ ६ ॥ हरिश्चन्द्र क्रतौ देवांस्तोषयित्वात्मतेजसा । पुत्रतामनु-
सम्प्राप्तो विश्वामित्रस्य धीमतः ॥ ७ ॥ नाभिवादयते ज्येष्ठं देव-
रातं नराधिपम् । पुत्राः पञ्चाशदेवापि शप्ताः श्वपचतां गताः ॥८॥
त्रिशङ्कुर्बन्धुभिर्मुक्त ऐक्ष्वाकुः प्रीतिपूर्वकम् । अवाक्शिरा दिवं
नीतो दक्षिणामाश्रितो दिशम् ॥ ९ ॥ विश्वामित्रस्य विपुला नदी
देवर्षिसेविता । कौशिकी च शिवा पुण्या ब्रह्मर्षिसुरसेविता ॥१०॥
तपोविघ्नकरी चैव पञ्चचूड़ा सुसम्मता । रम्भा नामाप्सराः शापाद्
यस्य शैलत्वमागता ॥ ११ ॥ तथैवास्य भयाद्बध्वा वशिष्ठः सलिले
पुरा । आत्मानं मज्जयन् श्रीमान् विपाशः पुनरुत्थितः ॥ १२ ॥
तदाप्रभृतिपुण्या हि विपाशाभून्महानदी । विख्याता कर्म्मणा तेन
वशिष्ठस्य महात्मनः ॥ १३ ॥ वाग्भिश्च भगवान् येन देवसेनाग्रगः

प्रभुः। स्तुतः प्रीतमनाश्चासीच्छापाच्चैनममुञ्चत ॥ १४ ॥ ध्रुव-स्योत्तानपादस्य ब्रह्मर्षीणां तथैव च। मध्ये ज्वलति यो नित्य-मुदीचीमाश्रितो दिशम ॥ १५ ॥ तस्यैतानि च कर्माणि तथान्यानि च कौरव। क्षत्रियस्येत्यतो जातमिदं कौतूहलं मम ॥ १६ ॥ किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ। देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ॥ १७ ॥ एतत्तत्त्वेन मे तात सर्वमाख्यातुमर्हसि। मतङ्गस्य यथातत्त्वं तथैवैतद्वदस्व मे ॥ १८ ॥ स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ। चाण्डालयोनौ जातो हि कथं ब्राह्मण्य-माप्तवान् ॥ १९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विश्वामित्रोपाख्याने तृतीयोऽध्यायः ॥ ३ ॥

---

भीष्म उवाच। श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा। ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च ॥ १ ॥ भरतस्यान्वये चैवाज-मीढ़ो नाम पार्थिवः। बभूव भरतश्रेष्ठ यज्वा धर्म्मभृताम्वरः ॥२॥ तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः। दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ॥ ३ ॥ तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः। सिन्धुद्वीपाच्च राजर्षिर्वलाकाश्वो महाबलः ॥ ४ ॥ वल्लभस्तस्य तनयः साक्षाद्धर्म्म इवापरः। कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ॥ ५ ॥ कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनेश्वरः। अपुत्रः प्रसवेनार्थी वनवासमुदावसत् ॥ ६ ॥ कन्या जज्ञे सुता तस्य वने निवसतः सतः। नाम्ना सत्यवती नाम रूपे-णाप्रतिमा भुवि ॥ ७ ॥ तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसम्भवः। ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥ ८ ॥ स तां न प्रददौ तस्मै ऋचीकाय महात्मने। दरिद्र इति मत्वा वै गाधिः

श्रवुनिवर्हणः ॥ ९ ॥ प्रत्याख्याय पुनर्यान्तमब्रवीद्राजसत्तमः । शुल्कं प्रदीयतां मह्यं ततो वेत्स्यसि मे सुताम् ॥ १० ॥

ऋचीक उवाच । किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप । दुहितुर्ब्रूह्यसंसक्तो माभूत्तत्र विचारणा ॥ ११ ॥

गाधिरुवाच । चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् । एकतः श्यामकर्णानां सहस्रं देहि भार्गव ॥ १२ ॥

भीष्म उवाच । ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः । अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् ॥ १३ ॥ एकतः श्यामकर्णानां हयानां चन्द्रवर्च्चसाम् । सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ॥ १४ ॥ तथेति वरुणो देव आदित्यो भृगुसत्तमम् । उवाच यत्र ते छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥ १५ ॥ ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्च्चसाम् । गङ्गाजलात् समुत्तस्थौ सहस्रं विपुलौजसाम् ॥ १६ ॥ अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमम् । अश्वतीर्थं तदद्यापि मानवैः परिचक्ष्यते ॥ १७ ॥ ततो वै गाधये तात सहस्रं वाजिनां शुभम् । ऋचीकः प्रददौ प्रीतः शुल्कार्थं तपतांवरः ॥ १८ ॥ ततः स विस्मितो राजा गाधिः शापभयेन च । ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ॥ १९ ॥ जग्राह विधिवत् पाणिं तस्या ब्रह्मर्षिसत्तमः । सा च तं पतिमासाद्य परं हर्षमवाप ह ॥ २० ॥ स तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत । छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥ २१ ॥ मात्रे तत् सर्वमाचख्यौ सा कन्या राजसत्तम । अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीम् ॥ २२ ॥ ममापि पुत्रि भर्त्ता ते प्रसादं कर्त्तुमर्हति । अपत्यस्य प्रदानेन समर्थः स महातपाः ॥ २३ ॥ ततः सा त्वरितं गत्वा तत् सर्वं प्रत्यवेदयत् । मातुश्चिकीर्षितं राजन् ऋचीकस्तामथाब्रवीत् ॥ २४ ॥ गुणवन्तमपत्यं सा अचिराज्जनयिष्यति । मम प्रसादात् कल्याणि माभूत्ते प्रणयोऽन्यथा ॥ २५ ॥ तव चैव

गुणश्लाघी पुत्र उत्पत्स्यते महान्। अस्मद्वंशकरः श्रीमान् सत्य-मेतद्ब्रवीमि ते ॥ २६ ॥ ऋतुस्नाता च साश्वत्थं त्वञ्च वृक्षमुड्-स्वरम्। परिष्वजेथाः कल्याणि तत एवमवाप्स्यथः ॥ २७ ॥ चरुद्वयमिदञ्चैव मन्त्रपूतं शुचिस्मिते। त्वञ्च सा चोपभुञ्जीतं ततः पुत्रावावाप्स्यथः ॥ २८ ॥ ततः सत्यवती हृष्टा मातरं प्रत्यभाषत। यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥ २९ ॥ तामुवाच ततो माता सुतां सत्यवतीं तदा। पुत्रि पूर्वोपपन्नायाः कुरुष्व वचनं मम ॥ ३० ॥ भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः। एतं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥ ३१ ॥ व्यत्यासं वृक्षयोश्चापि कर-वाव शुचिस्मिते। यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥ ३२ ॥ स्वमपत्यं विशिष्टं हि सर्व इच्छत्यनाविलम्। व्यक्तं भगवता चात्र कृतमेवं भविष्यति ॥ ३३ ॥ ततो मे त्वच्चरौ भावः पादपे च सुम-ध्यमे। कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ॥ ३४ ॥ तथा च कृतवत्यौ ते माता सत्यवती च सा। अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥ ३५ ॥ दृष्ट्वा गर्भमनुप्राप्तां भार्य्यां स च महानृषिः। उवाच तां सत्यवतीं दुर्म्मना भृगुसत्तमः ॥ ३६ ॥ व्यत्यासे नोप-युक्तस्ते चरुर्व्यक्तं भविष्यति। व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ॥ ३७ ॥ मया हि विश्वं यद्ब्रह्म तच्चरौ सन्निवेशितम्। क्षत्रवीर्य्यञ्च सकलं चरौ तस्या निवेशितम् ॥ ३८ ॥ त्रैलोक्य-विख्यातगुणं त्वं विप्रं जनयिष्यसि। सा च क्षत्रं विशिष्टं वै तत एतत् कृतं मया ॥ ३९ ॥ व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे। तस्मात् सा ब्राह्मणश्रेष्ठं माता ते जनयिष्यति ॥ ४० ॥ क्षत्रियन्तुग्रकर्माणं त्वं भद्रे जनयिष्यसि। न हि ते तत्कृतं साधु मातृस्नेहेन भाविनि ॥ ४१ ॥ सा श्रुत्वा शोकसन्तप्ता पपात वर-वर्णिनी। भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ॥ ४२ ॥ प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च। उवाच भार्य्या भर्त्तारं

गाधेयो भार्गवर्षभम् ॥ ४३ ॥ प्रसादयन्त्यां भार्य्यायां मयि ब्रह्म-विदाम्वर । प्रसादं कुरु विप्रर्षे न मे स्यात् क्षत्रियः सुतः ॥ ४४ ॥ कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति । न तु मे स्यात् सुतो ब्रह्मन्नेष मे दीयतां वरः ॥ ४५ ॥ एवमस्त्विति होवाच स्वां भार्य्यां सुमहातपाः । ततः सा जनयामास जमदग्निं सुतं शुभम् ॥ ४६ ॥ विश्वामित्रश्चाजनयत् गाधिभार्य्या यशस्विनी । ऋषेः प्रसादा-द्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम् ॥ ४७ ॥ ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः । क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥ ४८ ॥ तस्य पुत्रो महात्मानो ब्रह्मवंशविवर्द्धनाः । तप-स्विनो ब्रह्मविदो गोत्रकर्त्तार एव च ॥ ४९ ॥ मधुच्छन्दश्च भग-वान् देवरातश्च वीर्य्यवान् । अक्षीणश्च शकुन्तश्च वभ्रुः कालपथ-स्तथा ॥ ५० ॥ याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः । उलूकोऽथ मुद्गलश्च तथर्षिः सैन्धवायनः ॥ ५१ ॥ वल्गुजङ्घश्च भग-वान् गालवश्च महानृषिः । रुचिर्वज्रस्तथा ख्यातः शालङ्कायन एव च ॥ ५२ ॥ लीलाढ्यो नारदश्चैव तथा कूर्च्चामुखः स्मृतः । वाहुलि-र्मुषलश्चैव वक्षोग्रीवस्तथैव च ॥ ५३ ॥ आङ्घ्रिको नैकदृक्चैव शिला-यूपः शितः शुचिः । चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ॥५४॥ श्यामायनोऽथ गार्ग्यश्च जावालिः सुश्रुतस्तथा । कारीषिरथसंश्रुत्यः परपौरवतन्तवः ॥ ५५ ॥ महानृषिश्च कपिलस्तथर्षिस्ताड़कायनः । तथैव चोपगहनस्तथर्षिश्चासुरायणिः ॥ ५६ ॥ मार्गमर्षिर्हिरण्याक्षो जङ्घारिर्वाभ्रवायणिः । भूतिर्विभूतिः सूतश्च सुरकृत्तु तथैव हि ॥ ५७ ॥ आरालिर्नाचिकश्चैव चाम्पेयोज्जयनौ तथा । नवतन्तु-र्वकनखः सयनो यतिरेव च ॥ ५८ ॥ अम्भोरुहश्चामत्स्याशी शिरीषी चाथ गार्द्दभिः । उर्ज्जयोनिरुदापेक्षी नारदी च महा-नृषिः ॥ ५९ ॥ विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः । तथैव क्षत्रियो राजन् विश्वामित्रो महातपाः ॥६० ॥ ऋचीकेनाहितं ब्रह्म

परमेतद्युधिष्ठिर। एतत्ते सर्वमाख्यातं तत्त्वेन भरतर्षभ ॥६१॥ विश्वामित्रस्य वै जन्म सोमसूर्य्याग्नितेजसः। यत्र यत्र च सन्देहो भूयस्ते राजसत्तम। तत्र तत्र च मां ब्रूहि छेत्तास्मि तव संशयान् ॥ ६६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विश्वामित्रोपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥

---

युधिष्ठिर उवाच। आनृशंस्यस्य धर्म्मस्य गुणान् भक्तजनस्य च। श्रोतुमिच्छामि धर्म्मज्ञ तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। वासवस्य च सम्वादं शुकस्य च महात्मनः ॥ २ ॥ विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः। सविषं काण्डमादाय मृगयामास वै मृगम् ॥ ३ ॥ तत्र चामिषलुब्धेन लुब्धकेन महावने। अविदूरे मृगान् दृष्ट्वा वाणः प्रतिसमाहितः ॥ ४ ॥ तेन दुर्वारितास्त्रेण निमित्तचपलेषुणा। महान् वनतरुस्तत्र विद्धो मृगजिघांसया ॥ ५ ॥ स तीक्ष्णविषदिग्धेन शरेणातिबलात् क्षतः। उत्सृज्य फलपत्राणि पादपः शोषमागतः ॥ ६ ॥ तस्मिन् वृक्षे तथा भूते कोटरेषु चिरोषितः। न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ॥ ७ ॥ निष्प्रचारो निराहारो ग्लानः शिथिलवागपि। कृतज्ञः सह वृक्षेण धर्म्मात्मा सोऽप्यशुष्यत ॥ ८ ॥ तमुदारं महासत्त्वमतिमानुषचेष्टितम्। समदुःखसुखं दृष्ट्वा विस्मितः पाकशासनः ॥ ९ ॥ ततश्चिन्तामुपगतः शक्रः कथमयं द्विजः। तिर्य्यग्योनावसंभाव्यमानृशंस्यमवस्थितः ॥ १० ॥ अथ वा नात्र चित्रं हि अभवद्वासवस्य तु। प्राणिनामपि सर्व्वेषां सर्वं सर्वत्र दृश्यते ॥ ११ ॥ ततो ब्राह्मणवेशेन मानुषं रूपमास्थितः। अवतीर्य्य महीं शक्रस्तं पक्षिणमुवाच ह ॥ १२ ॥ शुक भोः पक्षिणांश्रेष्ठ दाक्षेयी सुप्रजास्त्वया। पृच्छे

त्वां शुष्कमेनं त्वं कस्मान्न त्यजसि द्रुमम् ॥ १३ ॥ अथ पृष्टः शुकः प्राह मूर्द्धा समभिवाद्य तम् । स्वागतं देवराज त्वं विज्ञातस्तपसा मया ॥ १४ ॥ ततो दशशताक्षेण साधु साध्विति भाषितम् । अहो विज्ञानमित्येवं मनसा पूजितस्ततः ॥ १५ ॥ तमेवं शुभकर्माणं शुकं परमधार्म्मिकम् । विजानन्नपि तां प्रीतिं पप्रच्छ बलसूदनः ॥ १६ ॥ निष्पत्रमफलं शुष्कमशरण्यं पतत्रिणाम् । किमर्थं सेवसे वृक्षं सदा महदिदं वनम् ॥ १७ ॥ अन्येऽपि बहवो वृक्षाः पत्रसंच्छन्नकोटराः । शुभाः पर्य्याप्तसञ्चारा विद्यन्तेऽस्मिन् महावने ॥ १८ ॥ गतायुषमसामर्थ्यं क्षीणसारं हतश्रियम् । विमृष्य प्रज्ञया धीर जहीमं स्थविरं द्रुमम् ॥ १९ ॥

भीष्म उवाच । तदुपश्रुत्य धर्म्मात्मा शुकः शक्रेण भाषितम् । सुदीर्घमतिनिःश्वस्य दीनो वाक्यमुवाच ह ॥ २० ॥ अनतिक्रमणीयानि दैवतानि शचीपते । यत्राभवत्तव प्रश्नस्तन्निबोध सुराधिप ॥ २१ ॥ अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युतः । बालभावेन संगुप्तः शत्रुभिश्च न धर्षितः ॥ २२ ॥ किमनुक्रोश्य वैफल्यमुत्पादयसि मेऽनघ । आनृशंस्याभियुक्तस्य भक्तस्यानन्यगस्य च ॥ २३ ॥ अनुक्रोशो हि साधूनां महद्धर्म्मस्य लक्षणम् । अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति ॥ २४ ॥ त्वमेव दैवतैः सर्वैः पृच्छ्यसे धर्म्मसंशयात् । अतस्त्वं देव देवानामाधिपत्ये प्रतिष्ठितः ॥ २५ ॥ नार्हसे मां सहस्राक्ष द्रुमं त्याजयितुं चिरात् । समर्थमुपजीव्येमं त्यजेयं कथमद्य वै ॥ २६ ॥ तस्य वाक्येन सौम्येन हर्षितः पाकशासनः । शुकं प्रोवाच धर्म्मात्मा आनृशंस्येन तोषितः ॥ २७ ॥ वरं वृणीष्वेति तदा स च वव्रे वरं शुकः । आनृशंस्यपरो नित्यं तस्य वृक्षस्य सम्भवम् ॥ २८ ॥ विदित्वा च दृढां भक्तिं तां शुके शीलसम्पदम् । प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् ॥ २९ ॥ ततः फलानि पत्राणि शाखाश्चापि मनोहराः । शुकस्य दृढभक्ति-

त्वात् श्रीमत्तां प्राप स द्रुमः ॥ ३० ॥ शुकश्च कर्म्मणा तेन आनृशंस्येन तेन वै। आयुषोऽन्ते महाराज प्राप शक्रसलोकताम् ॥३१॥ एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः। सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ॥ ३२ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि शक्रशुकसम्वादे पञ्चमोऽध्यायः ॥ ५ ॥

---

युधिष्ठिर उवाच। पितामह महाप्राज्ञ सर्वशास्त्रविशारद। दैवे पुरुषकारे च किं स्विच्छ्रेष्ठतरं भवेत् ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। वशिष्ठस्य च सम्वादं ब्रह्मणश्च युधिष्ठिर ॥ २ ॥ दैवमानुषयोः किं स्वित् कर्म्मणोः श्रेष्ठमित्युत। पुरा वशिष्ठो भगवान् पितामहमपृच्छत ॥ ३ ॥ ततः पद्मोद्भवो राजन् देवदेवः पितामहः। उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ॥ ४ ॥

ब्रह्मोवाच। नावीजं जायते किञ्चिन्न वीजेन विना फलम्। वीजाद्वीजं प्रभवति वीजादेव फलं स्मृतम् ॥ ५ ॥ यादृशं वपते वीजं चेत्रमासाद्य कर्षकः। सुकृते दुष्कृते वापि तादृशं लभते फलम् ॥ ६ ॥ यथा वीजं विना चेत्रमुप्तं भवति निष्फलम्। तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ७ ॥ चेत्रं पुरुषकारस्तु दैवं वीजमुदाहृतम्। चेत्रवीजसमायोगात्ततः शस्यं समृध्यते ॥ ८ ॥ कर्म्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः। प्रत्यक्षं दृश्यते लोके कृतस्यापकृतस्य च ॥ ९ ॥ शुभेन कर्म्मणा सौख्यं दुःखं पापेन कर्म्मणा। कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ १० ॥ कृती सर्वत्र लभते प्रतिष्ठां भाग्यसंयुताम्। अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥ ११ ॥ तपसा रूपसौभाग्यं रत्नानि विविधानि

च। प्राप्यते कर्म्मणा सर्वं न दैवादकृतात्मना ॥ १२ ॥ तथा स्वर्गश्च भोगाश्च निष्ठा या च मनीषिता। सर्वं पुरुषकारेण कृतेनेहोपलभ्यते ॥ १३ ॥ ज्योतींषि त्रिदशा नागा यचाश्चन्द्रार्कमारुताः। सर्वे पुरुषकारेण मानुष्याद्देवतां गताः ॥ १४ ॥ अर्थो वा मित्रवर्गो वा ऐश्वर्य्यं वा कुलान्वितम्। श्रीश्चापि दुर्ल्लभा भोक्तुं तथैवाकृतकर्म्मभिः ॥ १५ ॥ शौचेन लभते विप्रः चत्रियो विक्रमेण तु। वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियम् ॥ १६ ॥ नादातारं भजन्त्यर्था न क्लीवं नापि निष्क्रियम्। नाकर्म्मशीलं नाशूरं तथा नैवातपस्विनम् ॥ १७ ॥ येन लोकास्त्रयः सृष्टा दैत्याः सर्वाश्च देवताः। स एष भगवान् विष्णुः समुद्रे तप्यते तपः ॥ १८ ॥ स्वञ्चेत् कर्म्मफलं न स्यात् सर्वमेवाफलं भवेत्। लोको दैवं समालम्ब्य उदासीनो भवेन्ननु ॥ १९ ॥ अकृत्वा मानुषं कर्म्म यो दैवमनुवर्त्तते। वृथा श्राम्यति सम्प्राप्य पतिं क्लीवमिवाङ्गना ॥ २० ॥ न तथा मानुषे लोके भयमस्ति शुभाशुभे। यथा त्रिदशलोके हि भयमन्येन जायते ॥ २१ ॥ कृतः पुरुषकारस्तु दैवमेवानुवर्त्तते। न दैवमकृते किञ्चित् कस्यचिद्दातुमर्हति ॥ २२ ॥ यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि। कथं कर्म्म विना दैवं स्थास्यति स्थापयिष्यति ॥ २३ ॥ न दैवतानि लोकेऽस्मिन् व्यापारं यान्ति कस्यचित्। व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया ॥ २४ ॥ ऋषीणां देवतानाञ्च सदा भवति विग्रहः। कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्त्तते ॥ २५ ॥ कथं तस्य समुत्पत्तिर्यतो दैवं प्रवर्त्तते। एवं त्रिदशलोकेऽपि प्राप्यन्ते बहवो गुणाः ॥ २६ ॥ आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः। आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च ॥ २७ ॥ कृतञ्चापकृतं किञ्चित् कृते कर्म्मणि सिध्यति। सुकृतं दुष्कृतं कर्म्म न यथार्थं प्रपद्यते ॥ २८ ॥ देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते। पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति ॥२९॥

पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ। पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्म्मभिः ॥ ३० ॥ पुरूरवाश्च राजर्षिर्द्विजैरभिहितः पुरा। ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः ॥ ३१ ॥ अश्वमेधादिभिर्यज्ञैः सत्कृतः कोशलाधिपः। महर्षिशापात् सौदासः पुरुषादत्वमागतः ॥ ३२ ॥ अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्द्धरौ। न गच्छतः स्वर्गलोकं सुकृतेनेह कर्म्मणा ॥ ३३ ॥ वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः। मिथ्याभिधानेनैकेन रसातलतलं गतः ॥ ३४ ॥ बलिर्वैरोचनिर्बद्धो धर्म्मपाशेन दैवतैः। विष्णोः पुरुषकारेण पातालसदनः कृतः ॥ ३५ ॥ शक्रस्योद्गम्य चरणं प्रस्थितो जनमेजयः। द्विजस्त्रीणां वधं कृत्वा किं दैवेन न वारितः ॥ ३६ ॥ अज्ञानाद्‌ब्राह्मणं हत्वा स्पृष्टो बालवधेन च। वैशम्पायन विप्रर्षिः किं दैवेन न वारितः ॥ ३७ ॥ गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे। पुरा नृगश्च राजर्षिः कृकलासत्वमागतः ॥ ३८ ॥ धुन्धुमारश्च राजर्षिः सत्रेष्वेव जराङ्गतः। प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे ॥ ३९ ॥ पाण्डवानां हृतं राज्यं धार्त्तराष्ट्रैर्महाबलैः। पुनः प्रत्याहृतञ्चैव न दैवाद्भुजसंश्रयात् ॥४०॥ तपोनियमसंयुक्ता मुनयः संशितव्रताः। किन्ते दैवबलाच्छापमुत्सृजन्ते न कर्म्मणा ॥ ४१ ॥ पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभम्। लोभमोहसमापन्नं न दैवं त्रायते नरम् ॥ ४२ ॥ यथाग्निः पवनोद्धूतः सुसूक्ष्मोऽपि महान् भवेत्। तथा कर्म्मसमायुक्तं दैवं साधु विवर्द्धते ॥ ४३ ॥ यथा तैलक्षयाद्दीपः प्रह्रासमुपगच्छति। तथा कर्म्मक्षयाद्दैवं प्रह्रासमुपगच्छति ॥ ४४ ॥ विपुलमपि धनौघं प्राप्य भोगान् स्त्रियो वा पुरुष इह न शक्तः कर्म्महीनो हि भोक्तुम्। सुनिहितमपि चार्थं दैवतैः रक्ष्यमाणं पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ॥ ४५ ॥ व्ययगुणमपि साधुं कर्म्मणा संश्रयन्ते भवति मनुजलोकाद्देवलोको विशिष्टः। बहुतरसुसमृद्धा मानु-

षाणां गृहाणि पितृवनभवनाभं दृश्यते चामराणाम्॥ ४६॥ न च फलति विकर्मा जीवलोके न दैवं व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वम्। गुरुमिव कृतमग्र्य कर्म्म संयाति दैवं नयति पुरुषकारः सञ्चितस्तत्र तत्र॥ ४७॥ एतत्ते सर्वमाख्यातं मया वै मुनिसत्तम। फलं पुरुषकारस्य सदा संदृश्य तत्त्वतः॥ ४८॥ अभ्युत्थानेन दैवस्य समारब्धेन कर्मणा। विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात्॥४९॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दैवपुरुषकारे षष्ठोऽध्यायः॥ ६॥

---

युधिष्ठिर उवाच। कर्म्मणाञ्च समस्तानां शुभानां भरतर्षभ। फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः॥ १॥

भीष्म उवाच। हन्त ते कथयिष्यामि यन्मां पृच्छसि भारत। रहस्यं यदृषीणान्तु तच्छृणुष्व युधिष्ठिर॥ २॥ या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता। येन येन शरीरेण यद्यत् कर्म्म करोति यः॥ ३॥ तेन तेन शरीरेण तत्तत् फलमुपाश्नुते। यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम्॥ ४॥ तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि। न नश्यति कृतं कर्म सदा पञ्चेन्द्रियैरिह॥ ५॥ ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च। चक्षुर्द्द्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम्॥ ६॥ अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः। यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते॥ ७॥ श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत्। स्थण्डिलेषु शयानानां गृहाणि शयनानि च॥ ८॥ चीरवल्कलसंवीते वासांस्याभरणानि च। वाहनानि च यानानि योगात्मनि तपोधने॥ ९॥ अग्नीनुपशयानस्य राज्ञः पौरुषमेव च। रसानां प्रतिसंहारे सौभाग्यमनुगच्छति॥ १०॥ आमिषप्रतिसंहारे पशून् पुत्रांश्च विन्दति।

अवाक्शिरास्तु यो लम्बेदुदवासञ्च यो वसेत् ॥११॥ सततञ्चैकशायी यः स लभेतेप्सितां गतिम्। पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् ॥ १२ ॥ दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः। वीरासनं वीरशय्यां वीरस्थानमुपागतः ॥ १३ ॥ अक्षयास्तस्य वै लोकाः सर्वकामगमास्तथा। धनं लभेत दानेन मौनेनाज्ञां विशाम्पते ॥१४॥ उपभोगांश्च तपसा ब्रह्मचर्य्येण जीवितम्। रूपमैश्वर्य्यमारोग्यमहिंसाफलमश्नुते ॥ १५ ॥ फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत्। प्रायोपवेशिनो राजन् सर्वत्र सुखमुच्यते ॥ १६ ॥ गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः। स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ॥ १७ ॥ स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम्। सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विजः ॥ १८ ॥ मनुं साधयते राज्यं नाकपृष्ठमनाशके। उपवासञ्च दीक्षायां अभिषेकञ्च पार्थिव ॥ १९ ॥ कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते। अधीत्य सर्ववेदान् वै सद्यो दुःखाद्विमुच्यते ॥ २० ॥ मानसं हि चरन् धर्मं स्वर्गलोकमुपाश्नुते। या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यतः ॥ २१ ॥ योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्। यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥२२॥ एवं पूर्वकृतं कर्म कर्त्तारमनुगच्छति। अचोद्यमानानि यथा पुष्पाणि च फलानि च ॥ २३ ॥ स्वकालं नातिवर्त्तन्ते तथा कर्म पुराकृतम्। जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः ॥२४॥ चक्षुःश्रोत्रे च जीर्य्येते तृष्णैका न तु जीर्य्यते। येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः ॥ २५ ॥ प्रीणाति मातरं येन पृथिवी तेन पूजिता। येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम् ॥ २६ ॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः। अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ २७ ॥

वैशम्पायन उवाच। भीष्मस्यैतद्वचः श्रुत्वा विस्मिताः कुरु-

पुङ्गवाः । आसन् प्रहृष्टमनसः प्रीतिमन्तोऽभवंस्तदा ॥ २८ ॥ यन्मन्त्रे भवति वृथोपयुज्यमाने यत् सोमे भवति वृथाभिषूयमाणे। यच्चाग्नौ भवति वृथाभिहूयमाने तत्सर्वं भवति वृथाभिधीयमाने ॥ २९ ॥ इत्येतदृषिणा प्रोक्तमुक्तवानस्मि यद्विभो । शुभाशुभफलप्राप्तौ किमतः श्रोतुमिच्छसि ॥ ३० ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि कर्म्मफलिकोपाख्याने सप्तमोऽध्यायः ॥ ७ ॥

---

युधिष्ठिर उवाच । के पूज्याः के नमस्कार्य्याः कान्नमस्यसि भारत । एतन्मे सर्व्वमाचक्ष्व येभ्यः स्पृहयसे नृप ॥ १ ॥ उत्तमापद्गतस्यापि यत्र ते वर्त्तते मनः । मनुष्यलोके सर्व्वेऽस्मिन् यदमुत्रेह चाप्युत ॥ २ ॥

भीष्म उवाच । स्पृहयामि द्विजातिभ्यो येषां ब्रह्मपरं धनम् । येषां स्वप्रत्ययः स्वर्गस्तपः स्वाध्यायसाधनम् ॥ ३ ॥ येषां वालाश्च वृद्धाश्च पितृपैतामहीं धुरम् । उद्वहन्ति न सीदन्ति तेभ्यो वै स्पृहयाम्यहम् ॥ ४ ॥ विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् । श्रुतवृत्तोपपन्नानां सदाक्षरविदां सताम् ॥ ५ ॥ संसत्सु वदतां तात हंसानामिव सङ्घशः । मङ्गल्यरूपा रुचिरा दिव्या जीमूतनिःस्वनाः ॥ ६ ॥ सम्यगुच्चारिता वाचः श्रूयन्ते हि युधिष्ठिर । शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥ ७ ॥ ये चापि तेषां श्रोतारः सदा सदसि सम्मताः । विज्ञानगुणसम्पन्नास्तेभ्यश्च स्पृहयाम्यहम् ॥ ८ ॥ सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च । ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर । ये चापि सततं राजन् तेभ्यश्च स्पृहयाम्यहम् ॥ ९ ॥ शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितम् ॥ १० ॥ शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर ।

तेषां सङ्ग्रामनानां दानशूरो विशिष्यते ॥ ११ ॥ धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा। कुले जातो धर्म्मगति-स्तपोविद्यापरायणः ॥ १२ ॥ न मे त्वत्तः प्रियतरो लोकेऽस्मिन् पाण्डुनन्दन। त्वत्तश्चापि प्रियतरा ब्राह्मणा भरतर्षभ ॥ १३ ॥ यथा मम प्रियतमास्त्वत्तो विप्राः कुरूत्तम। तेन सत्येन गच्छेयं लोकान् यत्र स शान्तनुः ॥ १४ ॥ न मे पिता प्रियतरो ब्राह्मणेभ्य-स्तथाभवत्। न मे पितुः पिता वापि ये चान्येऽपि सुहृज्जनाः ॥१५॥ न हि मे वृजिनं किञ्चित् विद्यते ब्राह्मणेष्विह। अणु वा यदि वा स्थूलं विद्यते साधु कर्मसु ॥ १६ ॥ कर्मणा मनसा वापि वाचा वापि परन्तप। यन्मे कृतं ब्राह्मणेभ्यस्तेनाद्य न तपाम्यहम् ॥१७॥ ब्रह्मण्य इति मामाहुस्तया वाचास्मि तोषितः। एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥ १८ ॥ पश्यामि लोकानमलाञ्छुचीन् ब्राह्मणयायिनः। तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥ १९ ॥ यथा भर्त्ताश्रयो धर्म्मः स्त्रीणां लोके युधिष्ठिर। स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ॥ २० ॥ क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः। पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः ॥ २१ ॥ नारी तु पत्यभावे वै देवरं कुरुते पतिम्। पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् ॥ २२ ॥ पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते। अग्निवच्चोपचर्य्या वै ब्राह्मणा कुरुसत्तम ॥ २३ ॥ ऋजून् सतः सत्यशीलान् सर्वभूतहिते रतान्। आशी-विषानिव क्रुद्धान् द्विजान् परिचरेत् सदा ॥ २४ ॥ तेजसस्तपस-श्चैव नित्यं बिभ्येत् युधिष्ठिर। उभे चैते परित्याज्ये तेजश्चैव तप-स्तथा ॥ २५ ॥ व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते। हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ॥ २६ ॥ भूयः स्यादुभयं दत्तं ब्राह्मणाद्द यदकोपनात्। कुर्य्यादुभयतः शेषं दत्तशेषं न शेषयेत् ॥ २७ ॥ दण्डपाणिर्यथा गोषु पालो नित्यं हि रक्षयेत्।

ब्राह्मणान् ब्रह्म च तथा क्षत्रियः परिपालयेत् ॥ २८ ॥ पितेव पुत्रान् रक्षेथा ब्राह्मणान् धर्म्मचेतसः। गृहे चैषामवेक्षेथाः किं स्विदस्तीति जीवनम् ॥ २९ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि भीष्मनिश्चये अष्टमोऽध्यायः ॥ ८ ॥

---

युधिष्ठिर उवाच। ब्राह्मणानान्तु ये लोकाः प्रतिश्रुत्य पितामह। न प्रयच्छन्ति मोहात्ते के भवन्ति महाद्युते ॥ १ ॥ एतन्मे तत्त्वतो ब्रूहि धर्मं धर्म्मभृताम्वर। प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ॥ २ ॥

भीष्म उवाच। यो न दद्यात् प्रतिश्रुत्य स्वल्पं वा यदि वा बहु। आशास्तस्य हताः सर्वाः क्लीवस्येव प्रजाफलम् ॥ ३ ॥ यां रात्रिं जायते जीवो यां रात्रिञ्च विनश्यति। एतस्मिन्नन्तरे यद्यत् सुकृतं तस्य भारत ॥ ४ ॥ यच्च तस्य हुतं किञ्चिद्दत्तं वा भरतर्षभ। तपस्तप्तमथो वापि सर्वं तस्योपहन्यते ॥ ५ ॥ अथैतद्वचनं प्राहुर्धर्म्मशास्त्रविदो जनाः। निशम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ॥ ६ ॥ अपि चोदाहरन्तीमं धर्म्मशास्त्रविदो जनाः। अश्वानां श्यामकर्णानां सहस्रेण समुच्यते ॥ ७ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम्। शृगालस्य च सम्वादं वानरस्य च भारत ॥ ८ ॥ तौ सखायौ पुरा ह्यास्तां मानुषत्वे परन्तप। अन्यां योनिं समापन्नौ शार्गालीं वानरीं तथा ॥ ९ ॥ ततः परासून् खादन्तं शृगालं वानरोऽब्रवीत्। श्मशानमध्ये सम्प्रेक्ष्य पूर्वजातिमनुस्मरन् ॥ १० ॥ किं त्वया पापकं पूर्वं कृतं कर्म सुदारुणम्। यस्त्वं श्मशाने मृतकान् पूतिकानत्सि कुत्सितान् ॥ ११ ॥ एवमुक्तः

प्रत्युवाच शृगालो वानरं तदा। ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाहृतम् ॥ १२ ॥ तत्कृते पापकीं योनिमापन्नोऽस्मि प्लवङ्गम। तस्मादेवम्विधं भक्ष्यं भक्षयामि बुभुक्षितः ॥ १३ ॥

भीष्म उवाच। शृगालो वानरं प्राह पुनरेव नरोत्तम। किं त्वया पातकं कर्म कृतं येनासि वानर ॥ १४ ॥

वानर उवाच। सदा चाहं फलाहारी ब्राह्मणानां प्लवङ्गमः। तस्मान्न ब्राह्मणस्वन्तु हर्त्तव्यं विदुषा सदा। सम विवादो मोक्तव्यो दातव्यञ्च प्रतिश्रुतम् ॥ १५ ॥

भीष्म उवाच। इत्येतद्ब्रुवतो राजन् ब्राह्मणस्य मया श्रुतम्। कथां कथयतः पुण्यां धर्मज्ञस्य पुरातनीम् ॥ १६ ॥ श्रुतश्चापि मया भूयः कृष्णस्यापि विशाम्पते। कथां कथयतः पूर्वं ब्राह्मणं प्रति पाण्डव ॥ १७ ॥ न हर्त्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः। बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ॥ १८ ॥ एवमेव च मां नित्यं ब्राह्मणाः सन्दिशन्ति वै। प्रतिश्रुत्य भवेद्देयं नाशा कार्य्या द्विजोत्तमे ॥ १९ ॥ ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते। सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः ॥ २० ॥ यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया। प्रदहेच्च हि तं राजन् कक्षमक्षय्यभुक् यथा ॥ २१ ॥ स एव हि यदा तुष्टो वचसा प्रतिनन्दति। भवत्यगदसङ्काशो विषये तस्य भारत ॥ २२ ॥ पुत्रान् पौत्रान् पशूंश्चैव बान्धवान् सचिवांस्तथा। पुरं जनपदञ्चैव शान्तिरिष्टेन पोषयेत् ॥ २३ ॥ एतद्धि परमन्तेजो ब्राह्मणस्येह दृश्यते। सहस्रकिरणस्येव सवितुर्धरणीतले ॥ २४ ॥ तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर। यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ॥ २५ ॥ ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः। शक्यः प्राप्तुं विशेषेण दानं हि महती क्रिया ॥ २६ ॥ इतो दत्तेन जीवन्ति देवताः पितरस्तथा। तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ॥ २७ ॥ महद्धि

भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते। वेलायां न तु कस्याञ्चिद्गच्छेद्विप्रो ह्यपूजितः ॥ २८ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि शृगालवानर-
संवादे नवमोऽध्यायः ॥ ९ ॥

---

युधिष्ठिर उवाच। मित्रसौहार्द्दयोगेन उपदेशं करोति यः। जात्यावरस्य राजर्षे दोषस्तस्य भवेन्न वा ॥ १ ॥ एतदिच्छामि तत्त्वेन व्याख्यातं वै पितामह। सूक्ष्मा गतिर्हि धर्मस्य यत्र मुह्यन्ति मानवाः ॥ २ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि शृणु राजन् यथाक्रमम्। ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा पुरा ॥ ३ ॥ उपदेशो न कर्त्तव्यो जातिहीनस्य कस्यचित्। उपदेशे महान् दोष उपाध्यायस्य भाष्यते ॥ ४ ॥ निदर्शनमिदं राजन् शृणु मे भरतर्षभ। दुरुक्त-वचने राजन् यथा पूर्वं युधिष्ठिर ॥ ५ ॥ ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतः शुभे। तत्राश्रमपदं पुण्यं नानावृक्षगणावृतम् ॥ ६ ॥ नानागुल्मलताकीर्णं मृगद्विजनिषेवितम्। सिद्धचारणसंयुक्तं रम्यं पुष्पितकाननम् ॥ ७ ॥ व्रतिभिर्बहुभिः कीर्णं तापसैरुपसेवितम्। ब्राह्मणैश्च महाभागैः सूर्य्यज्वलनसन्निभैः ॥ ८ ॥ नियमव्रतसम्पन्नैः समाकीर्णं तपस्विभिः। दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ॥ ९ ॥ तपोऽध्ययनघोषैश्च नादितं भरतर्षभ। वालिखिल्यैश्च बहुभिर्यतिभिश्च निषेवितम् ॥ १० ॥ तत्र कश्चित् समुत्साहं कृत्वा शूद्रो दयान्वितः। आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ॥ ११ ॥ तांस्तु दृष्ट्वा मुनिगणान् देवकल्पान् महौजसः। विविधां वहतो दीक्षां संप्राहृष्यत भारत ॥ १२ ॥ अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ। ततोऽब्रवीत् कुलपतिं पादौ संगृह्य भारत ॥ १३ ॥

भवत्प्रसादादिच्छामि धर्मं वक्तुं द्विजर्षभ। तन्मां त्वं भगवन् वक्तुं प्रव्राजयितुमर्हसि॥ १४॥ वर्णावरोऽहं भगवन् शूद्रो जात्यास्मि सत्तम। शुश्रूषां कर्त्तुमिच्छामि प्रपन्नाय प्रसीद मे॥ १५॥

कुलपतिरुवाच। न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्त्तितुम्। आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव॥ १६॥ शुश्रूषया परांल्लोकानवाप्स्यसि न संशयः॥ १७॥

भीष्म उवाच। एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप। कथमत्र मया कार्य्यं श्रद्धा धर्मे परा च मे॥ १८॥ विज्ञातमेवं भवतु करिष्ये प्रियमात्मनः। गत्वाश्रमपदाद्दूरमुटजं कृतवांस्तु सः॥ १९॥ तत्र वेदीश्च भूमिश्च देवतायतनानि च। निवेश्य भरतश्रेष्ठ नियमस्थोऽभवन्मुनिः॥ २०॥ अभिषेकांश्च नियमान् देवतायतनेषु च। बलिञ्च कृत्वा हुत्वा च देवताश्चाप्यपूजयत्॥ २१॥ सङ्कल्पनियमोपेतः फलाहारो जितेन्द्रियः। नित्यं सन्निहिताभिस्तु ओषधीभिः फलैस्तथा॥ २२॥ अतिथीन् पूजयामास यथावत् समुपागतान्। एवं हि सुमहान् कालो व्यत्यक्रामत तस्य वै॥२३॥ अथास्य मुनिरागच्छत् सङ्गत्या वै तमाश्रमम्। संपूज्य स्वागतेनर्षिं विधिवत् समतोषयत्॥ २४॥ अनुकूलाः कथाः कृत्वा यथागतमपृच्छत। ऋषिः परमतेजस्वी धर्मात्मा संशितव्रतः॥ २५॥ एवं सुबहुशस्तस्य शूद्रस्य भरतर्षभ। सोऽगच्छदाश्रममृषिः शूद्रं द्रष्टुं नरर्षभ॥ २६॥ अथ तं तापसं शूद्रः सोऽब्रवीत् भरतर्षभ। पितृकार्य्यं करिष्यामि तत्र मेऽनुग्रहं कुरु॥ २७॥ बाढ़मित्येव तं विप्र उवाच भरतर्षभ। शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत्॥ २८॥ अथ दर्भांश्च वन्याश्च ओषधीर्भरतर्षभ। पवित्रमासनञ्चैव वृषीञ्च समुपानयत्॥ २९॥ अथ दक्षिणमावृत्य वृषीञ्चरमशीर्षिकीम्। कृतामन्यायतो दृष्ट्वा तं शूद्रमृषिरब्रवीत्॥ ३०॥ कुरुष्वैतां पूर्वशीर्षां भवांश्चोदङ्मुखः शुचिः। स च तत् कृतवान्

शूद्रः सर्वं यदृषिरब्रवीत् ॥ ३१ ॥ यथोपदिष्टं मेधावी दर्भार्घ्यादि यथातथम् । हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना ॥ ३२ ॥ ऋषिणा पितृकार्य्ये च स च धर्मपथे स्थितः । पितृकार्य्ये कृते चापि विसृष्टः स जगाम ह ॥ ३३ ॥ अथ दीर्घस्य कालस्य स तप्यन् शूद्रतापसः । वने पञ्चत्वमगमत् सुकृतेन च तेन वै ॥ ३४ ॥ अजायत महाराजवंशे स च महाद्युतिः । तथैव स ऋषिस्तात कालधर्ममवाप ह ॥ ३५ ॥ पुरोहितकुले विप्रः प्रजातो भरतर्षभ । एवं तौ तत्र संभूतावुभौ शूद्रमुनी तदा ॥ ३६ ॥ क्रमेण वर्द्धितौ चापि विद्यासु कुशलावुभौ । अथर्ववेदे वेदे च बभूवर्षिः सुनिष्ठितः ॥ ३७ ॥ कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः । सांख्ये चैव परा प्रीतिस्तस्य चैवं व्यवर्द्धत ॥ ३८ ॥ पितर्य्युपरते चापि कृतशौचस्तु पार्थिवः । अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः ॥ ३९ ॥ अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः । स तं पुरोधाय सुखमवसद् भरतर्षभ ॥ ४० ॥ राज्यं शशास धर्मेण प्रजाश्च परिपालयन् । पुण्याहवाचने नित्यं धर्मकार्य्येषु चासकृत् ॥ ४१ ॥ उत्स्मयन् प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् । एवं स बहुशो राजन् पुरोधसमुपाहसत् ॥ ४२ ॥ लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपम् । उत्स्मयन्तञ्च सततं दृष्ट्वासौ मन्युमाविशत् ॥ ४३ ॥ अथ शून्ये पुरोधास्तु सह राज्ञा समागतः । कथाभिरनुकूलाभी राजानञ्चाभ्यरामयत् ॥ ४४ ॥ ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ । वरमिच्छाम्यहन्त्वेकं त्वया दत्तं महाद्युते ॥ ४५ ॥

राजोवाच । वराणान्ते शतं दद्यां किमुतैकं द्विजोत्तम । स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ॥ ४६ ॥

पुरोहित उवाच । एकं वै वरमिच्छामि यदि तुष्टोऽसि पार्थिव । प्रतिजानीहि तावत्त्वं सत्यं यद्वद नानृतम् ॥ ४७ ॥

भीष्म उवाच। वाढ़मित्येव तं राजा प्रत्युवाच युधिष्ठिर। यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे॥ ४८॥

पुरोहित उवाच। पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत्। शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य माम्॥ ४९॥ सव्रीड़ं वै भवति हि मनो मे हसता त्वया। कामाय शापितो राजन् नान्यथा वक्तुमर्हसि॥ ५०॥ सुव्यक्तं कारणं ह्यत्र न ते हास्यमकारणम्। कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे॥ ५१॥

राजोवाच। एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि। अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज॥ ५२॥ पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम। जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु॥ ५३॥ शूद्रोऽहमभवं पूर्वं तपसा भृशसंयुतः। ऋषिरुग्रतपास्त्वञ्च तदाभूर्द्विजसत्तम॥ ५४॥ प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना। पितृकार्य्ये त्वया पूर्वमुपदेशः कृतोऽनघ॥ ५५॥ वृष्यां दर्भेषु हव्येषु कव्ये च मुनिसत्तम। एतेन कर्मदोषेण पुरोधास्त्वमजायथाः॥ ५६॥ अहं राजा च विप्रेन्द्र पश्य कालस्य पर्य्ययम्। मत्कृतस्योपदेशस्य त्वयावाप्तमिदं फलम्॥ ५७॥ एतस्मात् कारणाद्ब्रह्मन् प्रहसे त्वां द्विजोत्तम। न त्वां परिभवन् ब्रह्मन् प्रहसामि गुरुर्भवान्॥ ५८॥ विपर्य्ययेन मे मन्युस्तेन सन्तप्यते मनः। जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै॥ ५९॥ एवं तवोग्रं हि तप उपदेशेन नाशितम्। पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे॥ ६०॥ इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज। गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम॥ ६१॥

भीष्म उवाच। ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः। ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः॥ ६२॥ कृच्छ्राणि चीर्त्त्वा च ततो यथोक्तानि द्विजोत्तमैः। तीर्थानि चापि गत्वा वै दानानि विविधानि च॥ ६३॥ दत्त्वा गाश्चैव विप्रेभ्यः पूतात्मा-

भवद्दात्मवान्। तमेव चाश्रमं गत्वा चचार विपुलं तपः॥ ६४॥ ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम। सम्मतश्चाभवत्तेषामाश्रमे तन्निवासिनाम्॥ ६५॥ एवं प्राप्तो महत् कृच्छ्रमृषिः स नृपसत्तम। ब्राह्मणेन न वक्तव्यं तस्मादवरवर्णजे जने॥ ६६॥ वर्ज्जयेदुपदेशञ्च सदैव ब्राह्मणो नृप। उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात्॥ ६७॥ नैषितव्यं सदा वाचा द्विजेन नृपसत्तम। न च वक्तव्यमिह हि किञ्चिदवर्णवरे जने॥ ६८॥ ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः। एतेषु कथयन् राजन् ब्राह्मणो न प्रदुष्यति॥ ६९॥ तस्मात् सद्भिर्न वक्तव्यं कस्यचित् किञ्चिदग्रतः। सूक्ष्मा गतिर्हि धर्म्मस्य दुर्ज्ञेया ह्यकृतात्मभिः॥७०॥ तस्मान्मौनेन मुनयो दीक्षां कुर्वन्ति चादृताः। दुरुक्तस्य भयाद्राजन्नाभाषन्ते च किञ्चन॥ ७१॥ धार्म्मिका गुणसम्पन्नाः सत्यार्ज्जवसमन्विताः। दुरुक्तवाचाभिहितैः प्राप्नुवन्ति हि दुष्कृतम्॥७२॥ उपदेशो न कर्त्तव्यः कदाचिदपि कस्यचित्। उपदेशाद्धि तत् पापं ब्राह्मणः समवाप्नुयात्॥ ७३॥ विमृश्य तस्मात् प्राज्ञेन वक्तव्यं धर्ममिच्छता। सत्यानृतेन हि कृत उपदेशो हिनस्ति हि॥ ७४॥ वक्तव्यमिह पृष्टेन विनिश्चित्य विनिश्चयम्। स चोपदेशः कर्त्तव्यो येन धर्ममवाप्नुयात्॥ ७५॥ एतत्ते सर्वमाख्यातमुपदेशो कृतो मया। महान् क्लेशो हि भवति तस्मान्नोपदिशेदिह॥ ७६॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि शूद्रमुनिसंवादे दशमोऽध्यायः॥ १०॥




---

युधिष्ठिर उवाच। कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ। श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह॥ १॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि यथा वृत्तं यथा श्रुतम्।

रुक्मिणी देवकीपुत्रसन्निधौ पर्य्यपृच्छत ॥ २ ॥ नारायणस्याङ्कगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवर्णाम् । कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ॥ ३ ॥ कानीह भूतान्युपसेवसे त्वं सन्तिष्ठसे कानि न सेवसे त्वम् । तानि त्रिलोकेश्वरभूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकल्पे ॥ ४ ॥ एवं तदा श्रीरभिभाष्यमाणा देव्या समक्षं गरुड़ध्वजस्य । उवाच वाक्यं मधुराभिधानं मनोहरं चन्द्रमुखी प्रसन्ना ॥ ५ ॥

श्रीरुवाच । वसामि नित्यं सुभगे प्रगल्भे दक्षे नरे कर्मणि वर्त्तमाने । अक्रोधने देवपरे कृतज्ञे जितेन्द्रिये नित्यमुदीर्णसत्त्वे ॥६॥ नाकर्मशीले पुरुषे वसामि न नास्तिके साङ्करिके कृतघ्ने । न भिन्नवृत्ते न नृशंसवर्णे न चापि चौरे न गुरुष्वसूये ॥ ७ ॥ ये चाल्पतेजोबलसत्त्वमानाः क्लिश्यन्ति कुप्यन्ति च यत्र तत्र । न चैव तिष्ठामि तथाविधेषु नरेषु संगुप्तमनोरथेषु ॥ ८ ॥ यश्चात्मनि प्रार्थयते न किञ्चिद्यश्च स्वभावोपहतान्तरात्मा । तेष्वल्पसन्तोषपरेषु नित्यं नरेषु नाहं निवसामि सम्यक् ॥ ९ ॥ स्वधर्मशीलेषु च धर्मवित्सु वृद्धोपसेवानिरते च दान्ते । कृतात्मनि क्षान्तिपरे समर्थे क्षान्तासु दान्तासु तथाबलासु ॥ १० ॥ सत्यस्वभावार्जवसंयुतासु वसामि देवद्विजपूजिकासु । प्रकीर्णभाण्डामनवेक्ष्यकारिणीं सदा च भर्त्तुः प्रतिकूलवादिनीम् ॥ ११ ॥ परस्य वेश्माभिरतामलज्जामेवम्विधां स्त्रीं परिवर्जयामि । वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु ॥ १२ ॥ सत्यासु नित्यं प्रियदर्शनासु सौभाग्ययुक्तासु गुणान्वितासु । पापामचोक्षामवलेहिनीञ्च व्यपेतधैर्य्यां कलहप्रियाञ्च ॥ १३ ॥ निद्राभिभूतां सततं शयानामेवम्विधां तां परिवर्जयामि । यानेषु कन्यासु विभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु ॥ १४ ॥ वसामि फुल्लासु च पद्मिनीषु नक्षत्रवीथीषु च शारदीषु । गजेषु गोष्ठेषु तथासनेषु सरःसु फुल्लोत्पलपङ्कजेषु ॥ १५ ॥ नदीषु

हंसस्वननादिताषु क्रौञ्चावघुष्टस्वरशोभिताषु। प्रकीर्णकूलद्रुमराजिताषु तपस्विसिद्धद्विजसेवितासु ॥ १६ ॥ वसामि नित्यं सुबहूदकासु सिंहैर्गजैश्चाकुलितोदकासु। मत्ते गजे गोवृषभे नरेन्द्रे सिंहासने सत्पुरुषेषु नित्यम् ॥ १७ ॥ यस्मिन् जनो हव्यभुजं जुहोति गोब्राह्मणञ्चार्चति देवताश्च। काले च पुष्पैर्बलयः क्रियन्ते तस्मिन् गृहे नित्यमुपैमि वासम् ॥ १८ ॥ स्वाध्यायनित्येषु सदा द्विजेषु क्षत्रे च धर्माभिरते सदैव। वैश्ये च कृष्याभिरते वसामि शूद्रे च शुश्रूषणनित्ययुक्ते ॥ १९ ॥ नारायणे त्वेकमना वसामि सर्व्वेण भावेन शरीरभूता। तस्मिन् हि धर्म्मः सुमहान्निविष्टो ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ २० ॥ नाहं शरीरेण वसामि देवि नैवं मया शक्यमिहाभिधातुम्। भावेन यस्मिन्निवसामि पुंसि स वर्द्धते धर्म्मयशोऽर्थकामैः ॥ २१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि श्रीरुक्मिणीसंवादे एकादशोऽध्यायः ॥ ११ ॥

---

युधिष्ठिर उवाच। स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत्। एतस्मिन् संशये राजन् यथावद्वक्तुमर्हसि ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। भङ्गास्वनेन शक्रस्य यथा वैरमभूत् पुरा ॥ २ ॥ पुरा भङ्गास्वनो नाम राजर्षिरतिधार्म्मिकः। अपुत्रः पुरुषव्याघ्र पुत्रार्थं यज्ञमाहरत् ॥ ३ ॥ अग्निष्टुतं स राजर्षिरिन्द्रद्विष्टं महाबलः। प्रायश्चित्तेषु मर्त्यानां पुत्रकामेषु चेष्यते ॥ ४ ॥ इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः। अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ॥ ५ ॥ न चैवास्यान्तरं राजन् स ददर्श महात्मनः। कस्यचित्त्वथ कालस्य मृगयां गतवान्नृपः ॥ ६ ॥ इदमन्तरमित्येव शक्रो नृपममोहयत्।

एकोऽश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः॥ ७॥ न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा। इतश्चेतश्च वै राजन् श्रमतृष्णान्वितो नृपः॥ ८॥ सरोऽपश्यत् सुरुचिरं पूर्णं परमवारिणा। सोऽवगाह्य सरस्तात पाययामास वाजिनम्॥ ९॥ अथ पीतोदकं सोऽश्वं वृक्षे बद्धा नृपोत्तमः। अवगाह्य ततस्तात तत्र स्त्रीत्वमुपागतः॥ १०॥ आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः। चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः॥ ११॥ आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम्। इष्टेनाग्निष्टुता चापि पुत्राणां शतमौरसम्॥ १२॥ जातं महाबलानां मे तान् प्रवक्ष्यामि किन्वहम्। दारेषु चात्मकीयेषु पौरजानपदेषु च॥ १३॥ मृदुत्वञ्च तनुत्वञ्च विक्लवत्वं तथैव च। स्त्रीगुणा ऋषिभिः प्रोक्ता धर्म्मतत्वार्थदर्शिभिः॥ १४॥ व्यायामं कर्कशत्वञ्च वीर्य्यञ्च पुरुषे गुणाः। पौरुषं विप्रनष्टं वै स्त्रीत्वं केनापि मेऽभवत्। स्त्रीभावात् पुनरश्वन्तं कथमारोढुमुत्सहे॥ १५॥ महता त्वथ यत्नेन आरुह्याश्वं नराधिपः। पुनरायात् पुरं तात स्त्रीकृतो नृपसत्तमः॥ १६॥ पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते। किमिदन्त्विति विज्ञाय विस्मयं परमं गताः॥ १७॥ अथोवाच स राजर्षिः स्त्रीभूतो वदतां वरः। मृगयामस्मि निर्यातो बलैः परिवृतो दृढम्। उद्भ्रान्तः प्राविशं घोरामटवीं दैवचोदितः॥ १८॥ अटव्याञ्च सुघोरायां तृष्णार्त्तो नष्टचेतनः। सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम्॥ १९॥ तत्रावगाढः स्त्रीभूतो दैवेनाहं कृतः पुरा। नाम गोत्राणि चाभाष्य दाराणां मन्त्रिणां तथा॥ २०॥ आह पुत्रांस्ततः सोऽथ स्त्रीभूतः पार्थिवोत्तमः। संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः॥२१॥ एवमुक्त्वा पुत्रशतं वनमेव जगाम ह। गत्वा चैवाश्रमं सा तु तापसं प्रत्यपद्यत॥ २२॥ तापसेनास्य पुत्राणामाश्रमेष्वभवच्छतम्। अथ सादाय तान् सर्वान् पूर्वपुत्रानभाषत॥ २३॥ पुरुषत्वे सुता यूयं

स्त्रीत्वे चेमे शतं सुताः। एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ॥ २४ ॥ सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा। तान् दृष्ट्वा भ्रातृभावेन भुञ्जानान् राज्यमुत्तमम् ॥ २५ ॥ चिन्तयामास देवेन्द्रो मन्युनाथ परिप्लुतः। उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ २६ ॥ ततो ब्राह्मणरूपेण देवराजः शतक्रतुः। भेदयामास तान् गत्वा नगरं वै नृपात्मजान् ॥ २७ ॥ भ्रातॄणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुः सुताः। राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः ॥ २८ ॥ यूयं भङ्गास्वनापत्यास्तापसस्येतरे सुताः। कश्यपस्य सुताश्चैव असुराश्च सुरास्तथा ॥ २९ ॥ युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः। इन्द्रेण भेदितास्ते तु युद्धेऽन्योऽन्यमपातयन् ॥ ३० ॥ तच्छ्रुत्वा तापसी चापि सन्तप्ता प्ररुरोद ह। ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत ॥ ३१ ॥ केन दुःखेन सन्तप्ता रोदिषि त्वं वरानने। ब्राह्मणन्तु ततो दृष्ट्वा सा स्त्री करुणमब्रवीत् ॥ ३२ ॥ पुत्राणां द्वे शते ब्रह्मन् कालेन विनिपातिते। अहं राजाभवं विप्र तत्र पुत्रशतं मम ॥ ३३ ॥ समुत्पन्नं स्वरूपाणां पुत्राणां ब्राह्मणोत्तम। कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ॥ ३४ ॥ अवगाढ़श्च सरसि स्त्रीभूतो ब्राह्मणोत्तम। पुत्रान् राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ॥ ३५ ॥ स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना। आश्रमे जनितं ब्रह्मन्नीतं तन्नगरं मया ॥ ३६ ॥ तेषाञ्च वैरमुत्पन्नं कालयोगेन वै द्विज। एतच्छोचाम्यहं ब्रह्मन् दैवेन समभिप्लुता ॥ ३७ ॥ इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत् परुषं वचः। पुरा सुदुःसहं भद्रे मम दुःखं त्वया कृतम् ॥ ३८ ॥ इन्द्रद्विष्टेन यजता मामनाहूय धिष्ठितम्। इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते यातितं मया ॥ ३९ ॥ इन्द्रं दृष्ट्वा तु राजर्षिः पादयोः शिरसा गतः। प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ॥ ४० ॥ इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि। प्रणिपातेन तस्येन्द्रः परितुष्टो

वरं ददौ ॥ ४१ ॥ पुत्रास्ते कतमे राजन् जीवन्त्वेतत् प्रचक्ष्व मे । स्त्रीभूतस्य हि ये जाता पुरुषत्वेऽथ येऽभवन् ॥ ४२ ॥ तापसी तु ततः शक्रमुवाच प्रयताञ्जलिः । स्त्रीभूतस्य हि ये पुत्रास्ते मे जीवन्तु वासव ॥ ४३ ॥ इन्द्रस्तु विस्मितो भूत्वा स्त्रियं पप्रच्छ तां पुनः । पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ॥ ४४ ॥ स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम् । कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ॥ ४५ ॥

स्त्र्युवाच । स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै । तस्मात्ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥ ४६ ॥

भीष्म उवाच । एवमुक्तस्ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह । सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ॥ ४७ ॥ वरञ्च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत । पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसे ॥ ४८ ॥

स्त्र्युवाच । स्त्रीत्वमेव वृणे शक्र पुंस्त्वं नेच्छामि वासव । एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह ॥ ४९ ॥ पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं चोदयसे विभो । एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ॥ ५० ॥ स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा । एतस्मात् कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ॥ ५१ ॥ रमे चाभ्यधिकं स्त्रीत्वे सत्यं वै देवसत्तम । स्त्रीभावेन हि तुष्टास्मि गम्यतां त्रिदशाधिप ॥ ५२ ॥ एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः । एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥ ५३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि भङ्गास्वनोपाख्याने द्वादशोऽध्यायः ॥ १२ ॥

---

युधिष्ठिर उवाच। किं कर्त्तव्यं मनुष्येण लोकयात्राहितार्थिना। कथं वै लोकयात्रान्तु किं शीलश्च समाचरेत् ॥ १ ॥

भीष्म उवाच। कायेन त्रिविधं कर्म्म वाचा चापि चतुर्विधम्। मनसा त्रिविधञ्चैव दश कर्म्मपथांस्त्यजेत् ॥ २ ॥ प्राणातिपातः स्तैन्यञ्च परदारमथापि च। त्रीणि पापानि कायेन सर्वतः परिवर्ज्जयेत् ॥ ३ ॥ असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा। चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ ४ ॥ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम्। कर्म्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ ५ ॥ तस्माद्वाक्कायमनसा नाचरेदशुभं नरः। शुभाशुभान्याचरन् हि तस्य तस्याश्नुते फलम् ॥ ६ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि लोकयात्रानुकथने त्रयोदशोऽध्यायः ॥ १३ ॥

---

युधिष्ठिर उवाच। त्वयापगेय नामानि श्रुतानीह जगत्पतेः। पितामहेशाय विभो नामान्याचक्ष्व शम्भवे ॥ १ ॥ बभ्रवे विश्वरूपाय महाभाग्यञ्च तत्त्वतः। सुरासुरगुरौ देवे शङ्करेऽव्यक्तयोनये ॥ २ ॥

भीष्म उवाच। अशक्तोऽहं गुणान् वक्तुं महादेवस्य धीमतः। यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ॥ ३ ॥ ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च। ब्रह्मादयः पिशाचान्ता यं हि देवा उपासते ॥ ४ ॥ प्रकृतीनां परत्वेन पुरुषस्य च यः परः। चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ॥ ५ ॥ अक्षरं परमं ब्रह्म असच्च सदसच्च यः। प्रकृतिं पुरुषञ्चैव क्षोभयित्वा स्वतेजसा। ब्रह्माणमसृजत्तस्माद्देवदेवः प्रजापतिः ॥ ६ ॥ को हि शक्तो गुणान् वक्तुं देवदेवस्य धीमतः। गर्भजन्मजरायुक्तो मर्त्त्यो मृत्युसमन्वितः ॥७॥ को हि शक्तो भवं ज्ञातुं मद्विधः परमेश्वरम्। ऋते नारायणात्

पुत्र शङ्खचक्रगदाधरात् ॥ ८ ॥ एष विद्वान् गुणश्रेष्ठो विष्णुः परम-दुर्ज्जयः। दिव्यचक्षुर्महातेजा वीक्षते योगचक्षुषा ॥ ९ ॥ रुद्रभक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना। तं प्रसाद्य तदा देवं वदर्य्यां किल भारत ॥ १० ॥ अर्थात् प्रियतरत्वञ्च सर्व्वलोकेषु वै तदा। प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात् ॥ ११ ॥ पूर्णं वर्षसहस्रन्तु तप्तवानेष माधवः। प्रसाद्य वरदं देवं चराचरगुरुं शिवम् ॥ १२ ॥ युगे युगे तु कृष्णेन तोषितो वै महेश्वरः। भक्त्या परमया चैव प्रीतश्चैव महात्मनः ॥ १३ ॥ ऐश्वर्य्यं यादृशं तस्य जगद्योनेर्महात्मनः। तदयं दृष्टवान् साक्षात् पुत्रार्थी हरिरच्युतः ॥ १४ ॥ तस्मात् परतरञ्चैव नान्यं पश्यामि भारत। व्याख्यातुं देवदेवस्य शक्तो नामान्यशेषतः ॥ १५ ॥ एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान्। विभूतिञ्चैव कार्त्स्न्येन सत्यां माहेश्वरीं नृप ॥ १६ ॥

वैशम्पायन उवाच। एवमुक्त्वा तदा भीष्मो वासुदेवं महायशाः। भवमाहात्म्यसंयुक्तमिदमाह पितामहः ॥ १७ ॥

भीष्म उवाच। सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि। शिवाय विश्वरूपाय यन्मां पृच्छद्युधिष्ठिरः ॥ १८ ॥ नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मयोनिना। निवेदितं ब्रह्मलोके ब्रह्मणो यत् पुराभवत् ॥ १९ ॥ द्वैपायनप्रभृतयस्तथा चेमे तपोधनाः। ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ॥ २० ॥ ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये। महाभाग्यं विभो ब्रूहि मुण्डिनेऽथ कपर्द्दिने ॥ २१ ॥

वासुदेव उवाच। न गतिः कर्म्मणां शक्या वेत्तुमीशस्य तत्त्वतः। हिरण्यगर्भप्रमुखा देवाः सेन्द्राः महर्षयः ॥ २२ ॥ न विदुर्यस्य भवनमादित्याः सूक्ष्मदर्शिनः। स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ॥ २३ ॥ तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान्। भवतां कीर्त्तयिष्यामि व्रतेशाय यथातथम् ॥ २४ ॥

वैशम्पायन उवाच। एवमुक्त्वा तु भगवान् गुणांस्तस्य महात्मनः। उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ॥ २५ ॥

वासुदेव उवाच। शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वञ्च तात युधिष्ठिर। त्वञ्चापगेय नामानि शृणुष्वेह कपर्द्दिने ॥ २६ ॥ यद्वाप्तञ्च मे पूर्वं शाम्बहेतोः सुदुष्करम्। यथावद्भगवान् दृष्टो मया पूर्वं समाधिना ॥ २७ ॥ शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता। अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् ॥ २८ ॥ प्रद्युम्नचारुदेष्णादीन् रुक्मिण्या वीक्ष्य पुत्रकान्। पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ॥ २९ ॥ शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषम्। आत्मतुल्यं मम सुतं प्रयच्छाच्युत मा चिरम् ॥ ३० ॥ न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किञ्चन। लोकान् सृजेस्त्वमपरानिच्छन् यदुकुलोद्वह ॥ ३१ ॥ त्वया द्वादशवर्षाणि व्रतीभूतेन शुष्यता। आराध्य पशुभर्त्तारं रुक्मिण्यां जनिताः सुताः ॥ ३२ ॥ चारुदेष्णः सुचारुश्च चारुवेशो यशोधनः। चारुश्रवाश्चारुयशाः प्रद्युम्नः शम्भुरेव च ॥ ३३ ॥ यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः। तथा ममापि तनयं प्रयच्छ मधुसूदन ॥ ३४ ॥ इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम्। अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ ३५ ॥ सा च मामब्रवीद्गच्छ विजयाय शिवाय च। ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोनुगाः ॥ ३६ ॥ क्षेत्रौषध्यो यज्ञवाहाश्छन्दांस्यृषिगणा धरा। समुद्रा दक्षिणास्तोभा ऋक्षाणि पितरो ग्रहाः ॥ ३७ ॥ देवपत्न्यो देवकन्या देवमातर एव च। मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ॥ ३८ ॥ सावित्री ब्रह्मविद्या च ऋतवो वत्सरस्तथा। क्षणा लवा मुहूर्त्ताश्च निमेषा युगपर्य्ययाः ॥ ३९ ॥ रक्षन्तु सर्व्वत्र गतं त्वां यादव सुखाय च। अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ॥ ४० ॥ एवं कृतस्वस्त्ययनस्तयाहं ततोऽभ्यनु-

ज्ञाय कपीन्द्रपुत्रीम् । पितुः समीपं नरसत्तमस्य मातुश्च राजंस्तथाङ्गकस्य ॥ ४१ ॥ गत्वा समावेद्य यदब्रवीन्मां विद्याधरेन्द्रस्य सुता भयार्त्ता । तानभ्यनुज्ञाय तदतिदुःखादहं तथैवातिबलञ्च दाभम् ॥ ४२ ॥ तथोचतुः प्रीतियुतौ तदानीं तपः समृद्धिर्भवतोऽस्त्वविघ्नम् ॥ ४३ ॥ प्राप्यानुज्ञां गुरुजनादहं तार्क्ष्यमचिन्तयम् । सोऽवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्ज्जयम् ॥ ४४ ॥ तत्राहमद्भुतान् भावानपश्यं गिरिसत्तमे । देवञ्च तपसां श्रेष्ठं पश्याम्यद्भुतमुत्तमम् ॥ ४५ ॥ दिव्यं वैयाघ्रपादस्य उपमन्योर्महात्मनः । पूजितं देवगन्धर्वैर्ब्राह्म्या लक्ष्म्या समावृतम् ॥ ४६ ॥ धवककुभकदम्बनारिकेलैः कुरवककेतकजम्बुपाटलाभिः । वटवरुणकवत्सनाभविल्वैः सरलकपित्थपियालशालतालैः ॥ ४७ ॥ बदरीकुन्दपुन्नागैरशोकाम्रातिमुक्तकैः । मधुकैः कोविदारैश्च चम्पकैः पनसैस्तथा ॥ ४८ ॥ अन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् । पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितम् ॥ ४९ ॥ नानाशकुनिसंभोज्यैः फलैर्वृक्षैरलङ्कृतम् । यथास्थानविनिक्षिप्तैर्भूषितं भस्मराशिभिः ॥ ५० ॥ रुरुवानरशार्दूलसिंहद्वीपिसमाकुलम् । कुरङ्गबर्हिणाकीर्णं मार्ज्जारभुजगावृतम् ॥ ५१ ॥ पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम् । दिव्यस्त्रीगीतबहुलो मारुतोऽभिमुखो ववौ ॥ ५२ ॥ धारानिनादैर्विहगप्रणादैः शुभैस्तथा बृंहितैः कुञ्जराणाम् । गीतैस्तथाकिन्नराणामुदारैः शुभैः स्वनैः सामगानाञ्च वीर ॥ ५३ ॥ अचिन्त्यं मनसाप्यन्यैः सरोभिः समलङ्कृतम् । विशालैश्चाग्निशरणैर्भूषितं कुसुमावृतैः ॥ ५४ ॥ विभूषितं पुण्यपवित्रतोयया सदा च जुष्टं नृप जह्नुकन्यया । विभूषितं धर्मभृतां वरिष्ठैर्महात्मभिर्वह्निसमानकल्पैः ॥ ५५ ॥ वाय्वाहारैरम्बुपैर्जप्यनित्यैः संप्रक्षालैर्योगिभिर्ध्याननित्यैः । धूमप्राशैरूष्मपैः क्षीरपैश्च संजुष्टञ्च ब्राह्मणेन्द्रैः समन्तात् ॥ ५६ ॥ गोचारिणोऽथाश्म-

कुट्टा दन्तोलूखलिकास्तथा । मरीचिपाः फेनपाश्च तथैव मृगचारिणः ॥ ५७ ॥ अश्वत्थफलभक्ष्याश्च तथाह्युदकशायिनः । चीरचर्म्माम्बरधरास्तथावल्कलधारिणः ॥ ५८ ॥ सुदुःखान्नियमांस्तांस्तान्वहतः सुतपोधनान् । पश्यान्मुनीन् बहुविधान् प्रवेष्टुमुपचक्रमे ॥ ५९ ॥ सुपूजितं देवगणैर्महात्मभिः शिवादिभिर्भारत पुण्यकर्म्मभिः । रराज तच्चाश्रममण्डलं सदा दिवीव राजन् शशिमण्डलं यथा ॥ ६० ॥ क्रीड़न्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत् । प्रभावाद्दीप्ततपसां सन्निकर्षान्महात्मनाम् ॥ ६१ ॥ तत्राश्रमपदे श्रेष्ठे सर्व्वभूतमनोरमे । सेविते द्विजशार्दूलैर्वेदवेदाङ्गपारगैः ॥ ६१ ॥ नानानियमविख्यातैरृषिभिः सुमहात्मभिः । प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ॥ ६२ ॥ तेजसा तपसा चैव दीप्यमानं यथानलम् । शिष्यैरनुगतं शान्तं युवानं ब्राह्मणर्षभम् ॥ ६४ ॥ शिरसा वन्दमानं मामुपमन्युरभाषत । स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः । यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि ॥ ६५ ॥ तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु । धर्म्मे च शिष्यवर्गे च समपृच्छमनामयम् ॥ ६६ ॥ ततो मां भगवानाह साम्ना परमवल्गुना । लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयम् ॥ ६७ ॥ तपः सुमहदास्थाय तोषयेशानमीश्वरम् । इह देवः सपत्नीकः समाक्रीड़त्यधोक्षज ॥ ६८ ॥ इहैनं दैवतश्रेष्ठं देवाः सर्षिगणाः पुरा । तपसा ब्रह्मचर्य्येण सत्येन च दमेन च ॥ ६९ ॥ तोषयित्वा शुभान् कामान् प्राप्तवन्तो जनार्द्दन । तेजसां तपसाञ्चैव निधिः स भगवानिह ॥ ७० ॥ शुभाशुभान्वितान् भावान् विसृजन् सङ्क्षिपन्नपि । आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् ॥ ७१ ॥ हिरण्यकशिपूर्योऽभूद्दानवो मेरुकम्पनः । तेन सर्व्वामरैश्वर्य्यं शर्व्वात् प्राप्तं समार्बुदम् ॥ ७२ ॥ तस्यैव पुत्रप्रवरो मन्दरो नाम विश्रुतः । महा-

देववराच्छक्रं वर्षार्बुदमयोधयत् ॥ ७३ ॥ विष्णोश्चक्रञ्च तद्वीरं वज्रमाखण्डलस्य च। शीर्णं पुराभवत्तात ग्रहस्याङ्गेषु केशव ॥ ७४ ॥ यत्तद्भगवता पूर्वं दत्तं चक्रं तवानघ। जलान्तरचरं हत्वा दैत्यञ्च बलगर्वितम् ॥ ७५ ॥ उत्पादितं वृषाङ्केण दीप्तं ज्वलनसन्निभम्। दत्तं भगवता तुभ्यं दुर्द्धर्षं तेजसाद्भुतम् ॥७६॥ नशक्यं द्रष्टुमन्येन वर्ज्जयित्वा पिनाकिनम्। सुदर्शनं भवत्येवं भवेनोक्तं तदा तु तत् ॥ ७७ ॥ सुदर्शनं तदा तस्य लोके नाम प्रतिष्ठितम्। तज्जीर्णमभवत्तात ग्रहस्याङ्गेषु केशव ॥ ७८ ॥ ग्रहस्यातिबलस्याङ्गे वरदत्तस्य धीमतः। न शस्त्राणि वहन्त्यङ्गे चक्रवज्रशतान्यपि ॥ ७९ ॥ अर्द्द्यमानाश्च विबुधा ग्रहेण सुबली-यसा। शिवदत्तवरान् जघ्नुरसुरेन्द्रान् सुरा भृशम् ॥ ८० ॥ तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतां ददौ। शतं वर्षसहस्राणां सर्व-लोकेश्वरोऽभवत् ॥ ८१ ॥ ममैवानुचरो नित्यं भवितासीति चाब्र-वीत्। तथा पुत्रसहस्राणामयुतञ्च ददौ प्रभुः। कुशद्वीपञ्च स ददौ राज्येन भगवानजः ॥ ८२ ॥ तथाशतमुखो नाम धात्रा सृष्टो महासुरः। येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः ॥ ८३॥ तं प्राह भगवांस्तुष्टः किं करोमीति शङ्करः। तं वै शतमुखः प्राह योगो भवतु मेऽद्भुतः ॥ ८४ ॥ बलञ्च दैवतश्रेष्ठ शाश्वतं संप्रयच्छ मे। तथेति भगवानाह तस्य तद्वचनं प्रभुः ॥ ८५ ॥ स्वायम्भुवः क्रतुश्चापि पुत्रार्थमभवत् पुरा। आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि ॥ ८६ ॥ तस्य चोपददौ पुत्रान् सहस्रं क्रतु संमतान्। योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः ॥ ८७ ॥ याज्ञवल्क्य इति ख्यातः ऋषिः परमधार्मिकः। आराध्य स महादेवं प्राप्तवानतुलं यशः ॥ ८८ ॥ वेदव्यासश्च योगात्मा परा-शरसुतो मुनिः। सोऽपि शङ्करमाराध्य प्राप्तवानतुलं यशः ॥ ८९ ॥ वालिखिल्या मघवता ह्यवज्ञाताः पुरा किल। तैः क्रुद्धैर्भगवान्

रुद्रस्तपसा तोषितोऽह्यभूत् ॥ ९० ॥ तांश्चापि देवतश्रेष्ठः प्राह प्रीतो जगत्पतिः । सुपर्णं सोमहर्त्तारं तपसोत्पादयिष्यथः ॥९१॥ महादेवस्य रोषाच्च आपो नष्टाः पुराभवन् । ताश्च सप्तकपालेन देवैरन्याः प्रवर्त्तिताः । ततः पानीयमभवत् प्रसन्ने त्र्यम्बके भुवि ॥ ९२ ॥ अत्रेर्भार्य्यापि भर्त्तारं संत्यज्य ब्रह्मवादिनी । नाहं तस्य मुनेर्भूयो वशगास्यां कथञ्चन ॥ ९३ ॥ इत्युक्ता सा महादेवमगच्छत् शरणं किल । निराहारा भयादत्रेस्त्रीणि वर्षशतान्यपि ॥ ९४ ॥ अशेत मुषलेष्वेव प्रसादार्थं भवस्य सा । तामब्रवीद्धसन् देवो भविता वै सुतस्तव ॥ ९५ ॥ विना भर्त्रा च रुद्रेण भविष्यति न संशयः । वंशे तवैव नाम्ना तु ख्यातिं यास्यति चेप्सिताम् ॥ ९६ ॥ विकर्णश्च महादेवं तथा भक्तः सुखावहम् । प्रसाद्य भगवान् सिद्धिं प्राप्तवान् मधुसूदन ॥ ९७ ॥ शाकल्यः संशितात्मा वै नववर्षशतान्यपि । आराधयामास भवं मनोयज्ञेन केशव ॥ ९८ ॥ तञ्चाह भगवांस्तुष्टो ग्रन्थकारो भविस्यसि । वत्साक्षया च ते कीर्त्तिस्त्रैलोक्ये वै भविष्यति ॥ ९९ ॥ अक्षयञ्च कुलं तेऽस्तु महर्षिभिरलंकृतम् । भविष्यति द्विजश्रेष्ठः सूत्रकर्त्ता सुतस्तव ॥ १०० ॥ सावर्णिश्चापि विख्यात ऋषिरासीत् कृते युगे । इह तेन तपस्तप्तं षष्टिवर्षशतन्यथ ॥ १०१ ॥ तमाह भगवान् रुद्रः साक्षात्तुष्टोऽस्मि तेऽनघ । ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः ॥ १०२ ॥ शक्रेण तु पुरा देवो वाराणस्यां जनार्द्दन । आराधितोऽभूद्भक्तेन दिग्वावासा भस्मगुण्ठितः ॥ १०३ ॥ आराध्य च महादेवं देवराज्यमवाप्तवान् । नारदेन तु भक्त्यासौ भव आराधितः पुरा । तस्य तुष्टो महादेवो जगौ देवगुरुर्गुरुः ॥१०४॥ तेजसा तपसा कीर्त्त्या त्वत् समो न भविष्यति । गीतेन वादितव्येन नित्यं मामनुयास्यसि ॥ १०५ ॥ मयापि च यथा दृष्टो देवदेवः पुरा विभो । साक्षात् पशुपतिस्तात तच्चापि शृणु

माधव ॥ १०६ ॥ यदर्थञ्च मया देवः प्रयतेन तथा विभो। प्रबोधितो महातेजास्तच्चापि शृणु विस्तरम् ॥ १०७ ॥ यदवाप्तञ्च मे पूर्वं देवदेवान्महेश्वरात्। तत् सर्वं निखिलेनाद्य कथयिष्यामि तेऽनघ ॥ १०८ ॥ पुरा कृतयुगे तात ऋषिरासीन्महायशाः। व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ॥ १०९ ॥ तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः। कस्यचित्त्वथ कालस्य धौम्येन सह माधव ॥ ११० ॥ आगच्छमाश्रमं क्रीड़न मुनीनां भावितात्मनाम्। तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी। लक्षितञ्च मया क्षीरं स्वादुतो ह्यमृतोपमम् ॥ १११ ॥ ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तया। क्षीरौदनसमायुक्तं भोजनं हि प्रयच्छ मे ॥११२॥ अभावाच्चैव दुग्धस्य दुःखिता जननी तदा। ततः पिष्टं समालोड्य तोयेन सह माधव ॥ ११३ ॥ आवयोः क्षीरमित्येवं पानार्थं समुपानयत्। अथ गव्यं पयस्तात कदाचित् प्राशितं मया। पित्राहं यज्ञकाले हि नीतो ज्ञातिकुलं महत् ॥ ११४ ॥ तत्र सा क्षरते देवी दिव्या गौः सुरनन्दिनी। तस्याहं तत् पयः पीत्वा रसेन ह्यमृतोपमम् ॥ ११५ ॥ ज्ञात्वा क्षीरगुणांश्चैव उपलभ्य हि सम्भवम्। स च पिष्टरसस्तात न मे प्रीतिमुपावहत् ॥ ११६ ॥ ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तदा। नेदं क्षीरौदनं मातर्यच्च मे दत्तवत्यसि ॥ ११७ ॥ ततो मामब्रवीन्माता दुःखशोकसमन्विता। पुत्रस्नेहात् परिष्वज्य मूर्द्ध्नि चाघ्राय माधव ॥११८॥ कुतः क्षीरौदनं वत्स मुनीनां भावितात्मनाम्। वने निवसतां नित्यं कन्दमूलफलाशिनाम् ॥ ११९ ॥ आस्थितानां नदीं दिव्यां वालिखिल्यैर्निषेविताम्। कुतः क्षीरं वनस्थानां मुनीनां गिरिवासिनाम् ॥ १२० ॥ पावनानां वनाशानां वनाश्रमनिवासिनाम्। ग्राम्याहारनिवृत्तानामरण्यफलभोजिनाम् ॥ १२१ ॥ नास्ति पुत्र पयोऽरण्ये सुरभीगोत्रवर्ज्जिते। नदीगह्वरशैलेषु तीर्थेषु विवि-

षेषु च ॥ १२२ ॥ तपसा जप्यनित्यानां शिवो नः परमा गतिः । अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम् ॥ १२३ ॥ कुतः क्षीरौदनं वत्स सुखानि वसनानि च । तं प्रपद्य सदा वत्स सर्व्वभावेन शङ्करम् ॥ १२४ ॥ तत् प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक । जनन्यास्तद्वचः श्रुत्वा तदा प्रभृति शत्रुहन् ॥ १२५ ॥ प्राञ्जलिः प्रणतो भूत्वा इदमम्बामचोदयम् । कोऽयमम्ब महादेवः स कथञ्च प्रसीदति ॥ १२६ ॥ कुत्र वा वसते देवो द्रष्टव्यो वा कथञ्चन । तुष्यते वा कथं शर्व्वो रूपं तस्य च कीदृशम् । कथं ज्ञेयः प्रसन्नो वा दर्शयेज्जननी मम ॥ १२७ ॥ एवमुक्ता तदा कृष्ण माता मे सुतवत्सला । मूर्द्धन्याघ्राय गोविन्द सवाष्पाकुललोचना ॥ १२८ ॥ प्रमार्ज्जतीव गात्राणि मम वै मधुसूदन । दैन्यमालम्ब्य जननी इदमाह सुरोत्तम ॥ १२९ ॥

अम्बोवाच । दुर्विज्ञेयो महादेवो दुराधारो दुरन्तकः । दुराबाधश्च दुर्ग्राह्यो दुर्दृशो ह्यकृतात्मभिः ॥ १३० ॥ यस्य रूपाण्यनेकानि प्रवदन्ति मनीषिणः । स्थानानि च विचित्राणि प्रसादाश्चाप्यनेकशः ॥ १३१ ॥ को हि तत्त्वेन तद्वेद ईशस्य चरितं शुभम् । कृतवान् यानि रूपाणि देवदेवः पुरा किल ॥ १३२ ॥ क्रीड़ते च तथा शर्व्वः प्रसीदति यथा च वै । हृदिस्थः सर्व्वभूतानां विश्वरूपो महेश्वरः ॥ १३३ ॥ भक्तानामनुकम्पार्थं दर्शनञ्च यथाश्रुतम् । मुनीनां ब्रुवतां दिव्यमीशानचरितं शुभम् ॥ १३४ ॥ कृतवान् यानि रूपाणि कथितानि दिवौकसैः । अनुग्रहार्थं विप्राणां शृणु वत्स समासतः । तानि ते कीर्त्तयिष्यामि यन्मां त्वं परिपृच्छसि ॥ १३५ ॥

अम्बोवाच । ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि । विश्वेषामपि देवानां वपुर्धारयते भवः ॥ १३६ ॥ नराणां चैव नारीणां तथा प्रेतपिशाचयोः । किरातशवराणाञ्च जलजाना-

अनेकशः। करोति भगवान् रूपाख्याटव्यशवराखपि ॥ १३७ ॥ कूर्मो मत्स्यस्तथा शङ्खः प्रवालांकुरभूषणः ॥ १३८ ॥ यक्षराक्षस-सर्पाणां दैत्यदानवयोरपि। वपुर्धारयते देवो भूयश्च बिलवासि-नाम् ॥ १३९ ॥ व्याघ्रसिंहमृगाणाञ्च तरक्ष्वृक्षपतत्रिणाम्। उलूकस्य शृगालानां रूपाणि कुरुतेऽपि च ॥ १४० ॥ हंसकाक-मयूराणां कृकलासकसारसाम्। रूपाणि च बलाकानां गृध्र-चक्राङ्गयोरपि ॥ १४१ ॥ करोति चासरूपाणि धारयत्यपि पर्व-तान्। गोरूपश्च महादेवो हस्त्यश्वोष्ट्रखराकृतिः ॥ १४२ ॥ छाग-शार्दूलरूपश्च अनेकमृगरूपधृक्। अण्डजानाञ्च दिव्यानां वपु-र्धारयते भवः ॥ १४३ ॥ दण्डी छत्री च कुण्डी च द्विजानां धारणस्तथा। षण्मुखो वै बहुमुखस्त्रिनेत्रो बहुशीर्षकः ॥१४४॥ अनेककटिपादश्च अनेकोदरवक्त्रधृक्। अनेकपाणिपार्श्वश्च अनेक-गणसंवृतः ॥ १४५ ॥ ऋषिगन्धर्वरूपश्च सिद्धचारणरूपधृक्। भस्मपाण्डुरगात्रश्च चन्द्रार्द्धकृतभूषणः ॥ १४६ ॥ अनेकरावसंघुष्ट-श्चानेकस्तुतिसंस्तुतः। सर्वभूतान्तकः शर्वः सर्वलोकप्रतिष्ठितः ॥ १४७ ॥ सर्वलोकान्तरात्मा च सर्वगः सर्ववाद्यपि। सर्वत्र भगवान् ज्ञेयो हृदिस्थः सर्वदेहिनाम् ॥ १४८ ॥ यो हि यं कामयेत् कामं यस्मिन्नर्थेऽर्च्यते पुनः। तत् सर्वं वेत्ति देवेशस्तं प्रपद्य यदीच्छसि ॥ १४९ ॥ नन्दते कुप्यते चापि तथा हुङ्कारय-त्यपि। चक्री शूली गदापाणिर्मुषली खड्गपट्टिशी ॥ १५० ॥ भूधरो नागमौञ्जी च नागकुण्डलकुण्डली। नागयज्ञोपवीती च नागचर्मोत्तरच्छदः ॥ १५१ ॥ हसते गायते चैव नृत्यते च मनोहरम्। वादयत्यपि वाद्यानि विचित्राणि गणैर्युतः ॥ १५२ ॥ वल्गते जृम्भते चैव रुदते रोदयत्यपि। उन्मत्तोमत्तरूपश्च भाषते चापि सुस्वरः ॥ १५३ ॥ अतीव हससे रौद्रस्त्रासयन्नयनैर्ज्वलन्। जागर्त्ति चैव स्वपिति जृम्भते च यथासुखम् ॥ १५४ ॥ जपते

जप्यते चैव तपते तप्यते पुनः। ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च ॥ १५५ ॥ वेदिमध्ये तथा यूपे गोष्ठमध्ये हुताशने। दृश्यतेऽदृश्यते चापि बालो वृद्धो युवा तथा ॥ १५६ ॥ क्रीड़ते ऋषिकन्याभिर्ऋषिपत्नीभिरेव च। ऊर्द्ध्वकेशो महाकेशो नग्नो विकृतलोचनः ॥ १५७ ॥ गौरः श्यामस्तथा कृष्णः पाण्डुरो धूम्र-लोहितः। विकृताक्षो विशालाक्षो दिग्वासाः सर्व्ववासकः ॥१५८॥ अरूपस्याद्यरूपस्य अतिरूपाद्यरूपिणः। अनाद्यन्तमजस्यान्तं वेत्स्यते कोऽस्य तत्त्वतः ॥ १५९ ॥ हृदि प्राणो मनो जीवो योगात्मा योगसंज्ञितः। ध्यानं तत्परमात्मा च भावग्राह्यो महे-श्वरः ॥ १६० ॥ वादको गायनश्चैव सहस्रशतलोचनः। एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रोऽनेकवक्त्रकः ॥ १६१ ॥ तद्भक्तस्तद्गतो नित्यं तन्निष्ठस्तत्परायणः। भज पुत्र महादेवं ततः प्राप्स्यसि चेप्सि-तम् ॥ १६२ ॥ जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन्। मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ॥ १६३ ॥ ततोऽहं तप आस्थाय तोषयामास शङ्करम्। एकं वर्षसहस्रन्तु वामाङ्गुष्ठाग्रधिष्ठितः ॥ १६४ ॥ एकं वर्षशतञ्चैव फलाहारस्ततोऽभवम्। द्वितीयं शीर्ण-पर्णाशी तृतीयञ्चाम्बुभोजनः ॥ १६५ ॥ शतानि सप्त चैवाहं वायु-भक्षस्तदाभवम्। एवं वर्षसहस्रन्तु दिव्यमाराधितो मया ॥१६६॥ ततस्तुष्टो महादेवो सर्व्वलोकेश्वरः प्रभुः। एकभक्तः इति ज्ञात्वा जिज्ञासां कुरुते तदा ॥ १६७ ॥ शक्ररूपं स कृत्वा तु सर्व्वैर्देव-गणैर्वृतः। सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः ॥ १६८ ॥ सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम्। आवेष्टितकरं घोरं चतुर्द्दंष्ट्रं महागजम् ॥ १६९ ॥ समास्थितः स भगवान् दीप्यमानः स्वतेजसा। आजगाम किरीटी तु हारकेयूरभूषितः ॥ १७० ॥ पाण्डरेणातपत्रेण ध्रियमाणेन मूर्द्धनि। सेव्यमानोऽप्सरोभिश्च दिव्यगन्धर्वनादितैः ॥ १७१ ॥ ततो मामाह देवेन्द्रस्तुष्टस्तेऽहं

द्विजोत्तम। वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्त्तते॥ १७२॥ शक्रस्य तु वचः श्रुत्वा नाहं प्रीतमनाभवम्। अब्रुवञ्च तदा कृष्ण देवराजमिदन्त्वचः॥ १७३॥ नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात्। महादेवादृते सौम्य सत्यमेतद्‌ब्रवीमि ते॥ १७४॥ सत्यं सत्यं हि नः शक्र वाक्यमेतत् सुनिश्चितम्। न यन्महेश्वरं मुक्त्वा कथान्या मम रोचते॥ १७५॥ पशुपतिवचनाद्भवामि सद्यः कृमिरथ वा तरुरप्यनेकशाखः। अपशुपतिवरप्रसादजा मे त्रिभुवनराज्यविभूतिरप्यनिष्टा॥ १७६॥ जन्म श्वपाकमध्येऽपि मेऽस्तु हरचरणवन्दनरतस्य। मानीश्वरभक्तो भवानि भवनेऽपि शक्रस्य॥ १७७॥ वाय्वम्बुभुजोऽपि सतो नरस्य दुःखक्षयः कुतस्तस्य। भवति हि सुरासुरगुरौ यस्य न विश्वेश्वरे भक्तिः॥१७८॥ अलमन्याभिस्तेषां कथाभिरप्यन्यधर्म्मयुक्ताभिः। येषां न क्षणमपि रुचितो हरचरणस्मरणविच्छेदः॥ १७९॥ हरचरणनिरतमतिना भवितव्यमनार्ज्जवं युगं प्राप्य। संसारभयं न भवति हरभक्तिरसायनं पीत्वा॥ १८०॥ दिवसं दिवसार्द्धं वा मुहूर्त्तं वा क्षणं लवम्। न ह्यलब्धप्रसादस्य भक्तिर्भवति शङ्करे॥ १८१॥ अपि कीटपतङ्गो वा भवेयं शङ्कराज्ञया। न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये॥ १८२॥ श्वापि महेश्वरवचनात् भवामि स हि नः परः कामः। त्रिदशगणराज्यमपि खलु नेच्छाम्यमहेश्वराज्ञप्तम्॥ १८३॥ न नाकपृष्ठं न च देवराज्यं न ब्रह्मलोकं न च निष्कलत्वम्। न सर्वकामानखिलान् वृणोमि हरस्य दासत्वमहं वृणोमि॥ १८४॥ यावच्छशाङ्कधवलामलबद्धमौलिर्न प्रीयते पशुपतिर्भगवान्ममेशः। तावज्जरामरणजन्मशताभिघातैर्दुःखानि देहविहितानि समुद्वहामि॥ १८५॥ दिवसकरशशाङ्कवह्निदीप्तं त्रिभुवनसारमसारमाद्यमेकम्। अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शान्तिम्॥ १८६॥ यदि नाम

जन्म भूयो भवति मदीयैः पुनर्द्दोषैः। यस्मिन् तस्मिन् जन्मनि भवे भवेन्मेऽचया भक्तिः ॥ १८७ ॥

शक्र उवाच। कः पुनर्भवने हेतुरीशे कारणकारणे। येन शर्व्वादृतेऽन्यस्मात् प्रसादं नाभिकाङ्क्षसि ॥ १८८ ॥

उपमन्युरुवाच। सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः। नित्यमेकमनेकञ्च वरं तस्माद्वृणीमहे ॥ १८९ ॥ अनादिमध्यपर्य्यन्तं ज्ञानैश्वर्य्यमचिन्तितम्। आत्मानं परमं यस्मादरं तस्माद्वृणीमहे ॥ १९० ॥ ऐश्वर्य्यं सकलं यस्मादनुत्पादितमव्ययम्। अबीजाद्बीजसम्भूतं वरं तस्माद्वृणीमहे ॥ १९१ ॥ तमसः परमं ज्योतिः तपस्तद्वृत्तिनां परम्। यं ज्ञात्वा नानुशोचन्ति वरं तस्माद्वृणीमहे ॥ १९२ ॥ भूतभावनभावज्ञं सर्व्वभूताद्भिभावनम्। सर्व्वगं सर्व्वदं देवं पूजयामि पुरन्दर ॥ १९३ ॥ हेतुवादैर्विनिर्म्मुक्तं साङ्ख्ययोगार्थदं परम्। यमुपासन्ति तत्त्वज्ञा वरं तस्माद्वृणीमहे ॥ १९४ ॥ मघवन् मघवात्मानं यं वदन्ति सुरेश्वरम्। सर्व्वभूतगुरुं देवं वरं तस्माद्वृणीमहे ॥ १९५ ॥ यः पूर्व्वमसृजद्देवं ब्रह्माणं लोकभावनम्। अण्डमाकाशमापूर्य्य वरं तस्माद्वृणीमहे ॥ १९६ ॥ अग्निरापोऽनिलः पृथ्वी खं बुद्धिश्च मनो महान्। स्रष्टा चैषां भवेद्योऽन्यो ब्रूहि कः परमेश्वरात् ॥ १९७ ॥ मनो-मतिरहङ्कारस्तन्मात्राणीन्द्रियाणि च। ब्रूहि चैषां भवेच्छक्र कोऽन्योऽस्ति परमः शिवात् ॥ १९८ ॥ स्रष्टारं भवनस्येह वदन्ति हि पितामहम्। आराध्य स तु देवेशमश्नुते महतीं श्रियम् ॥१९९॥ भगवत्युत्तमैश्वर्य्यं ब्रह्मविष्णुपुरोगमम्। विद्यते वै महादेवात् ब्रूहि कः परमेश्वरात् ॥ २०० ॥ दैत्यदानवमुख्यानामाधिपत्या-रिमर्द्दनात्। कोऽन्यः शक्नोति देवेशाद्दितेः सम्पादितुं सुतान् ॥ २०१ ॥ दिक्कालसूर्य्यतेजांसि ग्रहवाय्वम्बुतारकाः। विद्धि त्वेते महादेवात् ब्रूहि कः परमेश्वरात् ॥ २०२ ॥ अथोत्पत्तौ विनाशे

वा यज्ञस्य त्रिपुरस्य वा । दैत्यदानवमुख्यानामाधिपत्यारिमर्द्दनः ॥ २०३ ॥ किन्तात बहुभिः सूक्तैर्हेतुवादैः पुरन्दर । सहस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ॥ २०४॥ पूजितं सिद्धगन्धर्वैर्देवैश्च ऋषिभिस्तथा । देवदेवप्रसादेन तत् सर्वं कुशिकोत्तम ॥ २०५ ॥ अव्यक्तमुक्तकेशाय सर्वगस्येदमात्मकम् । चेतनाचेतनाद्येषु शक्र विद्धि महेश्वरात् ॥ २०६ ॥ भुवाद्येषु महान्तेषु लोकालोकान्तरेषु च । द्वीपस्थाने च मेरोश्च विभवेष्वन्तरेषु च । भगवन् मघवन् देवं वदन्ते तत्त्वदर्शिनः ॥ २०७ ॥ यदि देवासुराः शक्रः पश्यन्त्यन्यां भवाकृतिम् । किं न गच्छन्ति शरणमर्द्दिताश्चासुरैः सुराः ॥२०८॥ अभिघातेषु देवानां सयक्षोरगरक्षसाम् । परस्परविनाशेषु स्वस्थानैश्वर्य्यदो भवः ॥ २०९ ॥ अन्धकस्याथ शुक्रस्य दुन्दुभेर्महिषस्य च । यक्षेन्द्रबलरक्षःसु निवातकवचेषु च । वरदानावघाताय ब्रूहि कोऽन्यो महेश्वरात् ॥ २१० ॥ सुरासुरगुरोर्वक्त्रे कस्य रेतः पुरा हुतम् । कस्य वान्यस्य रेतस्तद्येन हैमगिरिः कृतः ॥ २११ ॥ दिग्वासाः कीर्त्त्यते कोऽन्यो लोके कश्चोर्द्ध्वरेतसः । कस्य चार्द्धे स्थिता कान्ता अनङ्गः केन निर्ज्जितः ॥ २१२ ॥ ब्रूहीन्द्र परमं स्थानं कस्य देवैः प्रशस्यते । श्मशाने कस्य क्रीड़ार्थं नृत्ये वा कोऽभिभाष्यते ॥ २१३ ॥ कस्यैश्वर्य्यं समानं वा भूतैः को वापि क्रीड़ते । कस्य तुल्यबला देवगणाश्चैश्वर्य्यदर्पिताः ॥ २१४ ॥ घुष्यते ह्यचलं स्थानं कस्य त्रैलोक्यपूजितम् । वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः ॥ २१५ ॥ कस्माच्चौषधिसम्पत्तिः को वा धारयते वसु । प्रकामं क्रीड़ते को वा त्रैलोक्ये सचराचरे ॥ २१६ ॥ ज्ञानसिद्धिक्रियायोगैः सेव्यमानश्च योगिभिः । ऋषिगन्धर्वसिद्धैश्च कारणं विद्धि तं हरे ॥ २१७ ॥ कर्म्मयोग्यक्रियायोगैः सेव्यमानः सुरासुरैः । नित्यं कर्म्मफलैर्हीनं तमहं कारणं वदे ॥ २१८ ॥ स्थूलसूक्ष्ममनौपम्यमग्राह्यं गुणगोचरम् । गुणहीनं

गुणाध्यक्षं परं माहेश्वरं पदम् ॥ २१९ ॥ स्थित्युत्पत्योः कारणञ्च लोका लोकान्तकारणम्। भूतं भव्यं भविष्यञ्च जनकं सर्वकारणम् ॥ २२० ॥ अक्षरं क्षरमव्यक्तं विद्याविद्ये कृताकृते। धर्माधर्मौ यतः शक्र तमहं कारणं वदे ॥ २२१ ॥ प्रत्यक्षमिह देवेन्द्र पश्य लिङ्गं भगाङ्कितम्। देवदेवेन रुद्रेण सृष्टिसंहारहेतुना ॥ २२२ ॥ मात्रा पूर्वं समाख्यातं कारणं लोककारणम्। नास्ति चेशात् परं शक्र तं प्रपद्य यदीच्छसि ॥ २२३ ॥ प्रत्यक्षं ननु ते सुरेश विदितं संयोगलिङ्गोद्भवं त्रैलोक्यं सविकारनिर्गुणगुणं ब्रह्मादिरेतोद्भवम्। यद्ब्रह्मेन्द्रहुताशविष्णुसहिता देवाश्च दैत्यासुरा नान्यत्कामसहस्रछन्दितधियः शंसन्ति यस्मात् परम् ॥२२४॥ तं देवं सचराचरस्य विदितं व्याख्यातदेवोत्तमम्। कामार्थी वरयामि संयतमना मोक्षाय सद्यः शिवम् ॥ २२५ ॥ हेतुभिर्वा किमन्यैस्तैरीशः कारणकारणम्। न शुश्रुम यदन्यस्य लिङ्गमभ्यर्च्चितं सुरैः ॥ २२६ ॥ कस्यान्यस्य सुरैः सर्वैर्लिङ्गं मुक्ता महेश्वरम्। अर्च्चयतेर्च्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतिः ॥ २२७ ॥ यस्य ब्रह्मा च विष्णुश्च त्वञ्चापि सह दैवतैः। अर्च्चयेथाः सदा लिङ्गं तस्माच्छ्रेष्टतमो हि सः ॥ २२८ ॥ न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजा। लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा ॥ २२९ ॥ देव्याः कारणरूपभावजनिताः सर्वा भगाङ्काः स्त्रियो लिङ्गेनापि हरस्य सर्वपुरुषाः प्रत्यक्षचिह्नीकृताः। योऽन्यत् कारणमीश्वरात् प्रवदते देव्या च यन्नाङ्कितं त्रैलोक्ये सचराचरे स तु पुमान् वाच्यो भवेद्दुर्म्मतिः ॥ २३० ॥ पुंलिङ्गं सर्वमीशानं स्त्रीलिङ्गं विद्धि चाप्युमाम्। द्वाभ्यां तनुभ्यां व्याप्तं हि चराचरमिदं जगत् ॥ २३१ ॥ तस्माद्वरमहं काङ्क्षे निधनं वापि कौशिक। गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ॥ २३२ ॥ काममेष वरो मेऽस्तु शापो वाथ महेश्वरात्। न चान्यां देवतां काङ्क्षे

सर्वकामफलामपि ॥ २३३ ॥ एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः। न प्रसीदति मे देवः किमेतदिति चिन्तयन् ॥ २३४ ॥ अथापश्यं क्षणेनैव तमेवैरावतं पुनः। हंसकुन्देन्दुसदृशं मृणालरजतप्रभम् ॥ २३५ ॥ वृषरूपधरं साक्षात् क्षीरोदमिव सागरम्। कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ॥ २३६ ॥ वज्रसारमयैः शृङ्गैर्निष्टप्तकनकप्रभैः। सुतीक्ष्णैर्मृदुरक्ताग्रैरुत्किरन्तमिवावनिम् ॥ २३७ ॥ जाम्बूनदेन दाम्ना च सर्वतः समलंकृतम्। सुवक्त्रखुरनासञ्च सुकर्णं सुकटीतटम् ॥ २३८ ॥ सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम्। ककुदं तस्य चाभाति स्कन्धमापूर्य धिष्ठितम् ॥ २३९ ॥ तुषारगिरिकूटाभं सिताभ्रशिखरोपमम्। तमास्थितश्च भगवान् देवदेवः सहोमया ॥ २४० ॥ अशोभत महादेवः पौर्णमास्यामिवोडुराट्। तस्य तेजोभवो वह्निः समेघस्तनयित्नुमान् ॥ २४१ ॥ सहस्रमिव सूर्य्याणां सर्वमापूर्य धिष्ठितम्। ऐश्वरन्तु तदा तेजः सम्वर्त्तक इवानलः। युगान्ते सर्वभूतानां दिधक्षुरिव चोद्यतः ॥ २४२ ॥ तेजसा तु तदाव्याप्तं दुर्निरीक्षं समन्ततः। पुनरुद्विग्नहृदयः किमेतदिति चिन्तयन् ॥ २४३ ॥ मुहूर्त्तमिव तत्तेजो व्याप्तं सर्वा दिशो दश। प्रशान्तं दिक्षु सर्वासु देवदेवस्य मायया ॥ २४४ ॥ अथापश्यं स्थितं स्थाणुं भगवन्तं महेश्वरम्। सौरभेयगतं सौम्यं विधूममिव पावकम् ॥ २४५ ॥ सहितं चारुसर्वाङ्ग्या पार्वत्या परमेश्वरम्। नीलकण्ठं महात्मानमसक्तं तेजसां निधिम्। अष्टादशभुजं स्थाणुं सर्वाभरणभूषितम् ॥ २४६ ॥ शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम्। शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ॥ २४७ ॥ गायद्भिर्नृत्यमानैश्च वादयद्भिश्च सर्वशः। वृतं पार्श्वचरैर्दिव्यैरात्मतुल्यपराक्रमैः ॥ २४८ ॥ बालेन्दुमुकुटं पाण्डुं शरच्चन्द्रमिवोदितम्। त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिः सूर्य्यैरिवोदितैः ॥ २४९ ॥ अशोभत च

देवस्य माला गात्रे सितप्रभे। जातरूपमयैः पद्मैर्ग्रथिता रत्न-
भूषिता ॥ २५० ॥ मूर्त्तिमन्ति तथास्त्राणि सर्वतेजोमयानि च।
मया दृष्टानि गोविन्द भवस्यामिततेजसः ॥ २५१ ॥ इन्द्रायुध-
सवर्णाभं धनुस्तस्य महात्मनः। पिनाकमिति यत् ख्यातं स च
वै पन्नगो महान् ॥ २५२ ॥ सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो
विषोल्बणः। ज्यावेष्टित महाग्रीवः स्थितः पुरुषविग्रहः ॥ २५३ ॥
शरश्च सूर्य्यसङ्काशः कालानलसमद्युतिः। यत्तदस्त्रं महाघोरं
दिव्यं पाशुपतं महत् ॥ २५४ ॥ अद्वितीयमनिर्द्देश्यं सर्वभूतभया-
वहम्। सस्फुलिङ्गं महाकायं विसृजन्तमिवानलम् ॥ २५५ ॥
एकपादं महादंष्ट्रं सहस्रशिरसोदरम्। सहस्रभुजजिह्वाक्ष-
मुद्गिरन्तमिवानलम् ॥ २५६ ॥ ब्राह्मान्नारायणादैन्द्रादाग्नेया-
दपि वारुणात्। यद्विशिष्टं महाबाहो सर्वशस्त्रविघातनम् ॥२५७॥
येन तत्त्रिपुरं दग्ध्वा क्षणाद्भस्मीकृतं पुरा। शरेणैकेन गोविन्द
महादेवेन लीलया ॥ २५८ ॥ निर्द्ददाह जगत् कृत्स्नं त्रैलोक्यं
सचराचरम्। महेश्वरभुजोत्सृष्टं निमेषार्द्धान्नसंशयः ॥ २५९ ॥
नावध्यो यस्य लोकेऽस्मिन् ब्रह्मविष्णुसुरेष्वपि। तदहं दृष्टवां-
स्तात आश्चर्य्याद्भुतमुत्तमम् ॥ २६० ॥ गुह्यमस्त्रं परञ्चान्यत्तत्तुल्य-
मधिकं हि वा। यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः ॥२६१॥
दारयेद्यां महीं कृत्स्नां शोषयेद्वा महोदधिम्। संहरेद्वा जगत्
कृत्स्नं विसृष्टं शूलपाणिना ॥ २६२ ॥ यौवनाश्वो हतो येन
मान्धाता सबलः पुरा। चक्रवर्त्ती महातेजास्त्रिलोकविजयी नृपः
॥ २६३ ॥ महाबलो महावीर्य्यः शक्रतुल्यपराक्रमः। करस्थेनैव
गोविन्द लवणस्येह रक्षसः ॥ २६४ ॥ तच्छूलमतितीक्ष्णाग्रं
सुभीमं लोमहर्षणम्। त्रिशिखां भ्रुकुटीं कृत्वा तर्ज्जमानमिव
स्थितम् ॥ २६५ ॥ विधूमं सार्च्चिषं कृष्ण कालसूर्य्यमिवोदितम्।
सर्पहस्तमनिर्द्देश्यं पाशहस्तमिवान्तकम् ॥ २६६ ॥ दृष्टवानस्मि

गोविन्द तदस्त्रं रुद्रसन्निधौ। परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा ॥ २६७ ॥ महादेवेन तुष्टेन क्षत्रियाणां क्षयङ्करः। कार्त्तवीर्य्यो हतो येन चक्रवर्त्ती महामृधे ॥ २६८ ॥ त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता। जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्म्मणा ॥ २६९ ॥ दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रधिष्ठितः। अभवच्छूलिनोऽभ्यासे दीप्तवह्निशिखोपमः ॥ २७० ॥ असङ्ख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः। प्राधान्यतो मयैतानि कीर्त्तितानि तवानघ ॥ २७१ ॥ सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः। दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ॥ २७२ ॥ वामपार्श्वगतश्चापि तथा नारायणः स्थितः। वैनतेयं समारुह्य शङ्खचक्रगदाधरः ॥ २७३ ॥ स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः। शक्तिघण्टे समादाय द्वितीय इव पावकः ॥ २७४ ॥ पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम्। शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शङ्करम् ॥ २७५ ॥ स्वायम्भुवाद्या मुनयो भृग्वाद्याश्चर्षयस्तथा। शक्राद्या देवताश्चैव सर्व एव समभ्ययुः ॥ २७६ ॥ सर्वभूतगणाश्चैव मातरो विविधाः स्थिताः। तेऽभिवाद्य महात्मानं परिवार्य्य समन्ततः ॥ २७७ ॥ अस्तुवन् विविधैस्तोत्रैर्महादेवं सुरास्तदा। ब्रह्मा भवं तदास्तौषीद्रथन्तरमुदीरयन् ॥ २७८ ॥ ज्येष्ठ साम्ना च देवेशं जगौ नारायणस्तदा। गृणन् ब्रह्म परं शक्रः शतरुद्रियमुत्तमम् ॥ २७९ ॥ ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः। अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः ॥ २८० ॥ तेषां मध्यगतो देवो रराज भगवाञ्छिवः। शरदभ्रविनिर्मुक्तः परिधिस्थ इवांशुमान् ॥ २८१ ॥ अयुतानि च चन्द्रार्कानपश्यं दिवि केशव। ततोऽहमस्तुवं देवं विश्वस्य जगतः पतिम् ॥ २८२ ॥

उपमन्युरुवाच। ओं नमो देवाधिदेवाय महादेवाय वै नमः।

शक्ररूपाय शक्राय शक्रवेशधराय च ॥ २८३ ॥ नमस्ते वज्रहस्ताय पिङ्गलायारुणाय च। पिनाकपाणये नित्यं शङ्खशूलधराय च ॥ २८४ ॥ नमस्ते कृष्णवासाय कृष्णाकुञ्चितमूर्द्धजे। कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च ॥ २८५ ॥ शुक्लवर्णाय शुक्लाय शुक्लाम्बरधराय च। शुक्लभस्मावलिप्ताय शुक्लकर्म्मरताय च ॥२८६॥ नमोऽस्तु रक्तवर्णाय रक्ताम्बरधराय च। रक्तध्वजपताकाय रक्तस्रगनुलेपिने ॥ २८७ ॥ नमोऽस्तु पीतवर्णाय पीताम्बरधराय च। पीतध्वजपताकाय पीतस्रगनुलेपिने। नमोऽस्तूच्छ्रितछत्राय किरीटवरधारिणे ॥ २८८॥ अर्द्धहारार्द्धकेयूर अर्द्धकुण्डलकर्णिने। नमः पवनवेगाय नमो देवाय वै नमः ॥ २८९ ॥ सुरेन्द्राय मुनीन्द्राय महेन्द्राय नमोऽस्तु ते। नमः पद्मार्द्धमालाय उत्पलैर्मिश्रिताय च ॥ २९० ॥ अर्द्धचन्दनलिप्ताय अर्द्धस्रगनुलेपिने ॥ २९१ ॥ नम आदित्यवर्णाय आदित्यप्रतिमाय च। नम आदित्यवक्त्राय आदित्यनयनाय च ॥ २९२ ॥ नमः सोमाय सौम्याय सौम्यचक्रधराय च। सौम्यरूपाय मुख्याय सौम्यदंष्ट्राविभूषिणे ॥ २९३ ॥ नमः श्यामाय गौराय अर्द्धपीतार्द्धपाण्डवे। नारीनरशरीराय स्त्रीपुंसाय नमोऽस्तु ते ॥ २९४ ॥ नमो वृषभवाहाय गजेन्द्रगमनाय च। दुर्गमाय नमस्तुभ्यमगम्यगमनाय च। नमोऽस्तु गणगीताय गणवृन्दरताय च। गणानुजातमार्गाय गणनित्यव्रताय च ॥ २९५ ॥ नमः श्वेताभ्रवर्णाय सन्ध्यारागप्रभाय च। अनुद्दिष्टाभिधानाय स्वरूपाय नमोऽस्तु ते। नमो रक्ताग्रवासाय रक्तसूत्रधराय च ॥ २९६ ॥ रक्तमालाविचित्राय रक्ताम्बरधराय च। मणिभूषितमूर्द्धाय नमश्चन्द्रार्द्धभूषिणे ॥ २९७ ॥ विचित्रमणिमूर्द्धाय कुसुमाष्टधराय च। नमोऽग्निमुखनेत्राय सहस्रशशिलोचने ॥ २९८ ॥ अग्निरूपाय कान्ताय नमोऽस्तु गहनाय च। खचराय नमस्तुभ्यं गोचराभिरताय च ॥ २९९ ॥ भूच-

राय भुवनाय अनन्ताय शिवाय च। नमो दिग्वाससे नित्यमधि-
वाससुवाससे॥ ३००॥ नमो जगन्निवासाय प्रतिपत्तिसुखाय च।
नित्यमुद्दद्दमुकुटे महाकेयूरधारिणे॥ ३०१॥ सर्पकण्ठोपहाराय
विचित्राभरणाय च। नमस्त्रिनेत्रनेत्राय सहस्रशतलोचने॥३०२॥
स्त्रीपुंसाय नपुंसाय नमः साङ्ख्याय योगिने। शंयोरभिस्रवन्ताय
अथर्वाय नमो नमः॥ ३०३॥ नमः सर्वार्त्तिनाशाय नमः शोक-
हराय च। नमो मेघनिनादाय बहुमायाधराय च॥ ३०४॥
बीजक्षेत्राभिपालाय स्रष्टाराय नमो नमः। नमः सर्वसुरेशाय
विश्वेशाय नमो नमः॥ ३०५॥ नमः पवनवेगाय नमः पवन-
रूपिणे। नमः काञ्चनमालाय गिरिमालाय वै नमः॥ ३०६॥
नमः सुरारिमालाय चण्डवेगाय वै नमः। ब्रह्मशिरोपहर्त्ताय
महिषघ्नाय वै नमः॥ ३०७॥ नमस्त्रिरूपधराय सर्वरूपधराय
च। नमस्त्रिपुरहर्त्ताय यज्ञविध्वंसनाय च॥ ३०८॥ नमः
कामाङ्गनाशाय कालदण्डधराय च। नमः स्कन्दविशाखाय ब्रह्म-
दण्डाय वै नमः॥ ३०९॥ नमो भवाय सर्वाय विश्वरूपाय वै
नमः। ईशानाय भवघ्नाय नमोऽस्त्वन्धकघातिने॥ ३१०॥ नमो
विश्वाय मायाय चिन्त्याचिन्त्याय वै नमः। त्वं नो गतिश्च श्रेष्ठश्च
त्वमेव हृदयं तथा॥ ३११॥ त्वं ब्रह्मा सर्वदेवानां रुद्राणां नील-
लोहितः। आत्मा च सर्वभूतानां सांख्ये पुरुष उच्यते॥ ३१२॥
ऋषभस्त्वं पवित्राणां योगिनां निष्कलः शिवः। गृहस्थस्त्वमा-
श्रमिणामीश्वराणां महेश्वरः॥ ३१३॥ कुवेरः सर्वयक्षाणां
क्रतूनां विष्णुरुच्यते। पर्वतानां भवान्मेरुर्नक्षत्राणाञ्च चन्द्रमाः
॥ ३१४॥ वशिष्ठस्त्वमृषीणाञ्च ग्रहाणां सूर्य उच्यते। अरण्यानां
पशूनाञ्च सिंहस्त्वं परमेश्वरः॥ ३१५॥ ग्राम्याणां गोवृषश्चासि
भवांल्लोकप्रपूजितः। आदित्यानां भवान् विष्णुर्वसूनाञ्चैव पावकः
॥ ३१६॥ पक्षिणां वैनतेयस्त्वमनन्तो भुजगेषु च। सामवेदश्च

वेदानां यजुषां शतरुद्रियम् ॥ २१७ ॥ सनत्कुमारो योगीनां
सांख्यानां कपिलो ह्यसि । शक्रोऽसि मरुतां देव पितॄणां देव-
राड़सि ॥ २१८ ॥ ब्रह्मलोकश्च लोकानां गतीनां मोक्ष उच्यसे ।
क्षीरोदः सागराणाञ्च शैलानां हिमवान् गिरिः ॥ २१९ ॥ वर्णानां
ब्राह्मणश्चासि विप्राणां दीक्षितो द्विजः । आदिस्त्वमसि लोकानां
संहर्त्ता काल एव च ॥ २२० ॥ यच्चान्यदपि लोके वै सर्वतेजो-
ऽधिकं स्मृतम् । तत् सर्वं भगवानेव इति मे निश्चिता मतिः ॥२२१॥
नमस्ते भगवन् देव नमस्ते भक्तवत्सल । योगेश्वर नमस्तेऽस्तु
नमस्ते विश्वसम्भव ॥ २२२ ॥ प्रसीद मम भक्तस्य दीनस्य कृप-
णस्य च । अनैश्वर्य्येण युक्तस्य गतिर्भव सनातन ॥ २२३ ॥ यच्चा-
पराधं कृतवानज्ञानात् परमेश्वर । मद्भक्त इति देवेश तत् सर्वं
क्षन्तुमर्हसि ॥ २२४ ॥ मोहितश्चास्मि देवेश त्वया रूपविपर्य्ययात् ।
नार्घ्यन्ते न मया दत्तं पाद्यञ्चापि महेश्वर ॥२२५॥ एवं स्तुत्वाह-
मीशानं पाद्यमर्घ्यञ्च भक्तितः । कृताञ्जलिपुटो भूत्वा सर्वं तस्मै
न्यवेदयम् ॥ २२६ ॥ ततः शीताम्बुसंयुक्ता दिव्यगन्धसमन्विता ।
पुष्पवृष्टिः शुभा तात पपात मम मूर्द्धनि ॥ २२७ ॥ दुन्दुभिश्च
तदा दिव्यस्ताड़ितो देवकिङ्करैः । ववौ च मारुतः पुण्यः शुचि-
गन्धः सुखावहः ॥ २२८ ॥ ततः प्रीतो महादेवः सपत्नीको वृष-
ध्वजः । अब्रवीत्त्रिदशांस्तत्र हर्षयन्निव मां तदा ॥ २२९ ॥ पश्यध्वं
त्रिदशाः सर्वे उपमन्योर्महात्मनः । मयि भक्तिं परां नित्यमेक-
भावादवस्थिताम् ॥ २३० ॥ एवमुक्तास्तदा कृष्ण सुरास्ते शूल-
पाणिना । ऊचुः प्राञ्जलयः सर्वे नमस्कृत्वा वृषध्वजम् ॥ २३१ ॥
भगवन् देवदेवेश लोकनाथ जगत्पते । लभतां सर्वकामेभ्यः फलं
त्वत्तो द्विजोत्तमः ॥ २३२ ॥ एवमुक्तस्ततः शर्वः सुरैर्ब्रह्मादिभि-
स्तथा । आह मां भगवानीशः प्रहसन्निव शङ्करः ॥ २३३ ॥

श्रीभगवानुवाच । वत्सोपमन्यो तुष्टोऽस्मि पश्य मां मुनि-

पुङ्गव। दृढ़भक्तोऽसि विप्रर्षे मया जिज्ञासितो ह्यसि॥ ३३४॥
अनया शिवभक्त्या ते अत्यर्थं प्रीतिमानहम्। तस्मात् सर्वान् ददा-
म्यद्य कामांस्तव यथेप्सितान्॥ ३३५॥ एवमुक्तस्य चैवाथ महा-
देवेन धीमता। हर्षादश्रूण्यवर्त्तन्त रोमहर्षश्चजायत॥ ३३६॥
अब्रुवञ्च तदा देवं हर्षगद्गदया गिरा। जानुभ्यामवनीं कृत्वा प्रणम्य
च पुनः पुनः॥ ३३७॥ अद्य जातो ह्यहं देव सफलं जन्म चाद्य
मे। सुरासुरगुरोर्देवो यत्तिष्ठति ममाग्रतः॥ ३३८॥ यं न
पश्यन्ति चाराध्य देवा ह्यमितविक्रमम्। तमहं दृष्टवान् देवं
कोऽन्यो धन्यतरो मया॥ ३३९॥ एवं ध्यायन्ति विद्वांसः परं
तत्त्वं सनातनम्। तद्विशेषमिति ख्यातं यदजं ज्ञानमक्षरम्॥३४०॥
स एष भगवान् देवः सर्वसत्त्वादिरव्ययः। सर्वतत्त्वविधानज्ञः
प्रधानपुरुषः परः॥ ३४१॥ योऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोक-
सम्भवम्। वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः॥ ३४२॥
युगान्ते चैव संप्राप्ते रुद्रमीशोऽसृजत् प्रभुः। स रुद्रः संहरन्
कृत्स्नं जगत् स्थावरजङ्गमम्॥ ३४३॥ कालो भूत्वा महातेजाः
संवर्त्तक इवानलः। युगान्ते सर्वभूतानि ग्रसन्निव व्यवस्थितः॥३४४॥
एष देवो महादेवो जगत् सृष्ट्वा चराचरम्। कल्पान्ते चैव सर्वेषां
स्मृतिमाक्षिप्य तिष्ठति॥ ३४५॥ सर्वगः सर्वभूतात्मा सर्वभूत-
भवोद्भवः। आस्ते सर्वगतो नित्यमदृश्यः सर्वदैवतैः॥ ३४६॥
यदि देयो वरो मह्यं यदि तुष्टोऽसि मे प्रभो। भक्तिर्भवतु मे
नित्यं त्वयि देव सुरेश्वर॥ ३४७॥ अतीतानागतञ्चैव वर्त्तमानञ्च
यद्विभो। जानीयामिति मे बुद्धिः प्रसादात् सुरसत्तम॥ ३४८॥
क्षीरौदनञ्च भुञ्जीयामक्षयं सह बान्धवैः। आश्रमे च सदास्माकं
सान्निध्यं परमस्तु ते॥ ३४९॥ एवमुक्तः स मां प्राह भगवांल्लोक-
पूजितः। महेश्वरो महातेजाश्चराचरगुरुः शिवः॥ ३५०॥
श्रीभगवानुवाच। अजरश्चामरश्चैव भव त्वं दुःखवर्जितः।

यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ ३५१ ॥ ऋषीणा-मभिगम्यश्च मत्प्रसाद्भविष्यसि । शीलवान् गुणसम्पन्नः सर्व्वज्ञः प्रियदर्शनः ॥ ३५२ ॥ अक्षयं यौवनं तेऽस्तु तेजश्चैवानलोपमम् । क्षीरोदसागरश्चैव यत्र यत्रेच्छसि प्रियम् ॥ ३५३ ॥ तत्र ते भविता कामं सान्निध्यं पयसो निधेः । क्षीरोदनञ्च भुङ्क्ष्व त्वममृतेन समन्वितम् ॥ ३५४ ॥ बन्धुभिः सहितः कल्पं ततो मामुपयास्यसि । अक्षया बान्धवाश्चैव कुलं गोत्रञ्च ते सदा ॥ ३५५ ॥ भविष्यति द्विजश्रेष्ठ मयि भक्तिश्च शाश्वती । सान्निध्यञ्चाश्रमे नित्यं करि-ष्यामि द्विजोत्तम ॥ ३५६ ॥ तिष्ठ वत्स यथा कामं नोत्कण्ठाञ्च करिष्यसि । स्मृतस्त्वया पुनर्विप्र करिष्यामि च दर्शनम् ॥ ३५७ ॥ एवमुक्त्वा स भगवान् सूर्य्यकोटीसमप्रभः । ईशानः स वरान् दत्त्वा तत्रैवान्तरधीयत ॥ ३५८ ॥ एवं दृष्टो मया कृष्ण देवदेवः समा-धिना । तदवाप्तञ्च मे सर्वं यदुक्तं तेन धीमता ॥ ३५९ ॥ प्रत्यक्ष-ञ्चैव ते कृष्ण पश्य सिद्धान् व्यवस्थितान् । ऋषीन् विद्याधरान् यक्षान् गन्धर्वाप्सरसस्तथा ॥ ३६० ॥ पश्य वृक्षलतागुल्मान् सर्वपुष्पफलप्रदान् । सर्व्वर्त्तुकुसुमैर्युक्तान् सुखपत्रान् सुगन्धिनः ॥ ३६१ ॥ सर्वमेतन्महाबाहो दिव्यभावसमन्वितम् । प्रसादा-द्देवदेवस्य ईश्वरस्य महात्मनः ॥ ३६२ ॥

श्रीवासुदेव उवाच । एतच्छ्रुत्वा वचस्तस्य प्रत्यक्षमिव दर्श-नम् । विस्मयं परमं गत्वा अब्रुवन्तं महामुनिम् ॥ ३६३ ॥ धन्य-स्त्वमसि विप्रेन्द्र कस्त्वदन्योऽस्ति पुण्यकृत् । यस्य देवाधिदेवस्ते सान्निध्यं कुरुतेऽश्रमे ॥ ३६४ ॥ अपि तावन्ममाप्येवं दद्यात् स भगवान् शिवः । दर्शनं मुनिशार्दूल प्रसादञ्चापि शङ्करः ॥३६५॥

उपमन्युरुवाच । द्रक्ष्यसे पुण्डरीकाक्ष महादेवं न संशयः । अचिरेणैव कालेन यथा दृष्टो मयानघ ॥ ३६६ ॥ चक्षुषा चैव दिव्येन पश्याम्यमितविक्रम । षष्ठे मासि महादेवं द्रक्ष्यसे पुरुषो-

त्तम ॥ ३६७ ॥ षोडशाष्टौ वरांश्चापि प्राप्स्यसि त्वं महेश्वरात्। सपत्नीकाद्यदुश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ३६७ ॥ अतीतानागतञ्चैव वर्त्तमानञ्च नित्यशः। विदितं मे महाबाहो प्रसादात्तस्य धीमतः ॥ ३६९ ॥ एतान् सहस्रशश्चान्यान् समनुध्यातवान् हरः। कस्मात् प्रसादं भगवान् न कुर्य्यात्तव माधव। त्वादृशेन हि देवानां श्लाघनीयः समागमः ॥ ३७० ॥ ब्रह्मण्येनानृशंसेन श्रद्दधानेन चाप्युत। जप्यन्तु ते प्रदास्यामि येन द्रक्ष्यसि शङ्करम् ॥३७१॥

श्रीविष्णुरुवाच। अब्रुवन्तमहं ब्रह्मंस्त्वत्प्रसादान्महामुने। द्रक्ष्ये दितिजसङ्घानां मर्द्दनं त्रिदशेश्वरम् ॥ ३७२ ॥ एवं कथयतस्तस्य महादेवाश्रितां कथाम्। दिनान्यष्टौ ततो जग्मुर्मुहूर्त्तमिव भारत ॥ ३७३ ॥ दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधि। दण्डी मुण्डी कुशी चीरी घृताक्तो मेखलीकृतः ॥३७४॥ मासमेकं फलाहारो द्वितीयं सलिलाशनः। तृतीयञ्च चतुर्थञ्च पञ्चमञ्चानिलाशनः ॥ ३७५ ॥ एकपादेन तिष्ठंश्च ऊर्द्ध्वबाहुरतन्द्रितः। तेजः सूर्य्यसहस्रस्य अपश्यं दिवि भारत ॥ ३७६ ॥ तस्य मध्यगतञ्चापि तेजसः पाण्डुनन्दन। इन्द्रायुधपिनद्धाङ्गं विद्युन्मालागवाक्षकम्। नीलशैलचयप्रख्यं बलाकाभूषितं घनम् ॥ ३७७ ॥ तत्र स्थितश्च भगवान् देव्या सह महाद्युतिः। तपसा तेजसा कान्त्या दीप्तया सह भार्य्यया ॥ ३७८ ॥ रराज भगवांस्तत्र देव्या सह महेश्वरः। सोमेन सहितः सूर्य्यो यथा मेघस्थितस्तथा ॥ ३७९ ॥ संहृष्टरोमा कौन्तेय विस्मयोत्फुल्ललोचनः। अपश्यं देवसंघानां गतिमार्त्तिहरं हरम् ॥ ३८० ॥ किरीटिनं गदिनं शूलपाणिं व्याघ्राजिनं जटिलं दण्डपाणिम्। पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रं शुभाङ्गदं व्यालयज्ञोपवीतम् ॥ ३८२॥ दिव्यां मालामुरसानेकवर्णां समुद्वहन्तं गुल्फदेशावलम्बनाम्। चन्द्रं यथा परिविष्टं ससन्ध्यं वर्षात्यये तद्वदपश्यमेनम् ॥ ३८२ ॥ प्रमथानां

गणैश्चैव समन्तात् परिवारितम्। शरदीव सुदुष्प्रेक्ष्यं परिविष्टं दिवाकरम् ॥ ३८३ ॥ एकादशशतान्येव रुद्राणां वृषवाहनम्। अस्तुवन्नियतात्मानं कर्म्मभिः शुभकर्म्मिणम् ॥ ३८४ ॥ आदित्या वसवः साध्या विश्वेदेवास्तथाश्विनौ । विश्वाभिस्तुतिभिर्द्देवं विश्वदेवं समस्तुवन् ॥ ३८५ ॥ शतक्रतुश्च भगवान् विष्णुश्चादितिनन्दनौ। ब्रह्मा रथन्तरं साम ईरयन्ति भवान्तिके ॥ ३८६ ॥ योगीश्वराः सुबहवो योगदं पितरं गुरुम्। ब्रह्मर्षयश्च ससुतास्तथा देवर्षयश्च वै ॥ ३८७ ॥ पृथिवी चान्तरीक्षञ्च नक्षत्राणि ग्रहास्तथा । मासार्द्धमासा ऋतवो रात्रिः सम्वत्सराः क्षणाः ॥ ३८८ ॥ मुहूर्त्ताश्च निमेषाश्च तथैव युगपर्य्ययाः । दिव्या राजन्नमस्यन्ति विद्याः सत्यविदस्तथा ॥ ३८९ ॥ सनत्कुमारो वेदाश्च इतिहासास्तथैव च । मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥ ३९० ॥ मनवः सप्त सोमश्च अथर्वा सबृहस्पतिः। भृगुर्द्दक्षः काश्यपश्च वशिष्ठः काश्य एव च ॥ ३९१ ॥ छन्दांसि दीक्षा यज्ञाश्च दक्षिणा पावको हविः। यज्ञोपगानि द्रव्याणि मूर्त्तिमन्ति युधिष्ठिर ॥ ३९२ ॥ प्रजानां पालकाः सर्व्वे सरितः पन्नगा नगाः। देवानां मातरः सर्व्वा देवपत्न्यः सकन्यकाः ॥३९३॥ सहस्राणि मुनीनाञ्च अयुतान्यर्बुदानि च। नमस्यन्ति प्रभुं शान्तं पर्व्वताः सागरा दिशः। गन्धर्व्वाप्सरसश्चैव गीतवादित्रकोविदाः ॥ ३९४ ॥ दिव्यतानेषु गायन्तस्तुवन्ति भवमद्भुतम्। विद्याधरा दानवाश्च गुह्यका राक्षसास्तथा ॥ ३९५ ॥ सर्व्वाणि चैव भूतानि स्थावराणि चराणि च। नमस्यन्ति महाराज वाङ्मनः कर्म्मभिर्व्विभुम्। पुरस्ताद्विष्ठितः सर्व्वो ममासीत्त्रिदशेश्वरः ॥ ३९६ ॥ पुरस्ताद्विष्ठितं दृष्ट्वा ममेशानञ्च भारत। सप्रजापतिशक्रान्तं जगन्मामभ्युदैक्षत ॥ ३९७ ॥ ईक्षितुञ्च महादेवं न मे शक्तिरभूत्तदा। ततो मामब्रवीद्देवः पश्य कृष्ण वदस्व च ॥ ३९८ ॥ त्वया

स्त्वाराधितश्चाहं शतशोऽथ सहस्रशः । त्वत्समो नास्ति मे कश्चि-त्त्रिषु लोकेषु वै प्रियः ॥ ३९९ ॥ शिरसा वन्दिते देवे देवी प्रीता ह्युमाभवत् । ततोऽहमब्रुवं स्थाणुं स्तुतं ब्रह्मादिभिः सुरैः ॥४००॥

श्रीविष्णुरुवाच । नमोऽस्तु ते शाश्वतसर्वयोने ब्रह्माधिपं त्वामृषयो वदन्ति । तपश्च सत्त्वञ्च रजस्तमश्च त्वामेव सत्यञ्च वदन्ति सन्तः ॥ ४०१ ॥ त्वं वै ब्रह्मा च रुद्रश्च वरुणोऽग्निर्मनु-र्भवः । धाता त्वष्टा विधाता च त्वं प्रभुः सर्वतोमुखः ॥ ४०२ ॥ त्वत्तो जातानि भूतानि स्थावराणि चराणि च । त्वया सृष्टमिदं कृत्स्नं त्रैलोक्यं सचराचरम् ॥ ४०३ ॥ यानीन्द्रियाणीह मनश्च कृत्स्नं ये वायवः सप्त तथैव चाग्नयः । ये देवसंस्थास्तव देवताश्च तस्मात् परं त्वामृषयो वदन्ति ॥ ४०४ ॥ वेदाश्च यज्ञाः सोमश्च दक्षिणा पावको हविः । यज्ञोपगञ्च यत् किञ्चित् भगवांस्तद-संशयम् ॥ ४०५ ॥ इष्टं दत्तमधीतञ्च व्रतानि नियमाश्च ये । ह्रीः कीर्त्तिः श्रीर्द्युतिस्तुष्टिः सिद्धिश्चैव तदर्पणी ॥ ४०६ ॥ कामः क्रोधो भयं लोभो मदः स्तम्भोऽथ मत्सरः । आधयो व्याधयश्चैव भगवंस्तनयास्तव ॥ ४०७ ॥ कृतिर्विकारः प्रलयः प्रधानं बीज-मव्ययम् । मनसः परमा योनिः प्रभावश्चापि शाश्वतः ॥ ४०८ ॥ अव्यक्तः पवनोऽचिन्त्यः सहस्रांशुर्हिरण्मयः । आदिर्गणानां सर्वेषां भवान् वै जीविताश्रयः ॥ ४०९ ॥ महानात्मा मतिर्ब्रह्मा विश्वः शम्भुः स्वयम्भुवः । बुद्धिः प्रज्ञोपलब्धिश्च सम्वित् ख्यातिर्धृतिः स्मृतिः ॥ ४१० ॥ पर्य्यायवाचकैः शब्दैर्महानात्मा विभाव्यते । त्वां बुद्ध्वा ब्राह्मणो विद्वान् प्रमोहं विनियच्छति ॥ ४११ ॥ हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृषिष्टुतः । सर्वतः पाणिपादान्तः सर्वतो-ऽक्षिशिरोमुखः । सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठसि ॥४१२॥ फलं त्वमसि तिग्मांशोर्निमेषादिषु कर्मसु ॥ ४१३ ॥ त्वं वै प्रभार्च्चिः पुरुषः सर्वस्य हृदि संस्थितः । अणिमा लघिमा प्राप्ति-

शीशानो ज्योतिरव्ययः ॥ ४१४ ॥ त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नाः संश्रिताश्च ये । ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः ॥ ४१५ ॥ यस्त्वां ध्रुवं वेदयते गुहाशयं प्रभुं पुराणं पुरुषञ्च विग्रहम् । हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥ ४१६ ॥ विदित्वा सप्त सूक्ष्माणि षड़ङ्गं त्वाञ्च मूर्त्तितः । प्रधानविधियोगस्थस्त्वामेव विशते बुधः ॥ ४१७ ॥ एवमुक्ते मया पार्थ भवे चार्त्तिविनाशने । चराचरं जगत् सर्वं सिंहनादं तदाकरोत् ॥ ४१८ ॥ तं विप्रसङ्घाश्च सुरासुराश्च नागाः पिशाचाः पितरो वयांसि । रक्षोगणा भूतगणाश्च सर्वे महर्षयश्चैव तदा प्रणेमुः ॥ ४१९ ॥ मम मूर्द्ध्नि च दिव्यानां कुसुमानां सुगन्धिनाम् । राशयो निपतन्ति स्म वायुश्च सुसुखो ववौ ॥४२०॥ निरीक्ष्य भगवान्देवीं ह्युमां माञ्च जगद्धितः । शतक्रतुञ्चाभिवीक्ष्य स्वयं मामाह शङ्करः ॥ ४२१ ॥ विद्मः कृष्ण परां भक्तिमस्मासु तव शत्रुहन् । क्रियतामात्मनः श्रेयः प्रीतिर्हि त्वयि मे परा ॥ ४२२ ॥ वृणीष्वाष्टौ वरान् कृष्ण दातास्मि तव सत्तम । ब्रूहि यादवशार्दूल यानिच्छसि सुदुर्लभान् ॥ ४२३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि मेघवाहनोपाख्याने चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

श्रीकृष्ण उवाच । मूर्द्ध्ना निपत्य नियतस्तेजःसन्निचये ततः । परमं हर्षमागत्य भगवन्तमथाब्रुवम् ॥ १ ॥ धर्मे दृढ़त्वं युधि शत्रुघातं यशस्तथाग्र्यं परमं बलञ्च । योगप्रियत्वं तव सन्निकर्षं वृणे सुतानाञ्च शतं शतानि ॥ २ ॥ एवमस्त्विति तद्वाक्यं मयोक्तं प्राह शङ्करः । ततो मां जगतो माता धारिणी सर्वपावनी ॥ ३ ॥ उवाचोमा प्रणिहिता सर्वाणी तपसोनिधिः । दत्तो भगवता

पुत्रः शाम्बो नाम तवानघ ॥ ४ ॥ मत्तोऽप्यष्टौ वरानिष्टान् गृहाण त्वं ददामि ते। प्रणम्य शिरसा सा च मयोक्ता पाण्डुनन्दन ॥ ५ ॥ द्विजेष्वकोपं पितृतः प्रसादं शतं सुतानां परमञ्च भोगम्। कुले प्रीतिं मातृतश्च प्रसादं शमप्राप्तिं प्रवृणे चापि दाक्ष्यम् ॥ ६ ॥

उमोवाच। एवं भविष्यत्यमरप्रभाव नाहं मृषा जातु वदे कदाचित्। भार्य्या सहस्राणि च षोडशैव तासु प्रियत्वञ्च तथाक्षयञ्च ॥ ७ ॥ प्रीतिञ्चाग्र्यां बान्धवानां सकाशाद्ददामि तेऽहं वपुषः काम्यताञ्च। भोक्ष्यन्ते वै सप्ततिं वै शतानि गृहे तुभ्यमतिथीनाञ्च नित्यम् ॥ ८ ॥

श्रीवासुदेव उवाच। एवं दत्त्वा वरान् देवो मम देवी च भारत। अन्तर्हितः क्षणे तस्मिन् सगणो भीमपूर्वज ॥ ९ ॥ एतदत्यद्भुतं पूर्वं ब्राह्मणायातितेजसे। उपमन्यवे मया कृत्स्नं व्याख्यातं पार्थिवोत्तम। नमस्कृत्वा तु स प्राह देवदेवाय सुव्रत ॥ १० ॥

उपमन्युरुवाच। नास्ति सर्व्वसमो देवो नास्ति सर्व्वसमा गतिः। नास्ति सर्व्वसमो दाने नास्ति सर्व्वसमो रणे ॥ ११ ॥

इत्यनुशासनपर्व्वणि अनुशासनिकपर्व्वणि मेघवाहनोपाख्याने पञ्चदशोऽध्यायः ॥ १५ ॥

---

उपमन्युरुवाच। ऋषिरासीत् कृते तात तण्डिरित्येव विश्रुतः। दशवर्षसहस्राणि तेन देवः समाधिना ॥ १ ॥ आराधितोऽभूद्भक्तेन तस्योदर्कं निशामय। स दृष्टवान् महादेवमस्तौषीच्च स्तवैर्विभुम् ॥ २ ॥ इति तण्डिस्तपोयोगात् परमात्मानमव्ययम्। चिन्तयित्वा महात्मानमिदमाह सुविस्मितः ॥ ३ ॥ यं पठन्ति

सदा साङ्ख्याश्चिन्तयन्ति च योगिनः। परं प्रधानं पुरुषमधिष्ठातारमीश्वरम् ॥ ४ ॥ उत्पत्तौ च विनाशे च कारणं यं विदुर्बुधाः। देवासुरमुनीनाञ्च परं यस्मान्न विद्यते ॥ ५ ॥ अजन्तमहमीशानमनादिनिधनं प्रभुम्। अत्यन्तसुखिनं देवमनघं शरणं व्रजे ॥ ६ ॥ एवं ब्रुवन्नेव तदा ददर्श तपसां निधिम्। तमव्ययमनौपम्यमचिन्त्यं शाश्वतं ध्रुवम् ॥ ७ ॥ निष्कलं सकलं ब्रह्म निर्गुणं गुणगोचरम्। योगिनां परमानन्दमक्षरं मोक्षसंज्ञितम् ॥ ८ ॥ मनोरिन्द्राग्निमरुतां विश्वस्य ब्रह्मणो गतिम्। अग्राह्यमचलं शुद्धं बुद्धिग्राह्यं मनोमयम् ॥ ९ ॥ दुर्विज्ञेयमसङ्ख्येयं दुष्प्रापमकृतात्मभिः। योनिं विश्वस्य जगतस्तमसः परतः परम्। पुराणं पुरुषं देवं परेभ्यः परतः परम् ॥ १० ॥ यः प्राणवन्तमात्मानं ज्योतिर्जीवस्थितं मनः। तं देवं दर्शनाकाङ्क्षी बहून् वर्षगणानृषिः। तपस्युग्रे स्थितो भूत्वा दृष्ट्वा तुष्टाव चेश्वरम् ॥११॥

तण्डिरुवाच। पवित्राणां पवित्रस्त्वं गतिर्गतिमताम्वर। अत्युग्रं तेजसां तेजस्तपसां परमं तपः ॥ १२ ॥ विश्वावसुहिरण्याक्षपुरुहूतनमस्कृत। भूरिकल्याणद विभो परं सत्य नमोऽस्तु ते ॥ १३ ॥ जातीमरणभीरूणां यतीनां यततां विभो। निर्वाणद सहस्रांशो नमस्तेऽस्तु सुखाश्रय ॥ १४ ॥ ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः। न विदुस्त्वान्तु तत्त्वेन कुतो वेत्स्यामहे वयम् ॥ १५ ॥ त्वत्तः प्रवर्त्तते सर्वं त्वयि सर्वं प्रतिष्ठितम्। कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेव हि। तनवस्ते स्मृतास्तिस्रः पुराणज्ञैः सुरर्षिभिः ॥ १६ ॥ अधिपौरुषमध्यात्ममधिभूताधिदैवतम्। अधिलोकाधिविज्ञानमधियज्ञस्त्वमेव हि ॥१७॥ त्वां विदित्वात्मदेहस्थं दुर्विदं दैवतैरपि। विद्वांसो यान्ति निर्मुक्ताः परं भावमनामयम् ॥ १८ ॥ अनिच्छतस्तव विभो जन्ममृत्युरनेकशः। द्वारं त्वं स्वर्गमोक्षाणामाक्षेप्ता त्वं ददासि च ॥ १९ ॥

त्वं वै स्वर्गश्च मोक्षश्च कामः क्रोधस्त्वमेव च। सत्त्वं रजस्तमश्चैव अधश्चोर्द्ध्वं त्वमेव हि ॥ २० ॥ ब्रह्मा भवश्च विष्णुश्च स्कन्देन्द्रौ सविता यमः। वरुणेन्दु मनुर्धाता विधाता त्वं धनेश्वरः ॥ २१॥ भूर्वायुः सलिलोऽग्निश्च खं वाग्बुद्धिः स्थितिर्मतिः। कर्म्म सत्यानृते चोभे त्वमेवास्ति च नास्ति च ॥ २२ ॥ इन्द्रियाणीन्द्रियार्थाश्च प्रकृतिभ्यः परं ध्रुवम्। विश्वाविश्वपरो भावश्चिन्त्याचिन्त्यस्त्वमेव हि ॥ २३ ॥ यच्चैतत् परमं ब्रह्म यच्चैतत् परमं पदम्। या गतिः साङ्ख्ययोगानां स भवान्नात्र संशयः ॥ २४ ॥ नूनमद्य कृतार्थाः स्मो नूनं प्राप्ताः सतां गतिम्। यां गतिं प्रार्थयन्तीह ज्ञाननिर्म्मलबुद्धयः ॥ २५ ॥ अहो मूढ़ाः स्म सुचिरमिमं कालमचेतसः। यन्न विद्मः परं देवं शाश्वतं यं विदुर्बुधाः ॥ २६ ॥ सेयमासादिता साक्षात् त्वद्भक्तिर्जन्मभिर्मया। भक्तानुग्रहकृद्देवो यं ज्ञात्वामृतमश्नुते ॥ २७ ॥ देवासुरमुनीनान्तु यच्च गुह्यं सनातनम्। गुहायां निहितं ब्रह्म दुर्विज्ञेयं मुनेरपि ॥ २८ ॥ स एष भगवान् देवः सर्वकृत् सर्वतो मुखः। सर्वात्मा सर्वदर्शी च सर्वगः सर्ववेदिता ॥ २९ ॥ देहकृद्देहभृद्देही देहभुग्देहिनां गतिः। प्राणकृत् प्राणभृत् प्राणी प्राणदः प्राणिनां गतिः ॥३०॥ अध्यात्मगतिरिष्टानां ध्यानिनामात्मवेदिनाम्। अपुनर्भारकामानां या गतिः सोऽयमीश्वरः ॥ ३१ ॥ अयञ्च सर्वभूतानां शुभाशुभगतिप्रदः। अयञ्च जन्ममरणे विदध्यात् सर्वजन्तुषु ॥ ३२ ॥ अयं संसिद्धिकामानामृषीणां सिद्धिदः प्रभुः। भूराद्यान् सर्वभुवनानुत्पाद्य सदिवौकसः। दधाति देवस्तनुभिरष्टाभिर्यो बिभर्त्ति च ॥ ३३ ॥ अतः प्रवर्त्तते सर्वमस्मिन् सर्वं प्रतिष्ठितम्। अस्मिंश्च प्रलयं याति अयमेकः सनातनः ॥ ३४ ॥ अयं स सत्यकामानां सत्यलोकः परं सताम्। अपवर्गश्च युक्तानां कैवल्यं चात्मवेदिनाम् ॥ ३५ ॥ अयं ब्रह्मादिभिः सिद्धैर्गुहायां गोपितः

प्रभुः । देवासुरमनुष्याणामप्रकाशो भवेदिति ॥ ३६ ॥ तं त्वां देवासुरनरास्तत्त्वेन न विदुर्भवम् । मोहिताः खल्वनेनैव हृदिस्थेनाप्रकाशिना ॥३७॥ ये चैनं प्रतिपद्यन्ते भक्तियोगेन भाविताः । तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ॥ ३८ ॥ यं ज्ञात्वा न पुनर्ज्जन्म मरणञ्चापि विद्यते । यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ॥ ३९ ॥ यं लब्ध्वा परमं लाभं नाधिकं मन्यते बुधः । यां सूक्ष्मां परमां प्राप्तिं गच्छन्नव्ययमक्षयम् ॥ ४० ॥ यं सांख्या गुणतत्त्वज्ञाः सांख्यशास्त्रविशारदाः । सूक्ष्मज्ञानतराः सूक्ष्मं ज्ञात्वा मुच्यन्ति बन्धनैः ॥ ४१ ॥ यञ्च वेदविदो वेद्यं वेदान्ते च प्रतिष्ठितम् । प्राणायामपरा नित्यं यं विशन्ति जपन्ति च ॥ ४२ ॥ ओङ्काररथमारुह्य ते विशन्ति महेश्वरम् । अयं स देवयानानामादित्यो द्वारमुच्यते ॥ ४३ ॥ अयञ्च पितृयानानां चन्द्रमा द्वारमुच्यते । एष काष्ठा दिशश्चैव सम्वत्सरयुगादि च ॥ ४४ ॥ दिव्यादिव्यः परो लाभो अयने दक्षिणोत्तरे । एनं प्रजापतिः पूर्वमाराध्य बहुभिः स्तवैः । प्रजार्थं वरयामास नीललोहितसंज्ञितम् ॥ ४५ ॥ ऋग्भिर्यमनुशासन्ति तत्त्वे कर्म्मणि बह्वृचः । यजुर्भिर्यं त्रिधा वेद्यं जुह्वत्यध्वर्य्यवोऽध्वरे ॥४६ ॥ सामभिर्यञ्च गायन्ति सामगाः शुद्धबुद्धयः । ऋतं सत्यं परं ब्रह्म स्तुवन्त्याथर्वणा द्विजाः । यज्ञस्य परमा योनिः पतिश्चायं परः स्मृतः ॥ ४७ ॥ रात्र्यहः श्रोत्रनयनः पक्षमासशिरोभुजः । ऋतुवीर्य्यस्तपोधैर्य्यो ह्यब्दगुह्योरुपादवान् ॥ ४८ ॥ मृत्युर्यमो हुताशश्च कालः संहारवेगवान् । कालस्य परमा योनिः कालश्चायं सनातनः ॥ ४९ ॥ चन्द्रादित्यौ सनक्षत्रौ ग्रहाश्च सहवायुना । ध्रुवः सप्तर्षयश्चैव भुवनाः सप्त एव च ॥ ५० ॥ प्रधानं महदव्यक्तं विशेषान्तं सवैकृतम् । ब्रह्मादिस्तम्बपर्य्यन्तं भूतादि सदसच्च यत् ॥ ५१ ॥ अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यः परः । अस्य देवस्य यद्भागं

कृत्स्नं सम्परिवर्त्तते ॥ ५२ ॥ एतत् परमसानन्दं यत्तच्छाश्वत-
मेव च। एषा गतिर्विरक्तानामेष भावः परः सताम् ॥ ५३ ॥
एतत् पदमनुद्विग्नमेतद्‌ब्रह्म सनातनम्। शास्त्रवेदाङ्गविदुषा-
मेतद्ध्यानं परं पदम् ॥ ५४ ॥ इयं सा परमा काष्ठा इयं सा
परमा कला। इयं सा परमा सिद्धिरियं सा परमा गतिः ॥ ५५ ॥
इयं सा परमा शान्तिरियं सा निर्वृतिः परा। यं प्राप्य कृत-
कृत्याः स्म इत्यमन्यन्त योगिनः ॥ ५६ ॥ इयं तुष्टिरियं सिद्धि-
रियं श्रुतिरियं स्मृतिः। अध्यात्मगतिरिष्टानां विदुषां प्राप्ति-
रव्यया ॥ ५७ ॥ यजतां कामयानानां मखैर्विपुलदक्षिणैः। या
गतिर्यज्ञशीलानां सा गतिस्त्वं न संशयः ॥ ५८ ॥ सम्यग्योगजपैः
शान्तिनियमैर्देहतापनैः। तप्यतां या गतिर्देव परमा सा गति-
र्भवान् ॥ ५९ ॥ कर्मन्यासकृतानाञ्च विरक्तानां ततस्ततः। या
गतिर्ब्रह्मसदने सा गतिस्त्वं सनातन ॥ ६० ॥ अपुनर्भावकामानां
वैराग्ये वर्त्ततान्तु या। प्रकृतीनां लयानाञ्च सा गतिस्त्वं सनातन
॥ ६१ ॥ ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना। कैवल्या
या गतिर्देव परमा सा गतिर्भवान् ॥ ६२ ॥ वेदशास्त्रपुराणोक्ताः
पञ्चैता गतयः स्मृताः। त्वत्प्रसादाद्धि लभ्यन्ते न लभ्यन्तेऽन्यथा
विभो ॥ ६३ ॥ इति तण्डिस्तपोराशिस्तुष्टावेशानमात्मना। जगौ
च परमं ब्रह्म यत् पुरा लोककृज्जगौ ॥ ६४ ॥

उपमन्युरुवाच। एवं स्तुतो महादेवस्तण्डिना ब्रह्मवादिना।
उवाच भगवान् देवः उमया सहितः प्रभुः ॥ ६५ ॥ ब्रह्मा शत-
क्रतुर्विष्णुर्विश्वेदेवा महर्षयः। न विदुस्त्वामिति ततस्तुष्टः प्रोवाच
तं शिवः ॥ ६६ ॥

श्रीभगवानुवाच। अक्षयश्चाव्ययश्चैव भविता दुःखवर्ज्जितः।
यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ ६७ ॥ ऋषीणा-
मभिगम्यश्च सूत्रकर्त्ता सुतस्तव। मत्प्रसादाद्द्विजश्रेष्ठ भविष्यति

न संशयः ॥ ६८ ॥ कं वा कामं ददाम्यद्य ब्रूहि यद्वत्स काङ्क्षसे ।
प्राञ्जलिः स उवाचेदं त्वयि भक्तिर्दृढ़ास्तु मे ॥ ६९ ॥

उपमन्युरुवाच । एतान् दत्त्वा वरान् देवो वन्द्यमानः सुरर्षिभिः । स्तूयमानश्च विबुधैस्तत्रैवान्तरधीयत ॥ ७० ॥ अन्तर्हिते भगवति सानुगे यादवेश्वर । ऋषिराश्रममागम्य ममैतत् प्रोक्तवानिह ॥ ७१ ॥ यानि च प्रथितान्यादौ तण्डिराख्यातवान् मम । नामानि मानवश्रेष्ठ तानि त्वं शृणु सिद्धये ॥ ७२ ॥ दश नामसहस्राणि देवेष्वाह पितामहः । शर्वस्य शास्त्रेषु तथा दशनामशतानि च ॥ ७३ ॥ गुह्यानीमानि नामानि तण्डिर्भगवतोऽच्युत । देवप्रसादाद्देवेश पुरा प्राह महात्मने ॥ ७४ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि मेघवाहनोपाख्याने षोड़शोऽध्यायः ॥१६ ॥

---

वासुदेव उवाच । ततः स प्रयतो भूत्वा मम तात युधिष्ठिर । प्राञ्जलिः प्राह विप्रर्षिर्नामसंग्रहमादितः ॥ १ ॥

उपमन्युरुवाच । ब्रह्मप्रोक्तैरृषिप्रोक्तैः वेदवेदाङ्गसम्भवैः । सर्व्वलोकेषु विख्यातं स्तुत्यं स्तोष्यामि नामभिः ॥ २ ॥ महद्भिर्विहितैः सत्यैः सिद्धैः सर्व्वार्थसाधकैः । ऋषिणा तण्डिना भक्त्या कृतैर्वेदकृतात्मना ॥ ३ ॥ यथोक्तैः साधुभिः ख्यातैर्मुनिभिस्तत्त्वदर्शिभिः । प्रवरं प्रथमं स्वर्ग्यं सर्व्वभूतहितं शुभम् ॥ ४ ॥ श्रुतैः सर्व्वत्र जगति ब्रह्मलोकावतारितैः । सत्यैस्तत् परमं ब्रह्म ब्रह्मप्रोक्तं सनातनम् ॥ ५ ॥ वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम । वरयैनं भवं देवं भक्तस्त्वं परमेश्वरम् ॥ ६ ॥ तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनम् । न शक्यं विस्तरात् कृत्स्नं वक्तुं शर्व्वस्य केनचित् ॥ ७॥ युक्तेनापि विभूतीनामपि वर्षशतैरपि । यस्यादि-

मध्यमन्तञ्च सुरैरपि न गम्यते॥ ८॥ कस्तस्य शक्नुयाद्वक्तुं गुणान् कात्स्न्येन माधव। किन्तु देवस्य महतः सङ्क्षिप्तार्थपदाक्षरम्। शक्तितश्चरितं वक्ष्ये प्रसादात्तस्य धीमतः॥ ९॥ अप्राप्य तु ततोऽनुज्ञां न शक्यस्तोतुमीश्वरः। यदा तेनाभ्यनुज्ञातः स्तुतो वै स तदा मया॥ १०॥ अनादिनिधनस्याहं जगद्योनेर्महात्मनः। नाम्नां कञ्चित् समुद्देशं वक्ष्याम्यव्यक्तयोनिनः॥ ११॥ वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः। शृणु नाम्नाञ्चयं कृष्ण यदुक्तं पद्मयोनिना॥ १२॥ दश नाम सहस्राणि यान्याह प्रपितामहः। तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम्॥ १३॥ गिरेः सारं यथा हेम पुष्पसारं यथा मधु। घृतात् सारं यथा मण्डस्तथैतत् सारमुद्धृतम्॥ १४॥ सर्वपाप्मापहमिदं चतुर्वेदसमन्वितम्। प्रयत्नेनाधिगन्तव्यं धार्य्यञ्च प्रयतात्मना॥ १५॥ माङ्गल्यं पौष्टिकञ्चैव रक्षोघ्नं पावनं महत्। इदं भक्ताय दातव्यं श्रद्दधानास्तिकाय च। नाश्रद्दधानरूपाय नास्तिकायाजितात्मने॥ १६॥ यश्चाभ्यसूयते देवं कारणात्मानमीश्वरम्। स कृष्ण नरकं याति सहपूर्वैः सहात्मजैः॥ १७॥ इदं ध्यानमिदं योगमिदं ध्येयमनुत्तमम्। इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमम्॥ १८॥ यज्ज्ञात्वा अन्तकालेऽपि गच्छेत परमां गतिम्। पवित्रं मङ्गलं मेध्यं कल्याणमिदमुत्तमम्॥ १९॥ इदं ब्रह्मा पुरा कृत्वा सर्वलोकपितामहः। सर्वस्तवानां राजत्वे दिव्यानां समकल्पयत्॥२०॥ तदाप्रभृति चैवायमीश्वरस्य महात्मनः। स्तवराज इति ख्यातो जगत्यमरपूजितः॥ २१॥ ब्रह्मलोकादयं स्वर्गे स्तवराजोऽवतारितः। यतस्तण्डिः पुरा प्राप तेन तण्डिकृतोऽभवत्॥ २२॥ स्वर्गाच्चैवात्र भूर्लोकं तण्डिना ह्यवतारितः। सर्वमङ्गलमङ्गल्यं सर्वपापप्रणाशनम्॥ २४॥ निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम्। ब्रह्मणामपि यद्ब्रह्म पराणामपि यत् परम्॥ २५॥

तेजसामपि यत्तेजस्तपसामपि यत्तपः । शान्तानामपि यः शान्तो द्युतीनामपि या द्युतिः ॥ २६ ॥ दान्तानामपि यो दान्तो धीमतामपि या च धीः । देवानामपि यो देव ऋषीणामपि यस्त्वृषिः ॥ २७ ॥ यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः । रुद्राणामपि यो रुद्रः प्रभा प्रभवतामपि ॥ २८ ॥ योगिनामपि यो योगी कारणानाञ्च कारणम् । यतो लोकाः सम्भवन्ति न भवन्ति यतः पुनः ॥ २९ ॥ सर्वभूतात्मभूतस्य हरस्यामिततेजसः । अष्टोत्तरसहस्रन्तु नाम्नां शर्वस्य मे शृणु ॥ ३० ॥ यच्छ्रुत्वा मनुजव्याघ्र सर्वान् कामानवाप्स्यसि ॥ ३१ ॥ ओं स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः । सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः । जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः । हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ॥ ३२ ॥ प्रवृत्तिश्च निवृत्तिश्च नियतो शाश्वतो ध्रुवः । श्मशानवासी भगवान् खचरो गोचरोऽर्द्दनः ॥ ३३ ॥ अभिवाद्यो महाकर्मा तपस्वी भूतभावनः । उन्मत्तवेशप्रच्छन्नः सर्वलोकप्रजापतिः ॥ ३४ ॥ महारूपो महाकायो वृषरूपो महायशाः । महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ॥ ३५ ॥ लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्द्दभिः । पवित्रञ्च महांश्चैव नियमो नियमाश्रितः ॥ ३६ ॥ सर्वकर्मा स्वयं भूत आदिरादिकरो निधिः । सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ॥ ३७ ॥ चन्द्रः सूर्य्यः शनिः केतुर्ग्रहो ग्रहपतिर्वरः । अत्रिरत्र्या नमस्कर्त्ता मृगवाणार्पणोऽनघः ॥ ३८ ॥ महातपा घोरतपा अदीनो दीनसाधकः । संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥ ३९ ॥ योगी योज्या महावीजो महारेता महाबलः । सुवर्णरेताः सर्वज्ञः सुवीजो वीजवाहनः ॥ ४० ॥ दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः । विश्वरूपः स्वयं श्रेष्ठो बलवीरो बलो गणः ॥ ४१ ॥ गणकर्त्ता गणपतिर्दिग्वासाः काम एव च । मन्त्र-

वित् परमो मन्त्रः सर्वभावकरो हरः ॥ ४२ ॥ कमण्डलुधरो धन्वी बाणहस्तः कपालवान् । अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥ ४३ ॥ स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः । उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ ४४ ॥ दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च । शृगालरूपः सिद्धार्थो मुण्डः सर्वशुभङ्करः ॥ ४५ ॥ अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि । ऊर्द्ध्वरेता ऊर्द्ध्वलिङ्ग ऊर्द्ध्वशायी नभस्तलः ॥ ४६ ॥ त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः । अहश्चरो नक्तचरस्तिग्ममन्युः सुवर्चसः ॥ ४७ ॥ गजहा दैत्यहा कालो लोकधाता गुणाकरः । सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ॥ ४८ ॥ कालयोगी महानादः सर्वकामश्चतुष्पथः । निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥ ४९ ॥ बहुभूतो बहुधरः स्वर्भानुरमितो गतिः । नृत्यप्रियो नित्यनर्त्तो नर्त्तकः सर्वलालसः ॥ ५० ॥ घोरो महातपाः पाशो नित्यो गिरिरुहो नभः । सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः ॥ ५१ ॥ अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः । दक्षयागापहारी च सुसहो मध्यमस्तथा ॥ ५२ ॥ तेजोऽपहारी बलहा मुदितोऽर्थोऽजितोऽवरः । गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ॥ ५३ ॥ न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः । सुतीक्ष्णदशनश्चैव महाकायो महाननः ॥ ५४ ॥ विष्वक्सेनो हरिर्यज्ञः संयुगापीड़वाहनः । तीक्ष्णतापश्च हर्य्यश्वः सहायः कर्म्मकालवित् ॥ ५५ ॥ विष्णुप्रसादितो यज्ञः समुद्रो बड़वामुखः । हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ ५६ ॥ उग्रतेजा महातेजा जन्यो विजयकालवित् । ज्योतिषामयनं सिद्धिः सर्वविग्रह एव च ॥ ५७ ॥ शिखी मुण्डी जटी ज्वाली मूर्त्तिजो मूर्द्धगो बली । वैणवी पणवी ताली खली कालकटङ्कटः ॥ ५८ ॥ नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः । प्रजापतिर्विश्वबाहुर्विभागः सर्व-

गोऽमुखः ॥ ५९ ॥ विमोचनः सुसरणो हिरण्यकवचोद्भवः ।
मेढ़्जो वलचारी च महीचारी स्तुतस्तथा ॥ ६० ॥ सर्व्वतूर्य्य-
निनादी च सर्व्वातोद्यपरिग्रहः । व्यालरूपो गुहावासी गुहो
माली तरङ्गवित् ॥ ६१ ॥ त्रिदशस्त्रिकालधृक्कर्म्मसर्व्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधिशत्रुविनाशनः ॥ ६२ ॥ सांख्यप्रसादो
दुर्व्वासाः सर्व्वसाधुनिषेवितः । प्रस्कन्दनो विभागज्ञो अतुल्यो यज्ञ-
भागवित् ॥ ६३ ॥ सर्व्ववासः सर्व्वचारी दुर्व्वासा वासवोऽमरः ।
हैमो हेमकरो यज्ञः सर्व्वधारी धरोत्तमः ॥ ६४ ॥ लोहिताक्षो
महाक्षश्च विजयाक्षो विशारदः । संग्रहो निग्रहः कर्त्ता सर्प-
चीरनिवासनः ॥ ६५ ॥ मुख्योऽमुख्यश्च देहश्च काहलिः सर्व्व-
कामदः । सर्व्वकालप्रसादश्च सुवलो वलरूपधृक् ॥ ६६ ॥ सर्व्व-
कामवरश्चैव सर्व्वदः सर्व्वतोमुखः । आकाशनिर्व्विरूपश्च निपाती
ह्यवशः खगः ॥ ६७ ॥ रौद्ररूपोऽंशुरादित्यो वहुरश्मिः सुव-
र्च्चसी । वसुवेगो महावेगो मनोवेगो निशाचरः ॥ ६८ ॥ सर्व्व-
वासी श्रियावासी उपदेशकरोऽकरः । मुनिरात्मनिरालोकः
सम्भग्नश्च सहस्रदः ॥ ६९ ॥ पक्षी च पक्षरूपश्च अतिदीप्तो विशा-
म्पतिः । उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ॥ ७० ॥
वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः । सिद्धयोगी महर्षिश्च
सिद्धार्थः सिद्धसाधकः ॥ ७१ ॥ भिक्षुश्च भिक्षुरूपश्च विपणो मृदु-
रव्ययः । महासेनो विशाखश्च षष्टिभागो गवाम्पतिः ॥ ७२ ॥
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च । वृत्तावृत्तकरस्तालो
मधुर्म्मधुकलोचनः ॥ ७३ ॥ वाचस्पत्यो वाजसनो नित्यमाश्रम-
पूजितः । ब्रह्मचारी लोकचारी सर्व्वचारी विचारवित् ॥ ७४ ॥
ईशानः ईश्वरः कालो निशाचारी पिनाकधृक् । निमित्तस्थो
निमित्तञ्च नन्दिर्नन्दिकरो हरिः ॥ ७५ ॥ नन्दीश्वरश्च नन्दी च
नन्दनो नन्दिवर्द्धनः । भगहारी निहन्ता च कालो ब्रह्मा पिता-

महः ॥ ७६ ॥ चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च । लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ॥ ७७ ॥ बीजाध्यक्षो बीजकर्त्ता अध्यात्मानुगतो बलः । इतिहासः सकल्पश्च गौतमोऽथ निशाकरः ॥ ७८ ॥ दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः । लोककर्त्ता पशुपतिर्महाकर्त्ता ह्यनौषधः ॥ ७९ ॥ अक्षरं परमं ब्रह्म बलवच्छक्र एव च । नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो गतागतः ॥ ८० ॥ बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वमित्रजित् । वेदकारो मन्त्रकारो विद्वान् समरमर्द्दनः ॥ ८१ ॥ महामेघनिवासी च महाघोरो वशीकरः । अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ॥ ८२ ॥ वृषणः शङ्करो नित्यं वर्चस्वी धूमकेतनः । नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ॥ ८३ ॥ स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः । उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ॥ ८४ ॥ कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम् । महापादो महाहस्तो महाकायो महायशाः ॥ ८५ ॥ महामूर्द्धा महामात्रो महानेत्रो निशालयः । महान्तको महाकर्णो महोष्ठश्च महाहनुः ॥ ८६ ॥ महानासो महाकम्बुर्महाग्रीवः श्मशानभाक् । महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ॥ ८७ ॥ लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः । महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ ८८ ॥ महानखो महारोमा महाकेशो महाजटः । प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ॥ ८९ ॥ स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः । वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥ ९० ॥ गण्डली मेरुधामा च देवाधिपतिरेव च । अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ॥ ९१ ॥ यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा । अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः ॥ ९२ ॥ उपकारः प्रियः सर्वः कनकः काञ्चनच्छविः । नाभिर्नन्दिकरो भावः पुष्करः स्थपतिः स्थिरः ॥९३॥

हादशस्त्वासनश्चाद्यो यज्ञो यज्ञसमाहितः । नक्तं कलिश्च कालश्च मकरः कालपूजितः ॥९४॥ सगणो गणकारश्च भूतवाहनसारथिः । भस्मशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः ॥ ९५ ॥ लोकपालस्तथालोको महात्मा सर्वपूजितः । शुक्लस्त्रिशुक्लसम्पन्नः शुचिर्भूतनिषेवितः ॥ ९६ ॥ आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः । विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चलः ॥ ९७ ॥ कपिलः कपिशः शुक्ल आयुश्चैव परोऽपरः । गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः ॥ ९८ ॥ परश्वधायुधो देव अनुकारी सुबान्धवः । तुम्ववीणो महाक्रोध ऊर्द्ध्वरेता जलेशयः ॥ ९९ ॥ उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः । सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ॥ १०० ॥ बन्धनो बन्धकर्त्ता च सुबन्धनविमोचनः । सयज्ञारिः सकामारिर्महादंष्ट्रो महायुधः ॥ १०१ ॥ बहुधानिन्दितः सर्वः शङ्करः शङ्करोऽधनः । अमरेशो महादेवो विश्वदेवः सुरारिहा ॥ १०२ ॥ अहिर्बुध्नोऽनिलाभश्च चेकितानो हविस्तथा । अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः ॥ १०३॥ धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा । धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥ १०४ ॥ प्रभावः सर्वगो वायुरर्य्यमा सविता रविः । उषङ्गुश्च विधाता च मान्धाता भूतभावनः ॥ १०५ ॥ विभुर्वर्णविभावी च सर्वकामगुणावहः । पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ॥ १०६ ॥ बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी । कुरुकर्त्ता कुरुवासी कुरुभूतो गुणौषधः ॥ १०७॥ सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः । देवदेवः सुखासक्तः सदसत् सर्वरत्नवित् ॥ १०८ ॥ कैलासगिरिवासी च हिमवद्गिरिसंश्रयः । कुलहारी कुलकर्त्ता बहुविद्यो बहुप्रदः ॥ १०९ ॥ वणिजो वर्द्धकी वृक्षो वकुलश्चन्दनश्छदः । सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥ ११० ॥ सिद्धार्थकारी सिद्धार्थश्छन्दो-

व्याकरणोत्तरः । सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ॥ १११ ॥
प्रभावात्मा जगत्कालस्थालो लोकहितस्तरुः । सारङ्गो नव-
चक्राङ्गः केतुमाली सभावनः ॥ ११२ ॥ भूतालयो भूतपतिरहो-
रात्रमनिन्दितः । वाहिता सर्वभूतानां निलयश्च विभुर्भवः ॥ ११३ ॥
अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः । धृतिमान् मति-
मान् दक्षः सत्कृतश्च युगाधिपः । गोपालिर्गोपतिर्ग्रामो गोचर्म-
वसनो हरिः ॥ ११४ ॥ हिरण्यबाहुश्च तथा गुहापालः प्रवे-
शिनाम् । प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ॥ ११५ ॥
गान्धारश्च सुवासश्च तपःसक्तो रतिर्नरः । महागीतो महानृत्यो
ह्यप्सरोगणसेवितः ॥ ११६ ॥ महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आदेशः सर्वगन्धसुखावहः ॥ ११७ ॥ तोरणस्तारणो
वातः परिधीपतिखेचरः । संयोगो वर्द्धनो वृद्धो अतिवृद्धो गुणा-
धिकः ॥ ११८ ॥ नित्य आत्मा सहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च देवो दिवि सुपर्वणः ॥ ११९ ॥ आषाढ़श्च
सुषाढ़श्च ध्रुवोऽथ हरिणो हरः । वपुरावर्त्तमानेभ्यो वसुश्रेष्ठो
महापथः ॥ १२० ॥ शिरोहारी विमर्षश्च सर्वलक्षणलक्षितः ।
अक्षश्च रथयोगी च सर्वयोगी महाबलः ॥ १२१ ॥ समाम्नायो-
ऽसमाम्नायस्तीर्थदेवो महारथः । निर्जीवो जीवनो मन्त्रः शुभाक्षो
बहुकर्कशः ॥ १२२ ॥ रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित् ।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ॥ १२३ ॥ आरो-
हणोऽधिरोहश्च शीलधारी महायशाः । सेनाकल्पो महाकल्पो
योगो युगकरो हरिः ॥ १२४ ॥ युगरूपो महारूपो महानाग-
हनो बधः । न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ॥ १२५ ॥
बहुमालो महामालः शशी हरसुलोचनः । विस्तारो लवणः
कूपस्त्रियुगः सफलोदयः ॥ १२६ ॥ त्रिनेत्रश्च विषण्णाङ्गो मणि-
विद्धो जटाधरः । विन्दुर्विसर्गः सुमुखः शरः सर्वायुधः सहः ॥ १२७ ॥

निवेदनः सुखाजातः सुगन्धारो महाधनुः । गन्धपाली च भगवान् उत्थानः सर्व्वकर्म्मणाम् ॥ १२८ ॥ मन्थानो बहुलो वायुः सकलः सर्व्वलोचनः । तलस्तालः करस्थाली ऊर्द्ध संहननो महान् ॥ १२९ ॥ छत्रं सुछत्रो विख्यातो लोकः सर्व्वाश्रयः क्रमः । मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्व्वणः ॥ १३० ॥ हर्य्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात् । सहस्रमूर्द्धा देवेन्द्रः सर्व्वदेवमयो गुरुः ॥ १३१ ॥ सहस्रबाहुः सर्व्वाङ्गः शरण्यः सर्व्वलोककृत् । पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ॥ १३२ ॥ ब्रह्मदण्डविनिर्म्माता शतघ्नीपाशशक्तिमान् । पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥ १३३ ॥ गभस्तिर्ब्रह्मकृद्ब्रह्मा ब्रह्मवित् ब्राह्मणो गतिः । अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयम्भुवः ॥ १३४ ॥ ऊर्द्धगात्मा पशुपतिर्व्वातरंहा मनोजवः । चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः ॥ १३५ ॥ कर्णिकारं महास्रग्वी नीलमौलिः पिणाकधृक् । उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः ॥ १३६ ॥ वरो वराहो वरदो वरेण्यः सुमहास्वनः । महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥ १३७ ॥ प्रीतात्मा परमात्मा च प्रयतात्मा प्रधानधृक् । सर्व्वपार्श्वमुखस्त्र्यक्षो धर्म्मसाधारणो वरः ॥ १३८ ॥ चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः । साध्यर्षिर्व्वसुरादित्यो विवस्वान् सविता मृतः ॥ १३९ ॥ व्यासः सर्गः सुसंक्षेपो विस्तरः पर्य्ययो नरः । ऋतुः सम्वत्सरो मासः पक्षः सङ्ख्यासमापनः ॥१४०॥ कलाः काष्ठा लवा मात्रा मुहूर्त्ताहः क्षपाः क्षणाः । विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्तु निर्गमः ॥ १४१ ॥ सदसद्व्यक्तमव्यक्तं पिता माता पितामहः । स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिपिष्टपम् ॥ १४२ ॥ निर्व्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः । देवासुरविनिर्म्माता देवासुरपरायणः ॥ १४३ ॥ देवासुरगुरुर्देवो देवासुरनमस्कृतः । देवासुरमहामात्रो देवासुरगणाश्रयः ॥१४४॥

देवासुरगणाध्यक्षो देवासुरगणाग्रणीः। देवातिदेवो देवर्षि-
र्देवासुरवरप्रदः॥ १४५॥ देवासुरेश्वरो विश्वो देवासुरमहे-
श्वरः। सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः॥ १४६॥ उद्भि-
त्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः। ईड्यो हस्तीश्वरो
व्याघ्रो देवसिंहो नरर्षभः॥ १४७॥ विबुधोऽग्रवरः सूक्ष्मः सर्व-
देवस्तपोमयः। सुयुक्तः शोभनो वज्री प्रासानां प्रभवोऽव्ययः
॥ १४८॥ गुहः कान्तो निजः सर्गः पवित्रं सर्वपावनः। शृङ्गी
शृङ्गप्रियो बभ्रू राजराजो निरामयः॥ १४९॥ अभिरामः सुर-
गणो विरामः सर्वसाधनः। ललाटाक्षो विश्वदेवो हरिणो
ब्रह्मवर्चसः॥ १५०॥ स्थावराणां पतिश्चैव नियमेन्द्रियवर्द्धनः।
सिद्धार्थः सिद्धभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः॥ १५१॥ व्रताधिपः
परं ब्रह्म भक्तानां परमा गतिः। विमुक्तो मुक्ततेजाश्च श्रीमान्
श्रीवर्द्धनो जगत्॥ १५२॥ यथाप्रधानं भगवानिति भक्त्या स्तुतो
मया। यं न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः। स्तोतव्य-
मर्च्यं वन्द्यञ्च कः स्तोष्यति जगत्पतिम्॥ १५२॥ भक्त्या त्वेवं
पुरस्कृत्य मया यज्ञपतिर्विभुः। ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो
मतिमताम्वरः॥ १५४॥ शिवमेभिः स्तुवन् देवं नामभिः पुष्टि-
वर्द्धनैः। नित्ययुक्तः शुचिर्भक्तः प्राप्नोत्यात्मानमात्मना॥ १५५॥
एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति। ऋषयश्चैव देवाश्च
स्तुवन्त्येतेन तत् परम्॥ १५६॥ स्तूयमानो महादेवस्तुष्यति
नियतात्मभिः। भक्तानुकम्पी भगवानात्मसंस्थाकरो विभुः॥१५७॥
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः। आस्तिकाः श्रद्दधानाश्च
बहुभिर्जन्मभिः स्तवैः॥ १५८॥ भक्त्या ह्यनन्यमीशानं परं देवं
सनातनम्। कर्मणा मनसा वाचा भावेनामिततेजसः॥ १५९॥
शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा। उन्मिषन्निमिषंश्चैव
चिन्तयन्तः पुनः पुनः॥ १६०॥ शृण्वन्तः श्रावयन्तश्च कथयन्तश्च

ते भवम् । स्तुवन्तः स्तूयमानाश्च तुष्यन्ति च रमन्ति च ॥१६१॥
जन्मकोटिसहस्रेषु नानासंसारयोनिषु । जन्तोर्विगतपापस्य भवे
भक्तिः प्रजायते ॥ १६२ ॥ उत्पन्ना च भवे भक्तिरनन्या सर्व्व-
भावतः । भाविनः कारणे चास्य सर्व्वयुक्तस्य सर्व्वथा ॥ १६३ ॥
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते । निर्विघ्ना निर्म्मला रुद्रे
भक्तिरव्यभिचारिणी ॥ १६४ ॥ तस्यैव च प्रसादेन भक्तिरुत्पद्यते
नृणाम् । येन यान्ति परां सिद्धिं तद्भावगतचेतसः ॥ १६५ ॥
ये सर्व्वभावानुगताः प्रपद्यन्ते महेश्वरम् । प्रपन्नवत्सलो देवः
संसारात्तान् समुद्धरेत् ॥ १६६ ॥ एवमन्ये विकुर्व्वन्ति देवाः
संसारमोचनम् । मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम्
॥ १६७ ॥ इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः । कृत्तिवासाः
स्तुतः कृष्ण तण्डिना शुभबुद्धिना ॥ १६८ ॥ स्तवमेतं भगवतो
ब्रह्मा स्वयमधारयत् । गीयते च स बुध्येत ब्रह्मा शङ्करसन्निधौ
॥ १६९ ॥ इदं पुण्यं पवित्रञ्च सर्व्वदा पापनाशनम् । योगदं
मोक्षदञ्चैव स्वर्गदं तोषदं तथा ॥ १७० ॥ एवमेतत् पठन्ते य
एकभक्त्या तु शङ्करे । या गतिः साङ्ख्ययोगानां व्रजन्त्येतां गतिं
तदा ॥ १७१ ॥ स्तवमेनं प्रयत्नेन सदा रुद्रस्य सन्निधौ । अब्द-
मेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम् ॥ १७२ ॥ एतद्रहस्यं परमं
ब्रह्मणो हृदि संस्थितम् । ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच
मृत्यवे ॥ १७३ ॥ मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि ॥ १७४ ॥ तण्डिः प्रोवाच
शुक्राय गौतमाय च भार्गवः । वैवस्वताय मनवे गौतमः प्राह
माधव ॥ १७५ ॥ नारायणाय साध्याय मनुरिष्टाय धीमते ।
यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ॥ १७६ ॥ नाचि-
केताय भगवानाह वैवस्वतो यमः । मार्कण्डेयाय वार्ष्णेय नाचि-
केतोऽभ्यभाषत ॥ १७७ ॥ मार्कण्डेयान्मया प्राप्तो नियमेन जना-

हेन । तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम् ॥ १७८ ॥ स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन संमितम् । नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः । पिशाचा यातुधाना वा गुह्यका भुजगा अपि ॥ १७९ ॥ यः पठेत शुचिः पार्थ ब्रह्मचारी जितेन्द्रियः । अभग्नयोगो वर्षन्तु सोऽश्वमेधफलं लभेत् ॥ १८० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि महादेवसहस्रनामस्तोत्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

वैशम्पायन उवाच । महायोगी ततः प्राह कृष्णद्वैपायनो मुनिः । पठस्व पुत्र भद्रन्ते प्रीयतां ते महेश्वरः ॥ १ ॥ पुरा पुत्र मया मेरौ तप्यत परमं तपः । पुत्रहेतोर्महाराज स्तव एषोऽनुकीर्त्तितः ॥ २ ॥ लब्धवानीप्सितान् कामानहं वै पाण्डुनन्दन । तथा त्वमपि शर्वाद्धि सर्वान् कामानवाप्स्यसि ॥ ३ ॥ कपिलश्च ततः प्राह साङ्ख्यर्षिर्देवसम्मतः । मया जन्मान्यनेकानि भक्त्या चाराधितो भवः । प्रीतश्च भगवान् ज्ञानं ददौ मम भवान्तकम् ॥ ४ ॥ चारुशीर्षस्ततः प्राह शक्रस्य दयितः सखा । आलम्बायन इत्येवं विश्रुतः करुणात्मकः ॥ ५ ॥ मया गोकर्णमासाद्य तपस्तप्त्वा शतं समाः । अयोनिजानां दान्तानां धर्मज्ञानां सुवर्चसाम् ॥ ६ ॥ अजराणामदुःखानां शतवर्षसहस्रिणाम् । लब्धं पुत्रशतं शर्वात् पुरा पाण्डुनृपात्मज ॥ ७ ॥ वाल्मीकिश्चाह भगवान् युधिष्ठिरमिदं वचः । विवादे साग्निमुनिभिर्ब्रह्मघ्नो वै भवानिति ॥ ८ ॥ उक्तः क्षणेन चाविष्टस्तेनाधर्मेण भारत । सोऽहमीशानमनघममोघं शरणं गतः ॥ ९ ॥ मुक्तश्चास्मि ततः पापैस्ततो दुःखविनाशनः । आह मां त्रिपुरघ्नो वै यशस्तेऽग्र्यं भविष्यति ॥ १० ॥ जामदग्न्यश्च कौन्तेयमिदं धर्मभृतांवरः ।

ऋषिमध्ये स्थितः प्राह ज्वलन्निव दिवाकरः ॥ ११ ॥ पितृविप्रवधेनाहमार्त्तो वै पाण्डवाग्रज । शुचिर्भूत्वा महादेवं गतोऽस्मि शरणं नृप ॥ १२ ॥ नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः । परशुञ्च ददौ देवो दिव्यान्यस्त्राणि चैव मे ॥ १३ ॥ पापञ्च ते न भविता अजेयश्च भविष्यसि । न ते प्रभविता मृत्युरजरश्च भविष्यसि ॥ १४ ॥ आह मां भगवानेवं शिखण्डी शिवविग्रहः । तदवाप्तञ्च मे सर्वं प्रसादात्तस्य धीमतः ॥ १५ ॥ विश्वामित्रस्तदोवाच क्षत्रियोऽहं तदाभवम् । ब्राह्मणोऽहं भवानीति मया चाराधितो भवः । तत्प्रसादान्मया प्राप्तं ब्राह्मण्यं दुर्लभं महत् ॥१६॥ असितो देवलश्चैव प्राह पाण्डुसुतं नृपम् ॥ १७ ॥ शापाच्छक्रस्य कौन्तेय विभो धर्मोऽनशत्तदा । तन्मे धर्मं यशश्चाग्र्यमायुश्चैवाददत् प्रभुः ॥ १८ ॥ ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा । प्राहाजमीढं भगवान् बृहस्पतिसमद्युतिः ॥ १९ ॥ वरिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः । शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्रिके ॥ २० ॥ वर्त्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया । रथन्तरं द्विजश्रेष्ठ न सम्यगिति वर्त्तते ॥ २१ ॥ समीक्षस्व पुनर्बुद्ध्या पापं त्यक्त्वा द्विजोत्तम । अयज्ञवाहिनं पापमकार्षीस्त्वं सुदुर्म्मते ॥ २२ ॥ एवमुक्त्वा महाक्रोधः प्राह रुष्टः पुनर्वचः । प्रज्ञया रहितो दुःखी नित्यभीतो वनेचरः ॥ २३ ॥ दशवर्षसहस्राणि दशाष्टौ च शतानि च । नष्टपानीयपवने मृगैरन्यैश्च वर्ज्जिते ॥२४॥ अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते । भविता त्वं मृगः क्रूरो महादुःखसमन्वितः ॥ २५ ॥ तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः । ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः ॥ २६ ॥ अजरश्चामरश्चैव भविता दुःखवर्ज्जितः । साम्यं समस्तु ते सौख्यं युवयोर्वर्द्धतां क्रतुः ॥ २७ ॥ अनुग्रहानेवमेष करोति भगवान् विभुः । परं धाता विधाता च सुखदुःखे च सर्वदा ॥ २८ ॥

अचिन्त्य एष भगवान् कर्मणा मनसा गिरा। न मे तात युधि श्रेष्ठ विद्यया पण्डितः समः॥२९॥ वासुदेवस्तदोवाच पुनर्मतिमताम्वरः। सुवर्णाक्षो महादेवस्तपसा तोषितो मया॥३०॥ ततोऽथ भगवानाह प्रीतो मां वै युधिष्ठिर। अर्थात् प्रियतरः कृष्ण मत्प्रसादात् भविष्यसि॥३१॥ अपराजितश्च युद्धेषु तेजश्चैवानलोपमम्। एवं सहस्रशश्चान्या महादेवो वरं ददौ॥३२॥ मणिमन्थेऽथ शैले वै पुरा संपूजितो मया। वर्षायुतसहस्राणां सहस्रशतमेव च॥३३॥ ततो मां भगवान् प्रीत इदं वचनमब्रवीत्। वरं वृणीष्व भद्रं ते यस्ते मनसि वर्त्तते॥३४॥ ततः प्रणम्य शिरसा इदं वचनमब्रुवम्। यदि प्रीतो महादेवो भक्त्या परमया विभुः॥३५॥ नित्यकालं तवेशान भक्तिर्भवतु मे स्थिरा। एवमस्त्विति भगवांस्तत्रैवान्तरधीयत॥३६॥

जैगीषव्य उवाच। ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा। यत्नेनान्येन बलिना वाराणस्यां युधिष्ठिर॥३७॥

गर्ग उवाच। चतुःषष्ट्यङ्गमददत् कालाज्ञानं ममाद्भुतम्। सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव॥३८॥ तुल्यं मम सहस्रन्तु सुतानां ब्रह्मवादिनाम्। आयुश्चैव सपुत्रस्य सम्वत्सरशतायुतम्॥३९॥

पराशर उवाच। प्रसाद्येह पुरा सर्वं मनसाचिन्तयं नृप। महातपा महातेजा महायोगी महायशाः॥४०॥ वेदव्यासः श्रियावासो ब्रह्मण्यः करुणान्वितः। अप्यसावीप्सितः पुत्रो मम स्याद्वै महेश्वरात्॥४१॥ इति मत्वा हृदि मतं प्राह मां सुरसत्तमः। मयि सम्भावना यास्याः फलात् कृष्णो भविष्यति॥४२॥ सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति। वेदानाञ्च स वै वक्ता कुरुवंशकरस्तथा॥४३॥ इतिहासस्य कर्त्ता च पुत्रस्ते जगतो हितः। भविष्यति महेन्द्रस्य दयितः स महामुनिः॥४४॥

अजरश्चामरश्चैव पराशर सुतस्तव। एवमुक्त्वा स भगवांस्तत्रै-
वान्तरधीयत। युधिष्ठिर महायोगी वीर्य्यवानक्षयोऽव्ययः ॥४५॥

माण्डव्य उवाच। अचौरश्चौरशङ्कायां शूले भिन्नो ह्यहं
तदा। तत्रस्थेन स्तुतो देवः प्राह मां वै महेश्वरः॥ ४६॥
मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्वुदम्। रुजा शूलकृता
चैव न ते विप्र भविष्यति॥ ४७॥ आधिभिर्व्याधिभिश्चैव वर्ज्जितस्त्वं
भविष्यसि। पादाच्चतुर्थात् सम्भूत आत्मा यस्मान्मुने तव॥ ४८॥
त्वं भविष्यस्यनुपमो जन्म वै सफलं कुरु। तीर्थाभिषेकं सकलं
त्वमविघ्नेन चाप्स्यसि॥ ४९॥ स्वर्गं चैवाक्षयं विप्र विदधामि
तवोर्ज्जितम्। एवमुक्त्वा तु भगवान् वरेण्यो वृषवाहनः॥ ५०॥
महेश्वरो महाराज कृत्तिवासा महाद्युतिः। सगणो दैवतश्रेष्ठ-
स्तत्रैवान्तरधीयत॥ ५१॥

गालव उवाच। विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः।
अब्रवीन्मां ततो माता दुःखिता रुदती भृशम्॥ ५२॥ कौशि-
केनाभ्यनुज्ञातं पुत्रं वेदविभूषितम्। न तात तरुणं दान्तं पिता
त्वां पश्यतेऽनघ॥ ५३॥ श्रुत्वा जनन्या वचनं निराशो गुरु-
दर्शने। नियतात्मा महादेवमपश्यं सोऽब्रवीच्च माम्॥ ५४॥
पिता माता च ते त्वञ्च पुत्र मृत्युविवर्ज्जिताः। भविष्यथ विश
क्षिप्रं द्रष्टासि पितरं क्षये॥ ५५॥ अनुज्ञातो भगवता गृहं
गत्वा युधिष्ठिर। अपश्यं पितरं तात इष्टिं कृत्वा विनिःसृतम्
॥ ५६॥ उपस्पृश्य गृहीत्वेध्म कुशांश्च शरणाकुरून्। तां विसृज्य
च मां प्राह पिता सास्राविलेक्षणः॥ ५७॥ प्रणमन्तं परि-
ष्वज्य मूर्द्ध्न्युपाघ्राय पाण्डव। दिष्ट्या दृष्टोऽसि मे पुत्र कृतविद्य
इहागतः॥ ५८॥

वैशम्पायन उवाच। एतान्यत्यद्भुतान्येव कर्माण्यथ महात्मनः।
प्रोक्तानि मुनिभिः श्रुत्वा विस्मयामास पाण्डवः॥ ५९॥ ततः

कृष्णोऽब्रवीद्वाक्यं पुनर्मतिमतांवरः। युधिष्ठिरं धर्मनिधिं पुरुहूतमिवेश्वरः॥ ६०॥

वासुदेव उवाच। उपमन्युर्मयि प्राह तपन्निव दिवाकरः। अशुभैः पापकर्माणो ये नराः कलुषीकृताः॥ ६१॥ ईशानं न प्रपद्यन्ते तमोराजसवृत्तयः। ईश्वरं संप्रपद्यन्ते द्विजा भावितभावनाः॥ ६२॥ सर्वथा वर्त्तमानोऽपि यो भक्तः परमेश्वरे। सदृशोऽरण्यवासीनां मुनीनां भावितात्मनाम्॥ ६३॥ ब्रह्मत्वं केशवत्वं वा शक्रत्वं वा सुरैः सह। त्रैलोक्यस्याधिपत्यं वा तुष्टो रुद्रः प्रयच्छति॥६४॥ मनसापि शिवं तात ये प्रपद्यन्ति मानवाः। विधूय सर्वपापानि देवैः सह वसन्ति ते॥ ६५॥ भित्त्वा भित्त्वा च कूलानि हत्वा सर्वमिदं जगत्। यजेद्देवं विरूपाक्षं न स पापेन लिप्यते॥ ६६॥ सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः। सर्वं नुदति तत् पापं भावयञ्छिवमात्मना॥ ६७॥ कीटपक्षिपतङ्गानां तिरश्चामपि केशव। महादेवप्रपन्नानां न भयं विद्यते क्वचित्॥ ६८॥ एकमेव महादेवं भक्त्या ये मानवा भुवि। न ते संसारवशगा इति मे निश्चिता मतिः॥ ६९॥ ततः कृष्णोऽब्रवीद्वाक्यं धर्मपुत्रं युधिष्ठिरम्॥ ७०॥

विष्णुरुवाच। आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो वसवोऽथ विश्वे। धाताऽर्यमा शुक्रबृहस्पती च रुद्राः ससाध्या वरुणोऽथ गोपः॥ ७१॥ ब्रह्मा शक्रो मारुतो ब्रह्म सत्यं वेदा यज्ञा दक्षिणा वेदवाहाः। सोमो यष्टा यच्च हव्यं हविश्च रक्षा दीक्षा संयमा ये च केचित्॥ ७२॥ स्वाहा वौषट् ब्राह्मणाः सौरभेयी धर्मश्चाग्र्यं कालचक्रं बलञ्च। यशो दमो बुद्धिमतां स्थितिश्च शुभाशुभं ये मुनयश्च सप्त॥ ७३॥ अग्र्या बुद्धिर्मनसा दर्शनेन स्पर्शश्चाग्र्यः कर्मणां या च सिद्धिः। गणा देवानामूष्मपाः सोमपाश्च लेखाः सुयामास्तुषिता ब्रह्मकायाः॥ ७४॥ आभा-

सुरा गन्धपा दृष्टिपाश्च वाचाविरुद्धाश्च मनोविरुद्धाः। शुद्धाश्च निर्माणरताश्च देवाः स्पर्शासना दर्शपा आज्यपाश्च ॥ ७५॥ चिन्त्यद्योता ये च देवेषु मुख्या ये चाप्यन्ये देवताश्चाजमीढ़। सुपर्णगन्धर्वपिशाचदानवा यक्षास्तथा चारणपन्नगाश्च ॥ ७६ ॥ स्थूलं सुसूक्ष्मं मृदु चाप्यसूक्ष्मं दुःखं सुखं दुःखमनन्तरञ्च। सांख्यं योगं यत् पराणां परञ्च शर्व्वाज्जातं विद्धि यत् कीर्त्तितं मे ॥७७॥ तत्सम्भूता भूतकृतो वरेण्याः सर्व्वे देवा भुवनस्यास्य गोपाः। आविश्येमां धरणीं येऽभ्यरक्षन् पुरातनीं तस्य देवस्य सृष्टिम् ॥ ७८ ॥ विचिन्वस्तपसा तत् स्थवीयः किञ्चित्तत्त्वं प्राणहेतोर्नतोऽस्मि। ददातु देवः स वरानिहेष्टानभिष्टुतो नः प्रभुरव्ययः सदा ॥ ७९ ॥ इमं स्तवं सन्नियतेन्द्रियश्च भूत्वा शुचिर्यः पुरुषः पठेत। अभग्नयोगो नियतो मासमेकं सम्प्राप्नुयादश्वमेधे फलं यत् ॥ ८० ॥ वेदान् कृत्स्नान् ब्राह्मणः प्राप्नुयात्तु जयेन्नृपः पार्थ महीञ्च कृत्स्नाम्। वैश्यो लाभं प्राप्नुयान्नैपुणञ्च शूद्रो गतिं प्रेत्य तथासुखञ्च ॥ ८१ ॥ स्तवराजमिमं कृत्वा रुद्राय दधिरे मनः। सर्व्वदोषापहं पुण्यं पवित्रञ्च यशस्विनः ॥ ८२ ॥ यावन्त्यस्य शरीरे तु रोमकूपाणि भारत। तावदब्दसहस्राणि स्वर्गे वसति मानवः ॥ ८३ ॥

इत्यनुशासनपर्व्वणि अनुशासनिकपर्व्वणि मेघवाहनोपाख्याने अष्टादशोऽध्यायः ॥ १८ ॥

---

युधिष्ठिर उवाच। यदिदं सहधर्म्मेति प्रोच्यते भरतर्षभ। पाणिग्रहणकाले तु स्त्रीणामेतत् कथं स्मृतम् ॥ १ ॥ आर्षः एष भवेद्धर्म्मः प्राजापत्योऽथ वासुरः। यदेतत् सहधर्म्मेति पूर्व्वमुक्तं महर्षिभिः ॥ २ ॥ सन्देहः सुमहानेष विरुद्ध इति मे मतिः।

इह यः सहधर्मों वै प्रेत्यायं विहितः क्व नु ॥ ३ ॥ स्वर्गों मृतानां भवति सहधर्मैः पितामह। पूर्वमेकस्तु म्रियते क्व चैकस्तिष्ठते वद ॥ ४ ॥ नानाधर्म्मफलोपेता नानाकर्म्मनिवासिताः। नानानिरयविष्ठान्ता मानुषा बहवो यदा ॥ ५ ॥ अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति। यदानृताः स्त्रियस्तात सहधर्मः कुतः स्मृतः ॥ ६ ॥ अनृताः स्त्रिय इत्येवं वेदेष्वपि हि पठ्यते। धर्मोऽयं पूर्विका संज्ञा उपचारः क्रियाविधिः ॥ ७ ॥ गह्वरं प्रतिभात्येतन्मम चिन्तयतोऽनिशम्। निःसन्देहमिदं सर्वं पितामह यथाश्रुति ॥ ८ ॥ यदेतद्यादृशञ्चैतत् यथा चैतत् प्रवर्त्तितम्। निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे ॥ ९ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। अष्टावक्रस्य सम्वादं दिशया सह भारत ॥ १० ॥ निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः। ऋषिरथ वदान्यस्य वव्रे कन्यां महात्मनः ॥ ११ ॥ सुप्रभां नाम वै नाम्ना रूपेणाप्रतिमां भुवि। गुणप्रभावशीलेन चारित्रेण च शोभनाम् ॥ १२ ॥ सा तस्य दृष्ट्वैव मनो जहार शुभलोचना। वनराजी यथा चित्रा वसन्ते कुसुमाचिता ॥ १३ ॥ ऋषिस्तमाह देया मे सुता तुभ्यं हि तत् शृणु। गच्छ तावद्दिशं पुण्यामुत्तरां द्रक्ष्यस्य ततः ॥ १४ ॥

अष्टावक्र उवाच। किं द्रष्टव्यं मया तत्र वक्तुमर्हसि मे भवान्। तथेदानीं मया कार्य्यं यथा वक्ष्यति मां भवान् ॥ १५ ॥

वदान्य उवाच। धनदं समतिक्रम्य हिमवन्तञ्च पर्वतम्। रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितम् ॥ १६ ॥ संहृष्टैः पार्षदैर्युष्टं नृत्यद्भिर्विविधाननैः। दिव्याङ्गरागैः पिशाचैरन्यैर्नानाविधैः प्रभो ॥ १७ ॥ पाणितालैः सुतालैश्च शम्यातालैः समैस्तथा। सम्प्रहृष्टैः प्रनृत्यद्भिः सर्वस्तत्र निषेव्यते ॥ १८ ॥ इष्टं किल गिरौ स्थानं तद्दिव्यमिति शुश्रुम। नित्यं सन्निहितो देवस्तथा ते पार्षदाः

स्मृताः ॥ १९ ॥ तत्र देव्या तपस्तप्तं शङ्करार्थं सुदुश्चरम् । अतस्तदिष्टं देवस्य तथोमाया इति श्रुतिः ॥ २० ॥ पूर्व्वं तत्र महापार्श्वं देवस्योत्तरतस्तथा । ऋतवः कालरात्रिश्च ये दिव्या ये च मानुषाः ॥ २१ ॥ देवञ्चोपासते सर्व्वं रूपिणः किल तत्र ह । तदतिक्रम्य भवनं त्वया यातव्यमेव हि ॥ २२ ॥ ततो नीलं वनोद्देशं द्रक्ष्यसे मेघसन्निभम् । रमणीयं मनोग्राहि तत्र वै द्रक्ष्यसे स्त्रियम् ॥ २३ ॥ तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठिताम् । द्रष्टव्या सा त्वया तत्र सम्पूज्या चैव यत्नतः ॥ २४ ॥ तां दृष्ट्वा विनिवृत्तस्त्वं ततः पाणिं ग्रहीष्यसि । यद्येष समयः सर्व्वः साध्यतां तत्र गम्यताम् ॥ २५ ॥

अष्टावक्र उवाच । तथास्तु साधयिष्यामि तत्र यास्याम्यसंशयम् । यत्र त्वं वदसे साधो भवान् भवतु सत्यवाक् ॥ २६ ॥

भीष्म उवाच । ततोऽगच्छत् स भगवानुत्तरामुत्तमां दिशम् । हिमवन्तं गिरिश्रेष्ठं सिद्धचारणसेवितम् ॥ २७ ॥ स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिम् । अभ्यगच्छन्नदीं पुण्यां बाहुदां धर्म्मशालिनीम् ॥ २८ ॥ अशोके विमले तीर्थे स्नात्वा वै तर्प्य देवताः । तत्र वासाय शयने कौश्ये सुखमुवास ह ॥ २९ ॥ ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः । स्नात्वा प्रादुश्चकाराग्निं स्तुत्वा चैनं प्रधानतः ॥ ३० ॥ रुद्राणीं रुद्रमासाद्य ह्रदे तत्र समाश्वसत् । विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ॥ ३१ ॥ सोऽपश्यत् काञ्चनं द्वारं दीप्यमानमिव श्रिया । मन्दाकिनीञ्च नलिनीं धनदस्य महात्मनः ॥ ३२ ॥ अथ ते राक्षसाः सर्व्वे येऽभिरक्षन्ति पद्मिनीम् । प्रत्युत्थिता भगवन्तं माणिभद्रपुरोगमाः ॥ ३३ ॥ स तान् प्रत्यर्च्चयामास राक्षसान् भीमविक्रमान् । निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ॥ ३४ ॥ ते राक्षसास्तथा राजन् भगवन्तमथाब्रुवन् । असौ वैश्रवणो राजा

स्वयमायाति तेऽन्तिकम् ॥ ३५ ॥ विदितो भगवानस्य कार्य्य-
मागमनस्य यत्। पश्यैनं त्वं महाभागं ज्वलन्तमिव तेजसा ॥३६॥
ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम्। विधिवत् कुशलं
पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ॥ ३७ ॥ सुखं प्राप्तो भवान् कच्चित्
किं वा मत्तश्चिकीर्षति। ब्रूहि सर्वं करिष्यामि यन्मां वक्ष्यसि
वै द्विज ॥ ३८ ॥ भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम। सत्-
कृतः कृतकार्य्यश्च भवान् यास्यत्यविघ्नतः ॥ ३९ ॥ प्राविशद्भवनं
स्वं वै गृहीत्वा तं द्विजोत्तमम्। आसनं स्वं ददौ चैव पाद्यमर्घ्यं
तथैव च ॥ ४० ॥ अथोपविष्टयोस्तत्र माणिभद्रपुरोगमाः। निषेदु-
स्तत्र कौवेरा यक्षगन्धर्वकिन्नराः ॥ ४१ ॥ ततस्तेषां निषण्णानां
धनदो वाक्यमब्रवीत्। भवच्छन्दं समाज्ञाय नृत्येरन्नप्सरो गणाः
॥ ४२ ॥ आतिथ्यं परमं कार्य्यं शुश्रूषा भवतस्तथा। संवर्त्तता-
मित्युवाच मुनिर्म्मधुरया गिरा ॥ ४३ ॥ अथोर्वरा मिश्रकेशी
रम्भा चैवोर्वशी तथा। अलम्बुषा घृताची च मित्रा चित्राङ्गदा
रुचिः ॥ ४४ ॥ मनोहरा सुकेशी च सुमुखी हासिनी प्रभा।
विद्युता प्रशमी दान्ता विद्योता रतिरेव च ॥ ४५ ॥ एताश्चान्याश्च
वै बह्व्यः प्रनृत्ताप्सरसः शुभाः। अवादयंश्च गन्धर्वा वाद्यानि
विविधानि च ॥ ४६ ॥ अथ प्रवृत्ते गान्धर्व्वे दिव्ये ऋषिरुपाविशत्।
दिव्यं सम्वत्सरं तत्रारमतैष महातपाः ॥ ४७ ॥ ततो वैश्रवणो
राजा भगवन्तमुवाच ह। साग्रः सम्वत्सरो जातो विप्रेह तव
पश्यतः ॥ ४८ ॥ हार्य्योऽयं विषयो ब्रह्मन् गान्धर्वो नाम नामतः।
छन्दतो वर्त्ततां विप्र यथा वदति वा भवान् ॥ ४९ ॥ अतिथिः
पूजनीयस्त्वमिदञ्च भवतो गृहम्। सर्वमाज्ञाप्यतामाशु परवन्तो
वयन्त्वयि ॥ ५० ॥ अथ वैश्रवणं प्रीतो भगवान् प्रत्यभाषत।
अर्चितोऽस्मि यथान्यायं गमिष्यामि धनेश्वर ॥ ५१ ॥ प्रीतोऽस्मि
सदृशञ्चैव तव सर्वं धनाधिप। तव प्रसादाद्भगवन्महर्षेश्च महा-

त्मनः ॥ ५२ ॥ नियोगादद्य यास्यामि वृद्धिमान्वृद्धिमान् भव । अथ निष्क्रम्य भगवान् प्रययावुत्तरामुखः ॥ ५३ ॥ कैलासं मन्दरं हैमं सर्व्वाननुचचार ह । तानतीत्य महाशैलान् कैरातं स्थानमुत्तमम् ॥ ५४ ॥ प्रदक्षिणं तथा चक्रे प्रयतः शिरसा नतः । धरणीमवतीर्य्याथ पूतात्मा सोऽभवत्तदा ॥ ५५ ॥ स तं प्रदक्षिणं कृत्वा त्रिःशैलञ्चोत्तरामुखः । समेन भूमियोगेन ययौ प्रीतिपुरस्कृतः ॥ ५६ ॥ ततोऽपरं वनोद्देशं रमणीयमपश्यत । सर्व्वर्त्तुभिर्मूलफलैः पक्षिभिश्च समन्वितैः ॥ ५७ ॥ रमणीयैर्वनोद्देशैस्तत्र तत्र विभूषितम् । तत्राश्रमपदं दिव्यं ददर्श भगवानथ ॥५८॥ शैलांश्च विविधाकारान् काञ्चनाम्रत्नभूषितान् । मणिभूमौ निविष्टाश्च पुष्करिण्यस्तथैव च ॥ ५९ ॥ अन्यान्यपि सुरम्याणि पश्यतः सुबहून्यथ । भृशं तस्य मनो रेमे महर्षेर्भावितात्मनः ॥ ६० ॥ स तत्र काञ्चनं दिव्यं सर्व्वरत्नमयं गृहम् । ददर्शाद्भुतसङ्काशं धनदस्य गृहद्वारम् ॥ ६१ ॥ महान्तो यत्र विविधा मणिकाञ्चनपर्व्वताः । विमानानि च रम्याणि रत्नानि विविधानि च ॥ ६२ ॥ मन्दारपुष्पैः सङ्कीर्णा तथा मन्दाकिनी नदी । स्वयम्प्रभाश्च मणयो वज्रैर्भूमिश्च भूषिता ॥ ६३ ॥ नानाविधैश्च भवनैर्विचित्रमणितोरणैः । मुक्ताजालविनिक्षिप्तैर्मणिरत्नविभूषितैः ॥ ६४ ॥ मनोदृष्टिहरै रम्यैः सर्व्वतः संवृतं शुभैः । ऋषिभिश्चावृतं तत्र आश्रमं तं मनोहरम् ॥ ६५ ॥ ततस्तस्याभवच्चिन्ता कुत्र वासो भवेदिति । अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ॥ ६६ ॥ अतिथिं समनुप्राप्तमभिजानन्तु येऽत्र वै । अथ कन्याः परिवृता गृहात्तस्माद्विनिर्गताः ॥ ६७ ॥ नानारूपाः सप्त विभो कन्याः सर्व्वा मनोहराः । यां यामपश्यत् कन्यां वै सा सा तस्य मनोऽहरत् ॥ ६८ ॥ न च शक्तो वारयितुं मनोऽस्यावसीदति । ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः ॥ ६९ ॥

अथ यं प्रमदाः प्राहुर्भगवान् प्रविशत्विति। स च तासां सुरू-पाणां तस्यैव भवनस्य हि॥ ७०॥ कौतूहलसमाविष्टः प्रवि-वेश गृहं द्विजः। तत्रापश्यज्जरायुक्तामरजोम्वरधारिणीम् ॥ ७१॥ वृद्धां पर्य्यङ्कमासीनां सर्वाभरणभूषिताम्। स्वस्तीति तेन चैवोक्ता सैव प्रत्यवदत्तदा। प्रत्युत्थाय च तं विप्रमास्यता-मित्युवाच ह॥ ७२॥

अष्टावक्र उवाच। सर्वाः स्वानालयान् यान्तु एकामामुप-तिष्ठतु। प्रज्ञाता या प्रशान्ता या शेषा गच्छन्तु छन्दतः॥ ७३॥ ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा। निश्चक्रमुर्गृहा-त्तस्मात् सा वृद्धाथ व्यतिष्ठत॥ ७४॥ अथ तां सम्विशन् प्राह शयने भास्वरे तदा। त्वयापि सुप्यतां भद्रे रजनी ह्यतिवर्त्तते ॥ ७५॥ संलापात्तेन विप्रेण तथा सा तत्र भाषिता। द्वितीये शयने दिव्ये संविवेश महाप्रभे॥ ७६॥ अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा। व्यपदिश्य महर्षेर्वै शयनं व्यवरोहत॥७७॥ स्वागतेनागतां तान्तु भगवानभ्यभाषत। सोपागूहद्भुजाभ्यान्तु ऋषिं प्रीत्या नरर्षभ॥ ७८॥ निर्विकारमृषिञ्चापि काष्ठकुड्यो-पमं तदा। दुःखिता प्रेक्ष्य सञ्जल्पमकार्षीदृषिणा सह॥ ७९॥ ब्रह्मन्नकामतोऽन्यास्ति स्त्रीणां पुरुषतो धृतिः। कामेन मोहिता चाहं त्वां भजन्तीं भजस्व माम्॥ ८०॥ प्रहृष्टो भव विप्रर्षे समागच्छ मया सह। उपगूह च मां विप्र कामार्त्ताहं भृशं त्वयि ॥ ८१॥ एतद्धि तव धर्मात्मंस्तपसः पूज्यते फलम्। प्रार्थितं दर्शनादेव भजमानां भजस्व माम्॥ ८२॥ मम चेदं धनं सर्वं यच्चान्यदपि पश्यसि। प्रभुस्त्वं भव सर्वत्र मयि चैव न संशयः ॥ ८३॥ सर्वान् कामान् विधास्यामि रमस्व सहितो मया। रमणीये वने विप्र सर्वकामफलप्रदे॥ ८४॥ त्वदशाहं भविष्यामि रंस्यसे च मया सह। सर्वान् कामानुपाश्नामो ये दिव्या ये च

मानुषाः ॥ ८५ ॥ नातः परं हि नारीणां विद्यते च कदाचन । यथा पुरुषसंसर्गः परमेतद्धि नः फलम् ॥ ८६ ॥ आत्मच्छन्देन वर्त्तन्ते नार्य्यो मन्मथचोदिताः ; न च दह्यन्ति गच्छन्त्यः सुतप्तैरपि पांशुभिः ॥ ८७ ॥

अष्टावक्र उवाच । परदारानहं भद्रे न गच्छेयं कदाचन । दूषितं धर्मशास्त्रज्ञैः परदाराभिमर्षणम् ॥ ८८ ॥ भद्रे निविष्टुकामं मां विद्धि सत्येन वै शपे । विषयेष्वनभिज्ञोऽहं धर्मार्थं किल सन्ततिः ॥ ८९ ॥ एवं लोकान् गमिष्यामि पुत्रैरिति न संशयः । भद्रे धर्मं विजानीहि ज्ञात्वा चोपरमस्व ह ॥ ९० ॥

स्त्री उवाच । नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज । प्रियाः स्त्रीणां यथा कामो रतिशीला हि योषितः ॥ ९१ ॥ सहस्रे किल नारीणां प्राप्येतैका कदाचन । तथा शतसहस्रेषु यदि काचित् पतिव्रता ॥ ९२ ॥ नैता जानन्ति पितरं न कुलं न च मातरम् । न भ्रातॄन्न च भर्त्तारं न च पुत्रान्न देवरान् ॥ ९३ ॥ लीलायन्त्यः कुलं घ्नन्ति कूलानीव सरिद्वराः । दोषान् सर्वांश्च मत्वाशु प्रजापतिरभाषत ॥ ८४ ॥

भीष्म उवाच । ततः स ऋषिरेकाग्रस्तां स्त्रियं प्रत्यभाषत । आस्यतां रुचितश्छन्दः किञ्च कार्य्यं ब्रवीहि मे ॥ ९६ ॥ सा स्त्री प्रोवाच भगवन् द्रक्ष्यसे देशकालतः । वस तावन्महाभाग कृतकृत्यो भविष्यसि ॥ ९६ ॥ ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर । वत्स्येऽहं यावदुत्साहो भवत्या नात्र संशयः ॥ ९७॥ अथर्षिरभिसंप्रेक्ष्य स्त्रियं तां जरयार्द्दिताम् । चिन्तां परमिकां भेजे सन्तप्त इव चाभवत् ॥ ९८ ॥ यद्यदङ्गं हि सोऽपश्यत्तस्या विप्रर्षभस्तदा । नारमत्तत्र तत्रास्य दृष्टी रूपविरागिता ॥ ९९ ॥ देवतेयं गृहस्यास्य शापात् किं नु विरूपिता । अस्याश्च कारणं वेत्तुं न युक्तं सहसा मया ॥ १०० ॥ इति चिन्ताविविक्तस्य तमर्थं

स्नातुमिच्छतः। व्यगच्छत्तदहः शेषं मनसा व्याकुलेन तु ॥ १०१ ॥ अथ सा स्त्री तथोवाच भगवन् पश्य वै रवेः। रूपं सन्ध्याभ्रसंरक्तं किमुपस्थाप्यतां तव ॥ १०२ ॥ स उवाच ततस्तां स्त्रीं स्नानोदकमिहानय। उपासिष्ये ततः सन्ध्यां वाग्यतो नियतेन्द्रियः ॥ १०३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि अष्टावक्रदिक्सम्वादे ऊनविंशोऽध्यायः ॥ १९ ॥

---

भीष्म उवाच। अथ सा स्त्री तमुवाच बाढ़मेवं भवत्विति। तैलं दिव्यमुपादाय स्नानशाटीमुपानयत् ॥ १ ॥ अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना। अथास्य तैलेनाङ्गानि सर्वाण्येवाभ्यमृचत ॥ २ ॥ शनैश्चोत्सादितस्तत्र स्नानशालामुपागमत्। भद्रासनं ततश्चित्रमृषिरन्वगमन्नवम् ॥ ३ ॥ अथोपविष्टश्च यदा तस्मिन् भद्रासने तदा। स्नापयामास शनकैस्तमृषिं सुखहस्तवत् ॥ ४ ॥ दिव्यञ्च विधिवच्चक्रे सोपचारं मुनेस्तदा। स तेन सुसुखोष्णेन तस्याहस्तसुखेन च ॥ ५ ॥ व्यतीतां रजनीं कृत्स्नां नाजानात् स महाव्रतः। तत उत्थाय स मुनिस्तदा परमविस्मितः ॥ ६ ॥ पूर्वस्यां दिशि सूर्यञ्च सोऽपश्यदुदितं दिवि। तस्य बुद्धिरियं किन्नु मोहस्तत्त्वमिदं भवेत् ॥ ७ ॥ अथोपास्य सहस्रांशुं किं करोमीत्युवाच ताम्। सा चामृतरसप्रख्यमृषेरन्नमुपाहरत् ॥ ८ ॥ तस्य स्वादुतयान्नस्य न प्रभूतञ्चकार सः। व्यगमच्चाप्यहः शेषं ततः सन्ध्यागमत् पुनः ॥ ९ ॥ अथ सा स्त्री भगवन्तं सुप्यतामित्यचोदयत्। तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ॥ १० ॥ पृथक् चैव सुप्तौ सा च स्त्री स मुनिस्तदा। अथार्द्धरात्रे सा स्त्री तु शयनं तदुपागमत् ॥ ११ ॥

अष्टावक्र उवाच। न भद्रे परदारेषु मनो मे संप्रसज्जति। उत्तिष्ठ भद्रे भद्रन्ते स्वयं वै विरमस्व च ॥ १२ ॥

भीष्म उवाच। सा तदा तेन विप्रेण तथा धृत्या निवर्त्तिता। स्वतन्त्रास्मीत्युवाचर्षिं न धर्म्मच्छलमस्ति ते॥ १३ ॥

अष्टावक्र उवाच। नास्ति स्वतन्त्रता स्त्रीणामस्वतन्त्रा हि योषितः। प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति ॥ १४ ॥

स्त्री उवाच। बाधते मैथुनं विप्र मम भक्तिञ्च पश्य वै। अधर्मं प्राप्स्यसे विप्र यन्मां त्वं नाभिनन्दसि ॥ १५ ॥

अष्टावक्र उवाच। हरन्ति दोषजातानि नरं जातं यथेच्छकम्। प्रभवामि सदा धृत्या भद्रे स्वशयनं व्रज ॥ १६ ॥

स्त्री उवाच। शिरसा प्रणमे विप्र प्रसादं कर्त्तुमर्हसि। भूमौ निपतमानायाः शरणं भव मेऽनघ ॥१७॥ यदि वा दोषजातं त्वं परदारेषु पश्यसि। आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ॥ १८॥ न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहम्। स्वतन्त्रां मां विजानीहि योऽधर्मः सोऽस्तु वै मयि। त्वय्यावेशितचित्ता च स्वतन्त्रास्मि भजस्व माम ॥ १९ ॥

अष्टावक्र उवाच। स्वतन्त्रा च कथं भद्रे ब्रूहि कारणमत्र वै। नास्ति त्रिलोके स्त्री काचित् या वै स्वातन्त्र्यमर्हति॥ २०॥ पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्राश्च स्थाविरे काले नास्ति स्त्रीणां स्वतन्त्रता ॥ २१ ॥

स्त्री उवाच। कौमारं ब्रह्मचर्य्यं मे कन्यैवास्मि न संशयः। पत्नीं कुरुष्व मां विप्र श्रद्धां विजहि मा मम॥ २२ ॥

अष्टावक्र उवाच। यथा मम तथा तुभ्यं यथा तुभ्यं तथा मम। जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं न किं भवेत् ॥ २३ ॥ आश्चर्य्यं परमं हीदं किन्नु श्रेयो हि मे भवेत्। दिव्याभरणवस्त्रा हि कन्येयं मामुपस्थिता॥ २४ ॥ किन्त्वस्याः परमं रूपं जीर्ण-

मासीत् कथं पुनः। कन्यारूपमिहाद्यैवं किमिवात्रोत्तरं भवेत्
॥ २५ ॥ यथापरं शक्तिधृतेर्न व्युत्थास्ये कथञ्चन। न रोचते हि
व्युत्थानं सत्येनासादयाम्यहम् ॥ २६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि अष्टावक्रदिक्-
सम्वादे विंशोऽध्यायः ॥ २० ॥

---

युधिष्ठिर उवाच। न बिभेति कथं सा स्त्री शापाच्च परम-
द्युतेः। कथं निवृत्तो भगवांस्तद्भवान् प्रब्रवीतु मे ॥ १ ॥

भीष्म उवाच। अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथम्।
न चानृतन्ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया ॥ २ ॥

स्त्री उवाच। द्यावापृथिव्योर्यत्रैषा काम्या ब्राह्मणसत्तम।
शृणुष्वावहितः सर्वं यदिदं सत्यविक्रम ॥ ३ ॥ जिज्ञासेयं प्रयुक्ता
मे स्थिरीकर्त्तुं तवानघ। अव्युत्थानेन ते लोका जिताः सत्यपरा-
क्रम ॥ ४ ॥ उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलञ्च ते।
स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ॥ ५ ॥ तुष्टः पिता-
महस्तेऽद्य तथा देवाः सवासवाः। स त्वं येन च कार्य्येण सम्प्राप्तो
भगवानिह ॥ ६ ॥ प्रेषितस्तेन विप्रेण कन्यापित्रा द्विजर्षभ।
तवोपदेशं कर्त्तुं वै तच्च सर्वं मया कृतम् ॥ ७ ॥ क्षेमैर्गमिष्यसि
गृहं श्रमश्च न भविष्यति। कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च
भविष्यति ॥ ८ ॥ काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तमम्।
अनतिक्रमणीया सा कृत्स्नैर्लोकैस्त्रिभिः सदा ॥ ९ ॥ गच्छस्व
सुकृतं कृत्वा किञ्चान्यच्छ्रोतुमिच्छसि। यावद्ब्रवीमि विप्रर्षे
अष्टावक्र यथातथम् ॥ १० ॥ ऋषिणा प्रसादिता चास्मि तव
हेतोर्द्विजर्षभ। तस्य सम्माननार्थं मे त्वयि वाक्यं प्रभाषितम् ॥ ११ ॥

भीष्म उवाच। श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलिः

स्थितः । अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत् ॥ १२ ॥ गृहमागत्य विश्रान्तः स्वजनं परिपृच्छ्य च । अभ्यगच्छच्च तं विप्रं न्यायतः कुरुनन्दन ॥ १३ ॥ पृष्टश्च तेन विप्रेण दृष्टन्त्वेतन्निदर्शनम् । प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना ॥ १४ ॥ भवता समनुज्ञातः प्रस्थितो गन्धमादनम् । तस्य चोत्तरतो देशे दृष्टं मे दैवतं महत् ॥ १५ ॥ तया चाहमनुज्ञातो भवांश्चापि प्रकीर्त्तितः । श्रावितश्चापि तद्वाक्यं गृहं चाभ्यागतः प्रभो ॥१६॥ तमुवाच तदा विप्रः सुतां प्रतिगृहाण मे । नक्षत्रविधियोगेन पात्रं हि परमं भवान् ॥ १७ ॥

भीष्म उवाच । अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां प्रभो । कन्यां परमधर्मात्मा प्रीतिमांश्चाभवत्तदा ॥ १८ ॥ कन्यां तां प्रतिगृह्यैव भार्य्यां परमशोभनाम् । उवास मुदितस्तत्र स्वाश्रमे विगतज्वरः ॥ १९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि अष्टावक्रदिक्-
सम्वादे एकविंशोऽध्यायः ॥ २१ ॥

---

युधिष्ठिर उवाच । किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनाः । ब्राह्मणं लिङ्गिनञ्चैव ब्राह्मणं वाप्यलिङ्गिनम् ॥ १ ॥

भीष्म उवाच । स्ववृत्तिमभिपन्नाय लिङ्गिने चेतराय च । देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥ २ ॥

युधिष्ठिर उवाच । श्रद्धया परयापूतो यः प्रयच्छेद्दिजातये । हव्यं कव्यं तदा दानं को दोषः स्यात् पितामह ॥ ३ ॥

भीष्म उवाच । श्रद्धापूतो नरस्तात दुर्दान्तोऽपि न संशयः । पूतो भवति सर्वत्र किमुत त्वं महाद्युते ॥ ४ ॥

युधिष्ठिर उवाच। न ब्राह्मणं परीक्षेत दैवेषु सततं नरः। कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः॥ ५॥

भीष्म उवाच। न ब्राह्मणः साधयते हव्यं दैवात् प्रसिध्यति। दैवप्रसादादिज्यन्ते यजमानैर्न संशयः॥ ६॥ ब्राह्मणान् भरतश्रेष्ठ सततं ब्रह्मवादिनः। मार्कण्डेयः पुरा प्राह इति लोकेषु बुद्धिमान्॥ ७॥

युधिष्ठिर उवाच। अपूर्वोऽप्यथ वा विद्वान् सम्बन्धी वा यथा भवेत्। तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः॥ ८॥

भीष्म उवाच। कुलीनः कर्म्मकृद्वैद्यस्तथैवाप्यनृशंस्यवान्। ह्रीमानृजुः सत्यवादी पात्रं पूर्वे च ये त्रयः॥ ९॥ तत्रेमं शृणु मे पार्थ चतुर्णां तेजसां मतम्। पृथिव्याः काश्यपस्याग्नेर्मार्कण्डेयस्य चैव हि॥ १०॥

पृथिव्युवाच। यथा महार्णवे क्षिप्तः क्षिप्रं लेष्टुर्विनश्यति। तथा दुश्चरितं सर्वं त्रिवृत्तत्राह्य निमज्जति॥ ११॥

काश्यप उवाच। सर्वे च वेदाः सह षड्भिरङ्गैः सांख्यं पुराणञ्च कुले च जन्म। नैतानि सर्वाणि गतिर्भवन्ति शीलव्यपेतस्य नृप द्विजस्य॥ १२॥

अग्निरुवाच। अधीयानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषाम्। प्रभ्रश्यतेऽसौ चरते न सत्यं लोकास्तस्य ह्यन्तवन्तो भवन्ति॥ १३॥

मार्कण्डेय उवाच। अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्। नाभिजानामि यद्यस्य सत्यस्यार्द्धमवाप्नुयात्॥ १४॥

भीष्म उवाच। इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः। पृथिवी काश्यपश्चाग्निः प्रकृष्टायुश्च भार्गवः॥ १५॥

युधिष्ठिर उवाच। यदिदं ब्राह्मणा लोके व्रतिनो भुञ्जते हविः। दत्तं ब्राह्मणकामाय कथं तत् सुकृतं भवेत्॥ १६॥

भीष्म उवाच। आदिष्टिनो ये राजेन्द्र ब्राह्मणा वेदपारगाः।
भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति ते ॥ १७ ॥

युधिष्ठिर उवाच। अनेकान्तं बहुद्वारं धर्म्ममाहुर्मनीषिणः।
किं निष्ठितं भवेदत्र तन्मे ब्रूहि पितामह ॥ १८ ॥

भीष्म उवाच। अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा।
आर्जवञ्चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ १९ ॥ ये तु धर्मं
प्रशंसन्तश्चरन्ति पृथिवीमिमाम्। अनाचरन्तस्तद्धर्मं सङ्करेऽभि-
रताः प्रभो ॥ २० ॥ तेभ्यो हिरण्यं रत्नं वा गामश्वं वा ददाति
यः। दश वर्षाणि विष्ठां स भुङ्क्ते निरयमाश्रितः ॥ २१ ॥
मेदानां पुक्कसानाञ्च तथैवान्तेऽवसायिनाम्। कृतं कर्माकृतं वापि
रागमोहेन जल्पताम् ॥ २२ ॥ वैश्वदेवञ्च ये मूढ़ा विप्राय ब्रह्म-
चारिणे। ददते नेह राजेन्द्र ते लोकान् भुञ्जतेऽशुभान् ॥ २३ ॥

युधिष्ठिर उवाच। किं परं ब्रह्मचर्य्यस्य किं परं धर्मलक्ष-
णम्। किञ्च श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह ॥ २४ ॥

भीष्म उवाच। ब्रह्मचर्य्यात् परं तात मधुमांसस्य वर्ज्जनम्।
मर्य्यादायां स्थितो धर्मः शमश्चैवास्य लक्षणम् ॥ २५ ॥

युधिष्ठिर उवाच। कस्मिन् काले चरेद्धर्मं कस्मिन् कालेऽर्थ-
माचरेत्। कस्मिन् काले सुखी च स्यात्तन्मे ब्रूहि पितामह ॥२६॥

भीष्म उवाच। कल्यमर्थं निषेवेत ततो धर्ममनन्तरम्।
पश्चात् कामं निषेवेत न च गच्छेत् प्रसङ्गिताम् ॥ २७॥ ब्राह्मणां-
श्चैव मन्येत गुरुंश्चाप्यभिपूजयेत्। सर्वभूतानुलोमश्च मृदुशीलः
प्रियम्वदः ॥ २८ ॥ अधिकारे यदनृतं यच्च राजसु पैशुनम्।
गुरोश्चालीककरणं तुल्यं तद्ब्रह्महत्यया ॥ २९ ॥ प्रहरेन्न नरे-
न्द्रेषु न हन्याद्गान्तथैव च। भ्रूणहत्यासमञ्चैव उभयं यो निषे-
वते ॥ ३० ॥ नाग्निं परित्यजेज्जातु न च वेदान् परित्यजेत्। न
च ब्राह्मणमाक्रोशेत् समन्तद्ब्रह्महत्यया ॥ ३१ ॥

युधिष्ठिर उवाच। कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम्। कीदृशानाञ्च भोक्तव्यं तन्मे ब्रूहि पितामह ॥ ३२ ॥

भीष्म उवाच। अक्रोधना धर्मपराः सत्यनित्या दमेरताः। तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥ ३३ ॥ अमानिनः सर्वसहा दृढ़ार्था विजितेन्द्रियाः। सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥ ३४ ॥ अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः। स्वकर्मनिरता ये च तेभ्यो दत्तं महाफलम् ॥ ३५ ॥ साङ्गांश्च चतुरो वेदानधीते यो द्विजर्षभः। षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः। ये त्वेवं गुणजातीयास्तेभ्यो दत्तं महाफलम् ॥ ३६ ॥ सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः। प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः। तारयेत कुलं सर्वमेकोऽपीह द्विजर्षभः ॥ ३७ ॥ गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत्। द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ॥ ३८ ॥ तारयेत्तत् कुलं सर्वमेकोऽपीह द्विजोत्तमः। किमङ्ग पुनरेवैते तस्मात् पात्रं समाचरेत् ॥ ३९ ॥ निशम्य च गुणोपेतं ब्राह्मणं साधुसम्मतम्। दूरादानीय सत्कृत्य सर्वतश्चापि पूजयेत् ॥ ४० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि बहुप्रश्नीके
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

युधिष्ठिर उवाच। श्राद्धकाले च दैवे च पित्र्येऽपि च पितामह। इच्छामीह त्वया ख्यातं विहितं यत् सुरर्षिभिः ॥ १ ॥

भीष्म उवाच। दैवं पूर्वाह्णिके कुर्य्यादपराह्णे च पैतृकम्। मङ्गलाचारसम्पन्नः कृतशौचः प्रयत्नवान् ॥ २ ॥ मनुष्याणान्तु मध्याह्ने प्रदद्यादुपपत्तिभिः। कालहीनन्तु यद्दानं तं भागं रक्षसां विदुः ॥ ३ ॥ लङ्घितञ्चावलीढञ्च कलिपूर्वञ्च यत् कृतम्। रज-

खलाभिदृष्टञ्च तं भागं रक्षसां विदुः ॥ ४ ॥ अवघुष्टञ्च यद्भुक्त-मव्रतेन च भारत। परामृष्टं शुना चैव तं भागं रक्षसां विदुः ॥ ५ ॥ केशकीटावपतितं क्षुतं श्वाभिरवेक्षितम्। रुदितञ्चाव-धूतञ्च तं भागं रक्षसां विदुः ॥ ६ ॥ निरोङ्कारेण यद्भुक्तं सश-स्त्रेण च भारत। दुरात्मना च यद्भुक्तं तं भागं रक्षसां विदुः ॥७॥ परोच्छिष्टन्तु यद्भुक्तं परिभुक्तञ्च यद्भवेत्। दैवे पित्र्ये च सततं तं भागं रक्षसां विदुः ॥ ८ ॥ मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविश्यते। त्रिभिर्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः ॥ ९ ॥ आज्याहुतिं विना चैव यत् किञ्चित् परिविश्यते। दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ॥ १० ॥ ये भागा रक्षसां प्राप्तास्त उक्ता भरतर्षभ। अत ऊर्द्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ॥ ११ ॥ यावन्तः पतिता विप्रा जड़ोन्मत्तास्तथैव च। दैवे वाप्यथ पित्र्ये वा राजन्नार्हन्ति केतनम् ॥ १२ ॥ श्वित्री क्लीवश्च कुष्ठी च तथा यक्ष्महतश्च यः। अपस्मारी च यश्चान्धो राज-न्नार्हन्ति केतनम् ॥ १३ ॥ चिकित्सका देवलका वृथा नियम-धारिणः। सोमविक्रयिणश्चैव राजन्नर्हन्ति केतनम् ॥ १४ ॥ गायना नर्त्तकाश्चैव प्लवका वादकास्तथा। कथका योधकाश्चैव राजन्नार्हन्ति केतनम् ॥ १५ ॥ होतारो वृषलाणाञ्च वृषला-ध्यापकास्तथा। तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनम् ॥१६॥ अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत। नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥ १७ ॥ अग्रणीर्यः कृतः पूर्वं वर्णावर-परिग्रहः। ब्राह्मणः सर्व्वविद्योऽपि राजन्नार्हति केतनम् ॥ १८ ॥ अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये। स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम् ॥ १९ ॥ अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत। पुत्रिकापूर्वपुत्राश्च श्राद्धे नार्हन्ति केतनम् ॥ २० ॥ ऋण-कर्त्ता च यो राजन् यश्च वार्द्धषिको नरः। प्राणिविक्रयवृत्तिश्च

राजन्नार्हन्ति केतनम् ॥ २१ ॥ स्त्रीपूर्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ । अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् ॥ २२ ॥ श्राद्धे दैवे च निर्द्दिष्टो ब्राह्मणो भरतर्षभ । दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः ॥ २३ ॥ चीर्णव्रत्ता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः । सावित्रीज्ञाः क्रियावन्तस्ते राजन् केतनक्षमाः ॥ २४ ॥ क्षात्रधर्म्मिणमप्याजौ केतयेत् कुलजं द्विजम् । न त्वेव वणिजं तात श्राद्धे च परिकल्पयेत् ॥ २५ ॥ अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् । अस्तेनश्चातिथिज्ञश्च स राजन् केतनक्षमः ॥ २६ ॥ सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ । भिक्षावृत्तिः क्रियावांश्च स राजन् केतनक्षमः ॥ २७ ॥ उदितास्तमितो यश्च तथैवास्तमितोदितः । अहिंस्रश्चाल्पदोषश्च स राजन् केतनक्षमः ॥ २८ ॥ अकल्कको ह्यतर्कश्च ब्राह्मणो भरतर्षभ । संसर्गे भैक्ष्यवृत्तिश्च स राजन् केतनक्षमः ॥ २९ ॥ अव्रती कितवः स्तेनः प्राणिविक्रयको वणिक् । पश्चाच्च पीतवान् सोमं स राजन् केतनक्षमः ॥ ३० ॥ अर्ज्जयित्वा धनं पूर्वं दारुणैरपि कर्म्मभिः । भवेत् सर्वातिथिः पश्चात् स राजन् केतनक्षमः ॥ ३१ ॥ ब्रह्मविक्रयनिर्द्दिष्टं स्त्रिया यच्चार्ज्जितं धनम् । अदेयं पितृविप्रेभ्यो यच्च क्लैव्यादुपार्ज्जितम् ॥ ३२ ॥ क्रियमाणेऽपवर्गे च यो द्विजो भरतर्षभ । न व्याहरति यद्युक्तं तस्याधर्म्मो गवानृतम् ॥ ३३ ॥ श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा । सोमक्षयश्च मांसञ्च यदारण्यं युधिष्ठिर ॥ ३४ ॥ श्राद्धापवर्गे विप्रस्य स्वधा वै सुदिता भवेत् । क्षत्रियस्याप्यथो ब्रूयात् प्रीयन्तां पितरस्त्विति ॥ ३५ ॥ अपवर्गे तु वैश्यस्य श्राद्धकर्म्मणि भारत । अक्षय्यमपि धातव्यं स्वस्ति शूद्रस्य भारत ॥ ३६ ॥ पुण्याहवाचनं दैवं ब्राह्मणस्य विधीयते । एतदेव निरोङ्कारं क्षत्रियस्य विधीयते ॥ ३७ ॥ वैश्यस्य दैवे वक्तव्यं प्रीयन्तां देवता इति । कर्म्मणामानुपूर्व्येण

विधिपूर्वं कृतं शृणु ॥ ३८ ॥ जातकर्मादिकाः सर्वास्त्रिषु वर्णेषु भारत। ब्रह्मचत्ते हि मन्त्रोक्ता वैश्यस्य च युधिष्ठिर ॥ ३९ ॥ विप्रस्य रशना मौञ्जी मौर्व्वी राजन्यगामिनी। बाल्वजीत्येव वैश्यस्य धर्म एष युधिष्ठिर ॥ ४० ॥ दातुः प्रतिग्रहीतुश्च धर्माधर्माविमौ शृणु ॥ ४१ ॥ ब्राह्मणस्यानृतेऽधर्मः प्रोक्तः पातकसंज्ञितः। चतुर्गुणः चत्रियस्य वैश्यस्याष्टगुणः स्मृतः ॥ ४२ ॥ नान्यत्र ब्राह्मणोऽश्नीयात् पूर्वं विप्रेण केतितः। यवीयान् पशुहिंसायां तुल्यधर्मा भवेत् स हि ॥ ४३ ॥ तथा राजन्यवैश्याभ्यां यद्यश्नीयात्तु केतितः। यवीयान् पशुहिंसायां भागार्द्धं समवाप्नुयात् ॥ ४४ ॥ दैवं वाप्यथ वा पित्र्यं योऽश्नीयाद्‌ब्राह्मणादिषु। अस्नातो ब्राह्मणो राजंस्तस्याधर्मो गवानृतम् ॥ ४५ ॥ अशौचो ब्राह्मणो राजन् योऽश्नीयाद्‌ब्राह्मणादिषु। ज्ञानपूर्वमथो लोभात्तस्याधर्मो गवानृतम् ॥ ४६ ॥ अर्थेनान्येन यो लिप्सेत् कर्मार्थञ्चैव भारत। आमन्त्रयति राजेन्द्र तस्याधर्मोऽनृतं स्मृतम् ॥ ४७ ॥ अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्युधिष्ठिर। मन्त्रवत् परिविश्यन्ते तस्याधर्मो गवानृतम् ॥ ४८ ॥

युधिष्ठिर उवाच। पित्र्यं वाप्यथ वा दैवं दीयते यत् पितामह। एतदिच्छाम्यहं ज्ञातुं दत्तं केषु महाफलम् ॥ ४९ ॥

भीष्म उवाच। येषां दाराः प्रतीचन्ते सुवृष्टिमिव कर्षकाः। उच्छेषपरिशेषं हि तान् भोजय युधिष्ठिर ॥ ५० ॥ चारित्रनिरता राजन् ये कृशाः कृशवृत्तयः। अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ ५१ ॥ तद्भक्तास्तद्‌गृहा राजंस्तद्बलास्तदपाश्रयाः। अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ॥ ५२ ॥ तस्करेभ्यः परेभ्यो वा ये भयार्त्ता युधिष्ठिर। अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ॥ ५३ ॥ अकल्ककस्य विप्रस्य रौच्यात् करकृतात्मनः। वटवो यस्य भिचन्ति तेषु दत्तं महाफलम् ॥ ५४ ॥

हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे। अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ॥ ५५ ॥ व्रतिनो नियमस्थाश्च ये विप्राः श्रुतसम्मताः। तत्समाप्त्यर्थमिच्छन्ति तेभ्यो दत्तं महाफलम् ॥५६॥ अव्युत्क्रान्ताश्च धर्मेषु पाषण्डसमयेषु च। कृशप्राणाः कृशधनास्तेभ्यो दत्तं महाफलम् ॥ ५७ ॥ कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः। स्पृहयन्ति च भुक्तान्नं तेभ्यो दत्तं महाफलम् ॥५८॥ तपस्विनस्तपोनिष्ठास्तेषां भैक्षचराश्च ये। अर्थिनः किञ्चिदिच्छन्ति तेषु दत्तं महाफलम् ॥ ५९ ॥ महाफलविधिर्दाने श्रुतस्ते भरतर्षभ। निरयं येन गच्छन्ति स्वर्गञ्चैव हि तत् शृणु ॥ ६० ॥ गुर्वर्थं वा भयार्थं वा वर्जयित्वा युधिष्ठिर। येऽनृतं कथयन्ति स्म ते वै निरयगामिणः ॥ ६१ ॥ परदाराभिहर्त्तारः परदाराभिमर्षिणः। परदारप्रयोक्तारस्ते वै निरयगामिणः ॥ ६२ ॥ ये परस्वापहर्त्तारः परस्वानाञ्च नाशकाः। सूचकाश्च परेषाञ्च ते वै निरयगामिणः ॥ ६३ ॥ प्रपानाञ्च सभानाञ्च संक्रमाणाञ्च भारत। आगाराणाञ्च भेत्तारो नरा निरयगामिणः ॥ ६४ ॥ अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम्। वञ्चयन्ति नरा ये च ते वै निरयगामिणः ॥ ६५ ॥ वृत्तिच्छेदं गृहच्छेदं दारच्छेदञ्च भारत। मित्रच्छेदं तथाशायास्ते वै निरयगामिणः ॥ ६६ ॥ सूचकाः सेतुभेत्तारः परवृत्त्युपजीवकाः। अकृतज्ञाश्च मित्राणां ते वै निरयगामिणः ॥ ६७ ॥ पाषण्डा दूषकाश्चैव समयानाञ्च दूषकाः। ये प्रत्यवसिताश्चैव ते वै निरयगामिणः ॥ ६८ ॥ विषमव्यवहाराश्च विषमाश्चैव वृद्धिषु। लाभेषु विषमाश्चैव ते वै निरयगामिणः ॥ ६९ ॥ द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः। प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिणः ॥ ७० ॥ कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम्। भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिणः ॥ ७१ ॥ पर्य्यश्नन्ति च ये दारानग्निभृत्यातिथींस्तथा।

उत्सन्नपितृदेवेज्यास्ते वै निरयगामिणः ॥ ७२ ॥ वेदविक्रयिणश्चैव वेदानाञ्चैव दूषकाः । वेदानां लेखकाश्चैव ते वै निरयगामिणः ॥ ७३ ॥ चतुराश्रम्यवाह्याश्च श्रुतिवाह्याश्च ये नराः । विकर्म्मभिश्च जीवन्ति ते वै निरयगामिणः ॥ ७४ ॥ केशविक्रयका राजन् विषविक्रयकाश्च ये । क्षीरविक्रयकाश्चैव ते वै निरयगामिणः ॥ ७५ ॥ ब्राह्मणानां गवाञ्चैव कन्यानाञ्च युधिष्ठिर । येऽन्तरं यान्ति कार्य्येषु ते वै निरयगामिणः ॥ ७६ ॥ शस्त्रविक्रयकाश्चैव कर्त्तारश्च युधिष्ठिर । शल्यानां धनुषाञ्चैव ते वै निरयगामिणः ॥ ७७ ॥ शिलाभिः शङ्कुभिर्वापि श्वभ्रैर्वा भरतर्षभ । ये मार्गमनुरुन्धन्ति ते वै निरयगामिणः ॥ ७८ ॥ उपाध्यायांश्च भृत्यांश्च भक्तांश्च भरतर्षभ । ये त्यजन्त्यविकारांस्त्रींस्ते वै निरयगामिणः ॥ ७९ ॥ अप्राप्तदमकाश्चैव नासानां वेधकाश्च ये । बन्धकाश्च पशूनां ये ते वै निरयगामिणः ॥ ८० ॥ अगोप्तारश्च राजानो बलिषड्भागतस्कराः । समर्थाश्चाप्यदातारस्ते वै निरयगामिणः ॥ ८१ ॥ क्षान्तान् दान्तांस्तथा प्राज्ञान् दीर्घकालं सहोषितान् । त्यजन्ति कृतकृत्या ये ते वै निरयगामिणः ॥ ८२ ॥ बालानामथ वृद्धानां दासानाञ्चैव ये नराः । अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥ ८३ ॥ एते पूर्वं विनिर्द्दिष्टाः प्रोक्ता निरयगामिणः । भागिनः स्वर्गलोकस्य वक्ष्यामि भरतर्षभ ॥ ८४ ॥ सर्व्वेष्वेव तु कार्य्येषु दैवपूर्व्वेषु भारत । हन्ति पुत्रान् पशून् कृत्स्नान् ब्राह्मणातिक्रमः कृतः ॥ ८५ ॥ दानेन तपसा चैव सत्येन च युधिष्ठिर । ये धर्म्ममनुवर्त्तन्ते ते नराः स्वर्गगामिणः ॥ ८६ ॥ शुश्रूषाभिस्तपोभिश्च विद्यामादाय भारत । ये प्रतिग्रहनिस्स्नेहास्ते नराः स्वर्गगामिनः ॥ ८७ ॥ भयात् पापात्तथावाधाद्दारिद्र्याद्व्याधिधर्षणात् । यत् कृते प्रतिमुच्यन्ते ते नराः स्वर्गगामिणः ॥ ८८ ॥ क्षमावन्तश्च धीराश्च धर्मकार्य्येषु

चोत्थिताः। मङ्गलाचारसम्पन्नाः पुरुषाः स्वर्गगामिनः ॥ ८९ ॥ निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च। निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ॥ ९० ॥ आश्रमाणाञ्च कर्त्तारः कुलानाञ्चैव भारत। देशानां नगराणाञ्च ते नराः स्वर्गगामिनः ॥ ९१ ॥ वस्त्राभरणदातारो भक्तपानान्नदास्तथा। कुटुम्बानाञ्च दातारः पुरुषाः स्वर्गगामिनः ॥ ९२ ॥ सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये। सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ९३ ॥ मातरं पितरञ्चैव शुश्रूषन्ति जितेन्द्रियाः। भ्रातॄणाञ्चैव सस्नेहास्ते नराः स्वर्गगामिनः ॥ ९४ ॥ आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत। ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥ ९५ ॥ अपराद्धेषु सस्नेहा मृदवो मृदुवत्सलाः। आराधनसुखाश्चापि पुरुषाः स्वर्गगामिनः ॥ ९६ ॥ सहस्रपरिवेष्टारस्तथैव च सहस्रदाः। त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥९७॥ सुवर्णस्य च दातारो गवाञ्च भरतर्षभ। यानानां वाहनानाञ्च ते नराः स्वर्गगामिनः ॥ ९८॥ वैवाहिकानां द्रव्याणां प्रेष्याणाञ्च युधिष्ठिर। दातारो वाससाञ्चैव पुरुषाः स्वर्गगामिनः ॥ ९९ ॥ विहारावसथोद्यानकूपारामसभाप्रपाः। वप्राणाञ्चैव कर्त्तारस्ते नराः स्वर्गगामिनः ॥ १०० ॥ निवेशनानां क्षेत्राणां वसतीनाञ्च भारत। दातारः प्रार्थितानाञ्च ते नराः स्वर्गगामिनः ॥ १०१ ॥ रसानाञ्चाथ वीजानां धान्यानाञ्च युधिष्ठिर। स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥ १०२ ॥ यस्मिंस्तस्मिन् कुले जाता बहुपुत्राः शतायुषः। सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः ॥ १०३ ॥ एतदुक्तममुत्रार्थं दैवं पित्र्यञ्च भारत। दानधर्मञ्च दानस्य यत्पूर्वमृषिभिः कृतम् ॥ १०४ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि स्वर्गनरकवर्णने त्रयोविंशोऽध्यायः ॥ २३ ॥

युधिष्ठिर उवाच। इदं मे तत्त्वतो राजन् वक्तुमर्हसि भारत। अहिंसयित्वापि कथं ब्रह्महत्या विधीयते॥ १॥

भीष्म उवाच। व्यासमामन्त्र्य राजेन्द्र पुरा यत् पृष्टवानहम्। तत्तेऽहं संप्रवक्ष्यामि तदिहैकमनाः शृणु॥ २॥ चतुर्थस्त्वं वशिष्ठस्य तत्त्वमाख्याहि मे मुने। अहिंसयित्वा केनेह ब्रह्महत्या विधीयते॥ ३॥ इति पृष्टो मया राजन् पराशरशरीरजः। अब्रवीन्निपुणो धर्मे निःसंशयमनुत्तमम्॥ ४॥ ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम्। ब्रूयान्नास्तीति यः पश्चात्तं विद्याद्ब्रह्मघातिनम्॥ ५॥ मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत। वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम्॥ ६॥ गोकुलस्य तृषार्त्तस्य जलार्थे वसुधाधिप। उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम्॥ ७॥ यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतम्। दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम्॥ ८॥ आत्मजां रूपसम्पन्नां महतीं सदृशे वरे। न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातिनम्॥ ९॥ अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु। दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम्॥ १०॥ चक्षुषा विप्रहीणस्य पङ्गुलस्य जड़स्य वा। हरेत यो वै सर्वस्वं तं विद्याद्ब्रह्मघातिनम्॥ ११॥ आश्रमे वा वने वापि ग्रामे वा यदि वा पुरे। अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातिनम्॥ १२॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि ब्रह्मघ्नकथने चतुर्विंशोऽध्यायः॥ २४॥

---

युधिष्ठिर उवाच। तीर्थानां दर्शनं श्रेयः स्नानञ्च भरतर्षभ। श्रवणञ्च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः॥ १॥ पृथिव्यां

यानि तीर्थानि पुण्यानि भरतर्षभ । वक्तुमर्हसि मे तानि श्रोतास्मि नियतं प्रभो ॥ २ ॥

भीष्म उवाच । इदमङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते । श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्ममुत्तमम् ॥ ३ ॥ तपोवनगतं विप्रमभिगत्य महामुनिम् । पप्रच्छाङ्गिरसं धीरं गौतमः संशित-व्रतः ॥ ४ ॥ अस्ति मे भगवन् कश्चित् तीर्थेभ्यो धर्मसंशयः । तत् सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ॥ ५ ॥ उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने । प्रेत्यभावे महाप्राज्ञ तद्यथास्ति तथा वद ॥ ६ ॥

अङ्गिरा उवाच । सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालि-नीम् । विगाह्य वै निराहारो निर्मलो मुनिवद्भवेत् ॥ ७ ॥ काश्मीरमण्डले नद्यो याः पतन्ति महानदम् । ता नदीः सिन्धु-मासाद्य शीलवान् स्वर्गमाप्नुयात् ॥ ८ ॥ पुष्करञ्च प्रभासञ्च नैमिषं सागरोदकम् । देविकामिन्द्रमार्गञ्च स्वर्णविन्दुं विगाह्य च । विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः ॥ ९ ॥ हिरण्यविन्दुं विक्षोभ्य प्रयतश्चाभिवाद्य च । कुशेशयञ्च देवन्तं धूयते तस्य किल्विषम् ॥ १० ॥ इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ । करतोयां कुरङ्गे च त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः ॥ ११ ॥ गङ्गाद्वारे कुशावर्त्ते विल्वके नील-पर्वते । तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ॥ १२ ॥ अपां ह्रद उपस्पृश्य वाजिमेधफलं लभेत् । ब्रह्मचारी जितक्रोधः सत्यसन्धस्त्वहिंसकः ॥ १३ ॥ यत्र भागीरथी गङ्गा पतते दिश-मुत्तराम् । महेश्वरस्य त्रिः स्थाने यो नरस्त्वभिषिच्यते । एक-मासं निराहारः स पश्यति हि देवताः ॥ १४ ॥ सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् । सुधां वै लभते भोक्तुं यो नरो जायते पुनः ॥ १५ ॥ महाश्रम उपस्पृश्य योऽग्निहोत्रपरः शुचिः । एक-

मासं निराहारः सिद्धिं मासेन स व्रजेत्॥ १६॥ महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः। त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया॥ १७॥ कन्याकूप उपस्पृश्य बलाकायां कृतोदकः। देवेषु लभते कीर्त्तिं यशसा च विराजते॥ १८॥ देविकायामुपस्पृश्य तथा सुन्दरिकाह्रदे। अश्विन्यां रूपवर्च्चस्कं प्रेत्य वै लभते नरः॥ १९॥ महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा। पक्षमेकं निराहारः स्वर्गमाप्नोति निर्म्मलः॥ २०॥ वैमानिक उपस्पृश्य किङ्किणीकाश्रमे तथा। निवासेऽप्सरसां दिव्ये कामचारी महीयते॥ २१॥ कालिकाश्रममासाद्य विपाशायां कृतोदकः। ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात्॥ २२॥ आश्रमे कृत्तिकानान्तु स्नात्वा यस्तर्पयेत् पितॄन्। तोषयित्वा महादेवं निर्म्मलः स्वर्गमाप्नुयात्॥ २३॥ महापुर उपस्पृश्य त्रिरात्रोपोषितः शुचिः। त्रसानां स्थावराणाञ्च द्विपदानां भयं त्यजेत्॥ २४॥ देवदारुवने स्नात्वा धूतपाप्मा कृतोदकः। देवलोकमवाप्नोति सप्तरात्रोषितः शुचिः॥ २५॥ शरस्तम्बे कुशस्तम्बे द्रोणशर्म्मपदे तथा। अपां प्रपतनासेवी सेव्यते सोऽप्सरोगणैः॥ २६॥ चित्रकूटे जनस्थाने तथा मन्दाकिनीजले। विगाह्य वै निराहारो राजलक्ष्म्या निषेव्यते॥ २७॥ श्यामायास्त्वाश्रमं गत्वा उषित्वा चाभिषिच्यते। एकपक्षं निराहारस्त्वन्तर्द्धानफलं लभेत्॥ २८॥ कौशिकीं तु समासाद्य वायुभक्षस्त्वलोलुपः। त्रिरात्रोपोषितो भूत्वा गन्धर्व्वनगरे वसेत्॥ २९॥ रम्ये चैव उपस्पृश्य तथा वै गन्धतारके। एकमासं निराहारस्त्वन्तर्द्धानफलं लभेत्। एकविंशतिरात्रेण स्वर्गमारोहते नरः॥ ३०॥ मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति। विगाहति ह्यनालम्बमन्धकं वै सनातनम्॥ ३१॥ नैमिषे स्वर्गतीर्थे च उपस्पृश्य जितेन्द्रियः। फलं पुरुषमेधस्य लभेन्मासं कृतोदकः॥ ३२॥ गङ्गाह्रद उपस्पृश्य तथा चैवोत्-

पलावने। अश्वमेधमवाप्नोति तत्र मासं कृतोदकः ॥ ३३ ॥ गङ्गा-यमुनयोस्तीर्थे तथा कालञ्जरे गिरौ। दशाश्वमेधानाप्नोति तत्र मासं कृतोदकः ॥ ३४ ॥ षष्टिह्रद उपस्पृश्य चान्नदानात् विशिष्यते। दश तीर्थसहस्राणि तिस्रः कोटग्रस्तथापराः ॥ ३५॥ समागच्छन्ति माघ्यान्तु प्रयागे भरतर्षभ। माघमासं प्रयागे तु नियतः संशितव्रतः। स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ॥ ३६ ॥ मरुद्गण उपस्पृश्य पितृणामाश्रमे शुचिः। वैवस्वतस्य तीर्थे च तीर्थभूतो भवेन्नरः ॥ ३७ ॥ तथा ब्रह्मसरो गत्वा भागीरथ्यां कृतोदकः। एकमासं निराहारः सोमलोकमवाप्नुयात् ॥३८॥ उत्पातके नरः स्नात्वा अष्टावक्रे कृतोदकः। द्वादशाहं निराहारो हयमेधफलं लभेत् ॥ ३९ ॥ अश्मपृष्ठे गयायाञ्च निरविन्दे च पर्वते। तृतीयां क्रौञ्चपद्याञ्च ब्रह्महत्यां विशुध्यते ॥ ४० ॥ कल-विङ्क उपस्पृश्य विद्याच्च बहुशो जलम्। अग्नेः पुरे नरः स्नात्वा अग्निकन्यापुरे वसेत् ॥ ४१ ॥ करवीरपुरे स्नात्वा विशालायां कृतोदकः। देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते ॥ ४२ ॥ पुन-रावर्त्तनन्दाञ्च महानन्दाञ्च सेव्य वै। नन्दने सेव्यते दान्तस्त्वप्-सरोभिरहिंसकः ॥ ४३ ॥ उर्वशीं कृत्तिकायोगे गत्वा चैव समा-हितः। लौहित्ये विधिवत् स्नात्वा पुण्डरीकफलं लभेत् ॥ ४४ ॥ रामह्रद उपस्पृश्य विपाशायां कृतोदकः। द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ॥ ४५ ॥ महाह्रद उपस्पृश्य शुद्धेन मनसा नरः। एकमासं निराहारो जमदग्निगतिं लभेत् ॥ ४६ ॥ विन्ध्ये सन्ताप्य चात्मानं सत्यसन्धस्त्वहिंसकः। विनयात्तप आस्थाय मासेनैकेन सिध्यति ॥ ४७ ॥ नर्मदायामुपस्पृश्य तथा सूर्पारकोदके। एकपक्षं निराहारो राजपुत्रो विधीयते ॥ ४८ ॥ जम्बु-मार्गे त्रिभिर्मासैः संयतः सुसमाहितः। अहोरात्रेण चैकेन सिद्धिं समधिगच्छति ॥ ४९ ॥ कोकामुखे विगाह्याथ गत्वा

चाण्डालिकाश्रमे । शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश ॥५०॥ वैवस्वतस्य सदनं न स गच्छेत् कदाचन। यस्य कन्याह्रदे वासो देवलोकं स गच्छति ॥ ५१ ॥ प्रभासे त्वेकरात्रेण अमावस्यां समाहितः। सिध्यते तु महाबाहो यो नरो जायतेऽमरः ॥ ५२ ॥ उज्जानक उपस्पृश्य आर्ष्टिसेनस्य चाश्रमे। पिङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ॥ ५३ ॥ कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम्। अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः॥ ५४ ॥ पिण्डारक उपस्पृश्य एकरात्रोषितो नरः। अग्निष्टोममवाप्नोति प्रभातां शर्व्वरीं शुचिः ॥ ५५ ॥ तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम्। पुण्डरीकमवाप्नोति उपस्पृश्य नरः शुचिः ॥ ५६ ॥ मैनाकपर्व्वते स्नात्वा तथा सन्ध्यामुपास्य च। कामं जित्वा च वै मासं सर्व्वमेधफलं लभेत् ॥ ५७ ॥ कालोदकं नन्दिकुण्डं तथा चोत्तरमानसम्। अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते ॥५८॥ नन्दीश्वरस्य मूर्त्तिन्तु दृष्ट्वा मुच्येत किल्बिषैः। स्वर्गमार्गे नरः स्नात्वा ब्रह्मलोकं स गच्छति ॥ ५९ ॥ विख्यातो हिमवान् पुण्यः शङ्करश्वशुरो गिरिः। आकरः सर्व्वरत्नानां सिद्धचारणसेवितः ॥ ६० ॥ शरीरमुत्सृजेत्तत्र विधिपूर्व्वमनाशके। अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ॥ ६१ ॥ अभ्यर्च्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा। ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनम् ॥ ६२ ॥ कामं क्रोधञ्च लोभञ्च यो जित्वा तीर्थमावसेत्। न तेन किञ्चिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥ ६३ ॥ यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च। मनसा तानि गम्यानि सर्व्वतीर्थसमीक्षया ॥ ६४ ॥ इदं मेध्यमिदं पुण्यमिदं स्वर्ग्यमनुत्तमम्। इदं रहस्यं देवानामाप्लाव्यं पावनं तथा ॥ ६५ ॥ इदं दद्याद्द्विजातीनां साधोरात्महितस्य च। सुहृदाञ्च जपेत् कर्णे शिष्यस्यानुगतस्य च ॥ ६६ ॥ दत्तवान् गौतमस्यैतदङ्गिरा वै महा-

तपाः। अङ्गिराः समनुज्ञातः काश्यपेन च धीमता ॥ ६७ ॥ महर्षीणामिदं जप्यं पावनानां तथोत्तमम्। जपंश्चाभ्युत्थितः शश्वन्निर्मलः स्वर्गमाप्नुयात् ॥ ६८ ॥ इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतम्। उत्तमे च कुले जन्म लभेज्जातिञ्च संस्मरेत् ॥६९॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि आङ्गिरसतीर्थ-
यात्रायां पञ्चविंशोऽध्यायः ॥ २५ ॥

---

वैशम्पायन उवाच। बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समम्। पराक्रमे शक्रसममादित्यसमतेजसम् ॥ १ ॥ गाङ्गेयमर्जुनेनाजौ निहतं भूरितेजसम्। भ्रातृभिः सहितोऽन्यैश्च पर्य्यपृच्छद्युधिष्ठिरः ॥ २ ॥ शयानं वीरशयने कालाकाङ्क्षिणमच्युतम्। आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ॥ ३ ॥ अत्रिर्वशिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः। अङ्गिरा गोतमोऽगस्त्यः सुमतिः सुयतात्मवान् ॥ ४ ॥ विश्वामित्रः स्थूलशिराः संवर्त्तः प्रमतिर्दमः। बृहस्पत्युशनो व्यासश्च्यवनः काश्यपो ध्रुवः ॥ ५ ॥ दुर्वासा जामदग्निश्च मार्कण्डेयोऽथ गालवः। भरद्वाजोऽथ रैभ्यश्च यवक्रीतस्त्रितस्तथा ॥ ६ ॥ स्थूलाक्षः शवलाक्षश्च कण्वो मेधातिथिः कृशः। नारदः पर्वतश्चैव सुधन्वाथैकतो द्वितः ॥ ७ ॥ नितम्भूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः। जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः ॥ ८ ॥ समागता महात्मानो भीष्मं द्रष्टुं महर्षयः। तेषां महात्मनां पूजामागतानां युधिष्ठिरः ॥ ९ ॥ भ्रातृभिः सहितश्चक्रे यथावदनुपूर्वशः। ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः ॥ १० ॥ भीष्माश्रिताः सुमधुराः सर्वेन्द्रियमनोहराः। भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनाम्। मेने दिविष्ठमात्मानं तुष्ट्या परमया युतः ॥ ११ ॥ ततस्ते भीष्ममामन्त्र्य

पाण्डवांश्च महर्षयः । अन्तर्द्धानं गताः सर्वे सर्वेषामेव पश्यताम् ॥ १२ ॥ तानृषीन् सुमहाभागानन्तर्द्धानगतानपि । पाण्डवास्तुष्टुवुः सर्वे प्रणेमुश्च मुहुर्मुहुः ॥ १३ ॥ प्रसन्नमनसः सर्वे गाङ्गेयं कुरुसत्तमम् । उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः ॥ १४ ॥ प्रभावात्तपसस्तेषामृषीणां वीक्ष्य पाण्डवाः । प्रकाशती दिशः सर्वा विस्मयं परमं ययुः ॥ १५ ॥ महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते। पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ॥१६॥

वैशम्पायन उवाच। कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः । धर्म्यं धर्मसुतः प्रश्नं पर्य्यपृच्छद्युधिष्ठिरः ॥ १७ ॥

युधिष्ठिर उवाच। के देशाः के जनपदा आश्रमाः के च पर्वताः । प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह ॥ १८ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम् । शिलोञ्छवृत्तेः सम्वादं सिद्धस्य च युधिष्ठिर ॥ १९ ॥ इमां कश्चित् परिक्रम्य पृथिवीं शैलभूषणाम् । असकृद्द्विपदां श्रेष्ठः श्रेष्ठस्य गृहमेधिनः ॥ २० ॥ शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनार्च्चितः । उवास रजनीन्तत्र सुमुखः सुखभाग्दृषिः ॥ २१ ॥ शिलवृत्तिस्तु यत् कृत्यं प्रातस्तत् कृतवाञ्छुचिः । कृतकृत्यमुपातिष्ठत् सिद्धं तमतिथिं तदा ॥ २२ ॥ तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः । चक्रतुर्वेदसंवद्धास्तच्छेषकृतलक्षणाः ॥ २३ ॥ शिलवृत्तिः कथान्ते तु सिद्धिमामन्त्र्य यत्नतः । प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ॥ २४ ॥

शिलवृत्तिरुवाच। के देशाः के जनपदाः केऽश्रमाः के च पर्वताः । प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥ २५ ॥

सिद्ध उवाच। ते देशास्तेजनपदास्तेऽश्रमास्ते च पर्वताः । येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥ २६ ॥ तपसा ब्रह्मचर्य्येण यज्ञैस्त्यागेन वा पुनः । गतिं तां लभते जन्तुर्गङ्गां संसेव्य

यां लभेत् ॥ २७ ॥ स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहि-
नाम्। न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥ २८ ॥
सर्वाणि येषां गाङ्गेयैस्तोयैः कार्य्याणि देहिनाम्। गान्त्यक्त्वा
मानवा विप्र दिवि तिष्ठन्ति ते जनाः ॥ २९ ॥ पूर्वे वयसि कर्माणि
कृत्वा पापानि ये नराः। पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां
गतिम् ॥ ३० ॥ स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम्।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ ३१ ॥ यावदस्थि
मनुष्यस्य गङ्गातोयेषु तिष्ठति। तावद्वर्षसहस्राणि स्वर्गलोके
महीयते ॥ ३२ ॥ अपहत्य तमस्तीव्रं यथा भात्युदये रविः।
तथापहत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥ ३३ ॥ विसोमा इव
शर्वर्य्यो विपुष्पास्तरवो यथा। तद्वद्देशा दिशश्चैव हीना गङ्गा-
जलैः शिवैः ॥ ३४ ॥ वर्णाश्रमा यथा सर्वे धर्मज्ञानविवर्जिताः।
क्रतवश्च यथासोमास्तथा गङ्गां विना जगत् ॥ ३५ ॥ यथा हीनं
नभोऽर्केण भूः शैलैः खञ्च वायुना। तथा देशा दिशश्चैव गङ्गा-
हीना न संशयः ॥ ३६ ॥ त्रिषु लोकेषु ये केचित् प्राणिनः सर्व
एव ते। तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥ ३७ ॥
यस्तु सूर्य्येण निष्टप्तं गाङ्गेयं पिवते जलम्। गवां निर्हार-
निर्मुक्तायावकात्तद्विशिष्यते ॥ ३८ ॥ इन्दुव्रतसहस्रन्तु यश्चरेत्
कायशोधनम्। पिवेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ
॥ ३९ ॥ तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान्। माससेकन्तु
गङ्गायां समौ स्यातां न वा समौ ॥ ४० ॥ लम्बेतावाक्शिरा यस्तु
युगानामयुतं पुमान्। तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशि-
ष्यते ॥ ४१ ॥ अग्नौ प्राप्तं प्रधूयेत यथा तूलं द्विजोत्तम। तथा
गङ्गावगाढ़स्य सर्वपापं प्रधूयते ॥ ४२ ॥ भूतानामिह सर्वेषां
दुःखोपहतचेतसाम्। गतिमन्वेषमाणानां न गङ्गासदृशी गतिः
॥ ४३ ॥ भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात्। गङ्गाया

दर्शनात्तद्वत् सर्व्वपापैः प्रमुच्यते ॥ ४४ ॥ अप्रतिष्ठाश्च ये केचि-
दधर्म्मशरणाश्च ये । तेषां प्रतिष्ठा गङ्गेह शरणं शर्म्म वर्म्म च ॥४५॥
प्रकृष्टैरशुभैर्ग्रस्तानतेकैः पुरुषाधमान् । पततो नरके गङ्गा सं-
श्रितान् प्रेत्य तारयेत् ॥ ४६ ॥ ते संविभक्ता मुनिभिर्नूनं देवैः
सवासवैः । येऽभिगच्छन्ति सततं गङ्गां मतिमतांवर ॥ ४७ ॥
विनयाचारहीनाश्च अशिवाश्च नराधमाः । ते भवन्ति शिवा विप्र
ये वै गङ्गामुपाश्रिताः ॥ ४८ ॥ यथा सुराणाममृतं पितॄणाञ्च
यथा स्वधा । सुधा यथा च नागानां तथा गङ्गाजलं नृणाम्
॥ ४९ ॥ उपासते यथा बाला मातरं क्षुधयार्द्दिताः । श्रेय-
स्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥ ५० ॥ स्वायम्भुवं यथा
स्थानं सर्व्वेषां श्रेष्ठमुच्यते । स्नातानां सरितां श्रेष्ठा गङ्गा तद्व-
दिहोच्यते ॥ ५१ ॥ यथोपजीविनां धेनुर्द्देवादीनां धरा स्मृता ।
तथोपजीविनां गङ्गा सर्व्वप्राणभृतामिह ॥ ५२ ॥ देवाः सोमार्क-
संस्थानि यथा सत्रादिभिर्मखैः । अमृतान्युपजीवन्ति तथा गङ्गा-
जलं नराः ॥ ५३ ॥ जाह्नवीपुलिनोत्थाभिः सिकताभिः समु-
क्षितम् । आत्मानं मन्यते लोको दिविष्ठमिव शोभितम् ॥ ५४ ॥
जाह्नवीतीरसम्भूतां मृदं मूर्द्ध्ना बिभर्त्ति यः । बिभर्त्ति रूपं सो-
ऽर्कस्य तमोनाशाय निर्म्मलम् ॥ ५५ ॥ गङ्गोर्म्मिभिरथो स्निग्धः
पुरुषं पवनो यदा । स्पृशते सोऽस्य पाप्मानं सद्य एवापकर्षति
॥ ५६ ॥ व्यसनैरभितप्तस्य नरस्य विनशिष्यतः । गङ्गादर्शनजा
प्रीतिर्व्यसनान्यपकर्षति ॥ ५७ ॥ हंसारावैः कोकरवै रवैरन्यैश्च
पक्षिणाम् । पस्पर्द्ध गङ्गा गन्धर्व्वान् पुलिनैश्च शिलोच्चयान् ॥ ५८ ॥
हंसादिभिः सुबहुभिर्व्विविधैः पक्षिभिर्वृताम् । गङ्गां गोकुल-
सम्बाधां दृष्ट्वा स्वर्गोऽपि विस्मृतः ॥ ५९ ॥ न सा प्रतिर्दिविष्ठस्य
सर्व्वकामानुपासतः । सम्भविद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम्
॥ ६० ॥ वाङ्मनः कर्म्मजैर्ग्रस्तः पापैरपि पुमानिह । वीक्ष्य गङ्गां

भवेत् पूतो अत्र मे नास्ति संशयः ॥ ६१ ॥ सप्तावरान् सप्तपरान् पितॄंस्तेभ्यश्च येऽपरे । पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वावगाह्य च ॥ ६२ ॥ श्रुताभिलषिता पीता स्पृष्टा दृष्टावगाहिता । गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ॥ ६३ ॥ दर्शनात् स्पर्शनात् पानात्तथा गङ्गेति कीर्त्तनात् । पुनात्यपुण्यान् पुरुषाञ्छतशोऽथ सहस्रशः ॥ ६४ ॥ य इच्छेत् सफलं जन्म जीवितं श्रुतमेव च । स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ॥ ६५ ॥ न सुतैर्न च वित्तेन कर्म्मणा न च तत् फलम् । प्राप्नुयात् पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ॥ ६६ ॥ जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च । समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम् ॥ ६७ ॥ भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम् । देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ॥ ६८ ॥ वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः । विद्यावद्भिः श्रितां गङ्गां पुमान् को नाम नाश्रयेत् ॥ ६९ ॥ उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसम्मतः । चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥ ७० ॥ न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः । आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ ७१ ॥ महापुण्याञ्च गगणात् पतन्तीं वै महेश्वरः । दधार शिरसा गङ्गां तामेव दिवि सेवते ॥ ७२ ॥ अलङ्कृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः । यस्तु तस्या जलं सेवेत् कृतकृत्यः पुमान् भवेत् ॥ ७३ ॥ दिवि ज्योतिर्यथादित्यः पितॄणाञ्चैव चन्द्रमाः । देवेशश्च यथा नृणां गङ्गा च सरितां तथा ॥ ७४ ॥ मात्रा पित्रा सुतैर्दारैर्वियुक्तस्य धनेन वा । न भवेद्धि तथा दुःखं यथा गङ्गावियोगजम् ॥ ७५ ॥ नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः । तथा प्रसादो भवति गङ्गां वीक्ष्य यथा भवेत् ॥ ७६ ॥ पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति । तथा त्रिपथगां दृष्ट्वा नृणां दृष्टिः प्रसीदति ॥ ७७ ॥ तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।

गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ॥ ७८ ॥ भूस्थैः
खस्थैर्द्दिविष्ठैश्च भूतैरुच्चावचैरपि । गङ्गा विगाह्या सततमेतत्
कार्य्यतमं सताम् ॥ ७९ ॥ विश्वलोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं
यशः । यत् पुत्रान् सगरस्येतो भस्माख्याननयद्दिवम् ॥ ८० ॥
वाय्वीरिताभिः सुमनोहराभिर्द्रुताभिरत्यर्थसमुत्थिताभिः । गङ्गो-
र्म्मिभिर्भानुमतीभिरिद्धाः सहस्ररश्मिप्रतिमा भवन्ति ॥ ८१ ॥ पय-
स्विनीं घृतिनीमत्युदारां समृद्धिनीं वेगिनीं दुर्व्विगाह्याम् । गङ्गां
गत्वा यैः शरीरं विसृष्टं गता धीरास्ते विबुधैः समत्वम् ॥ ८२ ॥
अन्धान् जड़ान् द्रव्यहीनांश्च गङ्गा यशस्विनी वृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च निषेविता सर्व्वकामैर्युनक्ति ॥ ८३ ॥
ऊर्ज्जावतीं महापुण्यां मधुमतीं त्रिवर्त्मगाम् । त्रिलोकगोप्त्रीं
ये गङ्गां संश्रितास्ते दिवं गताः ॥ ८४ ॥ यो वत्स्यति द्रक्ष्यति
वापि मर्त्त्यस्तस्मै प्रयच्छन्ति सुखानि देवाः । तद्भाविताः स्पर्श-
दर्शनेन इष्टां गतिं तस्य सुरा दिशन्ति ॥ ८५ ॥ दक्षां पृश्निं
वृहतीं विप्रकृष्टां शिवामृद्धां भागिनीं सुप्रसन्नाम् । विभावरीं
सर्व्वभूतप्रतिष्ठां गङ्गां गता ये त्रिदिवं गतास्ते ॥ ८६ ॥ ख्याति-
र्यस्याः खं दिवं गाञ्च नित्यं पुरा दिशो विदिशश्चावतस्थे । तस्या
जलं सेव्य सरिद्वराया मर्त्त्याः सर्व्वे कृतकृत्या भवन्ति ॥ ८७ ॥
इयं गङ्गेति नियतं प्रतिष्ठा गुहस्य रुक्मस्य च गर्भयोषा । प्रात-
स्त्रिवर्गा घृतवहा विपाप्मा गङ्गावतीर्णा वियतो विश्वतोया ॥८८॥
सुतावनीध्रस्य हरस्य भार्य्या दिवो भुवश्चापि कृतानुरूपा । भव्या
पृथिव्यां भागिनी चापि राजन् गङ्गा लोकानां पुण्यदा वै त्रया-
णाम् ॥ ८९ ॥ मधुस्रवा घृतधारा घृतार्च्चिर्महोर्म्मिभिः शोभिता
ब्राह्मणैश्च । दिवश्च्युता शिरसाप्ता शिवेन गङ्गावनीध्रात्त्रिदिवस्य
माता ॥ ९० ॥ योनिर्व्वरिष्ठा विरजा वितन्वी शय्याचिरा वारि-
वहा यशोदा । विश्वावती चाकृतिरिष्टसिद्धा गङ्गोक्षितानां

भुवनस्य पन्थाः ॥ ९१ ॥ च्चान्त्या मह्या गोपने धारणे च दीप्त्या कृशानोस्तपनस्य चैव । तुल्या गङ्गा संमता ब्राह्मणानां गुहस्य ब्रह्मण्यतया च नित्यम् ॥ ९२ ॥ ऋषिष्टुतां विष्णुपदीं पुराणां सुपुण्यतोयां मनसापि लोके । सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं संप्रयाताः ॥ ९३ ॥ लोकानवेक्ष्य जननीव पुत्रान् सर्वात्मना सर्वगुणोपपन्नान् । तत्स्थानकं ब्राह्ममभीप्समानैर्गङ्गा सदैवात्मवशैरुपास्या ॥ ९४ ॥ उस्रां पुष्टां मिषतीं विश्वभोज्यामिरावतीं रेवतीं भूधराणाम् । शिष्टाश्रयाममितां ब्रह्मकान्तां गङ्गां श्रयेदात्मवान् सिद्धिकामः ॥ ९५ ॥ प्रसाद्य देवान् सविभून् समस्तान् भगीरथस्तपसोग्रेण गङ्गाम् । गामानयत्तामभिगम्य शश्वत् पुंसां भयं नेह चामुत्र विद्यात् ॥ ९६ ॥ उदाहृतः सर्वथा ते गुणानां मयैकदेशः प्रसमीक्ष्य बुद्ध्या । शक्तिर्न मे काचिदिहास्ति वक्तुं गुणान् सर्वान् परिमातुं तथैव ॥ ९७ ॥ मेरोः समुद्रस्य च सर्वरत्नैः सङ्ख्योपलानामुदकस्य वापि । शक्यं वक्तुं नेह गङ्गाजलानां गुणाख्यानं परिमातुं तथैव ॥ ९८ ॥ तस्मादेतान् परया श्रद्धयोक्तान् गुणान् सर्वान् जाह्नवीयान् सदैव । भवेद्वाचा मनसा कर्म्मणैव भक्त्या युक्तः श्रद्धया श्रद्दधानः ॥ ९९ ॥ लोकानिमांस्त्रीन् यशसा वितत्य सिद्धिं प्राप्य महतीं तां दुरापाम् । गङ्गाकृतानचिरेणैव लोकान् यथेष्टमिष्टान् विहरिष्यसि त्वम् ॥ १०० ॥ तव मम च गुणैर्महानुभावा जुषतु मतिं सततं स्वधर्म्मयुक्तैः । अभिमतजनवत्सला हि गङ्गा जगति युनक्ति सुखैश्च भक्तिमन्तम् ॥ १०१ ॥

भीष्म उवाच । इति परममतिर्गुणानशेषान् शिलरतये त्रिपथानुयोगरूपान् । बहुविधमनुशास्य तथ्यरूपान् गगणतलं द्युतिमान् विवेश विद्वान् ॥ १०२ ॥ शिलवृत्तिस्तु सिद्धस्य वाक्यैः संबोधितस्तदा । गङ्गामुपास्य विधिवत् सिद्धिं प्राप सुदुर्लभाम्

॥ १०३ ॥ तथा त्वमपि कौन्तेय भक्त्या परमया युतः। गङ्गामध्ये हि सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ १०४ ॥

वैशम्पायन उवाच। श्रुत्वेतिहासं भीष्मोक्तं गङ्गायास्तवसंयुतम्। युधिष्ठिरः परां प्रीतिमगच्छद्भ्रातृभिः सह ॥ १०५ ॥ इतिहासमिमं पुण्यं शृणुयात् यः पठेत वा। गङ्गायास्तवसंयुक्तं मुच्यते सर्व्वकिल्विषैः ॥ १०६ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि गङ्गामाहात्म्ये षड्विंशोऽध्यायः ॥ २६ ॥

---

युधिष्ठिर उवाच। प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान्। गुणैश्च विविधैः सर्व्वैर्व्वयसा च समन्वितः ॥ १ ॥ भवान् विशिष्टो बुद्ध्या च प्रज्ञया तपसा तथा। तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृताम्बर ॥ २ ॥ नान्यस्त्वदन्यो लोकेषु प्रष्टव्योऽस्ति नराधिप। क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम ॥ ३ ॥ ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि। तपसा वा सुमहता कर्म्मणा वा श्रुतेन वा। ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह ॥ ४ ॥

भीष्म उवाच। ब्राह्मण्यं तात दुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः। परं हि सर्व्वभूतानां स्थानमेतद्युधिष्ठिर ॥ ५ ॥ बह्वीस्तु संसरन् योनीर्ज्जायमानः पुनः पुनः। पर्य्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥ ६ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। मतङ्गस्य च सम्वादं गर्द्दभ्याश्च युधिष्ठिर ॥ ७ ॥ द्विजातेः कस्यचित्तात तुल्यवर्णः सुतस्त्वभूत्। मतङ्गो नाम नाम्ना वै सर्व्वैः समुदितो गुणैः ॥ ८ ॥ स यज्ञकारः कौन्तेय पित्रोत्सृष्टः परन्तप। प्रायाद्गर्द्दभयुक्तेन रथेनाप्याशुगामिना ॥ ९ ॥ स बालं गर्द्दभं राजन् वहन्तं मातुरन्तिके। निरविध्यत् प्रतोदेन नासि-

कायां पुनः पुनः ॥ १० ॥ तत्र तीव्रव्रणं दृष्ट्वा गर्द्दभी पुत्रगृद्धिनी। उवाच मा शुचः पुत्र चण्डालस्त्वधितिष्ठति ॥ ११ ॥ ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते। आचार्य्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥ १२ ॥ अयन्तु पापप्रकृतिर्बाले न कुरुते दयाम्। स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥ १३ ॥ एतत् श्रुत्वा मतङ्गस्तु दारुणं रासभीवचः। अवतीर्य्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥ १४ ॥ ब्रूहि रासभि कल्याणि माता मे येन दूषिता। कथं मां वेत्सि चण्डालं क्षिप्रं रासभि शंस मे ॥१५॥ कथं मां वेत्सि चाण्डालं ब्राह्मण्यं येन नश्यते। तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः ॥ १६ ॥

गर्द्दभ्युवाच। ब्राह्मण्यं वृषलेन त्वं मत्तायां नापितेन ह। जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ॥ १७ ॥

भीष्म उवाच। एवमुक्तो मतङ्गस्तु प्रत्युपायाद्गृहं प्रति। तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् ॥ १८ ॥ मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि। कस्मात् प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव ॥ १९ ॥

मतङ्ग उवाच। अन्त्ययोनिरयोनिर्वा कथं स कुशली भवेत्। कुशलन्तु कुतस्तस्य यस्येयं जननी पितः ॥ २० ॥ ब्राह्मण्यां वृषलाज्जातं पितर्वेदयतीव माम्। अमानुषी गर्द्दभीयं तस्मात्तप्स्ये तपो महत् ॥ २१ ॥ एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः। ततो गत्वा महारण्यमतप्यत् सुमहत्तपः ॥ २२ ॥ ततः सन्तापयामास विबुधांस्तपसान्वितः। मतङ्गः सुखसम्प्रेप्सुः स्थानं सुचरितादपि ॥ २३ ॥ तं तथा तपसा युक्तमुवाच हरिवाहनः। मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान् ॥२४॥ वरं ददामि ते हन्त वृणीष्व त्वं यदीच्छसि। यच्चाप्यवाप्यं हृदि ते सर्वं तद्ब्रूहि मा चिरम् ॥ २५ ॥

मतङ्ग उवाच। ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः। गच्छेयं तदवाप्येह वर एष वृतो मया ॥ २६ ॥

भीष्म उवाच। एतत् श्रुत्वा तु वचनं तमुवाच पुरन्दरः। मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया ॥ २७ ॥ ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः। विनशिष्यसि दुर्बुद्धे तदुपारम मा चिरम् ॥ २८ ॥ श्रेष्ठतां सर्वभूतेषु तपोऽर्थं नातिवर्त्तते। तदग्र्‌यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि ॥ २९ ॥ देवतासुरमर्त्त्येषु यत् पवित्रं परं स्मृतम्। चण्डालयोनौ जातेन न तत् प्राप्यं कथञ्चन ॥३०॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि इन्द्रमतङ्गसम्वादे सप्तविंशोऽध्यायः ॥ २७ ॥

---

भीष्म उवाच। एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः। अतिष्ठदेकपादेन वर्षाणां शतमच्युत ॥ १ ॥ तमुवाच ततः शक्रः पुनरेव महायशाः। ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे ॥ २ ॥ मतङ्ग परमं स्थानं प्रार्थयन् विनशिष्यसि। मा कृथाः साहसं पुत्र नैष धर्म्मपथस्तव ॥ ३ ॥ न हि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्म्मते। अप्राप्यं प्रार्थयानो हि नचिराद्विनशिष्यसि ॥ ४ ॥ मतङ्ग परमं स्थानं वार्य्यमाणोऽसकृन्मया। चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ॥ ५ ॥ तिर्य्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति। स जायते पुक्कशो वा चण्डालो वाप्यसंशयः ॥ ६ ॥ पुक्कशः पापयोनिर्वा यः कश्चिदिह लक्ष्यते। स तस्यामेव सुचिरं मतङ्ग परिवर्त्तते ॥ ७ ॥ ततो दशशते काले लभते शूद्रतामिति। शूद्रयोनावपि ततो बहुशः परिवर्त्तते ॥८॥ ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि। वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते ॥ ९ ॥ ततः षष्टिगुणे काले राजन्यो नाम

जायते। राजन्यत्वे चिरं कालं तत्रैव परिवर्त्तते॥ १०॥ ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्। ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते॥ ११॥ ततस्तु द्विशते काले लभते काण्डपृष्ठताम्। काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते॥ १२॥ ततस्तु त्रिशते काले लभते जपतामपि। तच्च प्राप्य चिरं कालं तत्रैव परिवर्त्तते॥१३॥ ततश्चतुःशते काले श्रोत्रियो नाम जायते। श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्त्तते॥ १४॥ तदेवं शोकहर्षौ तु कामद्वेषौ च पुत्रक। अतिमानातिवादौ च प्रविशेते द्विजाधमम्॥ १५॥ तांश्चेज्जयति शत्रून् स तदा प्राप्नोति सद्गतिम्। अथ ते वैजयन्त्येनं तालाग्रादिव पात्यते॥ १६॥ मतङ्ग सम्प्रधार्य्यैवं यदहं त्वामचूचदम्। वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम्॥ १७॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि इन्द्रमतङ्गसम्वादे अष्टाविंशोऽध्यायः॥ २८॥

---

भीष्म उवाच। एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः। सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत॥ १॥ तं सहस्रावरे काले शक्रो द्रष्टुमुपागमत्। तदेव च पुनर्वाक्यमुवाच बलवृत्रहा॥ २॥

मतङ्ग उवाच। इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः। अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयां कथम्॥ ३॥

शक्र उवाच। चण्डालयोनौ जातेन नावाप्यं वै कथञ्चन। अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः॥ ४॥ एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः। अध्यतिष्ठद्गयां गत्वा सोऽङ्गुष्ठेन शतं समाः॥ ५॥ सुदुर्वहं वहन् योगं कृशो धमनिसन्ततः। त्वगस्थिभूतो धर्मात्मा स पपातेति नः श्रुतम्॥ ६॥ तं पतन्तमभिद्रुत्य परिजग्राह वासवः। वराणामीश्वरो दाता सर्वभूतहिते रतः॥ ७॥

शक्र उवाच । मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते । ब्राह्मण्यं दुर्ल्लभतरं संवृतं परिपन्थिभिः ॥ ८ ॥ पूजयन् सुखमाप्नोति दुःखमाप्नोत्यपूजयन् । ब्राह्मणः सर्व्वभूतानां योगक्षेमसमर्पिता ॥ ९ ॥ ब्राह्मणेभ्योऽनुतृप्यन्ते पितरो देवतास्तथा । ब्राह्मणः सर्व्वभूतानां मतङ्ग पर उच्यते । ब्राह्मणः कुरुते यद्धि यथा यद्यच्च वाञ्छति ॥ १० ॥ बह्वीस्तु संविशन् योनीर्ज्जायमानः पुनः पुनः । पर्य्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति ॥ ११ ॥ तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः । अन्यं वरं वृणीष्व त्वं दुर्ल्लभोऽयं हि ते वरः ॥ १२ ॥

मतङ्ग उवाच । किं मां तुदसि दुःखार्त्तं मृतं मारयसे च माम् । त्वां न शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषसे ॥ १३ ॥ ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्व्वर्णैः शतक्रतो । सुदुर्ल्लभं सदावाप्य नानुतिष्ठन्ति मानवाः ॥ १४ ॥ यः पापेभ्यः पापतमस्तेषामधम एव सः । ब्राह्मण्यं यो न जानीते धनं लब्ध्वेव दुर्लभम् ॥ १५ ॥ दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम् । दुःखापहमवाप्यैतन्नानुतिष्ठन्ति मानवाः ॥ १६ ॥ एकारामो ह्यहं शक्र निर्द्वन्द्वो निष्परिग्रहः । अहिंसादममास्थाय कथं नार्हामि विप्रताम् ॥ १७ ॥ दैवन्तु कथमेतद्वै यदहं मातृदोषतः । एतामवस्थां सम्प्राप्तो धर्म्मज्ञः सन् पुरन्दर ॥ १८ ॥ नूनं दैवं न शक्यं हि पौरुषेणातिवर्त्तितुम् । यदर्थं यत्नवानेवं न लभे विप्रतां प्रभो ॥ १९ ॥ एवङ्गते तु धर्म्मज्ञ दातुमर्हसि मे वरम् । यदि तेऽहमनुग्राह्यः किञ्चिद्वा सुकृतं मम ॥ २० ॥

वैशम्पायन उवाच । वृणीष्वेति तदा प्राह ततस्तं बलवृत्रहा । चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम् ॥ २१ ॥

मतङ्ग उवाच । यथाकामविहारी स्यां कामरूपी विहङ्गमः । ब्रह्मक्षत्राविरोधेन पूजाञ्च प्राप्नुयामहम् ॥ २२ ॥ यथा ममाक्षया

कीर्त्तिर्भवित्रापि पुरन्दर। कर्त्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ॥ २३ ॥

शक्र उवाच। छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि। कीर्त्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ॥ २४ ॥ एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत। प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमम् ॥ २५ ॥ एवमेतत् परं स्थानं ब्राह्मण्यं नाम भारत। तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा ॥ २६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि इन्द्रमातङ्गसम्वादे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

युधिष्ठिर उवाच। श्रुतं ते महदाख्यानमेतत् कुरुकुलोद्वह। सुदुष्प्रापं यद्ब्रवीषि ब्राह्मण्यं वदताम्वर ॥ १ ॥ विश्वामित्रेण च पुरा ब्राह्मण्यं प्राप्तमित्युत। श्रूयते वदसे तच्च दुष्प्रापमिति सत्तम ॥ २ ॥ वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः। तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं प्रभो ॥ ३ ॥ स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तमः। वरेण तपसा वापि तन्मे व्याख्यातुमर्हसि ॥ ४ ॥

भीष्म उवाच। शृणु राजन् यथा राजा वीतहव्यो महायशाः। राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ॥ ५ ॥ मनोर्महात्मनस्तात प्रजा धर्मेण शासतः। बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः ॥ ६ ॥ तस्यान्ववाये द्वौ राजन् राजानौ सम्बभूवतुः। हैहयस्तालजङ्घश्च वत्सस्य जयतांवरः ॥ ७ ॥ हैहयस्य तु राजेन्द्र दशसु स्त्रीषु भारत। शतं बभूव पुत्राणां शूराणामनिवर्त्तिनाम् ॥ ८ ॥ तुल्यरूपप्रभावानां बलिनां युद्धशालिनाम्। धनुर्वेदे च वेदे च सर्वत्रैव कृतश्रमाः ॥ ९ ॥ काशि-

ष्वपि नृपो राजन् दिवोदासपितामहः । हर्य्यश्व इति विख्यातो बभूव जयतांवरः ॥ १० ॥ स वीतहव्यदायादैरागत्य पुरुषर्षभ । गङ्गायमुनयोर्मध्ये संग्रामे विनिपातितः ॥ ११ ॥ तन्तु हत्वा नरपतिं हैहयास्ते महारथाः । प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः ॥ १२ ॥ हर्य्यश्वस्य च दायादः काशिराजोऽभ्यषिच्यत । सुदेवो देवसङ्काशः साक्षाद्धर्म्म इवापरः ॥१३॥ स पालयामास महीं धर्म्मात्मा काशिनन्दनः । तैर्वीतहव्यैरागत्य युधि सर्व्वैर्विनिर्ज्जितः ॥ १४ ॥ तमथाजौ विनिर्ज्जित्य प्रतिजग्मुर्यथागतम् । सौदेवस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत ॥ १५ ॥ दिवोदासस्तु विज्ञाय वीर्य्यं तेषां महात्मनाम् । वाराणसीं महातेजा निर्म्ममे शक्रशासनात् ॥ १६ ॥ विप्रक्षत्रियसम्बाधां वैश्यशूद्रसमाकुलाम् । नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् ॥१७॥ गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तमः । गोमत्या दक्षिणे कूले शक्रस्येवामरावतीम् ॥ १८ ॥ तत्र तं राजशार्दूलं निवसन्तं महीपतिम् । आगत्य हैहया भूयः पर्य्यधावन्त भारत ॥ १९ ॥ स निष्क्रम्य ददौ युद्धं तेभ्यो राजा महाबलः । देवासुरसमं घोरं दिवोदासो महाद्युतिः ॥ २० ॥ स तु युद्धे महाराज दिनानां दशतीर्द्दश । हतवाहनभूयिष्ठस्ततो दैन्यमुपागतः ॥ २१ ॥ हतयोधस्ततो राजन् क्षीणकोषश्च भूमिपः । दिवोदासः पुरीं त्यक्त्वा पलायनपरोऽभवत् ॥ २२ ॥ गत्वाश्रमपदं रम्यं भरद्वाजस्य धीमतः । जगाम शरणं राजा कृताञ्जलिररिन्दम ॥ २३ ॥ तमुवाच भरद्वाजो ज्येष्ठः पुत्रो बृहस्पतेः । पुरोधाः शीलसम्पन्नो दिवोदासं महीपतिम् ॥ २४ ॥ किमागमनकृत्यं ते सर्व्वं प्रब्रूहि मे नृप । यत्ते प्रियं तत् करिष्ये न मेऽत्रास्ति विचारणा ॥ २५॥

राजोवाच । भगवन् वैतहव्यैर्म्मे युद्धे वंशः प्रणाशितः । अहमेकः परिद्यूनो भवन्तं शरणं गतः ॥ २६ ॥ शिष्यस्नेहेन

भगवंस्त्वं मां रक्षितुमर्हसि। एकशेषः कृतो वंशो मम तैः पाप-कर्म्मभिः ॥ २७ ॥ तमुवाच महाभागो भरद्वाजः प्रतापवान्। न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम् ॥ २८ ॥ अहमिष्टिं करिष्यामि पुत्रार्थं ते विशाम्पते। वीतहव्यसहस्राणि येन त्वं प्रहरिष्यसि ॥ २९ ॥ तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम्। अथास्य तनयो जज्ञे प्रतर्द्दन इति स्मृतः ॥ ३० ॥ स जातमात्रो ववृधे समाः सद्यस्त्रयोदश। वेदञ्चापि जगौ कृत्स्नं धनुर्वेदञ्च भारत ॥ ३१ ॥ योगेन च समाविष्टो भरद्वाजेन धीमता। तेजो लौक्यं स संगृह्य तस्मिन् देशे समाविशत् ॥ ३२ ॥ ततः स कवची धन्वी स्तूयमानः सुरर्षिभिः। वन्दिभिर्वन्द्यमानश्च वभौ सूर्य्य इवोदितः ॥ ३३ ॥ स रथी वद्धनिस्त्रिंशो वभौ दीप्त इवानलः। प्रययौ स धनुर्धन्वन् खड्गी चर्म्मी शराशनी ॥ ३४ ॥ तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ। मेने च मनसा दग्धान् वैतहव्यान् स पार्थिवः ॥ ३५ ॥ ततोऽसौ यौवराज्ये च स्थापयित्वा प्रतर्द्दनम्। कृतकृत्यं तदात्मानं स राजा अभ्यनन्दत ॥ ३६ ॥ ततस्तु वैतहव्यानां बधाय स महीपतिः। पुत्रं प्रस्थापयामास प्रतर्द्दन-मरिन्दमम् ॥ ३७ ॥ सरथः स तु सन्तीर्य्य गङ्गामाशु पराक्रमी। प्रययौ वीतहव्यानां पुरीं परपुरञ्जयः ॥ ३८ ॥ वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतम्। निर्य्ययुर्नगराकारै रथैः पररथा-रुजैः ॥ ३९ ॥ निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः। प्रतर्द्दनं समाजघ्नुः शरवर्षैरुदायुधैः ॥ ४० ॥ शस्त्रैश्च विविधाकारै रथौघैश्च युधिष्ठिर। अभ्यवर्षन्त राजानं हिमवन्तमिवाम्बुदाः ॥ ४१ ॥ अस्त्रैरस्त्राणि संवार्य्य तेषां राजा प्रतर्द्दनः। जघान तान् महातेजा वज्रानलसमैः शरैः ॥ ४२ ॥ कृत्तोत्तमाङ्गास्ते राजन् भल्लैः शतसहस्रशः। अपतन् रुधिरार्द्राङ्गा निकृत्ता इव किंशुकाः ॥ ४३ ॥ हतेषु तेषु सर्व्वेषु वीतहव्यः सुतेष्वथ। प्राद्रवन्नगरं

हित्वा भृगोराश्रममभ्युत ॥ ४४ ॥ ययौ भृगुञ्च शरणं वीतहव्यो नराधिपः। अभयञ्च ददौ तस्मै राज्ञे राजन् भृगुस्तदा ॥ ४५ ॥ अथानुपदमेवाशु तत्रागच्छत् प्रतर्द्दनः। स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ॥ ४६ ॥ भो भो के त्वाश्रमे सन्ति भृगोः शिष्या महात्मनः। द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति ॥ ४७ ॥ स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा। पूजयामास च ततो विधिना नृपसत्तमम् ॥ ४८ ॥ उवाच चैनं राजेन्द्र किं कार्य्यं ब्रूहि पार्थिव। स चोवाच नृपस्तस्मै यदागमनकारणम् ॥ ४९ ॥

राजोवाच। अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्ज्यताम्। तस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन् वंशः प्रणाशितः ॥ ५० ॥ उत्सादितश्च विषयः काशीनां रत्नसञ्चयः। एतस्य वीर्य्यदृप्तस्य हतं पुत्रशतं मया ॥ ५१॥ अस्येदानीं बधादद्य भविष्याम्यनृणः पितुः। तमुवाच कृपाविष्टो भृगुर्धर्म्मभृताम्वरः ॥ ५२ ॥ नेहास्ति क्षत्रियः कश्चित् सर्व्वे हीमे द्विजातयः। एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्द्दनः ॥ ५३ ॥ पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत्। एवमप्यस्मि भगवन् कृतकृत्यो न संशयः ॥ ५४ ॥ य एष राजा वीर्य्येण स्वजातिं त्याजितो मया। अनुजानीहि मां ब्रह्मन् ध्यायस्व च शिवेन माम् ॥ ५५ ॥ त्याजितो हि मया जातिमेष राजा भृगूद्वह। ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्द्दनः ॥ ५६ ॥ यथागतं महाराज मुक्त्वा विषमिवोरगः। भृगोर्व्वचनमात्रेण स च ब्रह्मर्षितां गतः ॥ ५७ ॥ वीतहव्यो महाराज ब्रह्मवादित्वमेव च। तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ॥ ५८ ॥ शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत्। ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः ॥ ५९ ॥ यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते। स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्

॥ ६० ॥ पुत्रो गृत्समदस्यापि सुतेजा अभवद्द्विजः । वर्च्चाः सुतेजसः पुत्रो विहव्यस्तस्य चात्मजः ॥ ६१ ॥ विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः । वितत्यस्य सुतः सत्यः सन्तः सत्यस्य चात्मजः ॥ ६२ ॥ श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः । तमसश्च प्रकाशोऽभूत् तनयो द्विजसत्तमः ॥ ६३ ॥ प्रकाशस्य च वागिन्द्रो बभूव जपतांवरः । तस्यात्मजश्च प्रमतिर्वेदवेदाङ्गपारगः । घृताच्यां तस्य पुत्रन्तु रुरुर्नाम्नोदपद्यत ॥ ६४ ॥ प्रमद्वरायान्तु रुरोः पुत्रः समुदपद्यत । शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ॥ ६५ ॥ एवं विप्रत्वमगमत् वीतहव्यो नराधिपः । भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥ ६६ ॥ तथैव कथितो वंशो मया गार्त्समदस्तव । विस्तरेण महाराज किमन्यदनुपृच्छसि॥६७॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि वीतहव्योपाख्याने त्रिंशोऽध्यायः ॥ ३० ॥

---

युधिष्ठिर उवाच । के पूज्या वै त्रिलोकेऽस्मिन् मानवा भरतर्षभ । विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यतः ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । नारदस्य च सम्वादं वासुदेवस्य चोभयोः ॥ २ ॥ नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान् । केशवः परिपप्रच्छ भगवन् कान्नमस्यसि ॥ ३ ॥ बहुमानपरस्तेषु भगवन् कान्नमस्यसि । शक्यञ्चेच्छ्रोतुमिच्छामि ब्रूह्येतद्धर्मवित्तम ॥ ४ ॥

नारद उवाच । शृणु गोविन्द यानेतान् पूजयाम्यरिमर्द्दन । त्वत्तोऽन्यः कः पुमांल्लोके श्रोतुमेतदिहार्हति ॥ ५ ॥ वरुणं वायुमादित्यं पर्ज्जन्यं जातवेदसम् । स्थाणुं स्कन्दं तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च ॥ ६ ॥ वाचस्पतिञ्चन्द्रमसमपः पृथ्वीं सरस्वतीम् ।

सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो ॥ ७ ॥ तपोधनान् वेदविदो नित्यं वेदपरायणान् । महार्हान् ऋषिशार्दूल सदा सम्पूजयाम्यहम् ॥८॥ अभुक्त्वा देवकार्य्याणि कुर्वते येऽविकत्थनाः । सन्तुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो ॥ ९ ॥ सम्यग्यजन्ति ये चेष्टीः क्षान्ता दान्ता जितेन्द्रियाः । सत्यं धर्मं क्षितिं गाश्च तान्नमस्यामि यादव ॥ १० ॥ ये वै तपसि वर्त्तन्ते वने मूलफलाशनाः । असञ्चयाः क्रियावन्तस्तान्नमस्यामि यादव ॥ ११ ॥ ये भृत्यभरणे शक्ताः सततञ्चातिथिव्रताः । भुञ्जते देवशेषाणि तान्नमस्यामि यादव ॥ १२ ॥ ये वेदं प्राप्य दुर्द्धर्षा वाग्मिनो ब्रह्मचारिणः । याजनाध्यापने युक्ता नित्यं तान् पूजयाम्यहम् ॥१३॥ प्रसन्नहृदयाश्चैव सर्वसत्त्वेषु नित्यशः । आपृष्ठतापात् स्वाध्याये युक्तास्तान् पूजयाम्यहम् ॥ १४ ॥ गुरुप्रसादे स्वाध्याये यतन्ते ये स्थिरव्रताः । शुश्रूषवोऽनसूयन्तस्तान्नमस्यामि यादव ॥ १५ ॥ सुव्रता मुनयो ये च ब्राह्मणाः सत्यसङ्गराः । वोढारो हव्यकव्यानां तान्नमस्यामि यादव ॥ १६ ॥ भैक्ष्यचर्य्यासु निरताः कृशा गुरुकुलाश्रयाः । निःसुखा निर्द्धना ये तु तान्नमस्यामि यादव ॥१७॥ निर्म्ममा निष्प्रतिद्वन्द्वा निर्ह्रीका निष्प्रयोजनाः । ये वेदं प्राप्य दुर्द्धर्षा वाग्मिनो ब्रह्मवादिनः ॥ १८ ॥ अहिंसा निरता ये च ये च सत्यव्रता नराः । दान्ताः शमपराश्चैव तान्नमस्यामि यादव ॥ १९ ॥ देवतातिथिपूजायां युक्ता ये गृहमेधिनः । कपोतवृत्तयो नित्यं तान्नमस्यामि यादव ॥ २० ॥ येषां त्रिवर्गकृत्येषु वर्त्तते नोपहीयते । शिष्टाचारप्रवृत्ताश्च तान्नमस्याम्यहं सदा ॥२१॥ ब्राह्मणाः श्रुतसम्पन्ना ये त्रिवर्गमनुष्ठिताः । अलोलुपाः पुण्यशीलास्तान्नमस्यामि केशव ॥ २२ ॥ अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा । व्रतैश्च विविधैर्युक्तास्तान्नमस्यामि माधव ॥२३॥ अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च । सर्वभूतात्मयोनींश्च

तान्नमस्याम्यहं सदा ॥ २४ ॥ नित्यमेतान्नमस्यामि कृष्ण लोककरानृषीन्। लोकज्येष्ठान् कुलज्येष्ठांस्तमोघ्नान् लोकसत्तमान् ॥ २५ ॥ तस्मात्त्वमपि वार्ष्णेय द्विजान् पूजय नित्यदा। पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ ॥ २६ ॥ अस्मिंल्लोके सदा ह्येते परत्र च सुखप्रदाः। चरन्ते मान्यमाना वै प्रदास्यन्ति सुखं तव ॥ २७ ॥ ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च। नित्यं सत्ये चाभिरता दुर्गाण्यतितरन्ति ते ॥ २८ ॥ नित्यं शमपरा ये च तथा ये चानसूयकाः। नित्यस्वाध्यायिनो ये च दुर्गाण्यतितरन्ति ते ॥ २९॥ सर्वान् देवान् नमस्यन्ति ये चैकं वेदमाश्रिताः। श्रद्दधानाश्च दान्ताश्च दुर्गाण्यतितरन्ति ते ॥ ३० ॥ तथैव विप्रप्रवरान्नमस्कृत्य यतव्रताः। भवन्ति ये दानरताः दुर्गाण्यतितरन्ति ते ॥ ३१ ॥ तपस्विनश्च ये नित्यं कौमारब्रतचारिणः। तपसा भावितात्मानो दुर्गाण्यतितरन्ति ते॥ ३२ ॥ देवतातिथिभृत्यानां पितॄणाञ्चार्च्चने रताः। शिष्टान्नभोजिनो ये च दुर्गाण्यतितरन्ति ते ॥ ३३ ॥ अग्निमाधाय विधिवत् प्रणता धारयन्ति ये। प्राप्ताः सोमाहुतिञ्चैव दुर्गाण्यतितरन्ति ते ॥ ३४ ॥ मातापित्रोर्गुरुषु च सम्यग्वर्त्तन्ति ये सदा। यथा त्वं वृष्णिशार्दूल इत्युक्त्वैवं विरराम सः ॥३५॥ तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन्। सम्यक् पूजयसे नित्यं गतिमिष्टामवाप्स्यसि ॥३६॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि कृष्णनारदसम्वादे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

युधिष्ठिर उवाच। पितामह महाप्राज्ञ सर्वशास्त्रविशारद। त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ॥ १ ॥ शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम्। किन्तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥ २॥

भीष्म उवाच। इदं शृणु महाप्राज्ञ धर्म्मपुत्र महायशः।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥ ३ ॥ प्रपात्यमानः
श्येनेन कपोतः प्रियदर्शनः। वृषदर्भं महाभागं नरेन्द्रं शरणं
गतः ॥ ४ ॥ स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम्। आश्वा-
स्याश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥ ५ ॥ भयं ते सुमहत्
कस्मात् कुत्र किं वा कृतं त्वया। येन त्वमिह सम्प्राप्तो विसंज्ञो
भ्रान्तचेतनः ॥ ६ ॥ नवनीलोत्पलापीड़चारुवर्णं सुदर्शन।
दाड़िमाशोकपुष्पाच मा त्रसस्वाभयं तव ॥ ७ ॥ मत्सकाशमनु-
प्राप्तं न त्वां कश्चित् समुत्सहेत्। मनसा ग्रहणं कर्त्तुं रक्षाध्यक्ष-
पुरस्कृतम् ॥ ८ ॥ काशिराज्यं तदद्यैवं त्वदर्थं जीवितं तथा।
त्यजेयं भव विस्रब्धः कपोत न भयं तव ॥ ९ ॥

श्येन उवाच। ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि।
अतिक्रान्तञ्च प्राप्तञ्च प्रयत्नाच्चोपपादितम् ॥ १० ॥ मांसञ्च रुधिर-
ञ्चास्य मज्जा मेदश्च मे हितम्। परितोषकरो ह्येष मम मास्या-
ग्रतो भव ॥ ११ ॥ तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्द्दहतीव मे।
मुञ्चैनं न हि शक्ष्यामि राजन्मन्दयितुं क्षुधाम् ॥ १२ ॥ मया
ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः। किञ्चिदुच्छ्वासनिःश्वासं न
राजन् गोप्तुमर्हसि ॥ १३ ॥ यदि स्वविषये राजन् प्रभुस्त्वं रक्षणे
नृणाम्। खेचरस्य तृषार्त्तस्य न त्वं प्रभुरथोत्तमः ॥ १४ ॥ यदि
वैरिषु भृत्येषु स्वजनव्यवहारयोः। विषयेष्विन्द्रियाणाञ्च आकाशे
मा पराक्रम ॥ १५ ॥ प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते।
यदि त्वमिह धर्म्मार्थी मामपि द्रष्टुमर्हसि ॥ १६ ॥

भीष्म उवाच। श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः।
संभाव्य चैनं तद्वाक्यं तदर्थीप्रत्यभाषत ॥ १७ ॥

राजोवाच। गोवृषो वा वराहो वा मृगो वा महिषोऽपि
वा। त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते ॥ १८ ॥ शरणागतं

न त्यजेयमिति मे व्रतमाहितम् । न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥ १९ ॥

श्येन उवाच । न वराहं न चोक्षाणं न चान्यान् विविधान् द्विजान् । भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ २० ॥ यस्तु मे विहितो भक्ष्यः स्वयं देवैः सनातनः । श्येनाः कपोतान् खादन्ति स्थितिरेषा सनातनी ॥ २१ ॥ उशीनर कपोते तु यदि स्नेहस्तवानघ । ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ॥ २२ ॥

राजोवाच । महाननुग्रहो मेऽद्य यस्त्वमेवमिहात्थ माम् । बाढ़मेवं करिष्यामीत्युक्त्वासौ राजसत्तमः ॥ २३ ॥ उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् । अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ॥ २४ ॥ हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः । तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ॥ २५ ॥ बभूव सुमहान्नादो मेघगम्भीरनिस्वनः । निरुद्धं गगणं सर्वं शुभ्रं मेघैः समन्ततः ॥ २६ ॥ मही प्रचलिता चासीत्तस्य सत्येन कर्मणा । स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ॥ २७ ॥ तानि मांसानि संछिद्य तुलां पूरयतेऽशनैः । तथापि न समस्तेन कपोतेन बभूव ह ॥ २८ ॥ अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः । तुलां ततः समारूढ़ः स्वमांसक्षयमुत्सृजन् ॥ २९ ॥ ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः । भेर्यश्चाकाशगैस्तत्र वादिता देवदुन्दुभिः ॥ ३० ॥ अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः । दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनः पुनः ॥ ३१ ॥ देवगन्धर्वसङ्घातैरप्सरोभिश्च सर्वतः । नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ॥ ३२ ॥ हेमप्रासादसम्बाधं मणिकाञ्चनतोरणम् । सवैदूर्य्यमणिस्तम्भं विमानं समधिष्ठितः ॥ ३३ ॥ स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् । शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥ ३४ ॥ भक्तानामनुरक्तानामाश्रितानाञ्च रक्षिता ।

दयावान् सर्व्वभूतेषु परत्र सुखमेधते ॥ ३५ ॥ साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति । किन्न प्राप्तं भवेत्तेन स्वव्याजेनेह कर्म्मणा ॥ ३६ ॥ स राजर्षिर्विशुद्धात्मा धीरः सत्यपराक्रमः । काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्म्मणा ॥ ३७ ॥ योऽप्यन्यः कारयेदेवं शरणागतरक्षणम् । सोऽपि गच्छेत तामेव गतिं भरतसत्तम ॥ ३८॥ इदं वृत्तं हि राजर्षेर्वृषदर्भस्य कीर्त्तयन् । पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ॥ ३९ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि श्येनकपोतीये द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

युधिष्ठिर उवाच । किं राज्ञः सर्व्वभूतानां गरीयः स्यात् पितामह । कुर्व्वन् किं कर्म्म नृपतिरुभौ लोकौ समश्नुते ॥ १ ॥

भीष्म उवाच । एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत । ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता ॥ २ ॥ कर्त्तव्यं पार्थिवेन्द्रेण तद्विद्धि भरतर्षभ । श्रोत्रियान् ब्राह्मणान् वृद्धान् नित्यमेवाभिपूजयेत् ॥ ३ ॥ पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् । सान्त्वेन भोगदानेन नमस्कारैस्तथार्च्चयेत् ॥ ४ ॥ एतत् कृत्यतमं राज्ञो नित्यमेवोपलक्षयेत् । यथात्मानं यथा पुत्रांस्तथैतान् प्रतिपालयेत् ॥ ५ ॥ ये चाप्येषां पूज्यतमास्तान् दृढ़ं प्रतिपूजयेत् । तेषु शान्तेषु तद्राष्ट्रं सर्व्वमेव विराजते ॥ ६ ॥ ते पूज्यास्ते नमस्कार्य्या मान्यास्ते पितरो यथा । तेष्वेव यात्रा लोकानां भूतानामिव वासवे ॥ ७ ॥ अभिचारैरुपायैश्च दहेयुरपि तेजसा । निःशेषं कुपिताः कुर्य्युरुग्राः सत्यपराक्रमाः ॥ ८॥ नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः । कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ॥ ९ ॥ विभ्यत्येषां साहसिका गुणा-

स्तेषामतीव हि। कूपा इव तृणाच्छन्ना विशुद्धा द्यौरिवापरे ॥ १० ॥ प्रसह्यकारिणः केचित् कार्पासमृदवोऽपरे। सन्ति चैषामतिशठास्तथैवान्ये तपस्विनः ॥ ११ ॥ कृषिगोरक्षमप्येके भैक्ष्यमन्येऽप्यनुष्ठिताः। चौराश्चान्येऽनृताश्चान्ये तथान्ये नटनर्त्तकाः ॥ १२ ॥ सर्वकर्मसहाश्चान्ये पार्थिवेष्वितरेषु च। विविधाकारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥ १३ ॥ नानाकर्मसु रक्तानां बहुकर्मोपजीविनाम्। धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्त्तयेत् ॥ १४ ॥ पितॄणां देवतानाञ्च मनुष्योरगरक्षसाम्। पुराप्येते महाभागा ब्राह्मणा वै जनाधिप ॥ १५ ॥ नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः। नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥ १६ ॥ अदैवं दैवतं कुर्य्युर्दैवतं चाप्यदैवतम्। यमिच्छेयुः स राजा स्याद्योनेष्टः स पराभवेत् ॥ १७ ॥ परिवादञ्च ये कुर्य्युर्ब्राह्मणानामचेतसः। सत्यं ब्रवीमि ते राजन् विनश्येयुर्न संशयः ॥ १८ ॥ निन्दाप्रशंसाकुशलाः कीर्त्त्यकीर्त्तिपरायणाः। परिकुप्यन्ति ते राजन् सततं द्विषतां द्विजाः ॥ १९ ॥ ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्द्धते। ब्राह्मणैर्यः पराकृष्टः पराभूयात् क्षणाद्धि सः ॥ २० ॥ शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः। वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २१ ॥ द्राविड़ाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः। कोलिसर्पा माहिषकास्तास्ताः क्षत्रियजातयः ॥ २२ ॥ वृषलत्वं परिगता ब्राह्मणानामदर्शनात्। श्रेयान् पराजयस्तेभ्यो न जयो जयतांवर ॥ २३ ॥ यस्तु सर्वमिदं हन्यात् ब्राह्मणञ्च न तत्समम्। ब्रह्मवध्या महादोष इत्याहुः परमर्षयः ॥ २४ ॥ परिवादो द्विजातीनां न श्रोतव्यः कथञ्चन। आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेच्च वा ॥ २५ ॥ न स जातो जनिष्यद्वा पृथिव्यामिह कश्चन। यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥ २६ ॥ दुर्ग्राह्यो मुष्टिना

वायुर्दुःस्पर्शः पाणिना शशी । दुर्द्धरा पृथिवी राजन् दुर्ज्जया ब्राह्मणा भुवि ॥ २७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि ब्राह्मणप्रशंसा नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

भीष्म उवाच । ब्राह्मणानेव सततं भृशं संपरिपूजयेत् । एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ १ ॥ एते भोगैरलङ्कारैरन्यैश्चैव किमिच्छकैः । सदा पूज्या नमस्कारै रक्ष्याश्च पितृवन्नृप । ततो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥२॥ जायतां ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः । महारथश्च राजन्य एष्टव्यः शत्रुतापनः ॥ ३ ॥ इति मां नारदः प्राह सततं सर्वभूतये । ब्राह्मणं जातिसम्पन्नं धर्म्मज्ञं संशितव्रतम् । वासयते गृहे राजन् न तस्मात् परमस्ति वै ॥ ४ ॥ ब्राह्मणेभ्यो हविर्द्दत्तं प्रतिगृह्णन्ति देवताः । पितरः सर्वभूतानां नैतेभ्यो विद्यते परम् ॥ ५ ॥ आदित्यश्चन्द्रमा वायुरापो भूरम्बरं दिशः । सर्व्वे ब्राह्मणमाविश्य सदान्नमुपभुञ्जते ॥ ६ ॥ न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते ॥ ७ ॥ देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः । ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा ॥ ८ ॥ तथैव देवता राजन् नात्र कार्य्या विचारणा । तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः ॥ ९ ॥ न च प्रेत्य विनश्यन्ति गच्छन्ति च परां गतिम् । येन येनैव हविषा ब्राह्मणांस्तर्पयेन्नरः ॥ १० ॥ तेन तेनैव प्रीयन्ते पितरो देवतास्तथा । ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः ॥ ११ ॥ यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति । वेदैषमार्गः स्वर्गस्य तथैव नरकस्य च ॥ १२ ॥ आगतानागते चोभे ब्राह्मणो द्विपदांवरः । ब्राह्मणो भरतश्रेष्ठ स्वधर्म-

श्चैव वेद यः ॥ १३ ॥ ये चैनमनुवर्त्तन्ते ते न यान्ति पराभवम्। न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवम् ॥ १४ ॥ यद्ब्राह्मणमुखात् प्राप्तं प्रतिगृह्णन्ति वै वचः। भूतात्मानो महात्मानस्ते न यान्ति पराभवम् ॥ १५ ॥ क्षत्रियाणां प्रतपतां तेजसा च बलेन च। ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च ॥ १६ ॥ भृगवस्तालजङ्घांश्च नीपानङ्गिरसोऽजयन्। भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ ॥ १७ ॥ चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः। प्रक्षिप्याथ च कुम्भार्थी पारगामिणमारभेत् ॥ १८ ॥ यत् किञ्चित् कथ्यते लोके श्रूयते पठ्यतेऽपि वा। सर्वं तद्ब्राह्मणेष्वेव गूढ़ोऽग्निरिव दारुषु ॥ १९ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। सम्वादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ ॥२०॥

वासुदेव उवाच। मातरं सर्वभूतानां पृच्छे त्वां संशयं शुभे। केन स्वित् कर्मणा पापं व्यपोहति नरो गृही ॥ २१ ॥

पृथिवी उवाच। ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमम्। ब्राह्मणान् सेवमानस्य रजः सर्वं प्रणश्यति ॥ २२ ॥ अतो भूतिरतः कीर्त्तिरतो बुद्धिः प्रजायते। महारथश्च राजन्य एटव्यः शत्रुतापनः ॥ २३ ॥ इति मां नारदः प्राह सततं सर्वभूतये। ब्राह्मणं जातिसम्पन्नं धर्मज्ञं शंसितव्रतम् ॥ २४ ॥ अपरेषां परेषाञ्च परेभ्यश्चैव येऽपरे। ब्राह्मणा यं प्रशंसन्ति स मनुष्यः प्रवर्द्धते ॥ २५ ॥ अथ यो ब्राह्मणान् क्रुष्टः पराभवति सोऽचिरात्। यथा महार्णवे क्षिप्त आमलेष्टुर्विनश्यति ॥ २६ ॥ तथा दुश्चरितं सर्वं पराभावाय कल्पते। पश्य चन्द्रकृतं लक्ष्म समुद्रो लवणोदकः ॥ २७ ॥ तथा भगसहस्रेण महेन्द्रः परिचिह्नितः। तेषामेव प्रभावेन सहस्रनयनो ह्यसौ ॥ २८ ॥ शतक्रतुः समभवत् पश्य माधव यादृशम्। इच्छन् कीर्त्तिञ्च भूतिञ्च लोकांश्च मधुसूदन। ब्राह्मणानुमते तिष्ठेत् पुरुषः शुचिरात्मवान् ॥ २९ ॥

भीष्म उवाच। इत्येतत् वचनं श्रुत्वा मेदिन्या मधुसूदन।
साधुसाध्विति कौरव्य मेदिनीं प्रत्यपूजयत् ॥ ३० ॥ एतां श्रुत्वो-
पमां पार्थ प्रयतो ब्राह्मणर्षभान्। सततं पूजयेथास्त्वं ततः
श्रेयोऽभिपत्स्यते ॥ ३१ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि पृथिवीवासुदेव-
सम्वादो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

भीष्म उवाच। जन्मनैव महाभागो ब्राह्मणो नाम जायते।
नमस्यः सर्व्वभूतानामतिथिः प्रसृताग्रभुक् ॥ १ ॥ सर्व्वार्थाः सुहृद-
स्तात ब्राह्मणाः सुमनोमुखाः। गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्ति
पूजिताः ॥ २ ॥ सर्व्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः।
गीर्भिर्दारुणयुक्ताभिरभिध्यास्युरपूजिताः ॥ ३ ॥ अत्र गाथाः
पुरागीताः कीर्त्तयन्ति पुराविदः। सृष्ट्वा द्विजातीन् धाता हि
यथापूर्व्वं समादधत् ॥ ४ ॥ न चान्यदिह कर्त्तव्यं किञ्चिदूर्द्धं यथा-
विधि। गुप्तो गोपायते ब्रह्म श्रेयो वस्तेन शोभनम् ॥ ५ ॥
स्वमेव कुर्व्वतां कर्म्म श्रीर्वो ब्राह्मी भविष्यति। प्रमाणं सर्व्वभूतानां
प्रग्रहाश्च भविष्यथ ॥ ६ ॥ न शौद्रं कर्म कर्त्तव्यं ब्राह्मणेन विप-
श्चिता। शौद्रं हि कुर्व्वतः कर्म्मः धर्म्मः समुपरुध्यते ॥ ७ ॥ श्रीश्च
बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी। स्वाध्यायो चैव माहात्म्य
विपुलं प्रतिपत्स्यते ॥ ८ ॥ हुत्वा चाहवनीयस्थं महाभाग्ये
प्रतिष्ठिताः। अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्यानुकल्पिताः
॥ ९ ॥ श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया। दमस्वाध्याय-
निरताः सर्व्वान् कामानवाप्स्यथ ॥ १० ॥ यच्चैव मानुषे लोके
यच्च देवेषु किञ्चन। सर्व्वन्तु तपसा साध्यं ज्ञानेन नियमेन च ॥११॥
इत्येवं ब्रह्मगीतास्ते समाख्याता मयानघ। विप्राणामनुकम्पार्थं

तेन प्रोक्तं हि धीमता ॥ १२ ॥ भूयस्तेषां बलं मन्ये यथा राज्ञस्तपस्विनः । दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः ॥ १३ ॥ सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथापरे । वराहमृगसत्त्वाश्च जलसत्त्वास्तथापरे ॥ १४ ॥ सर्पस्पर्शसमाः केचित् तथान्ये मकरस्पृशः । विभाष्य घातिनः केचित्तथा चक्षुर्हणोऽपरे ॥ १५ ॥ सन्ति चाशीविषसमाः सन्ति मन्दास्तथापरे । विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर ॥ १६ ॥ मेकला द्रविड़ा लाटाः पौण्ड्राः कोन्वशिरास्तथा । शौण्डिका दरदा दर्वाश्चौराः शवरवर्बराः ॥ १७ ॥ किराता यवनाश्चैव तास्ताः क्षत्रियजातयः । वृषलत्वमनुप्राप्ता ब्राह्मणानाममर्षणात् ॥ १८ ॥ ब्राह्मणानां परिभवादसुराः सलिलेशयाः । ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः ॥ १९ ॥ अशक्यं स्प्रष्टुमाकाशमचाल्यो हिमवान् गिरिः । अधार्य्या सेतुना गङ्गा दुर्ज्जया ब्राह्मणा भुवि ॥ २० ॥ न ब्राह्मणविरोधेन शक्या शास्तुं वसुन्धरा । ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥ २१ ॥ तान् पूजयस्व सततं दानेन परिचर्य्यया । यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम् ॥ २२ ॥ प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ । प्रतिग्रहं ये नेच्छेयुस्तेभ्योरक्ष्यं त्वया नृप ॥ २३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि ब्राह्मणप्रशंसायां ब्रह्मगीता नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । शक्रशम्बरसम्वादं तन्निबोध युधिष्ठिर ॥ १ ॥ शक्रो ह्यज्ञातरूपेण जटी भूत्वा रजोरुणः । विरूपं रथमास्थाय प्रश्नं पप्रच्छ शम्बरम् ॥ २ ॥

शक्र उवाच। केन शम्बर वृत्तेन स्वजात्यानाधितिष्ठसि। श्रेष्ठं त्वां केन मन्यन्ते तद्वै प्रब्रूहि तत्त्वतः ॥ ३ ॥

शम्बर उवाच। नासूयामि यदा विप्रान् ब्राह्ममेव च मे मतम्। शास्त्राणि वदतो विप्रान् संमन्यामि यथासुखम् ॥ ४ ॥ श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित्। अभ्यर्च्याम्यनुपृच्छामि पादौ गृह्णामि धीमताम् ॥ ५ ॥ ते विस्रब्धाः प्रभाषन्ते संपृच्छन्ते च मां सदा। प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागर्मि ॥ ६ ॥ ते मां शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकम्। समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ७ ॥ यच्च भाषन्ति सन्तुष्टा तच्च गृह्णामि मेधया। समाधिमात्मनो नित्यमनुलोममचिन्तयम् ॥ ८ ॥ सोऽहं वागग्रमिष्टानां रसानामवलेहकः। स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ९ ॥ एतत् पृथिव्याममृतमेतच्चक्षुरनुत्तमम्। यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्त्तते ॥ १० ॥ एतत् कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा। युद्धं पिता मे हृष्टात्मा विस्मितः समपद्यत ॥ ११ ॥ दृष्ट्वा च ब्राह्मणानान्तु महिमानं महात्मनाम्। पर्य्यपृच्छत् कथममी सिद्धा इति निशाकरम् ॥ १२ ॥

सोम उवाच। ब्राह्मणास्तपसा सर्व्वे सिध्यन्ते वाग्बलाः सदा। भुजवीर्य्याश्च राजानो वागस्त्राश्च द्विजातयः ॥ १३ ॥ प्रणवं चाप्यधीयीत ब्राह्मी दुर्व्वसतीर्व्वसन्। निर्म्मन्युरपि निर्व्वाणो यतिः स्यात् समदर्शनः ॥ १४ ॥ अपि च ज्ञानसम्पन्नः सर्व्वान् वेदान् पितुर्गृहे। श्लाघ्यमान इवाधीयाद्ग्राम्य इत्येव तं विदुः ॥ १५ ॥ भूमिरेतौ निगिरति सर्पो बिलशयानिव। राजानञ्चाप्ययोद्धारं ब्राह्मणञ्चाप्रवासिनम् ॥ १६ ॥ अभिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः। गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ॥ १७ ॥ इत्येतन्मे पिता श्रुत्वा सोमादद्भुतदर्शनात्। ब्राह्मणान् पूजयामास तथैवाहं महाव्रतान् ॥ १८ ॥

भीष्म उवाच । श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्युतम् ।
द्विजान् सम्पूजयामास महेन्द्रत्वमवाप च ॥ १९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि इन्द्रशम्बरसम्वादो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

युधिष्ठिर उवाच । अपूर्वं वा भवेत् पात्रमथ वापि चिरोषितम् । दूरादभ्यागतं वापि किं पात्रं स्यात् पितामह ॥ १ ॥
भीष्म उवाच । क्रिया भवति केषाञ्चिदुपांशुव्रतमुत्तमम् । यो यो याचेत यत्किञ्चित् सर्वं दद्याम इत्यपि ॥ २ ॥ अपीड़यन् भृत्यवर्गमित्येवमनुशुश्रुम । पीड़यन् भृत्यवर्गं हि आत्मानमपकर्षति ॥ ३ ॥ अपूर्वं भावयेत् पात्रं यच्चापि स्याच्चिरोषितम् । दूरादभ्यागतञ्चापि तत् पात्रञ्च विदुर्बुधाः ॥ ४ ॥
युधिष्ठिर उवाच । अपीड़या च भूतानां धर्मस्याहिंसया तथा । पात्रं विद्यात्तु तत्त्वेन यस्मै दत्तं न सन्तपेत् ॥ ५ ॥
भीष्म उवाच । ऋत्विक् पुरोहिताचार्य्याः शिष्यसम्बन्धिबान्धवाः । सर्वे पूज्याश्च मान्याश्च श्रुतवन्तोऽनसूयकाः ॥ ६ ॥ अतोऽन्यथा वर्त्तमानाः सर्वे नार्हन्ति सत्क्रियाम् । तस्मान्नित्यं परीक्षेत पुरुषान् प्रणिधाय वै ॥ ७ ॥ अक्रोधः सत्यवचनमहिंसा तप आर्ज्जवम् । अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ८ ॥ यस्मिन्नेतानि दृश्यन्ते न चाकार्य्याणि भारत । स्वभावतो निविष्टानि तत् पात्रं मानमर्हति ॥ ९ ॥ तथा चिरोषितञ्चापि संप्रत्यागतमेव च । अपूर्वं चैव पूर्वञ्च तत् पात्रं मानमर्हति ॥१०॥ अप्रामाण्यञ्च वेदानां शास्त्राणाञ्चाभिलङ्घनम् । अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः ॥ ११ ॥ भवेत् पण्डितमानी यो ब्राह्मणो वेदनिन्दकः । आन्विक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥१२॥

हेतुवादान् ब्रुवन् सत्सु विजेता हेतुवादिकः । आक्रोष्टा चाति-
वक्ता च ब्राह्मणानां सदैव हि ॥ १३ ॥ सर्व्वाभिशङ्की मूढ़श्च बालः
कटुकवागपि । बोद्धव्यस्तादृशस्तात नरं श्वानं हि तं विदुः ॥१४॥
यथा श्वा भषितुञ्चैव हन्तुं चैवावसृज्यते । एवं सम्भाषणार्थाय
सर्व्वशास्त्रवधाय च ॥ १५ ॥ लोकयात्रा च द्रष्टव्या धर्म्मश्चात्म-
हितानि च । एवं नरो वर्त्तमानः शाश्वतीर्व्वर्द्धते समाः ॥ १६ ॥
ऋणमुन्मुच्य देवानामृषीणाञ्च तथैव च । पितॄणामथ विप्राणा-
मतिथीनाञ्च पञ्चमम् ॥ १७ ॥ पर्य्यायेण विशुद्धेन सुविनीतेन
कर्म्मणा । एवं गृहस्थः कर्म्माणि कुर्व्वन् धर्म्मान्न हीयते ॥ १८ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि पात्रपरीक्षा
नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

युधिष्ठिर उवाच । स्त्रीणां स्वभावमिच्छामि श्रोतुं भरत-
सत्तम । स्त्रियो हि मूलं दोषाणां लघुचित्ता हि ताः स्मृताः ॥१॥
भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च सम्वादं पुंश्चल्या पञ्चचूड़या ॥ २ ॥ लोकाननुचरन्
सर्व्वान् देवर्षिर्नारदः पुरा । ददर्शाप्सरसं ब्राह्मीं पञ्चचूड़ामनि-
न्दिताम् ॥ ३ ॥ तां दृष्ट्वा चारुसर्व्वाङ्गीं पप्रच्छाप्सरसं मुनिः ।
संशयो हृदि कश्चिन्मे ब्रूहि तन्मे सुमध्यमे ॥ ४ ॥
भीष्म उवाच । एवमुक्ताथ सा विप्रं प्रत्युवाचाथ नारदम् ।
विषये सति वक्ष्यामि समर्थां मन्यसे च माम् ॥ ५ ॥
नारद उवाच । न त्वामविषये भद्रे नियोक्ष्यामि कथञ्चन ।
स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं वरानने ॥ ६ ॥
भीष्म उवाच । एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा ।
प्रत्युवाच न शक्ष्यामि स्त्री सती निन्दितुं स्त्रियः ॥७॥ विदितास्ते

स्त्रियो याश्च यादृशाश्च स्वभावतः । न मामर्हसि देवर्षे नियोक्तुं कार्य्ये ईदृशे ॥ ८ ॥ तामुवाच स देवर्षिः सत्यमेव सुमध्यमे । मृषावादे भवेद्दोषः सत्ये दोषो न विद्यते ॥ ९ ॥ इत्युक्ता सा कृतमतिरभवच्चारुहासिनी । स्त्रीदोषाञ्छाश्वतान् सत्यान् भाषितुं समुपक्रमे ॥ १० ॥

पञ्चचूड़ोवाच । कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्य्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ॥ ११ ॥ न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै । स्त्रियो मूलञ्च दोषाणां तथा त्वमपि वेत्थ ह ॥ १२ ॥ समाज्ञातानृद्धिमतः प्रतिरूपान् वशे स्थितान् । पतीनन्तरमासाद्य नालं नार्य्यः प्रतीक्षितुम् ॥ १३ ॥ असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो । पापीयसो नरान् यद्वै लज्जां त्यक्त्वा भजामहे ॥ १४ ॥ स्त्रियं हि यः प्रार्थयते सन्निकर्षञ्च गच्छति । ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥१५॥ अनर्थित्वान्मनुष्याणां भयात् परिजनस्य च । मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्त्तृषु ॥ १६ ॥ नासां कश्चिदगम्योऽस्ति नासां वयसि निश्चयः । विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥१७॥ न भयान्नाप्यनुक्रोशात् नार्थहेतोः कथञ्चन । न ज्ञातिकुलसम्बन्धात् स्त्रियस्तिष्ठन्ति भर्त्तृषु ॥ १८ ॥ यौवने वर्त्तमानानां मृष्टाभरणवाससाम् । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥ १९ ॥ याश्च शश्वदहुमता रक्ष्यन्ते दयिताः स्त्रियः । अपि ताः सम्प्रसज्जन्ते कुब्जान्धजड़वामनैः ॥ २० ॥ पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता नराः । स्त्रीणामगम्यो लोकेऽस्मिन् नास्ति कश्चिन्महामुने ॥ २१ ॥ यदि पुंसां गतिर्ब्रह्मन् कथञ्चिन्नोपपद्यते । अप्यन्योऽन्यं प्रवर्त्तन्ते न हि तिष्ठन्ति भर्त्तृषु ॥ २२ ॥ अलाभात् पुरुषाणां हि भयात् परिजनस्य हि । वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः ॥ २३ ॥ चलस्वभावा दुःसेव्या दुर्ग्राह्या भावत-

स्तथा। प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रियः ॥ २४ ॥ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। नान्तकः सर्व्व-भूतानां न पुंसां वामलोचनाः ॥ २५ ॥ इदमन्यच्च देवर्षे रहस्यं सर्व्वयोषिताम्। दृष्ट्वैव पुरुषं ह्यद्यं योनिः प्रक्लिद्यते स्त्रियाः ॥२६॥ कामानामपि दातारं कर्त्तारं मनसां प्रियम्। रक्षितारं न मृष्यन्ति स्वभर्त्तारमलं स्त्रियः ॥ २७ ॥ न कामभोगान् विपुलान् नालङ्कारान्न संश्रयान्। तथैव बहु मन्यन्ते यथा रत्यामनुग्रहम् ॥ २८ ॥ अन्तकः पवनो मृत्युः पातालं वड़वामुखम्। क्षुर-धारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ २९ ॥ यतश्च भूतानि महान्ति पञ्च यतश्च लोका विहिता विधात्रा। यतः पुमांसः प्रमदाश्च निर्म्मितास्तदैव दोषाः प्रमदासु नारद ॥ ३० ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि नारदपञ्चचूड़ा-सम्वादे अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

युधिष्ठिर उवाच। इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभी-क्ष्णशः। मोहेन परमाविष्टा दैवसृष्टेन पार्थिव ॥ १ ॥ स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकम्। अत्र मे संशयस्तीव्रो हृदि संपरिवर्त्तते ॥ २ ॥ कथमासां नराः सङ्गं कुर्व्वन्ते कुरुनन्दन। स्त्रियो वा केषु रज्यन्ते विरज्यन्ते च ताः पुनः ॥ ३ ॥ इति ताः पुरुषव्याघ्र कथं शक्यास्तु रक्षितुम्। प्रमदाः पुरुषेणेह तन्मे व्याख्यातुमर्हसि ॥ ४ ॥ एता हि रममाणास्तु वञ्चयन्तीह मान-वान्। न चासां मुच्यते कश्चित् पुरुषो हस्तमागतः। गावो नवतृणानीव गृह्णन्त्येता नवं नवम् ॥ ५ ॥ शम्बरस्य च या माया माया या नमुचेरपि। बलेः कुम्भीनसेश्चैव सर्व्वास्ता योषितो विदुः ॥ ६ ॥ हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च। अप्रियं

प्रियवाक्यैश्च गच्छति कालयोगतः ॥ ७ ॥ उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः । स्त्रीबुद्ध्या न विशिष्येते तास्तु रक्ष्याः कथं नरैः ॥ ८ ॥ अनृतं सत्यमित्याहुः सत्यञ्चापि तथानृतम् । इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ॥ ९ ॥ स्त्रीणां बुद्ध्यर्थनिष्कर्षादर्थशास्त्राणि शत्रुहन् । बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै ॥ १० ॥ संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु । अपास्ताश्च तथा राजन् विकुर्वन्ति मनः स्त्रियः ॥ ११ ॥ इमाः प्रजा महाबाहो धार्मिक्य इति नः श्रुतम् । सत्कृतासत्कृताश्चापि विकुर्वन्ति मनः सदा ॥ १२ ॥ कस्ताः शक्तो रक्षितुं स्यादिति मे संशयो महान् । तथा ब्रूहि महाभाग कुरूणां वंशवर्द्धन ॥ १३ ॥ यदि शक्या कुरुश्रेष्ठ रक्षा तासां कदाचन । कर्त्तुं वा कृतपूर्वं वा तन्मे व्याख्यातुमर्हसि ॥ १४ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि स्त्रीस्वभावकथने एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

भीष्म उवाच । एवमेव महाबाहो नात्र मिथ्यास्ति किञ्चन । यथा ब्रवीषि कौरव्य नारीं प्रति जनाधिप ॥ १ ॥ अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनम् । यथा रक्षा कृता पूर्वं विपुलेन महात्मना ॥ २ ॥ प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ । यदर्थं तच्च ते तात प्रवक्ष्यामि नराधिप ॥ ३ ॥ न हि स्त्रीभ्यः परं पुत्र पापीयः किञ्चिदस्ति वै । अग्निर्हि प्रमदा दीप्तो मायाश्च मयजा विभो । क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ ४ ॥ प्रजा इमा महाबाहो धार्मिक्य इति नः श्रुतम् । स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयम् ॥ ५ ॥ अथाभ्यगच्छन् देवास्ते पितामहमरिन्दम । निवेद्य मानसञ्चापि तूष्णीमासन्नधोमुखाः ॥ ६ ॥

तेषामन्तर्गतं ज्ञात्वा देवानां स पितामहः । मानवानां प्रमोहार्थं कृत्या नार्य्योऽसृजत् प्रभुः ॥ ७ ॥ पूर्वसर्गे तु कौन्तेय साध्व्यो नार्य्य इवाभवन् । असाध्व्यस्तु समुत्पन्नाः कृत्यासर्गात् प्रजापतेः । ताभ्यः कामान् यथाकामं प्रादाद्धि स पितामहः ॥ ८ ॥ ताः कामलुब्धाः प्रमदाः प्राबाधन्त नरान् सदा । क्रोधं कामस्य देवेशः सहायं चासृजत् प्रभुः ॥ ९ ॥ असज्जन्त प्रजाः सर्वाः कामक्रोधवशंगताः । न च स्त्रीणां क्रिया काचिदिति धर्मो व्यवस्थितः ॥ १० ॥ निरिन्द्रिया ह्यशास्त्राश्च स्त्रियोऽनृतमिति श्रुतिः । शय्यासनमलङ्कारमन्नपानमनार्य्यताम् ॥ ११ ॥ दुर्वाग्भावं रतिञ्चैव ददौ स्त्रीभ्यः प्रजापतिः । न तासां रक्षणं कर्त्तुं शक्यं पुंसा कथञ्चन ॥ १२ ॥ अपि विश्वकृता तात कुतस्तु पुरुषैरिह । वाचा च वधबन्धैर्वा क्लेशैर्वा विविधैस्तथा । न शक्या रक्षितुं नार्य्यस्ता हि नित्यमसंयताः ॥ १३ ॥ इदञ्च पुरुषव्याघ्र पुरस्तात् श्रुतवाहनम् । यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियः ॥ १४ ॥ ऋषिरासीन्महाभागो देवशर्मेति विश्रुतः । तस्य भार्य्या रुचिर्नाम रूपेणासदृशी भुवि ॥ १५ ॥ तस्या रूपेण संमत्ता देवगन्धर्वदानवाः । विशेषेण तु राजेन्द्र वृत्रहा पाकशासनः ॥ १६ ॥ नारीणाञ्चरितज्ञश्च देवशर्मा महामुनिः । यथाशक्ति यथोत्साहं भार्य्यान्तामभ्यरक्षत ॥ १७ ॥ पुरन्दरञ्च जानीते परस्त्रीकामचारिणम् । तस्माद्बलेन भार्य्याया रक्षणं स चकार ह ॥ १८ ॥ स कदाचिदृषिस्तात यज्ञं कर्त्तुमनास्तदा । भार्य्यासंरक्षणं कार्य्यं कथं स्यादित्यचिन्तयत् ॥ १९ ॥ रक्षाविधानं मनसा स सञ्चिन्त्य महातपाः । आहूय दयितं शिष्यं विपुलं प्राह भार्गवम् ॥ २० ॥

देवशर्मोवाच । यज्ञकारो गमिष्यामि रुचिञ्चेमां सुरेश्वरः । यतः प्रार्थयते नित्यं तां रक्षस्व यथाबलम् ॥ २१ ॥ अप्रमत्तेन

ते भाव्यं सदा प्रति पुरन्दरम् । स हि रूपाणि कुरुते विविधानि भृगूत्तम ॥ २२ ॥

भीष्म उवाच । इत्युक्तो विपुलस्तेन तपस्वी नियतेन्द्रियः । सदैवोग्रतपा राजन्नग्न्यर्कसदृशद्युतिः ॥ २३ ॥ धर्मज्ञः सत्यवादी च तथेति प्रत्यभाषत । पुनश्चेदं महाराज पप्रच्छ प्रस्थितं गुरुम् ॥ २४ ॥

विपुल उवाच । कानि रूपाणि शक्रस्य भवन्त्यागच्छतो मुने । वपुस्तेजश्च कीदृग्वै तन्मे व्याख्यातुमर्हसि ॥ २५ ॥

भीष्म उवाच । ततः स भगवांस्तस्मै विपुलाय महात्मने । आचचक्षे यथातत्त्वं मायां शक्रस्य भारत ॥ २६ ॥

देवशर्मोवाच । बहुमायः स विप्रर्षे भगवान् पाकशासनः । तांस्तान् विकुरुते भावान् बहूनथ मुहुर्मुहुः ॥ २७ ॥ किरीटी वज्रधृग्धन्वी मुकुटी बद्धकुण्डलः । भवत्यथ मुहूर्त्तेन चण्डालसमदर्शनः ॥ २८ ॥ शिखी जटी चीरवासाः पुनर्भवति पुत्रक । वृहच्छरीरश्च पुनश्चीरवासाः पुनः कृशः ॥ २९ ॥ गौरं श्यामञ्च कृष्णञ्च वर्णं विकुरुते पुनः । विरूपो रूपवांश्चैव युवा वृद्धस्तथैव च ॥ ३० ॥ ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च । प्रतिलोमोऽनुलोमश्च भवत्यथ शतक्रतुः ॥ ३१ ॥ शुकवायसरूपी च हंसकोकिलरूपवान् । सिंहव्याघ्रगजानाञ्च रूपं धारयते पुनः ॥ ३२ ॥ दैवं दैत्यमथो राज्ञां वपुर्धारयते पुनः । अकृशो वायुभग्नाङ्गः शकुनिर्विकृतस्तथा ॥ ३३ ॥ चतुष्पाद्बहुरूपश्च पुनर्भवति वालिशः । मक्षिकामशकादीनां वपुर्धारयतेऽपि च ॥ ३४ ॥ न शक्यमस्य ग्रहणं कर्त्तुं विपुल केनचित् । अपि विश्वकृता तात येन सृष्टमिदं जगत् ॥ ३५ ॥ पुनरन्तर्हितः शक्रो दृश्यते ज्ञानचक्षुषा । वायुभूतश्च स पुनर्देवराजो भवत्युत ॥ ३६ ॥ एवं रूपाणि सततं कुरुते पाकशासनः । तस्माद्विपुल यत्नेन रक्षेमां

तनुमध्यमाम् ॥ ३७ ॥ यथा रुचिं नावहिहेद्देवेन्द्रो भृगुसत्तम । क्रतावुपहिते न्यस्तं हविः श्वेव दुरात्मवान् ॥ ३८ ॥ एवमाख्याय स मुनिर्यज्ञकारोऽगमत्तदा । देवशर्म्मा महाभागस्ततो भरतसत्तम ॥ ३९ ॥ विपुलस्तु वचः श्रुत्वा गुरोश्चिन्तामुपेयिवान् । रक्षाञ्च परमां चक्रे देवराजान्महाबलात् ॥ ४० ॥ किन्नु शक्यं मया कर्त्तुं गुरुदाराभिरक्षणे । मायावी हि सुरेन्द्रोऽसौ दुर्द्धर्षश्चापि वीर्य्यवान् ॥ ४१ ॥ नापिधायाश्रमं शक्यो रक्षितुं पाकशासनः । उटजं वा तथा ह्यस्य नानाविधसरूपता ॥ ४२ ॥ वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत् । तस्मादिमां सम्प्रविश्य रुचिं स्थास्येहमद्य वै ॥ ४३ ॥ अथवा पौरुषेणेयं न शक्या रक्षितुं मया । बहुरूपो हि भगवान् श्रूयते पाकशासनः ॥ ४४ ॥ सोऽहं योगबलादेनां रक्षिष्ये पाकशासनात् । गात्रेण गात्रैरस्याहं सम्प्रवेक्ष्ये हि रक्षितुम् ॥ ४५ ॥ यद्युच्छिष्टामिमां पत्नीमद्य पश्यति मे गुरुः । शप्स्यत्यसंशयं कोपाद्दिव्यज्ञानो महातपाः ॥ ४६ ॥ न चेयं रक्षितुं शक्या यथान्या प्रमदा नृभिः । मायावी हि सुरेन्द्रोऽसावहोप्राप्तोऽस्मि संशयम् ॥ ४७ ॥ अवश्यकरणीयं हि गुरोरिह हि शासनम् । यदि त्वेतदहं कुर्य्यामाश्चर्य्यं स्यात् कृतं मया ॥ ४८ ॥ योगेनाथ प्रवेशो हि गुरुपत्न्याः कलेवरे । असक्तः पद्मपत्रस्थो जलविन्दुर्यथा चलः ॥ ४९ ॥ निर्मुक्तस्य रजोरूपान्नापराधो भवेन्मम । यथा हि शून्यां पथिकः सभामध्यावसेत् पथि ॥ ५० ॥ तथाद्यावासयिष्यामि गुरुपत्न्याः कलेवरम् । एवमेव शरीरेऽस्या निवत्स्यामि समाहितः ॥५१ ॥ इत्येवं धर्म्ममालोक्य वेदवेदांश्च सर्वशः । तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च ॥ ५२ ॥ इति निश्चित्य मनसा रक्षां प्रति सभार्गवः । अन्वतिष्ठत् परं यत्नं यथा तच्छृणु पार्थिव ॥ ५३ ॥ गुरुपत्नीं समासीनो विपुलः स महातपाः । उपासीनामनिन्द्याङ्गीं

यथार्थं समलोभयत् ॥ ५४ ॥ नेत्राभ्यां नेत्रयोरस्या रश्मिं संयोज्य रश्मिभिः। विवेश विपुलः कायमाकाशं पवनो यथा ॥५५॥ लक्षणं लक्षणेनैव वदनं वदनेन च। अविचेष्टन्नतिष्ठद्वै छायेवान्तर्हितो मुनिः ॥ ५६ ॥ ततो विष्टभ्य विपुलो गुरुपत्न्याः कलेवरम्। उवास रक्षणे युक्तो न च सा तमबुध्यत ॥ ५७ ॥ यं कालं नागतो राजन् गुरुस्तस्य महात्मनः। क्रतुं समाप्य स्वगृहं तं कालं सोऽभ्यरक्षत ॥ ५८ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विपुलोपाख्याने चत्वारिंशोऽध्यायः ॥ ४० ॥

---

भीष्म उवाच। ततः कदाचिद्देवेशो दिव्यरूपवपुर्धरः। इदमन्तरमित्येवमभ्यगात्तमथाश्रमम् ॥ १ ॥ रूपमप्रतिमं कृत्वा लोभनीयं जनाधिप। दर्शनीयतमो भूत्वा प्रविवेश तमाश्रमम् ॥ २ ॥ स ददर्श तदासीनं विपुलस्य कलेवरम्। निश्चेष्टं स्तब्धनयनं यथा लेख्यगतं तथा ॥ ३ ॥ रुचिञ्च रुचिरापाङ्गीं पीनश्रोणिपयोधराम्। पद्मपत्रविशालाक्षीं सम्पूर्णेन्दुनिभाननाम् ॥ ४ ॥ सा तमालोक्य सहसा प्रत्युत्थातुमियेष ह। रूपेण विस्मिता कोऽसीत्यथ वक्तुमिवेच्छती ॥ ५ ॥ उत्थातुकामा तु सती विष्टब्धा विपुलेन सा। निगृहीता मनुष्येन्द्र न शशाक विचेष्टितुम् ॥ ६ ॥ तामाबभाषे देवेन्द्रः साम्ना परमवल्गुना। त्वदर्थमागतं विद्धि देवेन्द्रं मां शुचिस्मिते ॥ ७ ॥ क्लिश्यमानमनङ्गेन त्वत्सङ्कल्पभवेन ह। तत् सम्प्राप्तं हि मां सुभ्रु पुराकालोऽतिवर्त्तते ॥ ८ ॥ तमेवं वादिनं शक्रं शुश्राव विपुलो मुनिः। गुरुपत्न्याः शरीरस्थो ददर्श त्रिदशाधिपम् ॥ ९ ॥ न शशाक च सा राजन् प्रत्युत्थातुमनिन्दिता। वक्तुञ्च नाशकद्राजन् विष्टब्धा विपुलेन सा ॥ १० ॥

आकारं गुरुपत्न्यास्तु स विज्ञाय भृगूद्वहः । निजग्राह महातेजा योगेन बलवत् प्रभो ॥ ११ ॥ बबन्ध योगबन्धैश्च तस्याः सर्व्वेन्द्रियाणि सः । तां निर्विकारां दृष्ट्वा तु पुनरेव शचीपतिः । उवाच व्रीड़ितो राजंस्तां योगबलमोहिताम् ॥ १२ ॥ एह्येहीति ततः सा तु प्रतिवक्तुमियेष तम् । स तां वाचं गुरोः पत्न्या विपुलः पर्य्यवर्त्तयत् ॥ १३ ॥ भोः किमागमने कृत्यमिति तस्यास्तु निःसृता । वक्त्राच्छशाङ्कसदृशाद्वाणी संस्कारभूषणा ॥ १४ ॥ व्रीड़िता सा तु तद्वाक्यमुक्त्वा परवशा तदा । पुरन्दरश्च तत्रस्थो बभूव विमना भृशम् ॥ १५ ॥ स तद्वैकृतमालक्ष्य देवराजो विशाम्पते । अवैक्षत सहस्राक्षस्तदा दिव्येन चक्षुषा ॥ १६ ॥ स ददर्श मुनिं तस्याः शरीरान्तरगोचरम् । प्रतिबिम्बमिवादर्शे गुरुपत्न्याः शरीरगम् ॥ १७ ॥ स तं घोरेण तपसा युक्तं दृष्ट्वा पुरन्दरः । प्रावेपत सुसंत्रस्तः शापभीतस्तदा विभो ॥ १८ ॥ विमुच्य गुरुपत्नीन्तु विपुलः सुमहातपाः । स्वं कलेवरमाविश्य शक्रं भीतमथाब्रवीत् ॥ १९ ॥

विपुल उवाच । अजितेन्द्रिय दुर्बुद्धे पापात्मक पुरन्दर । न चिरं पूजयिष्यन्ति देवास्त्वां मानुषास्तथा ॥ २० ॥ किन्तु तद्विस्मृतं शक्र न तन्मनसि ते स्थितम् । गौतमेनासि यन्मुक्तो भगाङ्कपरिचिह्नितः ॥ २१ ॥ जाने त्वां बालिशमतिमकृतात्मानमीश्वरम् । मयेयं रक्ष्यते मूढ़ गच्छ पाप यथागतम् ॥ २२ ॥ नाहं त्वामद्य मूढ़ात्मन् दहेयं हि स्वतेजसा । कृपायमानस्तु न ते दग्धुमिच्छामि वासव ॥ २३ ॥ स च घोरतमो धीमान् गुरुर्मे पापचेतसम् । दृष्ट्वा त्वां निर्द्दहेदद्य क्रोधदीप्तेन चक्षुषा ॥ २४ ॥ नैवन्तु शक्र कर्त्तव्यं पुनर्मान्याश्च ते द्विजाः । मागमः ससुतामात्योऽत्ययं ब्रह्मबलार्द्दितः ॥ २५ ॥ अमरोऽस्मीति यद्बुद्धिं समास्थाय प्रवर्त्तसे । मावमंस्था न तपसामसाध्यं नाम किञ्चन ॥२६॥

भीष्म उवाच। एतच्छ्रुत्वा वचः शक्रो विपुलस्य महात्मनः। अकिञ्चिदुक्त्वा व्रीड़ार्त्तस्तथैवान्तरधीयत॥ २७॥ मुहूर्त्तं याते तस्मिंस्तु देवशर्मा महातपाः। कृत्वा यज्ञं यथाकाममाजगाम स्वमाश्रमम्॥ २८॥ आगतेऽथ गुरौ राजन् विपुलः प्रियकर्मकृत्। रक्षितां गुरवे भार्य्यां न्यवेदयदनिन्दिताम्॥ २९॥ अभिवाद्य च शान्तात्मा स गुरुं गुरुवत्सलः। विपुलः पर्य्युपातिष्ठद्यथा पूर्वमशङ्कितः॥ ३०॥ विश्रान्ताय ततस्तस्मै सहासीनाय भार्य्यया। निवेदयामास तदा विपुलः शक्रकर्म तत्॥ ३१॥ तत् श्रुत्वा स मुनिश्रेष्ठो विपुलस्य प्रतापवान्। बभूव शीलवृत्ताभ्यां तपसा नियमेन च॥ ३२॥ विपुलस्य गुरौ वृत्तिं भक्तिमात्मनि तत् प्रभुः। धर्म्मे च स्थिरतां दृष्ट्वा साधुसाध्वित्यभाषत॥ ३३॥ प्रतिलभ्य च धर्मात्मा शिष्यं धर्मपरायणम्। वरेण छन्दयामास देवशर्मा महामतिः॥ ३४॥ स्थितिञ्च धर्म्मे जग्राह स तस्माद्गुरुवत्सलः। अनुज्ञातश्च गुरुणा चचारानुपमं तपः॥ ३५॥ तथैव देवशर्मापि सभार्य्यः समहातपाः। निर्भयो बलवृत्रघ्नाच्चचार विजने वने॥३६॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विपुलोपाख्याने एकचत्वारिंशोऽध्यायः॥ ४१॥

---

भीष्म उवाच। विपुलस्त्वकरोत्तीव्रं तपः कृत्वा गुरोर्वचः। तपोयुक्तमथात्मानममन्यत स वीर्य्यवान्॥ १॥ स तेन कर्मणा स्पर्द्धन् पृथिवीं पृथिवीपते। चचार गतभीः प्रीतो लब्धकीर्त्तिवरो नृप॥ २॥ उभौ लोकौ जितौ चापि तथैवामन्यत प्रभुः। कर्मणा तेन कौरव्य तपसा विपुलेन च॥ ३॥ अथ काले व्यतिक्रान्ते कस्मिंश्चित् कुरुनन्दन। रुच्या भगिन्या आदानं प्रभूतधनधान्यवत्॥ ४॥ एतस्मिन्नेव काले तु दिव्या काचिद्वराङ्गना।

बिभ्रती परमं रूपं जगामाथ विहायसा ॥ ५ ॥ तस्याः शरीरात् पुष्पाणि पतितानि महीतले । तस्याश्रमस्याविदूरे दिव्यगन्धानि भारत ॥ ६ ॥ तान्यगृह्णात्ततो राजन् रुचिर्ललितलोचना । तदा निमन्त्रकस्तस्या अङ्गेभ्यः क्षिप्रमागमत् ॥ ७ ॥ तस्या हि भगिनी तात ज्येष्ठा नाम्ना प्रभावती । भार्य्या चित्ररथस्याथ बभूवाङ्गेश्वरस्य च ॥ ८ ॥ पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी । आमन्त्रिता ततोऽगच्छद्रुचिरङ्गपतेर्गृहम् ॥ ९ ॥ पुष्पाणि तानि दृष्ट्वा तु तदाङ्गेन्द्रवराङ्गना । भगिनीं चोदयामास पुष्पार्थे चारुलोचना ॥ १० ॥ सा भर्त्त्रे सर्वमाचष्ट रुचिः सुरुचिरानना । भगिन्या भाषितं सर्वमृषिस्तच्चाभ्यनन्दत ॥ ११ ॥ ततो विपुलमानाय्य देवशर्म्मा महातपाः । पुष्पार्थे चोदयामास गच्छगच्छेति भारत ॥ १२ ॥ विपुलस्तु गुरोर्वाक्यमविचार्य्य महातपाः । स तथेत्यब्रवीद्राजंस्तञ्च देशं जगाम ह ॥ १३ ॥ यस्मिन् देशे तु तान्यासन् पतितानि नभस्तलात् । अम्लानान्यपि तत्रासन् कुसुमान्यपराख्यपि ॥ १४ ॥ स ततस्तानि जग्राह दिव्यानि रुचिराणि च । प्राप्तानि स्वेन तपसा दिव्यगन्धानि भारत ॥ १५ ॥ सम्प्राप्य तानि प्रीतात्मा गुरोर्वचनकारकः । तदा जगाम तूर्णञ्च चम्पां चम्पकमालिनीम् ॥ १६ ॥ स वने निर्ज्जने तात ददर्श मिथुनं नृणाम् । चक्रवत् परिवर्त्तन्तं गृहीत्वा पाणिना करम् ॥ १७ ॥ तत्रैकस्तूर्णमगमत् तत्पदे च विवर्त्तयन् । एकस्तु न तदा राजंश्चक्रतुः कलहं ततः ॥ १८ ॥ त्वं शीघ्रं गच्छसीत्येकोऽब्रवीन्नेति तथापरः । नेति नेति च तौ राजन् परस्परमथोचतुः ॥ १९ ॥ तयोर्विस्पर्द्धतोरेवं शपथोऽयमभूत्तदा । सहसोद्दिश्य विपुलं ततो वाक्यमथोचतुः ॥ २० ॥ आवयोरनृतं प्राह यस्तस्याभूद्द्विजस्य वै । विपुलस्य परे लोके या गतिः सा भवेदिति ॥२१॥ एतत् श्रुत्वा च विपुलो विषण्णवदनोऽभवत् । एवं तीव्रतपाश्चाहं

कष्टश्चायं परिश्रमः॥ २२॥ मिथुनस्यास्य किं मे स्यात् कृतं पापं यथागति। अनिष्टा सर्वभूतानां कीर्त्तितानेन मेऽद्य वै॥ २३॥ एवं सञ्चिन्तयन्नेव विपुलो राजसत्तम। अवाङ्मुखो दीनमना दध्यौ दुष्कृतमात्मनः॥ २४॥ ततः षड़न्यान् पुरुषानक्षैः काञ्चन-राजतैः। अपश्यद्दीव्यमानान् वै लोभहर्षान्वितांस्तथा॥ २५॥ कुर्वतः शपथं तेन यः कृतो मिथुनेन तु। विपुलं वै समुद्दिश्य तेऽपि वाक्यमथाब्रुवन्॥ २६॥ लोभमास्थाय योऽस्माकं विषमं कर्त्तुमुत्सहेत्। विपुलस्य परे लोके या गतिस्तामवाप्नुयात्॥२७॥ एतच्छ्रुत्वा तु विपुलो नापश्यद्धर्मसङ्करम्। जन्मप्रभृति कौरव्य कृतपूर्वमथात्मनः॥ २८॥ स प्रदध्यौ तथा राजन्नग्नावग्निरिवा-हितः। दह्यमानेन मनसा शापं श्रुत्वा तथाविधम्॥ २९॥ तस्य चिन्तयतस्तात बह्व्यो दिननिशा ययुः। इदमासीन्मनसि च रुच्या रक्षणकारितम्॥ ३०॥ लक्षणं लक्षणेनैव वदनं वदनेन च। विधाय न मया चोक्तं सत्यमेतद्गुरोस्तथा॥ ३१॥ एत-दात्मनि कौरव्य दुष्कृतं विपुलस्तदा। अमन्यत महाभाग तथा तच्च न संशयः॥ ३२॥ स चम्पां नगरीमेत्य पुष्पाणि गुरवे ददौ। पूजयामास च गुरुं विधिवत् स गुरुप्रियः॥ ३३॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विपुलोपाख्याने द्विचत्वारिंशोऽध्यायः॥ ४२॥

---

भीष्म उवाच। तमागतमभिप्रेक्ष्य शिष्यं वाक्यमथाब्रवीत्। देवशर्मा महातेजा यत्तच्छृणु जनाधिप॥ १॥

देवशर्मोवाच। किन्ते विपुल दृष्टं वै तस्मिन् शिष्य महा-वने। ते त्वां जानन्ति विपुल आत्मा च रुचिरेव च॥ २॥

विपुल उवाच। ब्रह्मर्षे मिथुनं किन्तत् के च ते पुरुषा विभो। ये मां जानन्ति तत्त्वेन यन्मां त्वं परिपृच्छसि॥ ३॥

देवशर्मोवाच । यद्वै तन्मिथुनं ब्रह्मन्नहोरात्रं हि विद्धि तत् । चक्रवत् परिवर्त्तेत तत्ते जानाति दुष्कृतम् ॥ ४ ॥ ये च ते पुरुषा विप्र अक्षैर्दीव्यन्ति हृष्टवत् । ऋतूं स्तानभिजानीहि ते ते जानन्ति दुष्कृतम् ॥ ५ ॥ न मां कश्चिद्विजानीत इति कृत्वा न विश्वसेत् । नरो रहसि पापात्मा पापकं कर्म्म वै द्विज ॥ ६ ॥ कुर्वाणं हि नरं कर्म्म पापं रहसि सर्वदा । पश्यन्ति ऋतवश्चापि तथा दिननिशेऽप्यनु ॥ ७ ॥ तथैव हि भवेयुस्ते लोकाः पापकृतो यथा । कृत्वा नाचक्षतः कर्म्म मम तच्च यथाकृतम् ॥ ८ ॥ ते त्वां हर्षस्मितं दृष्ट्वा गुरोः कर्म्मानिवेदकम् । स्मारयन्तस्तथा प्राहुस्ते यथा श्रुतवान् भवान् ॥ ९ ॥ अहोरात्रं विजानाति ऋतवश्चापि नित्यशः । पुरुषे पापकं कर्म शुभं वाशुभकर्म्मिणः ॥ १० ॥ तत् त्वया मम यत् कर्म व्यभिचाराद्भयात्मकम् । नाख्यातमिति जानन्तस्ते त्वामाहुस्तथा द्विज ॥ ११ ॥ तेनैव हि भवेयुस्ते लोकाः पापकृतो यथा । कृत्वा नाचक्षतः कर्म मम यच्च त्वया कृतम् ॥ १२ ॥ त्वया शक्या च दुर्वृत्ता रक्षितुं प्रमदा द्विज । न च त्वं कृतवान् किञ्चिदेनः प्रीतोऽस्मि तेन ते ॥ १३ ॥ यदि त्वहं त्वां दुर्वृत्तमद्राक्षं द्विजसत्तम । शपेयं त्वामहं क्रोधान्न मेऽत्रास्ति विचारणा ॥ १४॥ सज्जन्ति पुरुषे नार्य्यः पुंसां सोऽर्थश्च पुष्कलः । अन्यथा रक्षतः शापोऽभविष्यत्ते मतिश्च मे ॥ १५ ॥ रक्षिता च त्वया तात मम चापि निवेदिता । अहं ते प्रीतिमान् पुत्र स्वस्थः स्वर्गं गमिष्यसि ॥ १६ ॥ इत्युक्त्वा विपुलं प्रीतो देवशर्म्मा महानृषिः । मुमोद स्वर्गमास्थाय सहभार्य्यः सशिष्यकः ॥ १७ ॥ इदमाख्यातवांश्चापि ममाख्यानं महामुनिः । मार्कण्डेयः पुरा राजन् गङ्गाकूले कथान्तरे ॥ १८ ॥ तस्माद्ब्रवीमि पार्थ त्वां स्त्रियो रक्ष्याः सदैव च । उभयं दृश्यते तासु सततं साध्वसाधु वा ॥ १९ ॥ स्त्रियः साध्व्यो महाभागाः समन्ताल्लोकमातरः । धारयन्ति महीं राजन्निमां

सवनकाननाम् ॥ २० ॥ असाध्यश्चापि दुर्वृत्ताः कुलघ्नः पापनिश्चयाः। विज्ञेया लक्षणैर्दुष्टैः स्वगात्रसहजैर्नृप ॥ २१ ॥ एवमेताः सुरक्ष्या वै शक्याः कर्त्तुं महात्मभिः। अन्यथा राजशार्दूल न शक्या रक्षितुं स्त्रियः ॥ २२ ॥ एता हि मनुजव्याघ्र तीक्ष्णातीक्ष्णपराक्रमाः। नासामस्ति प्रियो नाम मैथुने सङ्गमेऽति यः ॥ २३ ॥ एताः कृत्याश्च कार्य्याश्च कृताश्च भरतर्षभ। न चैकस्मिन्नमन्त्येताः पुरुषे पाण्डुनन्दन ॥ २४ ॥ नासां स्नेहो नरैः कार्य्यस्तथैवेर्षा जनेश्वर। खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव ह ॥ २५ ॥ निहन्यादन्यथा कुर्वन्नरः कौरवनन्दन। सर्वथा राजशार्दूल युक्तिः सर्वत्र पूज्यते ॥ २६ ॥ तेनैकेन तु रक्षा वै विपुलेन कृता स्त्रियाः। नान्यः शक्तस्त्रिलोकेऽस्मिन् रक्षितुं नृप योषितम् ॥ २७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विपुलोपाख्याने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

युधिष्ठिर उवाच। यन्मूलं सर्वधर्माणां स्वजनस्य गृहस्य च। पितृदेवातिथीनाञ्च तन्मे ब्रूहि पितामह ॥ १ ॥ अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः। कीदृशस्य प्रदेया स्यात् कन्येति वसुधाधिप ॥ २ ॥

भीष्म उवाच। शीलवृत्ते समाज्ञाय विद्यां योनिञ्च कर्म च। सद्भिरेवं प्रदातव्या कन्या गुणयुते वरे। ब्राह्मणानां सतामेष ब्राह्मो धर्मो युधिष्ठिर ॥ ३ ॥ आवाह्यमावहेदेवं यो दद्यादनुकूलतः। शिष्टानां क्षत्रियाणाञ्च धर्म एष सनातनः ॥ ४ ॥ आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः। अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर। गान्धर्वमिति तं धर्मं प्राहुर्वेदविदो

जनाः ॥ ५ ॥ धनेन बहुधा क्रीत्वा संप्रलोभ्य च बान्धवान्। असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ॥ ६ ॥ हत्वा छित्वा च शीर्षाणि रुदतां रुदतीं गृहात्। प्रसह्य हरणं तात राक्षसो विधिरुच्यते ॥ ७ ॥ पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर। पैशाचश्चासुरश्चैव न कर्त्तव्यौ कथञ्चन ॥ ८ ॥ ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ। पृथग्वा यदि वा मिश्राः कर्त्तव्या नात्र संशयः ॥ ९ ॥ तिस्रो भार्य्या ब्राह्मणस्य द्वे भार्य्ये क्षत्रियस्य तु। वैश्यः स्वजात्यां विन्देत तास्वपत्यं समं भवेत् ॥ १० ॥ ब्राह्मणी तु भवेज्ज्येष्ठा क्षत्रिया क्षत्रियस्य तु। रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ॥ ११ ॥ अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः। शूद्रायां जनयन् विप्रः प्रायश्चित्ती विधीयते ॥ १२ ॥ त्रिंशद्वर्षो दशवर्षां भार्य्यां विन्देत नग्निकाम्। एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ १३ ॥ यस्यास्तु न भवेद्भ्राता पिता वा भरतर्षभ। नोपयच्छेत तां जातु पुत्रिकाधर्म्मिणी हि सा ॥ १४ ॥ त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती। चतुर्थे त्वथ सम्प्राप्ते स्वयं भर्त्तारमर्ज्जयेत् ॥ १५ ॥ प्रजा न हीयते तस्या रतिश्च भरतर्षभ। अतोऽन्यथा वर्त्तमाना भवेद्वाच्या प्रजापतेः ॥ १६ ॥ असपिण्डा च या मातुरसगोत्रा च या पितुः। इत्येतामनुगच्छेत तं धर्मं मनुरब्रवीत् ॥ १७ ॥

युधिष्ठिर उवाच। शुल्कमन्येन दत्तं स्याद्ददामीत्याह चापरः। बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् ॥ १८ ॥ पाणिग्रहीता चान्यः स्यात् कस्य भार्य्या पितामह। तत्त्वं जिज्ञासमानानां चक्षुर्भवति नो भवान् ॥ १९ ॥

भीष्म उवाच। यत् किञ्चित् कर्म मानुष्यं संस्थानाय प्रदृश्यते। मन्त्रवन्मन्त्रितं तस्य मृषावादस्तु पातकः ॥ २० ॥ भार्य्यापत्यर्त्विगाचार्य्यैः शिष्योपाध्याय एव च। मृषोक्ते दण्डमर्हन्ति

नेत्याहुरपरे जनाः॥ २१॥ न ह्यकामेन सम्वासं मनुरेवं प्रशं-
सति। अयशस्यमधर्म्यञ्च यन्मृषा धर्मकोपनम्॥ २२॥ नैकान्तो
दोष एकस्मिंस्तदा केनोपपद्यते। धर्मतो यां प्रयच्छन्ति याञ्च
क्रीणन्ति भारत॥ २३॥ बन्धुभिः समनुज्ञाते मन्त्रहोमौ प्रयो-
जयेत्। तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथञ्चन॥ २४॥
यस्त्वत्र मन्त्रसमयो भार्य्यापत्योर्मिथः कृतः। तमेवाहुर्गरीयांसं
यश्चासौ ज्ञातिभिः कृतः॥ २५॥ देवदत्तां पतिर्भार्य्यां वेत्ति
धर्मस्य शासनात्। स दैवीं मानुषीं वाचमनृतां पर्य्युदस्यति॥२६॥

युधिष्ठिर उवाच। कन्यायां प्राप्तशुल्कायां ज्यायांश्चेदाव्रजे-
दरः। धर्मकामार्थसम्पन्नो वाच्यमत्रानृतं न वा॥ २७॥ तस्मि-
न्नुभयतो दोषे कुर्वन् श्रेयः समाचरेत्। अयं नः सर्वधर्माणां
धर्मश्चिन्त्यतमो मतः॥ २८॥ तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो
भवान्। तदेतत् सर्वमाचक्ष्व न हि तृप्यामि कथ्यताम्॥ २९॥

भीष्म उवाच। नैव निष्ठाकरं शुल्कं ज्ञात्वासीत्तेन नाहृतम्।
न हि शुल्कपराः सन्तः कन्यां ददति कर्हिचित्॥ ३०॥ अन्यै-
र्गुणैरुपेतन्तु शुल्कं याचन्ति बान्धवाः। अलङ्कृत्वा वहस्वेति यो
दद्यादनुकूलतः॥ ३१॥ यच्च ताञ्च ददत्येवं न शुल्कं विक्रयो न
सः। प्रतिगृह्य भवेद्देयमेष धर्मः सनातनः॥ ३२॥ दास्यामि
भवते कन्यामिति पूर्वं नभाषितम्। ये चैवाहुर्ये च नाहुर्ये
चावश्यं वदन्त्युत॥ ३३॥ तस्मादाग्रहणात् पाणेर्याचयन्ति पर-
स्परम्। कन्यावरः पुरा दत्तो मरुद्भिरिति नः श्रुतम्॥ ३४॥
नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदितम्। तन्मूलं काम-
मूलस्य प्रजनस्येति मे मतिः॥ ३५॥ समीक्ष्य च बहून् दोषान्
संवासाद्विद्धि पाणयोः। यथा निष्ठाकरं शुल्कं न जात्वासीत्तथा
शृणु॥ ३६॥ अहं विचित्रवीर्य्यस्य द्वे कन्ये समुदावहम्। जित्वा
च मागधान् सर्वान् काशीनथ च कोशलान्॥ ३७॥ गृहीतपाणि-

रेकासीत् प्राप्तशुल्कापराभवत्। कन्याऽग्रहीता तत्रैव विसर्ज्जयां इति मे पिता। अब्रवीदितरां कन्यामावहेति स कौरवः ॥ ३८॥ अप्यन्याननुपप्रच्छ शङ्कमानः पितुर्वचः। अतीव ह्यस्य धर्म्मेच्छा पितुर्मेऽभ्यधिकाभवत् ॥ ३९ ॥ ततोऽहमब्रुवं राजन्नाचारेप्सुरिदं वचः। आचारं तत्त्वतो वेत्तुमिच्छामि च पुनः पुनः ॥ ४० ॥ ततो मयैवमुक्ते तु वाक्ये धर्म्मभृताम्वरः। पिता मम महाराज वाह्लीको वाक्यमब्रवीत् ॥ ४१ ॥ यदि वः शुल्कतो निष्ठा न पाणिग्रहणात्तथा। लाजान्तरमुपासीत प्राप्तशुल्कामिति स्मृतम् ॥ ४२ ॥ न हि धर्म्मविदः प्राहुः प्रमाणं वाक्यतः स्मृतम्। येषां वै शुल्कतो निष्ठा न पाणिग्रहणात्तथा ॥ ४३ ॥ प्रसिद्धं भाषितं दाने नैषां प्रत्यायने पुनः। ये मन्यन्ते क्रयं शुल्कं न ते धर्म्मविदो नराः ॥ ४४ ॥ न चैतेभ्यः प्रदातव्या न वोढ़व्या तथाविधा। न ह्येव भार्य्या क्रेतव्या न विक्रय्या कथञ्चन ॥ ४५ ॥ ये च क्रीणन्ति दासीञ्च विक्रीणन्ति तथैव च। भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ॥ ४६ ॥ अस्मिन्नर्थे सत्यवन्तं पर्य्यपृच्छन्त वै जनाः। कन्यायाः प्राप्तशुल्कायाः शुल्कदः प्रशमं गतः ॥ ४७ ॥ पाणि-ग्रहीता चान्यः स्यादत्र नो धर्म्मसंशयः। तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसम्मतः ॥ ४८ ॥ तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान्। तानेवं ब्रुवतः सर्व्वान् सत्यवान् वाक्यमब्रवीत् ॥ ४९॥ यत्रेष्टं तत्र देया स्यान्नात्र कार्य्या विचारणा। कुर्व्वते जीवतो-ऽप्येवं मृते नैवास्ति संशयः ॥ ५० ॥ देवरं प्रविशेत् कन्या तप्ये-द्वापि तपः पुनः। तमेवानुव्रता भूत्वा पाणिग्राहस्य काम्यया ॥५१॥ लिखन्त्येवन्तु केषाञ्चिदपरेषां शनैरपि। इति ये संवदन्त्यत्र त एवं निश्चयं विदुः ॥ ५२ ॥ तत् पाणिग्रहणात् पूर्व्वमन्तरं यत्र वर्त्तते। सर्व्वमङ्गलमन्त्रा वै मृषा वादस्तु पातकः ॥ ५३ ॥ पाणि-ग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे। पाणिग्राहस्य भार्य्या

स्याद्यस्य चाद्भिः प्रदीयते ॥ ५४ ॥ इति देयं वदन्त्यत्र त एनं निश्चयं विदुः। अनुकूलामनुवंशां भ्रात्रा दत्तामुपाग्निकाम्। परिक्रम्य यथान्यायं भार्य्यां विन्देत् द्विजोत्तमः ॥ ५५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विवाहकथने चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

युधिष्ठिर उवाच। कन्यायाः प्राप्तशुल्कायाः पतिश्चेन्नास्ति कश्चन। तत्र का प्रतिपत्तिः स्यात्तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। या पुत्रकस्य ऋद्धस्य प्रतिपाल्या तदा भवेत्। अथ चेन्नाहरेत् शुल्कं क्रीता शुल्कप्रदस्य सा ॥ २ ॥ तस्यार्थेऽपत्यमीहेत येन न्यायेन शक्नुयात्। न तस्मान्मन्त्रवत् कार्य्यं कश्चित् कुर्वीत किञ्चन ॥ ३ ॥ स्वयं वृतेन सावित्री पित्रा वै प्रत्यपद्यत। तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा नेतरे जनाः ॥ ४ ॥ एतत्तु नापरे चक्रुरपरे जातु साधवः। साधूनां पुनराचारो गरीयान् धर्मलक्षणः ॥ ५ ॥ अस्मिन्नेव प्रकरणे सुक्रतुर्वाक्यमब्रवीत्। नप्ता विदेहराजस्य जनकस्य महात्मनः ॥ ६ ॥ असदाचरिते मार्गे कथं स्यादनुकीर्त्तनम्। अत्र प्रश्नः संशयो वा सतामेवमुपालभेत् ॥ ७ ॥ असदेव हि धर्मस्य प्रदानं धर्म आसुरः। नानुशुश्रुम जात्वेतामिमां पूर्व्वेषु कर्मसु ॥ ८ ॥ भार्य्यापत्योर्हि सम्बन्धः स्त्रीपुंसोः स्वल्प एव तु। रतिः साधारणो धर्म इति चाह स पार्थिवः ॥ ९ ॥

युधिष्ठिर उवाच। अथ केन प्रमाणेन पुंसामादीयते धनम्। पुत्रवद्धि पितुस्तस्य कन्या भवितुमर्हति ॥ १० ॥

भीष्म उवाच। यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा। तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ ११ ॥ मातुश्च

यौतुकं यत् स्यात् कुमारीभाग एव सः। दौहित्र एव तद्रिक्थ-
मपुत्रस्य पितुर्हरेत् ॥ १२ ॥ ददाति हि स पिण्डान् वै पितु-
र्मातामहस्य च। पुत्रदौहित्रयोरेव विशेषो नास्ति धर्मतः ॥१३॥
अन्यत्र जामया मार्द्धं प्रजानां पुत्र ईहते। दुहितान्यत्र जातेन
पुत्रेणापि विशिष्यते ॥ १४ ॥ दौहित्रकेण धर्मेण नात्र पश्यामि
कारणम्। विक्रीतासु हि ये पुत्रा भवन्ति पितुरेव ते ॥ १५ ॥
असूयवस्त्वधर्मिष्ठाः परस्वादायिनः शठाः। आसुरादधिसम्भूता
धर्माद्विषमवृत्तयः ॥ १६ ॥ अत्र गाथा यमोद्गीताः कीर्त्तयन्ति
पुराविदः। धर्मज्ञा धर्मशास्त्रेषु निवद्धा धर्मसेतुषु ॥ १७ ॥ यो
मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति। कन्यां वा जीवितार्थाय
यः शुल्केन प्रयच्छति ॥ १८ ॥ सप्तावरे महाघोरे निरये काल-
साह्वये। स्वेदं मूत्रं पुरीषञ्च तस्मिन्मूढ़ः समश्नुते ॥ १९ ॥ आर्षे
गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्। अल्पो वा बहु वा राजन्
विक्रयस्तावदेव सः ॥ २० ॥ यद्यप्याचरितः कैश्चित् नैष धर्मः
सनातनः। अन्येषामपि दृश्यन्ते लोकतः संप्रवृत्तयः ॥ २१ ॥
वश्यां कुमारीं वलतो ये तां समुपभुञ्जते। एते पापस्य कर्त्तार-
स्तमस्यन्धे च शेरते ॥ २२ ॥ अन्योऽप्यथ न विक्रेयो मनुष्यः किं
पुनः प्रजाः। अधर्ममूलैर्हि धनैस्तैर्न धर्मोऽथ कश्चन ॥ २३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि विवाहकथने
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

भीष्म उवाच। प्राचेतसस्य वचनं कीर्त्तयन्ति पुराविदः।
यस्यां किञ्चिन्नाददते ज्ञातयो न स विक्रयः ॥ १ ॥ अर्हणं तत्
कुमारीणामानृशंस्यतमञ्च यत्। सर्वञ्च प्रतिदेयं स्यात् कन्यायै
तदशेषतः ॥ २ ॥ पितृभिर्भ्रातृभिश्चापि श्वशुरैरथ देवरैः। पूज्या

भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ३ ॥ यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत्। अप्रमोदात् पुनः पुंसः प्रजनो न प्रवर्द्धते ॥ ४ ॥ पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप। स्त्रियो यत्र च पूज्यन्ते रमन्ते तत्र देवताः ॥ ५ ॥ अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रियाः। तदा चैतत् कुलं नास्ति यदा शोचन्ति यामयः ॥ ६ ॥ यामीशप्तानि गेहानि निकृत्तानीव कृत्यया। नैव भान्ति न वर्द्धन्ते श्रिया हीनानि पार्थिव ॥ ७ ॥ स्त्रियः पुंसां परिददे मनुर्जिगमिषुर्दिवम्। अबलाः स्वल्पकौपीनाः सुहृदः सत्यजिष्णवः ॥ ८ ॥ ईर्षवो मानकामाश्च चण्डा ह्यसुहृदोऽबुधाः। स्त्रियस्तु मानमर्हन्ति ता मानयत मानवाः ॥ ९ ॥ स्त्रीप्रत्ययो हि वै धर्मो रतिभोगाश्च केवलाः। परिचर्य्या नमस्कारास्तदायत्ता भवन्तु वः ॥ १० ॥ उत्पादनमपत्यस्य जातस्य परिपालनम्। प्रीत्यर्थं लोकयात्रायाः पश्यतः स्त्रीनिबन्धनम् ॥ ११ ॥ संमन्यमानाश्चैता हि सर्वकार्य्याण्यवाप्स्यथ। विदेहराजदुहिता चात्र श्लोकमगायत ॥ १२ ॥ नास्ति यज्ञक्रिया काचिन्न श्राद्धं नोपवासकम्। धर्मः स्वभर्तृशुश्रूषा तया स्वर्गं जयन्त्युत ॥ १३ ॥ पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १४ ॥ श्रिय एताः स्त्रियो नाम सत्कार्य्या भूतिमिच्छता। पालिता निगृहीताश्च श्रीः स्त्री भवति भारत ॥ १५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि स्त्रीप्रशंसायां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

युधिष्ठिर उवाच। सर्वशास्त्रविधानज्ञ राजधर्मभृतांवर। अतीव संशयच्छेत्ता भवान् वै प्रथितः क्षितौ ॥ १ ॥ कश्चित्तु

कश्चित्तु संशयो मेऽस्ति तन्मे ब्रुहि पितामह । जातेऽस्मिन् संशये राजन्नान्यं पृच्छेम कञ्चन ॥ २ ॥ यथा नरेण कर्त्तव्यं धर्म्ममार्गानुवर्त्तिना । एतत् सर्वं महाबाहो भवान् व्याख्यातुमर्हति ॥ ३ ॥ चतस्रो विहिता भार्य्या ब्राह्मणस्य पितामह । ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ॥ ४ ॥ तत्र जातेषु पुत्रेषु सर्वासां कुरुसत्तम । आनुपूर्व्वेण कस्तेषां पित्र्यं दायाद्यमर्हति ॥ ५ ॥ केन वा किं ततो हार्य्यं पितृवित्तात् पितामह । एतदिच्छामि कथितं विभागस्तेषु यः स्मृतः ॥ ६ ॥

भीष्म उवाच । ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । एतेषु धर्म्मो विहितो ब्राह्मणस्य युधिष्ठिर ॥ ७ ॥ वैषम्यादथ वा लोभात् कामाद्वापि परन्तपः । ब्राह्मणस्य भवेत् शूद्रा न तु दृष्टान्ततः स्मृता ॥ ८ ॥ शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । प्रायश्चित्तीयते चापि विधिदृष्टेन कर्म्मणा ॥९॥ तत्र जातेष्वपत्येषु द्विगुणं स्याद्युधिष्ठिर । आपद्यमानरिक्थन्तु संप्रवक्ष्यामि भारत ॥ १० ॥ लक्षण्यं गोवृषो यानं यत् प्रधानतमं भवेत् । ब्राह्मण्यास्तद्धरेत् पुत्र एकांशं वै पितुर्धनात् ॥११॥ शेषन्तु दशधा कार्य्यं ब्राह्मणस्वं युधिष्ठिर । तत्र तेनैव हर्त्तव्याश्चत्वारोंऽशाः पितुर्धनात् ॥ १२ ॥ क्षत्रियायास्तु यः पुत्रो ब्राह्मणः सोऽप्यसंशयः । स तु मातुर्विशेषेण त्रीनंशान् हर्त्तुमर्हति ॥१३॥ वर्णे तृतीये जातस्तु वैश्यायां ब्राह्मणादपि । द्विरंशस्तेन हर्त्तव्यो ब्राह्मणस्वाद्युधिष्ठिर ॥ १४ ॥ शूद्रायां ब्राह्मणाज्जातो नित्यादेयधनः स्मृतः । अल्पञ्चापि प्रदातव्यं शूद्रापुत्राय भारत ॥ १५ ॥ दशधा प्रविभक्तस्य धनस्यैष भवेत् क्रमः । सवर्णासु तु जातानां समान् भागान् प्रकल्पयेत् ॥ १६ ॥ अब्राह्मणन्तु मन्यन्ते शूद्रापुत्रमनैपुणात् । त्रिषु वर्णेषु जातो हि ब्राह्मणाद्ब्राह्मणो भवेत् ॥ १७ ॥ स्मृतास्च वर्णाश्चत्वारः पञ्चमो नाधिगम्यते । हरेच्च

दशमं भागं शूद्रापुत्रः पितुर्धनात् ॥ १८ ॥ तत्तु दत्तं हरेत् पिता नादत्तं हर्त्तुमर्हति। अवश्यं हि धनं देयं शूद्रापुत्राय भारत ॥ १९ ॥ आनृशंस्यपरो धर्म्म इति तस्मै प्रदीयते। यत्र तत्र समुत्पन्नं गुणायैवोपपद्यते ॥ २० ॥ यद्यप्येष सपुत्रः स्याद-पुत्रो यदि वा भवेत्। नाधिकं दशमाद्दद्याच्छूद्रापुत्राय भारत ॥ २१ ॥ त्रैवार्षिकाद्यदा भक्तादधिकं स्याद्द्विजस्य तु। यजेत तेन द्रव्येण न वृथा साधयेद्धनम् ॥ २२ ॥ त्रिसहस्रोपरो दाय-स्त्रियै देयो धनस्य वै। भर्त्रा तच्च धनं दत्तं यथार्हं भोक्तुमर्हति ॥ २७ ॥ स्त्रीणान्तु पतिदायाद्यमुपभोगफलं स्मृतम्। नाप-हारं स्त्रियः कुर्य्युः पतिवित्तात् कथञ्चन ॥ २४ ॥ स्त्रियास्तु यद्धवेद्वित्तं पित्रा दत्तं युधिष्ठिर। ब्राह्मणास्तद्धरेत् कन्या यथा पुत्रस्तथा हि सा ॥ २५ ॥ सा हि पुत्रसमा राजन् विहिता कुरुनन्दन। एवमेव समुद्दिष्टो धर्मो वै भरतर्षभ। एतं धर्म्म-मनुस्मृत्य न वृथा साधयेद्धनम् ॥ २६ ॥

युधिष्ठिर उवाच। शूद्रायां ब्राह्मणाज्जातो यद्यदेयधनः स्मृतः। केन प्रतिविशेषेण दशमोऽप्यस्य दीयते ॥ २७ ॥ ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः। क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि ॥ २८ ॥ कस्मात्तु विषमं भागं भजेरन्नृपसत्तम। यदा सर्वे त्रयो वर्णास्त्वयोक्ता ब्राह्मणा इति ॥ २९ ॥

भीष्म उवाच। दारा इत्युच्यते लोके नाम्नैकेन परन्तप। प्रोक्तेन चैव नाम्नायं विशेषः सुमहान् भवेत् ॥ ३० ॥ तिस्रः कृत्वा पुरा भार्य्याः पश्चाद्विन्देत ब्राह्मणीम्। सा ज्येष्ठा सा च पूज्या स्यात् सा च भार्य्या गरीयसी ॥ ३१ ॥ स्नानं प्रसाधनं भर्त्तु-र्दन्तधावनमञ्जनम्। हव्यं कव्यञ्च यच्चान्यद्धर्म्मयुक्तं गृहे भवेत् ॥ ३२ ॥ न तस्यां जातु तिष्ठन्त्यामन्या तत् कर्त्तुमर्हति। ब्राह्मणी

ख्येव कुर्य्याद्वा ब्राह्मणस्य युधिष्ठिर ॥ ३३ ॥ अन्नं पानञ्च माल्यञ्च वासांस्याभरणानि च। ब्राह्मण्येतानि देयानि भर्त्तुः सा हि गरीयसी ॥ ३४ ॥ मनुनाभिहितं शास्त्रं यच्चापि कुरुनन्दन। अत्राप्येष महाराज दृष्टो धर्म्मः सनातनः ॥ ३५ ॥ अथ चेदन्यथा कुर्य्याद्यदि कामाद्युधिष्ठिर। यथा ब्राह्मणचण्डालः पूर्व्वदृष्टस्तथैव सः ॥ ३६ ॥ ब्राह्मण्याः सदृशः पुत्रः क्षत्रियायाश्च यो भवेत्। राजन् विशेषो यस्तत्र वर्णयोरुभयोरपि ॥ ३७ ॥ न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत्। ब्राह्मण्याः प्रथमः पुत्रो भूयान् स्याद्राजसत्तम ॥ ३८ ॥ भूयो भूयोऽपि संहार्य्यः पितृवित्ताद्युधिष्ठिर। यथा न सदृशी जातु ब्राह्मण्याः क्षत्रिया भवेत् ॥ ३९ ॥ क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत्। श्रीश्च राज्यञ्च कोषश्च क्षत्रियाणां युधिष्ठिर ॥ ४० ॥ विहितं दृश्यते राजन् सागरान्ता च मेदिनी। क्षत्रियो हि स्वधर्म्मेण श्रियं प्राप्नोति भूयसीम् ॥ ४१ ॥ राजदण्डधरो राजन् रक्षा नान्यत्र क्षत्रियात्। ब्राह्मणा हि महाभागा देवानामपि देवताः ॥ ४२ ॥ तेषु राजन् प्रवर्त्तेत पूजया विधिपूर्व्वकम्। प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ॥ ४३ ॥ लुप्यमानं स्वधर्म्मेण क्षत्रियो ह्येष रक्षति। दस्युभिर्ह्रियमाणञ्च धनं दारांश्च सर्व्वशः ॥ ४४ ॥ सर्व्वेषामेव वर्णानां त्राता भवति पार्थिवः। भूयान् स्यात् क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः। भूयस्तेनापि हर्त्तव्यः पितृवित्ताद्युधिष्ठिर ॥ ४५ ॥

युधिष्ठिर उवाच। उक्तं ते विधिवद्राजन् ब्राह्मणस्य पितामह। इतरेषान्तु वर्णानां कथं वै नियमो भवेत् ॥ ४६ ॥

भीष्म उवाच। क्षत्रियस्यापि भार्य्ये द्वे विहिते कुरुनन्दन। तृतीया च भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥ ४७ ॥ एष एव क्रमो हि स्यात् क्षत्रियाणां युधिष्ठिर। अष्टधा तु भवेत् कार्य्यं

क्षत्रियस्वं जनाधिप ॥ ४८ ॥ क्षत्रियाया हरेत् पुत्रश्चतुरोंऽशान् पितुर्धनात्। युद्धावहारिकं यच्च पितुः स्यात् स हरेत्तु तत् ॥ ४९ ॥ वैश्यापुत्रस्तु भागांस्त्रीन् शूद्रा पुत्रस्तथाष्टमम्। सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्त्तुमर्हति ॥ ५० ॥ एकैव हि भवेत् वैश्यस्य कुरुनन्दन। द्वितीया तु भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥ ५१ ॥ वैश्यस्य वर्त्तमानस्य वैश्यायां भरतर्षभ। शूद्रायाञ्चापि कौन्तेय तयोर्विनियमः स्मृतः ॥ ५२ ॥ पञ्चधा तु भवेत् कार्य्यं वैश्यस्वं भरतर्षभ। तयोरपत्ये वच्यामि विभागञ्च जनाधिप ॥ ५३ ॥ वैश्यापुत्रेण हर्त्तव्याश्चत्वारोंऽशाः पितुर्धनात्। पञ्चमस्तु स्मृतो भागः शूद्रापुत्राय भारत ॥ ५४ ॥ सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्त्तुमर्हति। त्रिभिर्वर्णैः सदा जातः शूद्रोऽदेयधनो भवेत् ॥ ५५ ॥ शूद्रस्य स्यात् सवर्णैव भार्य्या नान्या कथञ्चन। समभागाश्च पुत्राः स्युर्य्यदि पुत्रशतं भवेत् ॥ ५६ ॥ जातानां समवर्णायाः पुत्राणामविशेषतः। सर्व्वेषामेव वर्णानां समभागो धनात् स्मृतः ॥ ५७ ॥ ज्येष्ठस्य भागो ज्येष्ठः स्यादेकोऽंशो यः प्रधानतः। एष दायविधिः पार्थ पूर्व्वमुक्तः स्वयम्भुवा ॥ ५८ ॥ समवर्णासु जातानां विशेषोऽस्त्यपरो नृप। विवाहवैशिष्ट्यतः पूर्व्वः पूर्व्वो विशिष्यते ॥ ५९ ॥ हरेज्ज्येष्ठः प्रधानांशमेकं तुल्यासु तेष्वपि। मध्यमो मध्यमञ्चैव कनीयांस्तु कनीयसं ॥ ६० ॥ एवं जातिषु सर्व्वासु सवर्णाः श्रेष्ठतां गताः। महर्षिरपि चैतद्वै मारीचः कश्यपोऽब्रवीत् ॥ ६१ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि रिक्थविभाग कथने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

युधिष्ठिर उवाच। अर्थाश्रयाद्वा कामाद्वा वर्णानाञ्चाप्य-

निश्चयात्। अज्ञानाद्वापि वर्णानां जायते वर्णसङ्करः ॥ १ ॥ तेषामेतेन विधिना जातानां वर्णसङ्करे। को धर्म्मः कानि कर्माणि तन्मे ब्रूहि पितामह ॥ २ ॥

भीष्म उवाच। चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यञ्च केवलम्। असृजत् स हि यज्ञार्थं पूर्वमेव प्रजापतिः ॥ ३ ॥ भार्य्याश्चतस्रो विप्रस्य द्वयोरात्मा प्रजायते। आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः ॥ ४ ॥ परं शवाद्ब्राह्मणस्यैव पुत्रः शूद्रापुत्रं पराशवं तमाहुः। शुश्रूषकः स्वस्य कुलस्य स स्यात् स्वचारित्रं नित्यमथो न जह्यात् ॥ ५ ॥ सर्वानुपायानथ सम्प्रधाय समुद्धरेत् स्वस्य कुलस्य तन्त्रम्। ज्येष्ठो जवीयानथ यो द्विजस्य शुश्रूषया दान-परायणः स्यात् ॥ ६ ॥ तिस्रः क्षत्रियसम्बन्धात् द्वयोरात्मास्य जायते। हीनवर्णास्तृतीयायां शूद्रा उग्रा इति स्मृतिः ॥ ७ ॥ द्वे चापि भार्य्ये वैश्यस्य द्वयोरात्मास्य जायते। शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ॥ ८ ॥ अतोऽवशिष्टस्त्वधमो गुरुदार-प्रधर्षकः। वाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितम् ॥ ९ ॥ विप्रायां क्षत्रियो वाह्यं सूतं स्तोमक्रियापरम्। वैश्यो वैदेहकञ्चापि मौद्गल्यमपवर्ज्जितम् ॥ १० ॥ शूद्रश्चाण्डालमत्युग्रं वध्यघ्नं वाह्यवासिनम्। ब्राह्मण्यां संप्रजायन्त इत्येते कुलपांशनाः। एते मतिमतां श्रेष्ठ वर्णसङ्करजाः प्रभो ॥ ११ ॥ वन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः। शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतीक्रमात् ॥ १२ ॥ शूद्रादायोगवश्चापि वैश्यायां ग्राम्यध-र्म्मिणः। ब्राह्मणैरप्रतिग्राह्यस्तक्षा स्वधनजीवनः ॥ १३ ॥ एतेपि सदृशान् वर्णान् जनयन्ति स्वयोनिषु। मातृजात्यां प्रसू-यन्ते ह्यवरा हीनयोनिषु ॥ १४ ॥ तथा चतुर्षु वर्णेषु द्वयोरा-त्मास्य जायते। आनन्तर्य्यात् प्रजायन्ते तथा वाह्याः प्रधानतः ॥ १५ ॥ ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु। परस्परस्य

दारेषु जनयन्ति विगर्हितान् ॥ १६ ॥ यथा शूद्रोऽपि ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते । एवं बाह्यतराद्वाह्यश्चातुर्वर्ण्यात् प्रजायते ॥ १७ ॥ प्रतिलोमन्तु वर्द्धन्ते बाह्याद्वाह्यतरात् पुनः । हीना-हीनाः प्रसूयन्ते वर्णाः पञ्चदशैव तु ॥ १८ ॥ अगम्यागमनाच्चैव जायते वर्णसङ्करः । बाह्यानामनुजायन्ते सैरन्ध्रां मागधेषु च ॥ १९ ॥ प्रसाधनोपचारज्ञमदासन्दासजीवनम् । अतश्चायो-गवं सूते वागुराबन्धजीवनम् । मैरेयकञ्च वैदेहः सम्प्रसूतेऽथ माधुकम् ॥ २० ॥ निषादो मद्गुरं सुते दासं नावोपजीवनम् । मृतपं चापि चाण्डालः श्वपाकमिति विश्रुतम् ॥ २१ ॥ चतुरो मागधी सूते क्रूरान्मायोपजीविनः । मांसं स्वादुकरं चौद्रं सौगन्धमिति विश्रुतम् ॥ २२ ॥ वैदेहकाच्च पापिष्ठं क्रूरं मायो-पजीविनम् । निषादान्मद्रनाभञ्च खरयानप्रयायिणम् ॥ २३ ॥ चण्डालात् पुक्कसञ्चापि खराश्वगजभोजिनम् । मृतचैलप्रतिच्छन्नं भिन्नभाजनभोजिनम् ॥ २४ ॥ आयोगवीषु जायन्ते हीनवर्णास्तु ते त्रयः । चुद्रो वैदेहकादन्ध्रो वहिर्ग्रामप्रतिश्रयः ॥ २५ ॥ कारा-वरो निषाद्यान्तु चर्म्मकारात् प्रसूयते । चण्डालात् पाण्डुसौ-पाकस्त्वक्सारव्यावहारवान् ॥ २६ ॥ आहिण्डको निषादेन वैदेह्यां संप्रसूयते । चण्डालेन तु सौपाके चण्डालसमवृत्तिमान् ॥ २७ ॥ निषादी चापि चाण्डालात् पुत्रमन्तेवसायिनम् । श्मशानगोचरं सूते बाह्यैरपि वहिष्कृतम् ॥ २८ ॥ इत्येते सङ्करे जाताः पितृमातृव्यतिक्रमात् । प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्म्मभिः ॥ २९ ॥ चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते । वर्णानां धर्महीनेषु सङ्ख्या नास्तीह कस्यचित् ॥ ३० ॥ यदृ-च्छयोपसम्पन्नैर्यज्ञसाधुवहिष्कृतैः । बाह्यावाह्यैस्तु जायन्ते यथावृत्ति यथाश्रयम् ॥ ३१ ॥ चतुष्पथश्मशानानि शैलांश्चान्यान् वनस्पतीन् । कार्ष्णायसमलङ्कारं परिगृह्य च नित्यशः ॥ ३२ ॥

वसेयुरेते विज्ञाता वर्त्तयन्तः स्वकर्म्मभिः । युञ्जन्तो वाप्यलङ्कारां स्तथोपकरणानि च ॥ ३३ ॥ गोब्राह्मणाय साहाय्यं कुर्वाणा वै न संशयः । अनृशंस्यमनुक्रोशः सत्यवाक्यं तथा क्षमा ॥ ३४ ॥ स्वशरीरैरपि त्राणं वाह्यानां सिद्धिकारणं । भवन्ति मनुजव्याघ्र तत्र मे नास्ति संशयः ॥ ३५ ॥ यथोपदेशं परिकीर्त्तितासु नरः प्रजायेत विचार्य्य वुद्धिमान् । निहीनयोनिर्हि सुतोऽवसादयेत्तितीर्षमाणं हि यथोपलो जले ॥ ३६ ॥ अविद्वांसमलं लोके विद्वांसमपि वा पुनः । नयन्ति ह्युपथं नार्य्यः कामक्रोधवशानुगम् ॥ ३७ ॥ स्वभावश्चैव नारीणां नराणामिह दूषणम् । अत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः ॥ ३८ ॥

युधिष्ठिर उवाच । वर्णापेतमविज्ञाय नरं कलुषयोनिजम् । आर्य्यरूपमिवानार्य्यं कथं विद्यामहे वयम् ॥ ३९ ॥

भीष्म उवाच । योनिसङ्कलुषे जातं नानाभावसमन्वितम् । कर्मभिः सज्जनाचीर्णैर्विज्ञेया योनिशुद्धता ॥ ४० ॥ अनार्य्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता । पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ४१ ॥ पित्र्यं वा भजते शीलं मातृजं वा तथोभयम् । न कथञ्चन सङ्कीर्णः प्रकृतिं स्वां नियच्छति ॥ ४२ ॥ यथैव सदृशो रूपे मातापित्रोर्हि जायते । व्याघ्रश्चित्रैस्तथा योनिं पुरुषः स्वां नियच्छति ॥ ४३ ॥ कुले स्रोतसि संच्छन्ने यस्य स्याद्दुयोनिसङ्करः । संश्रयत्येव तच्छीलं नरोऽल्पमथवा वहु ॥ ४४ ॥ आर्य्यरूपसमाचारं चरन्तं कृतके पथि । सुवर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये ॥ ४५ ॥ नानावृत्तेषु भूतेषु नानाकर्मरतेषु च । जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ॥ ४६ ॥ शरीरमिह सत्त्वेन न तस्य परिकृष्यते । ज्येष्ठमध्यावरं सत्त्वं तुल्यसत्त्वं प्रमोदते ॥ ४७ ॥ ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रञ्च धर्मज्ञं सद्वृत्तमभि पूजयेत् ॥ ४८ ॥

आत्मानमाख्याति हि कर्मभिर्नरः सुशीलचारित्रकुलैः शुभाशुभैः। प्रणष्टमप्याशु कुलं तथा नरः पुनः प्रकाशं कुरुते स्वकर्मतः॥ ४९॥ योनिष्वेतासु सर्वासु सङ्कीर्णास्वितरासु च। यत्रात्मानं न जनयेद्बुधस्तां परिवर्ज्जयेत्॥ ५०॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि वर्णसङ्करकथने अष्टचत्वारिंशोऽध्यायः॥ ४८॥

---

युधिष्ठिर उवाच। ब्रूहि तात कुरुश्रेष्ठ वर्णानां त्वं पृथक् पृथक्। कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते॥ १॥ विप्रवादाः सुबहवः श्रूयन्ते पुत्रकारिताः। अत्र नो मुह्यतां राजन् संशयं च्छेत्तुमर्हति॥ २॥

भीष्म उवाच। आत्मा पुत्रस्तु विज्ञेयस्तस्यानन्तरजश्च यः। निरुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा॥ ३॥ पतितस्य तु भार्य्यायां भर्त्रा सुसमवेतया। तथा दत्तक्रतौ पुत्रावध्यूढ़श्च तथापरः॥ ४॥ षड़पध्वंसजाश्चापि कानीनापसदास्तथा। इत्येते वै समाख्यातास्तान् विजानीहि भारत॥ ५॥

युधिष्ठिर उवाच। षड़पध्वंसजाः के स्युः के वाप्यपसदास्तथा। एतत् सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि॥ ६॥

भीष्म उवाच। त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर। वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत॥ ७॥ एको विड्वर्ण एवाथ तथात्रैवोपलक्षितः। षड़पध्वंसजास्ते हि तथैवापसदाञ्छृणु॥ ८॥ चाण्डालो व्रात्यवैद्यौ च ब्राह्मण्यां क्षत्रियासु च। वैश्यायाञ्चैव शूद्रस्य लक्ष्यन्तेऽपसदास्त्रयः॥ ९॥ मागधो वामकश्चैव द्वौ वैश्यस्योपलक्षितौ। ब्राह्मण्यां क्षत्रियायाञ्च क्षत्रियस्यैक एव तु॥ १०॥ ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपसदाः स्मृताः। पुत्रा ह्येते न शक्यन्ते मिथ्याकर्त्तुं नराधिप॥ ११॥

युधिष्ठिर उवाच। क्षेत्रजं केचिदेवाहुः सुतं केचित्तु शुक्रजम्। तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह ॥ १२ ॥

भीष्म उवाच। रेतजो वा भवेत् पुत्रस्त्यक्तो वा क्षेत्रजो भवेत्। अध्यूढः समयं भित्त्वेत्येतदेव निबोध मे ॥ १३ ॥

युधिष्ठिर उवाच। रेतोजं विद्म वै पुत्रं क्षेत्रजस्यागमः कथम्। अध्यूढं विद्म वै पुत्रं भित्त्वा तु समयं कथम् ॥ १४ ॥

भीष्म उवाच। आत्मजं पुत्रमुत्पाद्य यस्त्यजेत् कारणान्तरे। न तत्र कारणं रेतः स क्षेत्रस्वामिनो भवेत् ॥ १५ ॥ पुत्रकामो हि पुत्रार्थे यां वृणीते विशाम्पते। क्षेत्रजस्तु प्रमाणं स्यान्न वै तत्रात्मजः सुतः ॥ १६ ॥ अन्यत्र क्षेत्रजः पुत्रो लभ्यते भरतर्षभ। न ह्यात्मा शक्यते हन्तुं दृष्टान्तोपगतो ह्यसौ ॥ १७ ॥ कृतश्चैव कृतकः पुत्रः संग्रहादेव लभ्यते। न तत्र रेतः क्षेत्रं वा यत्र लभ्येत भारत ॥ १८ ॥

युधिष्ठिर उवाच। कीदृशः कृतकः पुत्रः संग्रहादेव लभ्यते। शुक्रं क्षेत्रं प्रमाणं वा यत्र लभ्यं न भारत ॥ १९ ॥

भीष्म उवाच। मातापितृभ्यां यस्त्यक्तः पथि यस्तं प्रकल्पयेत्। न चास्य मातापितरौ ज्ञायेतां स हि कृत्रिमः ॥ ४० ॥ अस्वामिकस्य स्वामित्वं यस्मिन् सम्प्रतिलक्षयेत्। यो वर्णः पोषयेत्तञ्च तद्वर्णस्तस्य जायते ॥ २१ ॥

युधिष्ठिर उवाच। कथमस्य प्रयोक्तव्यः संस्कारः कस्य वा कथम्। देया कन्या कथञ्चेति तन्मे ब्रूहि पितामह ॥ २२ ॥

भीष्म उवाच। आत्मवत्तस्य कुर्वीत संस्कारं स्वामिवत्तथा। त्यक्तो मातापितृभ्यां यः सवर्णं प्रतिपद्यते ॥ २३ ॥ तद्गोत्रवन्धुजं तस्य कुर्य्यात् संस्कारमच्युत। अथ देया तु कन्या स्यात्तद्वर्णस्य युधिष्ठिर ॥ २४ ॥ संस्कर्त्तुं वर्णगोत्रञ्च मातृवर्णविनिश्चये। कानीनाध्युढजौ चापि विज्ञेयौ पुत्रकिल्बिषौ ॥ २५ ॥ तावपि

स्नाविव सुतौ संस्कार्य्याविति निश्चयः। क्षेत्रजो वाप्यपसदो येऽध्यूढास्तेषु चाप्यथ॥ २६॥ आत्मवद्वै प्रयुञ्जीरन् संस्कारान् ब्राह्मणादयः। धर्मशास्त्रेषु वर्णानां निश्चयोऽयं प्रदृश्यते। एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि॥ २७॥

इत्यनुशासनपर्वणि आनुशासनिके पर्वणि दानधर्मे
एकोनपञ्चाशत्तमोऽध्यायः॥ ४९॥

---

युधिष्ठिर उवाच। दर्शने कीदृशः स्नेहः सम्वासे च पितामह। महाभाग्यं गवाञ्चैव तन्मे व्याख्यातुमर्हसि॥ १॥

भीष्म उवाच। हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते। नहुषस्य च सम्वादं महर्षेश्च्यवनस्य च॥ २॥ पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ। उदवासकृतारम्भो बभूव स महाव्रतः॥ ३॥ निहत्यमानं क्रोधञ्च प्रहर्षं शोकमेव च। वर्षाणि द्वादश मुनिर्जलवासे धृतव्रतः॥ ४॥ आदधत् सर्वभूतेषु विश्रम्भं परमं शुभम्। जलचरेषु सर्वेषु शीतरश्मिरिव प्रभुः॥ ५॥ स्थाणुभुतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च। गङ्गायमुनयोर्म्मध्ये जलं सम्प्रविवेश ह॥ ६॥ गङ्गायमुनयोर्वेगं सुभीमं भीमनिस्वनम्। प्रतिजग्राह शिरसा वातवेगसमं जवे॥ ७॥ गङ्गा च यमुना चैव सरितश्च सरांसि च। प्रदक्षिणमृषिञ्चक्रुर्नचैनं पर्य्यपीड़यन्॥ ८॥ अन्तर्ज्जलेषु सुष्वाप काष्ठभूतो महामुनिः। ततश्चोर्द्धस्थितो धीमानभवद्भरतर्षभ॥ ९॥ जलौकसां स सत्त्वानां बभूव प्रियदर्शनः। उपाजिघ्रन्त च तदा तस्योष्ठं हृष्टमानसाः॥ १०॥ तत्र तस्यासतः कालः समतीतोऽभवन्महान्॥ ११॥ ततः कदाचित् समये कस्मिंश्चिन्मीनोजीविनः। तं देशं समुपाजग्मुर्ज्जालहस्ता महाद्युते। निषादा बहवस्तत्र मत्स्योद्धरणनिश्चयाः॥१२॥

व्यायता बलिनः शूराः सलिलेष्वनिवर्त्तिनः । अभ्याययुश्च तं देशं निश्चिता जालकर्म्मणि ॥ १३ ॥ जालं ते योजयामासुर्निःशेषेण जनाधिप । मत्स्योदकं समासाद्य तदा भरतसत्तम ॥ १४ ॥ ततस्ते बहुभिर्योगैः कैवर्त्ता मत्स्यकाङ्क्षिणः । गङ्गायमुनयोर्वारि जालैरभ्यकिरं स्ततः ॥ १५ ॥ जालं सुविततं तेषां नवसूत्रकृतं तथा । विस्तारायामसम्पन्नं यत्तत्र सलिलेऽक्षिपन् ॥ १६ ॥ ततस्तेषु महच्चैव बलवच्च सुवर्त्तितम् । अवतीर्य्य ततः सर्व्वे जालञ्चकृषिरे तदा ॥ १७ ॥ अभीतरूपाः संहृष्टा अन्योन्यवशवर्त्तिनः । बबन्धुस्तत्र मत्स्यांश्च तथान्यान् जलचारिणः ॥ १८ ॥ तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम् । आकर्षयन् महाराज जालेनाथ यदृच्छया ॥ १९ ॥ नदीशैवालदिग्धाङ्गं हरिश्मश्रुजटाधरम् । नखैः शङ्खनखैर्गात्रैः क्रोडैश्चित्रैरिवार्पितम् ॥ २० ॥ तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम् । सर्व्वे प्राञ्जलयो दासाः शिरोभिः प्रापतन् भुवि ॥ २१ ॥ परिखेदपरित्रासा जालस्याकर्षणेन च । मत्स्या बभूवुर्व्यापन्नाः स्थलसंस्पर्शनेन च ॥ २२ ॥ स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम् । बभूव कृपयाविष्टो निश्वसंश्च पुनः पुनः ॥ २३ ॥

निषादा ऊचुः । अज्ञानात् यत्कृतं पापं प्रसादं तत्र नः कुरु । करवाम प्रियं किन्ते तन्नो ब्रूहि महामुने ॥ २४ ॥ इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत् । यो मेऽद्य परमः कामस्तं शृणुध्वं समाहिताः ॥ २५ ॥ प्राणोत्सर्गं विक्रयं वा मत्स्यैर्यास्याम्यहं सह । संवासान्नोत्सहे त्यक्तुं सलिलेऽध्युषितानहम् ॥ २६ ॥ इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः । सर्व्वे विवर्णवदना नहुषाय न्यवेदयन् ॥ २७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि च्यवनोपाख्याने पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

भीष्म उवाच। नहुषस्तु ततः श्रुत्वा च्यवनं तं तथागतम्। त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ॥ १ ॥ शौचं कृत्वा यथान्यायं प्राञ्जलिः प्रयतो नृपः। आत्मानमाचचक्षे च च्यवनाय महात्मने ॥ २ ॥ अर्चयामास तत्रापि तस्य राज्ञः पुरोहितः। सत्यव्रतं महात्मानं देवकल्पं विशाम्पते ॥ ३ ॥

नहुष उवाच। करवाणि प्रियं किन्ते तन्मे ब्रूहि द्विजोत्तम। सर्वं कर्त्तास्मि भगवन् यद्यपि स्यात् सुदुष्करम् ॥ ४ ॥

च्यवन उवाच। श्रमेण महतायुक्ताः कैवर्त्ता मत्स्यजीविनः। मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ॥ ५ ॥

नहुष उवाच। सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहितः। निष्क्रयार्थं भगवतो यथाह भृगुनन्दनः ॥ ६ ॥

च्यवन उवाच। सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप। सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ॥ ७ ॥

नहुष उवाच। सहस्राणां शतं विप्र निषादेभ्यः प्रदीयताम्। स्यादिदं भगवन् मूल्यं किं वान्यन्मन्यते भवान् ॥ ८ ॥

च्यवन उवाच। नाहं शतसहस्रेण निमेयः पार्थिवर्षभ। दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ॥ ९ ॥

नहुष उवाच। कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित। यदेतदपि नो मूल्यमतो भूयः प्रदीयताम् ॥ १० ॥

च्यवन उवाच। राजन्नार्हाम्यहं कोटिं भूयो वापि महाद्युते। सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तयः ॥ ११ ॥

नहुष उवाच। अर्द्धं राज्यं समग्रं वा निषादेभ्यः प्रदीयताम्। एतन्मूल्यमहं मन्ये किं वान्यन्मन्यसे द्विज ॥ १२ ॥

च्यवन उवाच। अर्द्धं राज्यं समग्रं वा मूल्यं नार्हामि पार्थिव। सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यताम् ॥ १३ ॥

भीष्म उवाच। महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्षितः।

स चिन्तयामास तदा सहामात्यपुरोहितः ॥ १४ ॥ तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः। नहुषस्य समीपस्थो गवि जातोऽभवन्मुनिः ॥ १५ ॥ स तमाभाष्य राजानमब्रवीत् द्विजसत्तमः। तोषयिष्याम्यहं क्षिप्रं यथा तुष्टो भविष्यति ॥ १६ ॥ नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा। भवतो यदहं ब्रूयां तत् कार्य्यमविशङ्कया ॥ १७ ॥

नहुष उवाच। ब्रवीतु भगवन् मूल्यं महर्षेः सदृशं भृगोः। परित्रायस्व मामस्मद्विषयञ्च कुलञ्च मे ॥ १८ ॥ हन्याद्धि भगवान् क्रुद्धस्त्रैलोक्यमपि केवलम्। किं पुनर्म्मां तपोहीनं बाहुवीर्य्यपरायनम् ॥ १९ ॥ अगाधेऽम्भसि मग्नस्य सामात्यस्य सहर्त्विजः। प्लवो भव महर्षे त्वं कुरु मूल्यविनिश्चयम् ॥ २० ॥

भीष्म उवाच। नहुषस्य वचः श्रुत्वा गवि जातः प्रतापवान्। उवाच हर्षयन् सर्व्वानमात्यान् पार्थिवञ्च तम् ॥ २१ ॥ अनर्घेया महाराज द्विजा वर्णेषु चोत्तमाः। गावश्च पुरुषव्याघ्र गोर्मूल्यं परिकल्प्यताम् ॥ २२ ॥ नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप। हर्षेण महता युक्तः सहामात्यपुरोहितः ॥ २३ ॥ अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम्। इदं प्रोवाच नृपते वाचा सन्तर्पयन्निव ॥ २४ ॥

नहुष उवाच। उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव। एतन्मूल्यमहं मन्ये तव धर्मभृताम्वर ॥ २५ ॥

च्यवन उवाच। उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोऽस्मि तेऽनघ। गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युत ॥ २६ ॥ कीर्त्तनं श्रवणं दानं दर्शनञ्चापि पार्थिव। गवां प्रशस्यते वीर सर्व्वपापहरं शिवम् ॥ २७ ॥ गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते। अन्नमेव सदा गावो देवानां परमं हविः ॥ २८ ॥ स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ। गावो

यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ २९ ॥ अमृतं ह्यव्ययं दिव्यं चरन्ति च वहन्ति च। अमृतायतनञ्चैताः सर्वलोकनमस्कृताः ॥ ३० ॥ तेजसा वपुषा चैव गावो वह्निसमा भुवि। गावो हि सुमहत्तेजः प्राणिनाञ्च सुखप्रदाः ॥ ३१ ॥ निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम्। विराजयति तं देशं पापञ्चास्यापकर्षति ॥ ३२ ॥ गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः। गावः कामदुहो देव्यो नान्यत् किञ्चित् परं स्मृतम् ॥ ३३ ॥ इत्येतत् गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ। गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ३४ ॥

निषादा ऊचुः। दर्शनं कथनञ्चैव सहास्माभिः कृतं मुने। सतां सप्तपदं मित्रं प्रसादं न कुरु प्रभो ॥ ३५ ॥ हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः। एवं त्वमपि धर्मात्मा पुरुषाग्निः प्रतापवान् ॥ ३६ ॥ प्रसादयामहे विद्वन् भवन्तं प्रणता वयम्। अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ॥ ३७ ॥

च्यवन उवाच। कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च। नरं समूलं दहति कक्षमग्निरिव ज्वलन् ॥ ३८ ॥ प्रतिगृह्णामि वो धेनुं कैवर्त्ता मुक्तकिल्बिषाः। दिवं गच्छत वै क्षिप्रं मत्स्यैः सह जलोद्भवैः ॥ ३९ ॥

भीष्म उवाच। ततस्तस्य प्रभावात्ते महर्षेर्भावितात्मनः। निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ॥ ४० ॥ ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान्। आरोहमाणां स्त्रिदिवं मत्स्यांश्च भरतर्षभ ॥ ४१ ॥ ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः। वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपम् ॥ ४२ ॥ ततो राजा महावीर्य्यो नहुषः पृथिवीपतिः। परमित्यब्रवीत् प्रीतस्तदा भरतसत्तम ॥ ४३ ॥ ततो जग्राह धर्मे स स्थितिमिन्द्रनिभो नृपः। तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत् ॥ ४४ ॥

समाप्तदीक्षश्चवनस्ततोऽगच्छत् स्वमाश्रमम् । गविजश्च महातेजाः स्वमाश्रमपदं ययौ ॥ ४५ ॥ निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप । नहुषोऽपि वरं लब्धा प्रविवेश स्वकं पुरम् ॥ ४६ ॥ एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि । दर्शने यादृशः स्नेहः संवासे वा युधिष्ठिर ॥ ४७ ॥ महाभाग्यं गवाञ्चैव तथा धर्मविनिश्चयम् । किं भूयः कथ्यतां वीर किन्ते हृदि व्यवस्थितम् ॥ ४८ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि च्यवनोपाख्याने एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

युधिष्ठिर उवाच । संशयो मे महाप्राज्ञ सुमहान् सागरोपमः । तं मे शृणु महाबाहो श्रुत्वा व्याख्यातुमर्हसि ॥ १ ॥ कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो । रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि ॥ २ ॥ कथमेष समुत्पन्नो रामः सत्यपराक्रमः । कथं ब्रह्मर्षिवंशोऽयं क्षत्रधर्मा व्यजायत ॥ ३ ॥ तदस्य सम्भवं राजन्निखिलेनानुकीर्त्तय । कौशिकाच्च कथं वंशात् क्षत्राद्वै ब्राह्मणोऽभवत् ॥ ४ ॥ अहो प्रभावः सुमहानासीद्वै सुमहात्मनः । रामस्य च नरव्याघ्र विश्वामित्रस्य चैव हि ॥ ५ ॥ कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाभवत् । एष दोषः सुतान् हित्वा तत्त्वं व्याख्यातुमर्हसि ॥ ६ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । च्यवनस्य च सम्वादं कुशिकस्य च भारत ॥ ७ ॥ एतं दोषं पुरा दृष्ट्वा भार्गवश्चवनस्तदा । आगामिनं महाबुद्धिः स्ववंशे मुनिसत्तमः ॥ ८ ॥ निश्चित्य मनसा सर्वं गुणदोषं बलाबलम् । दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ॥ ९ ॥ च्यवनः समनुप्राप्य

कुशिकं वाक्यमब्रवीत्। वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ॥ १०॥

कुशिक उवाच। भगवन् सहधर्म्मोऽयं पण्डितैरिह धार्य्यते। प्रदानकाले कन्यानामुच्यते च सदा बुधैः॥ ११॥ यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन। तत् कार्य्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि॥ १२॥

भीष्म उवाच। अथासनमुपादाय च्यवनस्य महामुनेः। कुशिको भार्य्यया सार्द्धमाजगाम यतो मुनिः॥ १३॥ प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत्। कारयामास सर्वाश्च क्रियास्तस्य महात्मनः॥ १४॥ ततः स राजा च्यवनं मधुपर्क्कं यथाविधि। ग्राहयामास चाव्यग्रो महात्मा नियतव्रतः॥ १५॥ सत्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत्। भगवन् परवन्तौ ब्रूहि किं करवावहै॥ १६॥ यदि राज्यं यदि धनं यदि गाः संशितव्रत। यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते॥ १७॥ इदं गृहमिदं राज्यमिदं धर्मासनञ्च ते। राजा त्वमसि शाध्युर्वीं योऽहं सपरवांस्त्वयि॥ १८॥ एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा। कुशिकं प्रत्युवाचेदं मुदा परमया पुनः॥ १९॥ न राज्यं कामये राजन्न धनं न च योषितः। न च गा न च वै देशान्न यज्ञं श्रूयतामिदम्॥ २०॥ नियमं किञ्चिदारप्स्ये युवयोर्यदि रोचते। परिचर्य्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया॥ २१॥ एवमुक्ते तदा तेन दम्पती तौ जहर्षतुः। प्रत्यब्रूताञ्च तमृषिमेवमस्त्विति भारत॥ २२॥ अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम्। गृहोद्देशं ततस्तस्य दर्शनीयमदर्शयत्॥ २३॥ इयं शय्या भगवतो यथाकाममिहोष्यताम्। प्रयतिष्यावहे प्रीतिमाहर्त्तुं ते तपोधन॥ २४॥ अथ सूर्य्योऽतिचक्राम तेषां संवदतां यथा। अथर्षिश्चोदयामास पानमन्नं तथैव च॥ २५॥

तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा। किमन्नजातमिष्टन्ते किमुपस्थापयाम्यहम्॥ २६॥ ततः स परया प्रीत्या प्रत्युवाच नराधिपम्। ऐपपत्तिकमाहारं प्रयच्छस्वेति भारत॥ २७॥ तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः। यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिप॥ २८॥ ततः स भुक्त्वा भगवान् दम्पती प्राह धर्मवित्। स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो॥ २९॥ ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः। संविवेश नरेशस्तु सपत्नीकः स्थितोऽभवत्॥ ३०॥ न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः। संवाहितव्यौ मे पादौ जागृतव्यञ्च तेऽनिशम्॥ ३१॥ अविशङ्कस्तु कुशिकस्तथेत्येवाह धर्मवित्। न प्रबोधयतान्तौ च तं तथा रजनीक्षये॥ ३२॥ यथा तथा महर्षिस्तु शुश्रूषापरमौ तदा। बभूवतुर्महाराज प्रयतावथ दम्पती॥ ३३॥ ततः स भगवान् विप्रः समादिश्य नराधिपम्। सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम्॥ ३४॥ स तु राजा निराहारः सभार्य्यः कुशनन्दनः। पर्य्युपासत तं हृष्टश्च्यवनाराधने रतः॥ ३५॥ भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः। अकिञ्चिदुक्त्वा तु गृहान्निश्चक्राम महातपाः॥ ३६॥ तमन्वगच्छतां तौ च क्षुधितौ श्रमकर्षितौ। भार्य्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयन्॥ ३७॥ तयोस्तु प्रेक्षतोरेव भार्गवानां कुलोद्वहः। अन्तर्हितोऽभूद्राजेन्द्र ततो राजापतत् क्षितौ॥ ३८॥ स मुहूर्त्तं समाश्वास्य सह देव्या महाद्युतिः। पुनरन्वेषणे यत्नमकरोत् परमं तदा॥ ३९॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि च्यवनोपाख्याने द्विपञ्चाशोऽध्यायः॥ ५२॥

---

युधिष्ठिर उवाच। तस्मिनन्तर्हिते विप्रे राजा किमकरोत्तदा। भार्य्या चास्य महाभागा तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अदृष्ट्वा स महीपालस्तमृषिं सह भार्य्यया। परिश्रान्तो निववृते व्रीड़ितो नष्टचेतनः ॥ २ ॥ स प्रविश्य पुरीं दीनो नाभ्यभाषत किञ्चन। तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ॥ ३ ॥ अथ शून्येन मनसा प्रविश्य स्वगृहं नृपः। ददर्श शयने तस्मिन् शयानं भृगुनन्दनम् ॥ ४ ॥ विस्मितौ तावृषिं दृष्ट्वा तदाश्चर्य्यं विचिन्त्य च। दर्शनात्तस्य तु तदा विश्रान्तौ संबभूवतुः ॥ ५ ॥ यथास्थानन्तु तौ स्थित्वा भूयस्तं संववाहतुः। यथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥ ६ ॥ तेनैव च स कालेन प्रत्यबुध्यत वीर्य्यवान्। न च तौ चक्रतुः किञ्चिद्विकारं भयशङ्कितौ ॥ ७ ॥ प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशाम्पते। तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ॥ ८ ॥ तौ तथेति प्रतिश्रुत्य क्षुधितौ श्रमकर्षितौ। शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ९ ॥ ततः सुखासीनमृषिं वाग्यतौ संववाहतुः। न च पर्य्याप्तमित्याह भार्गवः सुमहातपाः ॥ १० ॥ तदा तौ निर्विकारौ तु लक्षयामास भार्गवः। ततः उत्थाय सहसा स्नानशालां विवेश ह ॥ ११ ॥ क्लृप्तमेव तु तत्रासीत् स्नानीयं पार्थिवोचितम्। असत्कृत्य च तत् सर्वं तत्रैवान्तरधीयत ॥ १२ ॥ स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा। नासूयाञ्चक्रतुस्तौ च दम्पती भरतर्षभ ॥ १३ ॥ अथ स्नातः स भगवान् सिंहासनगतः प्रभुः। दर्शयामास कुशिकः सभार्य्यं कुरुनन्दन ॥ १४ ॥ सहृष्टवदनो राजा सभार्य्यः कुशिको मुनिम्। सिद्धमन्नमिति प्राह्वो निर्विकारोऽन्यवेदयत् ॥ १५ ॥ आनीयतामिति मुनिस्तञ्चोवाच नराधिपम्। स राजा समुपाजह्रे तदन्नं सह भार्य्यया ॥ १६ ॥ मांसप्रकारान् विविधान् शाकानि विविधानि च ॥ १७ ॥ रसा-

नापूपकां श्चित्रान्मोदकानथ खाण्डवान्। रसान्नानाप्रकारांश्च वन्यञ्च मुनिभोजनम् ॥ १८ ॥ फलानि च विचित्रानि राजभोग्यानि भुरिशः। वदरेङ्गुदकाश्मर्य्यभल्लातकफलानि च ॥ १९ ॥ गृहस्थानाञ्च यद्भोज्यं यच्चापि वनवासिनाम्। सर्व्वमाहारयामास राजा शापभयात्ततः ॥ २० ॥ अथ सर्व्वमुपन्यस्तमग्रतश्चप्रवनस्य तत्। ततः सर्व्वं समानीय तच्च शय्यासनं मुनिः ॥ २१ ॥ वस्त्रैः शुभ्रैरवच्छाद्य भोजनोपस्करैः सह। सर्व्वमादीपयामास च्यवनो भृगुनन्दनः ॥ २२ ॥ न च तौ चक्रतुः क्रोधं दम्पती सुमहामती। तयोः सम्प्रेक्षतोरेव पुनरन्तर्हितोभवत् ॥ २३ ॥ तथैव च स राजर्षिः तस्थौ तां रजनीं तदा। सभार्य्यो वाग्यतः श्रीमान् न कोपं स समाविशत् ॥ २४ ॥ नित्यं संस्कृतमन्नन्तु विविधं राजवेश्मनि। शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः ॥ २५ ॥ वस्त्रञ्च विविधाकारमभवत् समुपार्ज्जितम्। न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा ॥ २६ ॥ पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम्। सभार्य्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ २७ ॥ तथेति च प्राह नृपो निर्व्विशङ्कस्तपोधनम्। क्रीड़ारथस्तु भगवन्नुत सांग्रामिको रथः ॥ २८॥ इत्युक्तः स मुनी राज्ञा तेन हृष्टेन तद्वचः। च्यवनः प्रत्युवाचेदं हृष्टः परपुरञ्जयम् ॥ २९ ॥ सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको रथः। सायुधः सपताकश्च शक्तीकनकयष्टिमान् ॥ ३० ॥ किङ्किनीस्वननिर्घोषो युक्तस्तोरणकल्पनैः। जाम्बुनदनिबद्धैश्च परमेषुशतान्वितः। ततः स तत्तथेत्युक्त्वा कल्पयित्वा महारथम् ॥ ३१ ॥ भार्य्यां वामे धुरि तदा चात्मानं दक्षिणे तदा। त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ॥ ३२ ॥ सर्व्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् ॥ ३३ ॥ भगवन् क्व रथो यातु ब्रवीतु भृगुनन्दन। यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः। एवमुक्तस्तु भगवान् प्रत्युवाचाथ

तं नृपम् ॥ ३४ ॥ इतः प्रभृति यातव्यं पदकं पदकं शनैः । श्रमो मम यथा न स्यात्तथा मे च्छन्दचारिणौ ॥ ३५ ॥ सुसुखञ्चैव वोढव्यो जनः सर्वश्च पश्यतु । नोत्सार्याः पथिकाः केचित्तेभ्यो-दास्ये वसु ह्यहम् ॥ ३६ ॥ ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि । सर्वान् दास्याम्यशेषेण धनं रत्नानि चैव हि ॥ ३७ ॥ क्रियतां निखिलेनैतन्माविचारय पार्थिव । तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत् ॥ ३८ ॥ यद्यद्ब्रूयान्मुनिस्तत्तत् सर्वं देयमशङ्कितैः । ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ॥ ३९ ॥ कृताकृतञ्च कनकं गजेन्द्राश्चाचलोपमाः । अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ॥ ४० ॥ हाहाभूतञ्च तत् सर्वमासी-न्नगरमार्त्तवत् । तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रतोदितौ ॥ ॥ ४१ ॥ पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः । वेपमानौ निराहारौ पञ्चाशद्रात्रिकर्षितौ ॥ ४२ ॥ कथञ्चिदूहतुर्वीरौ दम्पती तौ रथोत्तमम् । बहुशो भृशविद्धौ तौ स्रवन्तौ च क्षतो-द्भवम् ॥ ४३ ॥ ददृशाते महाराज पुष्पिताविव किंशुकौ । तौ दृष्ट्वा पौरवर्गास्तु भृशं शोकसमाकुलः ॥ ४४ ॥ अभिशापभया-त्रस्तो न च किञ्चिदुवाच ह । द्वन्द्वशश्चाब्रुवन् सर्वे पश्यध्वं तप-सोबलम् ॥ ४५ ॥ क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नेह शक्नुमः । अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ॥ ४६ ॥ राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् । श्रान्तावपि हि कृच्छ्रेण रथ-मेतत् समूहतुः । न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ ४७ ॥

भीष्म उवाच । ततः स निर्विकारौ तु दृष्ट्वा भृगुकुलोद्वहः । वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ ४८ ॥ तत्रापि राजा प्रीतात्मा यथादिष्टमथाकरोत् । ततोऽस्य भगवान् प्रीतो बभूव मुनिसत्तमः ॥ ४९ ॥ अवतीर्य रथश्रेष्ठाद्दम्पती तौ मुमोच ह । विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ॥ ५० ॥ स्निग्धगम्भी-

स्तथा वाचा भार्गवः सुप्रसन्नया। ददानि वां वरं श्रेष्ठं तं ब्रूतामिति भारत ॥ ५१ ॥ सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः। पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥ ५२ ॥ अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह। विश्रान्तौ च प्रभावात्ते ऊचतुस्तौ च भार्गवम् ॥ ५३ ॥ अथ तौ भगवान् प्राह प्रहृष्टश्च्यवनस्तदा। न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ ५४ ॥ रमणीयः समुद्देशो गङ्गातीरमिदं शुभम्। कञ्चित् कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ ५५ ॥ गम्यतां स्वपुरं तत्र विश्रान्तः पुनरेष्यसि। इहस्थं मां सभार्य्यस्त्वं द्रष्टासि श्वो नराधिप ॥५६॥ न च मन्युस्त्वया कार्य्यः श्रेयस्ते समुपस्थितम्। यत् काङ्क्षितं हृदिस्थं ते तत् सर्वं हि भविष्यति ॥ ५७ ॥ इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना। प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ॥५८॥ न मे मन्युर्महाभाग पूतौ स्वो भगवंस्त्वया। संवृत्तौ यौ वनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ ५९ ॥ प्रतोदेन व्रणा ये मे सभार्य्यस्य त्वया कृताः। तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्य्यया ॥ ६० ॥ इमाञ्च देवीं पश्यामि वपुषाप्सरसोपमाम्। श्रिया परमया युक्तां यथा दृष्टा पुरा मया ॥ ६१ ॥ तव प्रसादसंवृत्तमिदं सर्वं महामुने। नैतच्चित्रन्तु भगवंस्त्वयि सत्यपराक्रम ॥६२॥ इत्युक्तः प्रत्युवाचैनं कुशिकं च्यवनस्तदा। आगच्छेथाः सभार्य्यश्च त्वमिहेति नराधिप ॥ ६३ ॥ इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम्। प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥ ६४ ॥ तत एनमुपाजग्मुरमात्याः सपुरोहिताः। बलस्था गणिका युक्ता सर्वाः प्रकृतयस्तथा ॥ ६५ ॥ तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन्। प्रविवेश पुरं हृष्टः पूज्यमानोऽथ वन्दिभिः ॥६६॥ ततः प्रविश्य नगरं कृत्वा पूर्वाह्णिकीः क्रियाः। भुक्त्वा सभार्य्यो रजनीमुवास स महाद्युतिः ॥ ६७ ॥ ततस्तु तौ नवमभिवीक्ष्य

यौवनं परस्परं विगतस्पृहाविवामरौ। ननन्दतुः शयनगतौ वपुर्धरौ श्रियायुतौ द्विजवरदत्तया तदा ॥ ६८ ॥ अथाप्यृषिर्भृगुकुलकीर्त्तिवर्द्धनस्तपोधनो वनमभिराममृद्धिमत्। मनीषया बहुविधरत्नभूषितं ससर्ज्जयन्न पुरि शतक्रतोरपि ॥ ६९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि च्यवनसंवादे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

भीष्म उवाच। ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः। कृतापूर्वाह्णिकः प्रायात् सभार्य्यस्तद्वनं प्रति ॥ १ ॥ ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् । मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ॥ २ ॥ तत्र दिव्यानभिप्रायान् ददर्श कुशिकस्तदा। पर्वतान् रम्यसानूंश्च नलिनीश्च सपङ्कजाः ॥ ३ ॥ चित्रशालाश्च विविधास्तोरणानि च भारत । शाद्वलोपचितां भूमिं यथा काञ्चनकुट्टिमाम् ॥ ४ ॥ सहकारान् प्रफुल्लांश्च केतकोद्दालकान् धवान्। अशोकान् सहकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ॥ ५ ॥ चम्पकांस्तिलकान् भव्यान् पनसान् वञ्जुलानपि। पुष्पितान् कर्णिकारांश्च तत्र तत्र ददर्श ह ॥ ६ ॥ श्यामान् वारणपुष्पांश्च तथाष्टपदिकालताः। तत्र तत्र परिक्लृप्ता ददर्श स महीपतिः ॥ ७ ॥ वृक्षान् पद्मोत्पलधरान् सर्वर्त्तुकुसुमांस्तथा। विमानप्रतिमांश्चापि प्रासादान् शैलसन्निभान् ॥ ८ ॥ शीतलानि च तोयानि क्वचिदुष्णानि भारत। आसनानि विचित्राणि शयनप्रवराणि च ॥९॥ पर्य्यङ्कान् रत्नसौवर्णान् परार्द्ध्यास्तरणावृतान् । भोज्यभोज्यमनन्तञ्च तत्र तत्रोपकल्पितम् ॥ १० ॥ वाणीवादान् शुकांश्चैव सारिकान् भृङ्गराजकान्। कोकिलान् शतपत्रांश्च सकोयष्टिककुक्कुभान् ॥ ११ ॥ मयूरान् कुक्कुटांश्चापि दात्यूहान् जीवजीव-

कान् । चकोरान् वानरान् हंसान् सारसांश्चक्रसाह्वयान् ॥ १२ ॥
समन्ततः प्रमुदितान् ददर्श सुमनोहरान् । क्वचिदप्सरसां सङ्घान्
गन्धर्व्वाणाञ्च पार्थिव ॥ १३ ॥ कान्ताभिरपरांस्तत्र परिष्वक्तान्
ददर्श ह । न ददर्श च तान् भूयो ददर्श च पुनर्नृपः ॥ १४ ॥
गीतध्वनिं सुमधुरं तथैवाध्यापनध्वनिम् । हंसान् सुमधुरांश्चापि
तत्र शुश्राव पार्थिव ॥ १५ ॥ तद्दृष्ट्वात्यद्भुतं राजा मनसाचिन्तय-
त्तदा । स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु ॥ १६ ॥
अहो सहशरीरेण प्राप्तोऽस्मि परमां गतिम् । उत्तरान् वा कुरून्
पुण्यानथ वाप्यमरावतीम् ॥ १७ ॥ किञ्चेदं महदाश्चर्य्यं संपश्या-
मीत्यचिन्तयत् । एवं संचिन्तयन्नेव ददर्श मुनिपुङ्गवम् ॥ १८ ॥
तस्मिन् विमाने सौवर्णे मणिस्तम्भसमाकुले । महार्हे शयने
दिव्ये शयानं भृगुनन्दनम् ॥ १९ ॥ तमभ्ययात् प्रहर्षेण नरेन्द्रः
सह भार्य्यया । अन्तर्हितस्ततो भूयश्च्यवनः शयनञ्च तत् ॥ २० ॥
ततोऽन्यस्मिन् वनोद्देशे पुनरेव ददर्श तम् । कौश्यां वृष्यां समा-
सीनं जपमानं महाव्रतम् ॥ २१ ॥ एवं योगबलात् विप्रो मोहया-
मास पार्थिवम् । क्षणेन तद्बलञ्चैव ते वै चाप्सरसां गणाः ।
गन्धर्व्वाः पादपाश्चैव सर्व्वमन्तरधीयत ॥ २२ ॥ निःशब्दमभव-
च्चापि गङ्गाकूलं पुनर्नृप । कुशवल्मीकभूयिष्ठं बभूव च यथा
पुरा ॥ २३ ॥ ततः स राजा कुशिकः सभार्य्यस्तेन कर्म्मणा ।
विस्मयं परमं प्राप्तस्तद्दृष्ट्वा महदद्भुतम् ॥ २४ ॥ ततः प्रोवाच
कुशिको भार्य्यां हर्षसमन्वितः । पश्य भद्रे यथा भावाश्चित्रा
दृष्टाः सुदुर्लभाः ॥ २५ ॥ प्रासादाद्भृगुमुख्यस्य किमन्यत्र तपो-
बलात् । तपसा तदवाप्यं हि यत्तु शक्यं मनोरथैः ॥ २६ ॥
त्रैलोक्यराज्यादपि हि तप एव विशिष्यते । तपसा हि सुत-
प्तेन शक्यो मोक्षस्तपोबलात् ॥ २७ ॥ अहो प्रभावो देवर्षे-
श्च्यवनस्य महात्मनः । इच्छयैष तपोवीर्य्यादन्यान् लोकान् सृजे-

दपि ॥ २८ ॥ ब्राह्मणा एव जायेरन् पुरुषवाक् बुद्धिकर्मिणः ।
उत्सहेदिह क्लैव कोऽन्यो वै च्यवनादृते ॥ २९ ॥ ब्राह्मण्यं
दुर्लभं लोके राज्यं हि सुलभं नरैः । ब्राह्मण्यस्य प्रभावाद्धि
रथे युक्तौ स्वधुर्य्यवत् ॥ ३० ॥ इत्येवं चिन्तयानः स विदित-
श्च्यवनस्य वै । सम्प्रेक्ष्योवाच नृपतिं क्षिप्रमागम्यतामिति ॥ ३१ ॥
इत्युक्तः सहभार्य्यस्तु सोऽभ्यगच्छन्महामुनिम् । शिरसा वन्दनी-
यन्तमवन्दत च पार्थिवः ॥ ३२ ॥ तस्याशिषः प्रयुज्याथ स मुनिस्तं
नराधिपम् । निषीदेत्यब्रवीद्धीमान् सान्त्वयन् पुरुषर्षभ ॥ ३३ ॥
ततः प्रकृतिमापन्नो भार्गवो नृपतेर्नृप । उवाच श्लक्ष्णया
वाचा तर्पयन्निव भारत ॥ ३४ ॥ राजन् सम्यग्जितानीह पञ्च
पञ्च स्वयं त्वया । मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन
वै ॥ ३५ ॥ सम्यगाराधितः पुत्र त्वया प्रवदतां वरः । न हि ते
वृजिनं किञ्चित् सुसूक्ष्ममपि विद्यते ॥ ३६ ॥ अनुजानीहि मां
राजन् गमिष्यामि यथागतम् । प्रीतोऽस्मि तव राजेन्द्र वरश्च
प्रतिगृह्यताम् ॥ ३७ ॥

कुशिक उवाच । अग्निमध्यगतेनेव भगवन् सन्निधौ मया ।
वर्त्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु ॥ ३८ ॥ एष एव वरो
मुख्यः प्राप्तो मे भृगुनन्दन । यत् प्रीतोऽसि मया ब्रह्मन् कुलं
त्रातञ्च मेऽनघ ॥ ३९ ॥ एष मेऽनुग्रहो विप्र जीविते च प्रयो-
जनम् । एतद्राज्यफलञ्चैव तपश्चैतत् फलं मम ॥ ४० ॥ यदि
त्वं प्रीतिमान् विप्र मयि वै भृगुनन्दन । अस्ति मे संशयः कश्चि-
त्तन्मे व्याख्यातुमर्हसि ॥ ४१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि च्यवनोपाख्याने
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

च्यवन उवाच। वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि। तं प्रब्रूहि नरश्रेष्ठ सर्वं सम्पादयामि ते॥ १॥

कुशिक उवाच। यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव। कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम्॥ २॥ शयनञ्चैकपार्श्वेन दिवसानेकविंशतिम्। अकिञ्चिदुक्त्वा गमनं बहिश्च मुनिपुङ्गव॥ ३॥ अन्तर्द्धानमकस्माच्च पुनरेव च दर्शनं। पुनश्च शयनं विप्र दिवसानेकविंशतिं॥ ३॥ तैलाभ्यक्तस्य गमनं भोजनञ्च गृहे मम। समुपानीय विविधं यद्दग्धं जातवेदसा॥ ५॥ निर्यानञ्च रथेनाशु सहसा यत्कृतं त्वया। धनानाञ्च विसर्गस्य वनस्यापि च दर्शनं॥ ६॥ प्रसादानां बहूनाञ्च काञ्चनानां महामुने। मणिविद्रुमपादानां पर्य्यङ्कानाञ्च दर्शनं॥ ७॥ पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणं। अतीव ह्यत्र मुह्यामि चिन्तयानो भृगूद्वह॥ ८॥ न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयं। एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन॥ ९॥

च्यवन उवाच। शृणु सर्वमशेषेण यदिदं येन हेतुना। न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव॥ १०॥ पितामहस्य वदतः पुरा देवसमागमे। श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु॥ ११॥ ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः। पौत्रस्ते भविता राजंस्तेजोवीर्य्यसमन्वितः॥ १२॥ ततस्ते कुलनाशार्थमहं त्वां समुपागतः। चिकीर्षन् कुशिकोच्छेदं सन्दिधक्षुः कुलन्तव॥ १३॥ ततोऽहमागम्य पुरे त्वामवोचं महीपते। नियमं कञ्चिदारप्स्ये शुश्रूषा क्रियतामिति॥ १४॥ न च ते दुष्करं किञ्चिदहमासादयं गृहे। तेन जीवसि राजर्षे न भवेथास्त्वमन्यथा॥ १५॥ एवं बुद्धिं समास्थाय दिवसानेकविंशति। सुप्तोऽस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव॥ १६॥ यदा त्वया सभार्य्येण संसुप्तो न प्रबोधितः। अहं तदैव ते प्रीतो मनसा

राजसत्तम ।१७॥ उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते। पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥ १८ ॥ अन्तर्हितः पुनश्चास्मि पुनरेव च ते गृहे। योगमास्थाय संसुप्तो दिवसानेकविंशतिं ॥ १९ ॥ क्षुधितो मामसूयेथाः श्रमाद्वेति नराधिप। एवं बुद्धिं समास्थाय कर्षितौ वां क्षुधा मया ॥ २० ॥ न च तेऽभूत् सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव। सभार्य्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहं ॥ २१ ॥ भोजनञ्च समानाय्य यत्तदा दीपितं मया। क्रुध्येथा यदि मात्सर्य्यादिति तन्मर्षितञ्च मे ॥२२॥ ततोऽहं रथमारुह्य त्वामवोचं नराधिप। सभार्य्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा ॥ २३ ॥ अविशङ्को नरपते प्रीतोऽहञ्चापि तेन ह। धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयेत् ॥ २४ ॥ ततः प्रीतेन ते राजन् पुनरेतत् कृतं तव। सभार्य्यस्य वनं भूयस्तद्विद्धि मनुजाधिप ॥ २५ ॥ प्रीत्यर्थं तव चैतन्मे स्वर्गसन्दर्शनं कृतं। यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं निदर्शनं ॥ २६ ॥ स्वर्गोद्देशस्त्वया राजन् सशरीरेण पार्थिव। मुहूर्त्तमनुभूतोऽसौ सभार्य्येण नृपोत्तमम् ॥ २७ ॥ निदर्शनार्थं तपसो धर्मस्य च नराधिप। तत्र यासीत् स्पृहा राजंस्तच्चापि विदितं मया ॥ २८ ॥ ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते। अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं नराधिप ॥ २९ ॥ एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात दुर्लभं। ब्राह्मणे सति चर्षित्वमृषित्वे च तपस्विता ॥ ३० ॥ भविष्यत्येष ते कामः कुशिकात् कौशिको द्विजः। तृतीयं पुरुषं तुभ्यं ब्राह्मणत्वं गमिष्यति ॥ ३१ ॥ वंशस्ते पार्थिवश्रेष्ठ भृगुनामेव तेजसा। पौत्रस्ते भविता विप्रस्तपस्वी पावकद्युतिः ॥ ३२ ॥ यः सदेव मनुष्याणां भयमुत्पादयिष्यति। त्रयाणामेव लोकानां सत्यमेतत् ब्रवीमि ते ॥ ३३ ॥ वरं गृहाण राजर्षे यत्ते मनसि वर्त्तते। तीर्थयात्रां गमिष्यामि पुराकालोऽभिवर्त्तते ॥ ३४ ॥

कुशिक उवाच । एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने । भवत्वेतद्धयथात्थ त्वं भवेत् पौत्रो ममानघ ॥ ३५ ॥ ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः । पुनश्चाख्यातुमिच्छामि भगवन् विस्तरेण वै ॥ ३६ ॥ कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन । कश्चासौ भविता बन्धुर्मम कश्चापि संमतः ॥ ३७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि च्यवनोपाख्याने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

च्यवन उवाच । अवश्यं कथनीयं मे तवैतन्नरपुङ्गव । यदर्थं त्वाहमुच्छेत्तुं सम्प्राप्तो मनुजाधिप ॥ १ ॥ भृगूणां क्षत्रिया याज्या नित्यमेतज्जनाधिप । ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ २ ॥ क्षत्रियाश्च भृगून् सर्वान् वधिष्यन्ति नराधिप । आगर्भादनुकृन्तन्तो दैवदण्डनिपीड़िताः ॥ ३ ॥ तत उत्पत्स्यतेऽस्माकं कुलगोत्रविवर्द्धनः । ऊर्वो नाम महातेजा ज्वलनार्कसमद्युतिः ॥ ४ ॥ स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति । महीं सपर्वतवनां यः करिष्यति भस्मसात् ॥ ५ ॥ कञ्चित् कालन्तु वह्निञ्च स एव शमयिष्यति । समुद्रे वड़वावक्त्रे प्रक्षिप्य मुनिसत्तमः ॥ ६ ॥ पुत्रं तस्य महाराज ऋचीकं भृगुनन्दनं । साक्षात् कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥ ७ ॥ क्षत्रियाणामभावाय दैवयुक्तेन हेतुना । स तु तं प्रतिगृह्यैव पुत्रे संक्रामयिष्यति ॥ ८ ॥ जमदग्नौ महाभागे तपसा भावितात्मनि । स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ॥ ९ ॥ कुलात्तु तव धर्मात्मन् कन्यां सोऽधिगमिष्यति । उद्भावनार्थं भवतो वंशस्य भरतर्षभ ॥ १० ॥ गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः । ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति ॥ ११ ॥ क्षत्रियं विप्र-

कर्माणं वृहस्पतिमिवौजसा । विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकं ॥ १२ ॥ तपसा महता युक्तं प्रदास्यति महाद्युतिः । स्त्रियौ तु कारणं तत्र परिवर्त्ते भविष्यतः ॥ १३ ॥ पितामहनियोगाद्वै नान्यथैतद्भविष्यति । तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति । भविता त्वञ्च सम्बन्धी भृगूणां भावितात्मनां ॥ १४ ॥

भीष्म उवाच । कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः । श्रुत्वा हृष्टोऽभवद्राजा वाक्यञ्चेदमुवाच ह ॥ १५ ॥ एवमस्त्विति धर्मात्मा तदा भरतसत्तम । च्यवनस्तु महातेजाः पुनरेव नराधिपं ॥ १६ ॥ वरार्थञ्चोदयामास तमुवाच स पार्थिवः । बाढ़मेवं करिष्यामि कामं त्वत्तो महामुने ॥ १७ ॥ ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् । एवमुक्तान्तथेत्येवं प्रत्युक्त्वा च्यवनोमुनिः ॥ १८ ॥ अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा । एतत्ते कथितं सर्वमशेषेण मया नृप ॥ १९ ॥ भृगूणां कुशिकानाञ्च अभिसम्बन्धकारणं । यथोक्तमृषिणा चापि तदा तद्भवन्नृप । जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव हि ॥ २० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि कुशिकच्यवनसम्वादे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

युधिष्ठिर उवाच । मुह्यामीव निशम्याद्य चिन्तयानः पुनः पुनः । हीनां पार्थिवसङ्घातैः श्रीमद्भिः पृथिवीमिमां ॥ १ ॥ प्राप्य राज्यानि शतशो महीं जित्वा च भारत । कोटिशः पुरुषान् हत्वा परितप्ये पितामह ॥ २ ॥ का नु तासां वरस्त्रीणां समवस्था भविष्यति । या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा ॥ ३ ॥ वयं हि तान् कुरून् हत्वा ज्ञातींश्च सुहृदोऽपि वा । अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ॥ ४ ॥ शरीरं

योक्तुमिच्छामि तपसोग्रेण भारत। उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशाम्पते ॥ ५ ॥

वैशम्पायन उवाच। युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः। परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ॥ ६ ॥ रहस्यमद्भुतञ्चैव शृणु वक्ष्यामि यत्त्वयि। या गतिः प्राप्यते येन प्रेत्यभावे विशाम्पते ॥ ७ ॥ तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः। आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥ ८ ॥ ज्ञानविज्ञानमारोग्यं रूपं सम्पत्तथैव च। सौभाग्यञ्चैव तपसा प्राप्यते भरतर्षभ ॥ ९ ॥ धनं प्राप्नोति तपसा मौनेनाज्ञां प्रयच्छति। उपभोगांस्तु दानेन ब्रह्मचर्य्येण जीवितं ॥ १० ॥ अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले। फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ ११ ॥ पयोभक्षो दिवं याति दानेन द्रविणाधिकः। गुरुशुश्रूषया विद्यां नित्यश्राद्धेन सन्ततिं ॥ १२ ॥ गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशिनां। स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ॥ १३ ॥ नित्यस्नायी भवेद्दक्षः सन्ध्ये तु द्वे जपन् द्विजः। मरुं साधयतो राज्यं नाकपृष्ठमनाशके ॥ १४ ॥ शय्यासनानि यानानि योगयुक्ते तपोधने। अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ॥ १५ ॥ स्थण्डिले शयमानानां गृहाणि शयनानि च। चीरवल्कलवासोभिर्वासांस्याभरणानि च ॥ १६ ॥ रसानां प्रतिसंहारात् सौभाग्यमिह विन्दति। आमिषप्रतिसंहारात् प्रजास्यायुष्मती भवेत् ॥ १७ ॥ उदवासं वसेद्यस्तु स नाकाधिपतिर्भवेत्। सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ॥ १८ ॥ कीर्त्तिर्भवति दानेन तथारोग्यमहिंसया। द्विजशुश्रूषया राज्यं द्विजत्वञ्चापि पुष्कलं ॥ १९ ॥ पानीयस्य प्रदानेन कीर्त्तिर्भवति शाश्वती। अन्नस्य तु प्रदानेन तृप्यते कामभोगतः ॥ २० ॥ सान्त्वदः सर्व्वभूतानां सर्व्वशोकैर्विमुच्यते।

देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति॥२१॥ दीपालोक-प्रदानेन चक्षुष्मान् भवते नरः। प्रेक्षणीय प्रदानेन स्मृतिं मेधाञ्च विन्दति॥ २२ ॥ गन्धमाल्यप्रदानेन कीर्त्तिर्भवति पुष्कला। केशश्मश्रु धारयतामग्र्या भवति सन्तति ॥२३॥ उपवासञ्च दीक्षाञ्च अभिषेकञ्च पार्थिव। कृत्वा द्वादशवर्षाणि वीरस्थाना-द्विशिष्यते॥२४॥ दासीदासमलङ्कारान् क्षेत्राणि च गृहाणि च। ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ॥२५॥ क्रतु-भिश्चोपवासैश्च त्रिदिवं याति भारत। लभते च शिवं ज्ञानं फलपुष्पप्रदो नरः॥२६॥ सुवर्णशृङ्गैस्तु विराजितानां गवां सहस्रस्य नरः प्रदानात्। प्राप्नोति पुण्यं दिवि देवलोकमित्येव-माहुर्द्दिवि देवसङ्घाः॥२७॥ प्रयच्छते यः कपिलां सवत्सांक कांस्योपदोहां कनकाग्रशृङ्गीं। तैस्तैर्गुणैः कामदुहास्य भूत्वा नरं प्रदातारमुपैति सा गौः ॥ २८ ॥ यावन्ति रोमाणि भवन्ति धेन्वास्तावत् फलं प्राप्य स गोप्रदानात्। पुत्रांश्च पौत्रांश्च कुलञ्च सर्वमासप्तमं तारयते परत्र॥२९॥ सदक्षिणां काञ्चन-चारुशृङ्गीं कांस्योपदोहां द्रविणोत्तरीयां। धेनुं तिलानां ददतो द्विजाय लोका वसूनां सुलभ भवन्ति॥३०॥ स्वकर्मभिर्मानवं सन्निरुद्धं तीव्रान्धकारे नरके पतन्तं। महार्णवे नौरिव वायु-युक्ता दानं गवां तारयते परत्र॥३१॥ यो ब्रह्मदेयान्तु ददाति कन्यां भूमिप्रदानञ्च करोति विप्रे। ददाति चान्नं विधिवच्च यश्च स लोकमाप्नोति पुरन्दरस्य॥ ३२ ॥ नैवेशिकं सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय। स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः कुरुषुत्तरेषु॥३३॥ धूर्य्यप्रदानेन गवां तथा वै लोकानवाप्नोति नरो वसूनां। स्वर्गाय चाहुस्तु हिरण्यदानं ततो विशिष्टं कनकप्रदानं॥३४॥ छत्रप्रदानेन गृहं वरिष्ठं यानं तथोपानहसम्प्रदाने। वस्त्रप्रदानेन फलं सुरूपं गन्धप्रदानात्

सुरभिर्नरः स्यात् ॥ ३५ ॥ पुष्पोपगं वाथ फलोपगं वा यः पादपं स्पर्शयते द्विजाय। स स्त्रीसमृद्धं रङ्करत्नपूर्णं लभत्ययत्नोपगतं गृहञ्च ॥ ३६ ॥ भक्ष्यान्नपानीयरसप्रदाता सर्वान् समाप्नोति रसान् प्रकामं। प्रतिश्रयाच्छादनसंप्रदाता प्राप्नोति तान्येव न संशयोऽत्र ॥ ३७ ॥ स्रग्धूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः। दद्याद्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च नरेन्द्रलोके ॥ ३८ ॥ वीजैरशून्यं शयनैरुपेतं दद्याद्गृहं यः पुरुषो द्विजाय। पुण्याभिरामं बहुरत्नपूर्णं लभत्यधिष्ठानवरं स राजन् ॥ ३९ ॥ सुगन्धिचित्रास्तरणोपधानं दद्यान्नरो यः शयनं द्विजाय। रूपान्वितां पक्षवतीं मनोज्ञां भार्य्यामयत्नोपगतां लभेत् सः ॥ ४० ॥ पितामहस्यानवरो वीरशायी भवेन्नरः। नाधिकं विद्यते यस्मादित्याहुः परमर्षयः ॥ ४१ ॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः। नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ॥ ४२॥ ततो युधिष्ठिरः प्राह पाण्डवान् पुरुषर्षभ। पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः ॥ ४७ ॥ ततस्तु पाण्डवाः सर्वे द्रौपदी च यशस्विनी। युधिष्ठिरस्य तद्वाक्यं वाढ़मित्यभ्यपूजयन् ॥ ४४ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

युधिष्ठिर उवाच। आरामाणां तड़ागानां यत् फलं कुरुपुङ्गव। तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ १ ॥

भीष्म उवाच। सुप्रदर्शा वलवती चित्रा धातुविभूषिता। उपेता सर्वभूतैश्च श्रेष्ठा भूमिरिहोच्यते ॥ २ ॥ तस्याः क्षेत्रविशेषञ्च तड़ागानाञ्च वन्धनं। ऐदकानि च सर्वाणि प्रवक्ष्याम्यनु-

पूर्वशः ॥ ३ ॥ तड़ागानाञ्च वक्ष्यामि कृतानाञ्चापि ये गुणाः। त्रिषु लोकेषु सर्वत्र पूजनीयस्तड़ागवान् ॥ ४ ॥ अथवा मित्रसदनं मैत्रं मित्रविवर्द्धनं। कीर्त्तिसञ्जननं श्रेष्ठं तड़ागानां निवेशनं ॥ ५ ॥ धर्म्मस्यार्थस्य कामस्य फलमाहुर्म्मनीषिणः। तड़ागं सुकृतं देशे क्षेत्रमेकं महाश्रयं ॥ ६ ॥ चतुर्विधानं भूतानां तड़ागमुपलक्षयेत्। तड़ागानि च सर्वाणि दिशन्ति श्रियमुत्तमां ॥ ७ ॥ देवा मनुष्या गन्धर्वाः पितरोरगराक्षसाः। स्थावराणि च भूतानि संश्रयन्ति जलाशयं ॥ ८ ॥ तस्मात्तांस्ते प्रवक्ष्यामि तड़ागे ये गुणाः स्मृताः। या च तत्र फलावाप्तिर्ऋषिभिः समुदाहृता ॥९॥ वर्षाकाले तड़ागे तु सलिलं यस्य तिष्ठति। अग्निहोत्रफलं तस्य फलमाहुर्म्मनीषिणः ॥ १० ॥ शरत्काले तु सलिलं तड़ागे यस्य तिष्ठति। गोसहस्रस्य संप्रेत्य लभते फलमुत्तमं ॥ ११ ॥ हेमन्तकाले सलिलं तड़ागे यस्य तिष्ठति। स वै बहुसुवर्णस्य यज्ञस्य लभते फलं ॥ १२ ॥ यस्य वै शिशिरे काले तड़ागे सलिलं भवेत्। तस्याग्निष्टोमयज्ञस्य फलमाहुर्म्मणीषिणः ॥ १३ ॥ तड़ागं सुकृतं यस्य वसन्ते तु महाश्रयं। अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥ १४ ॥ निदाघकाले पानीयं तड़ागे यस्य तिष्ठति। वाजिमेधफलं तस्य फलं वै मुनयो विदुः ॥ १५ ॥ स कुलं तारयेत् सर्वं यस्य खाते जलाशये। गावः पिवन्ति सलिलं साधवश्च नराः सदा ॥ १६ ॥ तड़ागे यस्य गावस्तु पिवन्ति तृषिता जलं। मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ १७ ॥ यत् पिवन्ति जलं तत्र स्नायन्ते विश्रमन्ति च। तड़ागदस्य तत् सर्वं प्रेत्यानन्त्याय कल्पते ॥ १८ ॥ दुर्लभं सलिलं तात विशेषेण परत्र वै। पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ १९ ॥ तिलान् ददत् पानीयं दीपान् ददत जाग्रत। ज्ञातिभिः सह मोदध्वमेतत् प्रेत्य सुदुर्लभं ॥ २० ॥ सर्वदानैर्गुरुतरं सर्वदाने-

विंशिष्यते। पानीयं नरशार्द्दूल तस्माद्दातव्यमेव हि ॥ २१ ॥
एवमेतत्तड़ागस्य कीर्त्तितं फलमुत्तमं। अत ऊर्द्धं प्रवच्यामि
वृचाणामवरोपणं ॥ २२ ॥ स्थावराणाञ्च भूतानां जातयः षट्
प्रकीर्त्तिताः। वृचगुल्मलतावल्लस्त्वक्सारास्तृणजातयः ॥ २३ ॥
एता जात्यस्तु वृचाणां तेषां रोपे गुणास्त्विमे। कीर्त्तिश्च मानुषे
लोके प्रेत्य चैव फलं शुभं ॥ २४ ॥ लभते नाम लोके च पितृभिश्च
महीयते। देवलोके गतस्यापि नाम तस्य न नश्यति ॥ २५ ॥
अतीतानागते चोभे पितृवंशे च भारत। तारयेद्वृचरोपी च
तस्माद्वृचांश्च रोपयेत् ॥ २६ ॥ तस्य पुत्रा भवन्त्येते पादपा नात्र
संशयः। परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ॥ २७ ॥
पुष्पैः सुरगणान् वृचाः फलैश्चापि तथापितॄन्। छायया चा-
तिथिं तात पूजयन्ति महीरुहाः ॥ २८ ॥ किन्नरोरगरचांसि
देवगन्धर्व्वमानवाः। तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान्
॥ २९ ॥ पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान्। वृचदं
पुत्रवत् वृचास्तारयन्ति परत्र तु ॥ ३० ॥ तस्मात्तड़ागे तद्वृचा
रोप्याः श्रेयोऽर्थिना सदा। पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्म्मतः
स्मृताः ॥ ३१ ॥ तड़ागकृद्वृचरोपी इष्टयज्ञश्च यो द्विजः। एते
स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥ ३२ ॥ तस्मात्तड़ागं
कुर्व्वीत आरामांश्चैव रोपयेत्। यजेच्च विविधैर्यज्ञैः सत्यञ्च सततं
वदेत् ॥ ३३ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

युधिष्ठिर उवाच। यानीमानी वहिर्व्वेद्यां दानानि परि-
चचते। तेभ्यो विशिष्टं किं दानं मतन्ते कुरुपुङ्गव ॥ १ ॥ कौतू-

फलं हि परमं तत्र मे विद्यते प्रभो। दातारं दत्तमन्वेति यद्दानं तत् प्रचक्ष्व मे ॥ २ ॥

भीष्म उवाच। अभयं सर्वभूतेभ्यो व्यसने चाप्यनुग्रहः। यच्चाभिलषितं दद्यात्तृषितायाभियाचते ॥ ३ ॥ दत्तं मन्येत यद्दत्त्वा तद्दानं श्रेष्ठमुच्यते। दत्तं दातारमन्वेति यद्दानं भरतर्षभ ॥ ४ ॥ हिरण्यदानं गोदानं पृथिवीदानमेव च। एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतं ॥ ५ ॥ एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा। दानानि हि नरं पापान्मोचयन्ति न संशयः ॥ ६ ॥ यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे। तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ७ ॥ प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा। प्रियो भवति भूतानामिह चैव परत्र च ॥ ८ ॥ याचमानमभीमानादनासक्तमकिञ्चनं। यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥ ९ ॥ अमित्रमपि चेद्दीनं शरणैषिणमागतं। व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥ १० ॥ कृशाय कृतविद्याय वृत्तिक्षीणाय सीदते। अपहन्यात् क्षुधां यस्तु न तेन पुरुषः समः ॥ ११ ॥ क्रियानियमितान् साधून् पुत्रदारैश्च कर्षितान्। अयाचमानान् कौन्तेय सर्वोपायैर्निमन्त्रयेत् ॥ १२ ॥ आशिषं ये न देवेषु न च मर्त्त्येषु कुर्वते। अर्हन्तो नित्यसन्तुष्टास्तथा लब्धोपजीविनः ॥ १३ ॥ आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत। तान्युक्तैरुपजिज्ञास्य तथाद्विजवरोत्तमान् ॥ १४ ॥ कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः। निमन्त्रयेथाः कौरव्य सर्वकामसुखावहैः ॥ १५ ॥ यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिरः। कार्य्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः ॥ १६ ॥ विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्य जीविनः। गूढ़स्वाध्यायतपसो ब्राह्मणाः संशितव्रताः ॥ १७ ॥ तेषु शुद्धेषु दान्तेषु स्वदारपरितोषिषु। यत् करिष्यसि कल्याणं तत्ते लोकेषु

क्षार्य्यते ॥ १८ ॥ यथाग्निहोत्रं सुहुतं सायंप्रातर्द्विजातिना। तथा दत्तं द्विजातिभ्यो भवत्यथ यतात्मसु ॥ १९ ॥ एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः। विशिष्टः सर्व्वयज्ञेभ्यो ददतस्तात वर्त्ततां ॥ २० ॥ निवापादानसलिलस्ताद्दशेषु युधिष्ठिर। निवसन् पूजयंश्चैव तेषामानृण्यं नियच्छति ॥ २१ ॥ य एव नैव कुप्यन्ते न लुभ्यन्ति तृणेष्वपि। त एव नः पूज्यतमा ये चापि प्रियवादिनः ॥ २२ ॥ एते न बहुमन्यन्ते न प्रवर्त्तन्ति चापरे। पुत्रवत् परिपाल्यास्ते नमस्तेभ्यस्तथोभयं ॥ २३ ॥ ऋत्विक् पुरोहिताचार्य्या मृदुब्रह्मधरा हि ते। क्षात्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे। अस्ति मे बलवानस्मि राजास्मीति युधिष्ठिरः ॥ २४ ॥ ब्राह्मणान्मा स्म पर्य्यश्नीर्वासोभिरशनेन च। यच्छोभार्थं बलार्थञ्च वित्तमस्ति तवानघ। तेन ते ब्राह्मणाः पूज्याः स्वधर्म्ममनुतिष्ठता ॥ २५ ॥ नमस्कार्य्यास्तथा विप्रा वर्त्तमाना यथातथं। यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् ॥ २६ ॥ को ह्यक्षयप्रसादानं सुहृदामल्पतोषिणां। वृत्तिमर्हत्यवक्षेप्तुं त्वदन्यः कुरुसत्तम ॥ २७ ॥ यथा पत्याश्रयो धर्म्मः स्त्रीणां लोके सनातनः। सदैव सा गतिर्नान्या तथास्माकं द्विजातयः ॥ २८ ॥ यदि नो ब्राह्मणास्तात सन्त्यजेयुरपूजिताः। पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितं ॥ २९ ॥ अवेदानामयज्ञानामलोकानामवर्त्तिनां। कस्तेषां जीवितेनार्थस्त्वां विना ब्राह्मणाश्रयं ॥ ३० ॥ अत्र ते वर्त्तयिष्यामि यथाधर्मं सनातनं। राजन्यो ब्राह्मणान् राजन् पुरा परिचचार ह ॥ ३१ ॥ वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः। दूराच्छूद्रेणोपचर्य्यो ब्राह्मणोऽग्निरिव ज्वलन् ॥३२॥ संस्पृश्य परिचर्य्यस्तु वैश्येन क्षत्रियेण च। मृदुभावान् सत्यशीलान् सत्यधर्मानुपालनान् ॥ ३३ ॥ आशीविषानिव क्रुद्धां स्तानुपाचरत द्विजान्। अपरेषां परेषाञ्च परेभ्यश्चापि ये परे

॥ ३४ ॥ क्षत्रियाणां प्रतपतां तेजसा च बलेन च। ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥ ३५ ॥ न मे पिता प्रियतरो न माता च तथा प्रिया। न मे पितुः पिता राजन् न चात्मा न च जीवितं ॥ ३६ ॥ त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन। त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ ॥ ३७ ॥ ब्रवीमि सत्यमेतच्च यथाहं पाण्डुनन्दन। तेन सत्येन गच्छेयं लोकान् यत्र च शान्तनुः ॥ ३८ ॥ पश्येयञ्च स तान् लोकान् शुचीन् ब्रह्मपुरस्कृतान्। तत्र मे तात गन्तव्यमह्नाय च चिराय च ॥ ३९ ॥ सोऽहमेतादृशाल्लोकान् दृष्ट्वा भरतसत्तम। यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव ॥ ४० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने एकोनषष्टोऽध्यायः ॥ ५९ ॥

---

युधिष्ठिर उवाच। यौ च स्यातां चरणेनोपपन्नौ यौ विद्यया सदृशौ जन्मना च। ताभ्यां दानं कतमस्मै विशिष्टमयाचमानाय च याचते च ॥ १ ॥

भीष्म उवाच। श्रेयो वै याचतः पार्थ दानमाहुरयाचते। अर्हत्तमो वै धृतिमान् कृपणादधृतात्मनः ॥ २ ॥ क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः। ब्राह्मणो धृतिमान् विद्वान् देवान् प्रीणाति तुष्टिमान् ॥ ३ ॥ याच्ञमाहुरनीशस्य अभिहारञ्च भारत। उद्वेजयन्ति याचन्ति यदा भूतानि दस्युवत् ॥ ४ ॥ म्रियते याचमानो वै न जातु म्रियते ददत्। ददत् संजीवयत्येनमात्मानञ्च युधिष्ठिर ॥ ५ ॥ आनृशंस्यं परो धर्मो याचते यत् प्रदीयते। अयाचतः सीदमानान् सर्वोपायैर्निमन्त्रयेत् ॥ ६ ॥ यदि वै तादृशा राष्ट्रान् वसेयुस्ते द्विजोत्तमाः। भस्मच्छन्नानिवा-

ग्नींस्तान् वुद्धयेथास्त्वं प्रयत्नतः ॥ ७ ॥ तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि। अपूज्यमानाः कौरव्य पूजार्हास्तु तथाविधाः ॥ ८ ॥ पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः। तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परन्तप ॥ ९ ॥ ददत् वहुविधान् दायानुपागच्छन्नयाचतां। यदग्निहोत्रे सुहुते सायंप्रातर्भवेत् फलं। विद्यावेदव्रतवती तद्दानफलमुच्यते ॥ १० ॥ विद्यावेदव्रतस्नाता न व्यपाश्रयजीविनः। गूढ़स्वाध्यायतपसो ब्राह्मणान् संशितव्रतान् ॥ ११ ॥ कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः। निमन्त्रयेथाः कौन्तेय कामैश्चान्यैर्द्विजोत्तमान् ॥ १२ ॥ अपि ते प्रतिगृह्णीयुः श्रद्धोपेतं युधिष्ठिर। कार्य्यमित्येवमन्वाना धर्म्मज्ञाः सूक्ष्मदर्शिनः ॥ १३ ॥ अपि ते ब्राह्मणा भुक्ता गताः सोद्धरणान् गृहान्। येषां दाराः प्रतीक्षन्ते पर्ज्जन्यमिव कर्षकाः ॥ १४ ॥ अन्नानि प्रातःसवने नियता ब्रह्मचारिणः। ब्राह्मणास्तात भुञ्जानास्त्रेताग्निं प्रीणयन्त्युत ॥ १५ ॥ मध्यंदिने ते सवनं ददतस्तात वर्त्ततां। गोहिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव ॥ १६ ॥ तृतीयं सवनं ते वै वैश्वदेवं युधिष्ठिर। यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छति। अहिंसा सर्वभूतेभ्यः संविभागश्च भागशः ॥ १७ ॥ दमस्त्यागो धृतिः सत्यं भवत्ववभृथाय ते ॥१८॥ एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः। विशिष्टः सर्वयज्ञानां नित्यं तात प्रवर्त्ततां ॥ १९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने षष्टितमोऽध्यायः ॥ ६० ॥

---

युधिष्ठिर उवाच। दानं यज्ञक्रिया चेह किं स्वित् प्रेत्य महाफलं। कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा ॥ १ ॥

एतदिच्छामि विज्ञातुं याथातथ्येन भारत। विद्वन् जिज्ञासमानाय दानधर्मान् प्रचक्ष्व मे ॥ २ ॥ अन्तर्वेद्यां च यद्दत्तं श्रद्धया चानृशंस्यतः। किं स्विन्नैःश्रेयसं तात तन्मे ब्रूहि पितामह ॥३॥

भीष्म उवाच। रौद्रं कर्म क्षत्रियस्य सततं तात वर्त्तते। तस्य वैतानिकं कर्म दानञ्चैवेह पावनं ॥ ४ ॥ न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः। एतस्मात् कारणाद्यज्ञैर्यजेद्राजाप्तदक्षिणैः ॥ ५ ॥ अथ चेत् प्रतिगृह्णीयुर्दद्यादहरहर्नृप। श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमं ॥ ६ ॥ ब्राह्मणांस्तर्पयन् द्रव्यैस्ततो यज्ञे यतव्रतः। मैत्रान् साधून् वेदविदः शीलवृत्ततपोर्ज्जितान् ॥ ७ ॥ यत्ते ते न करिष्यन्ति कृतं ते न भविष्यति। यज्ञान् साधय साधुभ्यः स्वाद्वन्नान् दक्षिणावतः ॥ ८ ॥ इष्टं दत्तञ्च मन्येथा आत्मानं दानकर्मणा। पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ॥ ९ ॥ प्रजावतो भरेथाश्च ब्राह्मणान् स्वर्गकारिणः। प्रजावांस्तेन भवति यथा जनयिता तथा ॥ १० ॥ यावतः साधुधर्मान् वै सन्तः संवर्द्धयन्त्युत। सर्वस्वैश्चापि भर्त्तव्या नरा ये बहुकारिणः ॥ ११ ॥ समृद्धः संप्रयच्छ त्वं ब्राह्मणेभ्यो युधिष्ठिर। धेनुरनडुहोऽन्नानि छत्रं वासांस्युपानहौ ॥ १२ ॥ आज्यानि यजमानेभ्यस्तथान्नानि च भारत। अश्ववन्ति च यानानि वेश्मानि शयनानि च ॥ १३ ॥ एते देया व्युष्टिमन्तो लघूपायाश्च भारत। अजुगुप्सांश्च विज्ञाय ब्राह्मणान् वृत्तिकर्षितान् ॥ १४ ॥ उपच्छन्नं प्रकाशं वा वृत्त्या तान् पतिपालयेत्। राजसूयाश्वमेधाभ्यां श्रेयस्तत् क्षत्रियान् प्रति ॥ १५ ॥ एवं पापैर्विनिर्मुक्तस्त्वं पूतः स्वर्गमाप्स्यसि। सञ्चयित्वा पुनः कोषं यद्राष्ट्रं पालयिष्यसि ॥ १६ ॥ तेन त्वं ब्रह्मभूयत्वमवाप्स्यसि धनानि च। आत्मनश्च परेषाञ्च वृत्तिं संरक्ष भारत ॥ १७ ॥ पुत्रवच्चापि भृत्यान् स्वान् प्रजाश्च परिपालय। योगक्षेमश्च ते

नित्यं ब्राह्मणेष्वस्तु भारत ॥ १८ ॥ तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनं। अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान् ॥ १९ ॥ श्रिया ह्यभीक्ष्णं संवासो दर्पयेत् संप्रमोहयेत्। ब्राह्मणेषु प्रमूढ़ेषु धर्मो विप्रणशेद्ध्रुवं। धर्म्मप्रणाशे भूतानामभावः स्यान्न संशयः ॥ २० ॥ यो रक्षिभ्यः संप्रदाय राजा राष्ट्रं विलुम्पति। यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन् ॥ २१ ॥ यच्चादाय तदाज्ञप्तं भीतं दत्तं सुदारुणं। यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः ॥ २२ ॥ अपीड़िताः सुसंवृद्धा ये ददत्यनुकूलतः। तादृशेनाभ्युपायेन यष्टव्यं नोद्यमाहृतैः ॥ २३ ॥ यदा परिनिषिच्येत निहितो वै यथाविधि। तदा राजा महायज्ञैर्यजेत बहुदक्षिणैः ॥ २४ ॥ वृद्धवालधनं रक्ष्यमन्धस्य कृपणस्य च। न खातपूर्वं कुर्वीत न रुदन्तीधनं हरेत् ॥ २५ ॥ हृतं कृपणवित्तं हि राष्ट्रं हन्ति नृपश्रियं। दद्याच्च महतो भोगान् क्षुद्भयं प्रणुदेत् सतां ॥ २६ ॥ येषां स्वादूनि भोज्यानि समवेक्ष्यन्ति वालकाः। नाश्नन्ति विधिवत्तानि किन्नु पापतरं ततः ॥ २७ ॥ यदि ते तादृशो राष्ट्रे विद्वान् सीदेत् क्षुधा द्विजः। भ्रूणहत्याञ्च गच्छेथाः कृत्वा पापमिवोत्तमं ॥ २८ ॥ धिक् तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति। द्विजोऽन्यो वा मनुष्योऽपि शिविराह वचो यथा ॥ २९ ॥ यस्य स्म विषये राज्ञः स्नातकः सीदति क्षुधा। अवृद्धिमेति तद्राष्ट्रं विन्दते सह राजकं ॥ ३० ॥ क्रोशन्त्यो यस्य वै राष्ट्राद्ध्रियन्ते तरसा स्त्रियः। क्रोशतां पतिपुत्राणां मृतोऽसौ न च जीवति ॥ ३१ ॥ अरक्षितारं हर्त्तारं विलोप्तारमनायकं। तं वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणं ॥ ३२ ॥ अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः। स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥ ३३ ॥ पापं कुर्वन्ति यत् किञ्चित् प्रजा राज्ञा ह्यरक्षिताः। चतुर्थं तस्य पापस्य राजा

विन्दति भारत ॥३४॥ अथाहुः सर्व्वमेवेति भूयोर्द्धमिति निश्चयः। चतुर्थं मतमस्माकं मनोः शुक्लानुशासनं ॥ ३५ ॥ शुभं वा यच्च कुर्व्वन्ति प्रजा राज्ञा सुरक्षिताः। चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत ॥ ३६ ॥ जीवन्तं त्वानुजीवन्तु प्रजाः सर्व्वा युधिष्ठिर। पर्ज्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ॥ ३७ ॥ कुवेरमिव रक्षांसि शतक्रतुमिवामराः। ज्ञातयस्त्वानुजीवन्तु सुहृदश्च परन्तप ॥ ३८ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने
एकषष्टोऽध्यायः ॥ ६१ ॥

---

युधिष्ठिर उवाच। इदं देयमिदं देयमितीयं श्रुतिरादरात्। वहुदेयाश्च राजानः किं स्विद्दानमनुत्तमं ॥ १ ॥

भीष्म उवाच। अतिदानानि सर्व्वाणि पृथिवीदानमुच्यते। अचला ह्यक्षया भूमिर्द्दोग्ध्री कामानि चोत्तमान्। दोग्ध्री वासांसि रत्नानि पशून् व्रीहि यवांस्तथा ॥ २ ॥ भूमिदः सर्व्वभूतेषु शाश्वतीरेधते समाः ॥ ३ ॥ न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर ॥ ४ ॥ अप्यल्पं प्रददुः सर्व्वे पृथिव्या इति नः श्रुतं। भूमिमेव ददुः सर्व्वे भूमिन्ते भुञ्जते जनाः ॥ ५ ॥ स्वकर्म्मैवोपजीवन्ति नरा इह परत्र च। भूमिर्भूतिर्म्महादेवी दातारं कुरुते प्रियं ॥ ६ ॥ य एतां दक्षिणां दद्यादक्षयां राजसत्तम। पुनर्नरत्वं संप्राप्य भवेत् स पृथिवीपतिः ॥ ७ ॥ यथा दानं तथा भोगः इति मे धर्म्मनिश्चयः। संग्रामे वा तनुं जह्याद्दद्याच्च पृथिवीमिमां ॥ ८ ॥ इत्येतत् क्षत्रवन्धूनां वदन्ति परमां श्रियं। पुनाति दत्ता पृथिवी दातारमिति शुश्रुम ॥ ९ ॥ अपि पापसमाचारं ब्रह्मघ्नमपि चानृतं। सैव पापं प्लावयति सैव पापात्

प्रमोचयेत् ॥ १० ॥ अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनी जननी यथा ॥ ११ ॥ नामास्याः
प्रियदत्तेति गुह्यं देव्याः सनातनम् । दानं वाप्यथ वादानं
नामास्याः प्रथमं प्रियं ॥ १२ ॥ य एतां विदुषि दद्यात् पृथिवीं
पृथिवीपतिः । पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत् ॥१३॥
पुनश्चासौ जनुं प्राप्य राजवत् स्यान्न संशयः । तस्मात् प्राप्यैव
पृथिवीं दद्यात् विप्राय पार्थिवः ॥ १४ ॥ नाभूमिपतिना भूमि-
रधिष्ठेया कथञ्चन । न चापात्रेण वा ग्राह्या दत्तदानेन वा
चरेत् ॥ १५ ॥ ये चान्ये भूमिमिच्छेयुः कुर्य्युरेवं न संशयः ।
यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः ॥ १६ ॥ भूमिं
दत्त्वा तु साधुभ्यो विन्दते भूमिमुत्तमां । प्रेत्य चेह च धर्मात्मा
संप्राप्नोति महद्यशः ॥ १७ ॥ यस्य विप्रास्तु शंसन्ति साधो-
र्भूमिं सदैव हि । न तस्य शत्रवो राजन् प्रशंसन्ति वसुन्धरां
॥ १८ ॥ यत् किञ्चित् पुरुषः पापं कुरुते वृत्तिकर्षितः । अपि
गोचर्म्ममात्रेण भूमिदानेन पूयते ॥ १९ ॥ येऽपि सङ्कीर्णकर्माणो
राजानो रौद्रकर्मिणः । तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमं
॥ २० ॥ अल्पान्तरमिदं शश्वत् पुराणा मेनिरे जनाः । यो
यजेताश्वमेधेन दद्याद्वा साधवे महीं ॥ २१ ॥ अपि चेत् सुकृतं
कृत्वा शङ्केरन्नापि पण्डिताः । अशक्यमेवमेवैतद्भूमिदानमनुत्तमं
॥ २२ ॥ सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च । सर्वमेतन्महा-
प्राज्ञो ददाति वसुधां ददत् ॥ २३ ॥ तपो यज्ञः श्रुतं शीलम-
लोभः सत्यसन्धता । गुरुदैवतपूजा च एता वर्त्तन्ति भूमिदं ॥२४॥
भर्त्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः । ब्रह्मलोकगताः
सिद्धा नातिक्रामन्ति भूमिदं ॥ २५ ॥ यथा स्वपुत्रं जननी क्षीरेण
भरते सदा । अनुगृह्णाति दातारं तथा सर्व्वरसैर्म्मही ॥ २६ ॥
मृत्युर्वै किङ्करो दण्डस्तमो वह्निः सुदारुणः । घोराश्च दारुणाः

याम्या नोपसर्पन्ति भूमिदं ॥ २७ ॥ पितॄंश्च पितृलोकस्थान् देव-
लोकाच्च देवताः। सन्तर्पयन्ति शान्तात्मा यो ददाति वसुन्धरां
॥ २८ ॥ कृशाय म्रियमाणाय वृत्तिग्लानाय सीदते। भूमिं
वृत्तिकरीं दत्त्वा सत्री भवति मानवः ॥ २९ ॥ यथा धावति
गौर्वत्सं स्रवन्ती वत्सला पयः। एवमेव महाभागा भूमिर्भवति
भूमिदं ॥ ३० ॥ फालकृष्टां महीं दत्त्वा सबीजां सफलामपि।
उदीर्णं वापि शरणं तथा भवति कामदः ॥ ३१ ॥ ब्राह्मणं वृत्ति-
सम्पन्नमाहिताग्निं शुचिव्रतं। नरः प्रतिग्राह्य महीं न याति
परमं पदं ॥ ३२ ॥ यथा चन्द्रमसो वृद्धिरहन्यहनि जायते।
तथा भूमिकृतं दानं शस्ये शस्ये विवर्द्धते ॥ ३३ ॥ अत्र गाथा
भूमिगीताः कीर्त्तयन्ति पुराविदः। या श्रुत्वा जामदग्न्येन दत्त्वा
भः काश्यपाय वै ॥ ३४ ॥ मामेवादत्त मां दत्त मां दत्त्वा माम-
वाप्स्यथ। अस्मिल्लोके परे चैव तद्दत्तं जायते पुनः ॥ ३५ ॥ य
इमां व्याहृतिं वेद ब्राह्मणो वेदसम्मितां। श्राद्धस्य क्रियमाणस्य
ब्रह्मभूयं स गच्छति ॥ ३६ ॥ कृत्यानामभिशस्तानामरिष्टशमनं
महत्। प्रायश्चित्तं महीं दत्त्वा पुनात्युभयतो दश ॥ ३७ ॥
पुनाति य इदं वेद वेदवादं तथैव च। प्रकृतिः सर्वभूतानां
भूमिर्वैश्वानरी मता ॥ ३८ ॥ अभिषिच्यैव नृपतिं श्रावयेदिममा-
गमं। यथा श्रुत्वा महीं दद्यान्नादद्यात् साधुतश्च तां ॥ ३९ ॥
सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयः। राजा हि
धर्म्मकुशलः प्रथमं भूतिलक्षणं ॥ ४० ॥ अथ येषामधर्म्मज्ञो राजा
भवति नास्तिकः। न ते सुखं प्रबुध्यन्ति न सुखं प्राप्नुवन्ति च
॥ ४१ ॥ सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः। योगक्षेमा
हि बहवो राष्ट्रं नास्याविशन्ति तत् ॥ ४२ ॥ अथ येषां पुनः
प्राज्ञो राजा भवति धार्म्मिकः। सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्व-
पन्ति च ॥ ४३ ॥ तस्य राज्ञः शुभैराज्यैः कर्मभिर्निर्वृता नराः।

योगहीनेन वृत्तग्रा च विवर्द्धन्ते स्वकर्मभिः ॥ ४४ ॥ स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् । स दाता स च विक्रान्तो यो ददाति वसुन्धरां ॥ ४५ ॥ आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः । ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ॥ ४६ ॥ यथा शस्यानि रोहन्ति प्रकीर्णानि महीतले । तथा कामाः प्ररोहन्ति भूमिदानसमार्ज्जिताः ॥ ४७ ॥ आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः । शूलपाणिश्च भगवान् प्रतिनन्दति भूमिदं ॥ ४८ ॥ भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च । चतुर्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः ॥ ४९ ॥ एषा माता पिता चैव जगतः पृथिवीपते । नानया सदृशं भूतं किञ्चिदस्ति जनाधिप ॥ ५० ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । वृहस्पतेश्च सम्वादमिन्द्रस्य च युधिष्ठिर ॥ ५१ ॥ इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता । मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं वृहस्पतिं ॥ ५२ ॥

मघवा उवाच । भगवन् केन दानेन स्वर्गतः सुखमेधते । यदक्षयं महार्थञ्च तद्ब्रूहि वदतांवर ॥ ५३ ॥

भीष्म उवाच । इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः । वृहस्पतिर्वृहत्तेजाः प्रत्युवाच शतक्रतुं ॥ ५४ ॥

वृहस्पतिरुवाच । सुवर्णदानं गोदानं भूमिदानञ्च वृत्रहन् । ददन्नेतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥ ५५ ॥ न भूमिदानाद्देवेन्द्र परं किञ्चिदिति प्रभो । विशिष्टमिति मन्यामि यथा प्राहुर्मनीषिणः ॥ ५६ ॥ ये शूरा निहता युद्धे स्वर्याता रणवृद्धिनः । सर्व्वे ते विबुधश्रेष्ठ नातिक्रामन्तिः भूमिदं ॥ ५७ ॥ भर्त्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः । ब्रह्मलोकगता युक्ता नातुग्रत्क्रामन्ति भूमिदं ॥ ५८ ॥ पञ्च पूर्वा हि पुरुषाः प्रहृष्ये वसुधाङ्गता । एकादश ददद्भूमिं परित्रातीह मानवः

॥ ५९ ॥ रत्नोपकीर्णां वसुधां यो ददाति पुरन्दर। स मुक्तः सर्वकलुषैः स्वर्गलोके महीपते ॥ ६० ॥ महीं स्फीतां ददद्राजन् सर्वकामगुणान्वितां। राजाधिराजो भवति तद्धि दानमनुत्तमं ॥ ६१ ॥ सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति। सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥६२॥ सर्वकामदुघां धेनुं सर्वकामगुणान्वितां। ददाति यः सहस्राच स्वर्गं याति स मानवः ॥ ६३ ॥ मधुसर्पिःप्रवाहिन्यः पयोदधिवहास्तथा। सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥ ६४ ॥ भूमिप्रदानान्नृपतिर्मुच्यते सर्वकिल्बिषात्। न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ ६५ ॥ ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्ज्जितां। तं जनाः कथयन्तीह यावद्भवति गौरियं ॥ ६६ ॥ पुण्यामृद्धिरसां भूमिं यो ददाति पुरन्दर। न तस्य लोकाः क्षीयन्ते भूमिदानगुणान्विताः ॥ ६७ ॥ सर्वदा पार्थिवेनेह सततं भूतिमिच्छता। भूर्द्देया विधिवच्छक्र पात्रे सुखमभीप्सता ॥ ६८ ॥ अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये। समुत्सृजति तत् पापं जीर्णां त्वचमिवोरगः ॥ ६९ ॥ सागरान् सरितः शैलान् काननानि च सर्वशः। सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ॥ ७० ॥ तड़ागान्युदपानानि स्रोतांसि च सरांसि च। स्नेहात् सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ७१ ॥ ओषधीर्वीर्य्यसम्पन्ना नगान् पुष्पफलान्वितान्। काननोपलशैलांश्च ददाति वसुधां ददत् ॥ ७२ ॥ अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः। न तत् फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ ७३ ॥ दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन्। पूर्वदत्तां हरन् भूमिं नरकायोपगच्छति ॥ ७४ ॥ न ददाति प्रतिश्रुत्य दत्त्वापि च हरेत्तु यः। स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात् ॥ ७५ ॥ आहिताग्निं सदा यज्ञं कृशवृत्तिं प्रियातिथिं। ये भजन्ति द्विज-

श्रेष्ठं नोपसर्पन्ति ते यमं ॥ ७६ ॥ ब्राह्मणेष्वनृणीभूतः पार्थिवः स्यात् पुरन्दर। इतरेषान्तु वर्णानां तारयेत् क्रमदुर्वलान् ॥७७॥ नाच्छिन्द्यात् स्पर्शितां भूमिं परेण त्रिदशाधिप। ब्राह्मणस्य सुरश्रेष्ठ कृशवृत्तेः कदाचन ॥ ७८ ॥ यथाश्रु पतितं तेषां दीनानामथ सीदतां। ब्राह्मणानां हृते क्षेत्रे हन्यात् त्रिपुरुषं कुलं ॥ ७९ ॥ भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेन्नरः। तस्य वासः सहस्राच्च नाकपृष्ठे महीयते ॥ ८० ॥ इक्षुभिः सहितां भूमिं यवगोधूमशालिनीं। गोऽश्ववाहनपूर्णां वा बाहुवीर्य्यादुपार्ज्जितां ॥ ८१ ॥ निधिगर्भां ददत् भूमिं सर्व्वरत्नपरिच्छदां। अक्षयाल्लभते लोकान् भूमिसत्रं हि तस्य तत् ॥ ८२ ॥ विधूय कलुषं सर्वं विरजाः सम्मतः सतां। लोके महीयते सद्भिर्यो ददाति वसुन्धरां ॥ ८३ ॥ यथाप्सु पतितः शक्र तैलबिन्दुर्विसर्पति। तथा भूमिकृतं दानं शस्ये शस्ये विवर्द्धते ॥ ८४ ॥ ये रणाग्रे महीपालाः शूरा समितिशोभनाः। वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ॥ ८५ ॥ नृत्यगीतपरा नार्य्यो दिव्यमाल्यविभूषिताः। उपतिष्ठन्ति देवेन्द्र तथा भूमिप्रदं दिवि ॥८६॥ मोदते च सुखं स्वर्गे देवगन्धर्व्वपूजितः। यो ददाति महीं सम्यक् विधिनेह द्विजातये ॥ ८७ ॥ शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः। उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदं ॥ ८८ ॥ उपतिष्ठन्ति पुष्पाणि सदा भूमिप्रदं नरं। शङ्खं भद्रासनं छत्रं वराश्वावरवाहनं ॥ ८९ ॥ भूमिप्रदानात् पुष्पाणि हिरण्यनिचयास्तथा। आज्ञा सदाप्रतिहता जयशब्दा वसूनि च ॥ ९० ॥ भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर। हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाद्वलाः। अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ॥ ९१ ॥ नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः। नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥ ९२ ॥

भीष्म उवाच। एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमां। वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा॥ ९३॥ य इदं श्रावयेत् श्राद्धे भूमिदानस्य सम्भवं। न तस्य रक्षसां भागो नासुराणां भवत्युत॥ ९४॥ अक्षयञ्च भवेद्दत्तं पितृभ्यस्तन्न संशयः। तस्माच्छ्राद्धेष्विदं विद्वान् भुञ्जत श्रावयेद्द्विजान्॥ ९५॥ इत्येतत् सर्वदानानां श्रेष्ठमुक्तं तवानघ। मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि॥ ९६॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि भूमिदानप्रशंसायां द्विषष्टोऽध्यायः॥ ६२॥

---

युधिष्ठिर उवाच। कानि दानानि लोकेऽस्मिन् दातुकामो महीपतिः। गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम॥ १॥ केन तुष्यन्ति ते सद्यः किन्तुष्टाः प्रदिशन्ति च। शंस मे तन्महाबाहो फलं पुण्यकृतं महत्॥ २॥ दत्तं किं फलवद्राजन्निह लोके परत्र च। भरतः श्रोतुमिच्छामि तन्मे विस्तरतो वद॥ ३॥

भीष्म उवाच। इममर्थं पुरा पृष्टो नारदो देवदर्शनः। यदुक्तवानसौ वाक्यं तन्मे निगदतः शृणु॥ ४॥

नारद उवाच। अन्नमेव प्रशंसन्ति देवा ऋषिगणास्तथा। लोकतन्त्रं हि संज्ञाश्च सर्वमन्ने प्रतिष्ठितं॥ ५॥ अन्नेन सदृशं दानं न भूतं न भविष्यति। तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः॥ ६॥ अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः। अन्नेन धार्य्यते सर्वं विश्वं जगदिदं प्रभो॥ ७॥ अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तापसास्तथा। अन्नाद्भवन्ति वै प्राणाः प्रत्यक्षं नात्र संशयः॥ ८॥ कुटुम्बं पीड़यित्वा तु ब्राह्मणाय महात्मने। दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता॥ ९॥

ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने। विदधाति निधिं
श्रेष्ठं पारलौकिकमात्मनः॥ १०॥ श्रान्तमध्वनि वर्त्तन्तं वृद्धमर्ह-
मुपस्थितं। अर्च्चयेद्गुरुमिवाक्लान्तं गृहस्थो गृहमागतं॥ ११॥
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः। अन्नदः प्राप्नुते राजन्
दिवि चेह च यत् सुखं॥ १२॥ नावमन्येदभिगतं न प्रणुद्यात्
कथञ्चन। अपि श्वपाके शुनि वा न दानं विप्रणश्यति॥ १३॥
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते। श्रान्तायादृष्टपूर्वाय स
महद्धर्म्ममाप्नुयात्॥ १४॥ पितॄन् देवानृषीन् विप्रानतिथींश्च जना-
धिप। यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत्॥ १५॥
कृत्वातिपापकं कर्म्म योदद्यादन्नमर्थिने। ब्राह्मणाय विशेषेण
न स पापेन मुह्यते॥ १६॥ ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महा-
फलं। अन्नदानं हि शूद्रे च ब्राह्मणस्य विशिष्यते॥ १७॥ न
पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव च। भिक्षितो ब्राह्मणेनेह
दद्यादन्नं प्रयाचितः॥ १८॥ अन्नदस्यान्नवृक्षाश्च सर्व्वकामफल-
प्रदाः। भवन्ति चेह चामुत्र नृपते नात्र संशयः॥ १९॥ आशं-
सन्ते हि पितरः सुवृष्टिमिव कर्षकाः। अस्माकमपि पुत्रो वा
पौत्रो वान्नं प्रदास्यति॥ २०॥ ब्राह्मणो हि महद्भूतं स्वयं
देहीति याचति। अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात्
॥ २१॥ ब्राह्मणः सर्व्वभूतानामतिथिः प्रसृताग्रभुक्। विप्रा
यदधिगच्छन्ति भिक्षमाणा गृहं सदा॥ २२॥ सत्कृताश्च निव-
र्त्तन्ते तदतीव प्रवर्द्धते। महाभोगे कुले प्रेत्य जन्म चाप्नोति
भारत॥ २३॥ दत्त्वा त्वन्नं नरो लोके यथास्थानमनुत्तमं।
नित्यं मिष्टान्नदायी तु स्वर्गे वसति सत्कृतः॥ २४॥ अन्नं प्राणा
नराणां हि सर्व्वमन्ने प्रतिष्ठितं। अन्नदः पशुमान् पुत्री धनवान्
भोगवानपि॥ २५॥ प्राणवांश्चापि भवति रूपवांश्च तथा नृप।
अन्नदः प्राणदो लोके सर्व्वदः प्रोच्यते तु सः॥ २६॥ अन्नं हि

दत्त्वातिथये ब्राह्मणाय यथाविधि । प्रदाता सुखमाप्नोति दैवतैश्चापि पूज्यते ॥ २७ ॥ ब्राह्मणो हि महद्भूतं क्षेत्रभूतं युधिष्ठिर । उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महत् ॥ २८ ॥ प्रत्यक्षं प्रीतिजननं भोक्तुर्दातुर्भवत्युत । सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ २९ ॥ अन्नाद्धि प्रसवं यान्ति रतिरन्नाद्धि भारत । धर्मार्थावन्नतो विद्धि रोगनाशं तथान्नतः ॥ ३० ॥ अन्नं ह्यमृतमित्याह पुराकल्पे प्रजापतिः । अन्नं भुवं दिवं खञ्च सर्वमन्ने प्रतिष्ठितं ॥ ३१ ॥ अन्नप्रणाशे भिद्यन्ते शरीरे पञ्चधातवः । बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ॥ ३२ ॥ आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा । निवर्त्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ॥ ३३ ॥ अन्नतः सर्वमेतद्धि यत् किञ्चित् स्थाणुजङ्गमं । त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ॥ ३४ ॥ अन्नदस्य मनुष्यस्य बलमोजो यशांसि च । कीर्त्तिश्च वर्द्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ ३५ ॥ मेघेषूर्द्ध्वं सन्निधत्ते प्राणानां पवनः पतिः । तच्च मेघगतं वारि शक्रो वर्षति भारत ॥ ३६ ॥ आदत्ते च रसान् भौमान् आदित्यः स्वगभस्तिभिः । वायुरादित्यतप्तांश्च रसान् देवः प्रवर्षति ॥ ३७ ॥ तद्यदा मेघतो वारि पतितं भवति क्षितौ । तदा वसुमती देवी स्निग्धा भवति भारत ॥ ३८ ॥ ततः शस्यानि रोहन्ति येन वर्त्तयते जगत् । मांसमेदोस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ॥ ३९ ॥ सम्भवन्ति ततः शुक्रात् प्राणिनः पृथिवीपते । अग्नीषोमौ हि तच्छुक्रं सृजतः पुष्यतश्च ह ॥ ४० ॥ एवमन्नाद्धि सूर्य्यश्च पवनः शुक्रमेव च । एक एव स्मृतो राशिस्ततो भूतानि जज्ञिरे ॥ ४१ ॥ प्राणान् ददाति भूतानां तेजश्च भरतर्षभ । गृहमभ्यागतायाथ यो दद्यादन्नमर्थिने ॥ ४२ ॥

भीष्म उवाच । नारदेनैवमुक्तोऽहमदामन्नं सदा नृप । अनसूयस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ॥ ४३ ॥ दत्त्वान्नं विधिव-

द्राजन् विप्रेभ्यस्त्वमिति प्रभो । यथावदनुरूपेभ्यस्ततः स्वर्ग-मवाप्स्यसि ॥ ४४ ॥ अन्नदानाद्धि ये लोकास्तांस्त्वं शृणु जनाधिप । भवनानि प्रकाशन्ते दिवि तेषां महात्मनां ॥ ४५ ॥ तारासंस्थान-रूपाणि नानास्तम्भान्वितानि च । चन्द्रमण्डलशुभ्राणि किङ्कि-णीजालवन्ति च । तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ ४६ ॥ अनेकशतभौमानि सान्तर्जलचराणि च । वैदूर्य्यार्क-प्रकाशानि रौप्यरुक्ममयाणि च ॥ ४७ ॥ सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः । वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः ॥ ४८ ॥ घोषवन्ति च यानानि युक्तान्यथ सहस्रशः । भक्ष्यभोज्य-मयाः शैलाः वासांस्याभरणानि च ॥ ४९ ॥ क्षीरं स्रवन्ति सरि-तस्तथा चैवान्न पर्वताः । प्रसादाः पाण्डुराभ्राभाः शय्याश्च कनको-ज्ज्वलाः ॥ ५० ॥ तान्यन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव । एते लोकाः पुण्यकृतामन्नदानां महात्मनां । तस्मादन्नं प्रयत्नेन दातव्यं मानवैर्भुवि ॥ ५१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने अन्नदान-प्रशंसायां त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

युधिष्ठिर उवाच । श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः । नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनं । देव-क्याश्चैव संवादं महर्षेर्नारदस्य च ॥ २ ॥ द्वारकामनुसंप्राप्तं नारदं देवदर्शनं । पप्रच्छेदं वचः प्रश्नं देवकी धर्मदर्शिनं ॥ ३ ॥ तस्याः संपृच्छमानाया देवर्षिर्नारदस्ततः । आचष्ट विधिवत् सर्वं तच्छृणुष्व विशाम्पते ॥ ४ ॥

नारद उवाच । कृत्तिकासु महाभागे पायसेन ससर्पिषा ।

न्तर्थं ब्राह्मणान् सभून् लोकानाप्नोत्यनुत्तमान् ॥ ५ ॥ रोहिण्यां प्रसृतैर्म्मार्गैर्मांसैरन्नेन सर्पिषा। पयोऽन्नपानं दातव्यं अनृणार्थं द्विजातये ॥ ६ ॥ दोग्ध्रीं दत्त्वा सवत्साञ्च नक्षत्रे सोमदैवते। गच्छन्ति मानुषाल्लोकात् स्वर्गलोकमनुत्तमं ॥ ७ ॥ आर्द्रायां कृषरं दत्त्वा तिलमिश्रमुपोषितः। नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ ८ ॥ पूपान् पुनर्वसौ दत्त्वा तथैवान्नानि शोभने। यशस्वी रूपसम्पन्नो बह्वन्ने जायते कुले ॥ ९ ॥ पुष्येण कनकं दत्त्वा कृतं वा कृतमेव च। अनालोकेषु लोकेषु सोमवत् स विराजते ॥ १० ॥ अश्लेषायान्तु यो रूप्यमृषभं वा प्रयच्छति। स सर्वभयनिर्मुक्तः सम्भवानधितिष्ठति ॥ ११ ॥ मघासु तिलपूर्णानि वर्द्धमानानि मानवः। प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते ॥ १२ ॥ फल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः। भक्ष्यान् फाणितसंयुक्तान् दत्त्वा सौभाग्यमर्च्छति ॥ १३ ॥ घृतक्षीरसमायुक्तं विधिवत् षष्टि कौदनं। उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥ १४ ॥ यद्यत् प्रदीयते दानमुत्तराविषये नरैः। महाफलमनन्तन्तद्भवतीति विनिश्चयः ॥ १५ ॥ हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः। प्राप्नोति परमाल्लोकान् पुण्यकामसमन्वितान् ॥ १६ ॥ चित्रायां वृषभं दत्त्वा पुण्यगन्धांश्च भारत। चरन्त्यप्सरसां लोके रमन्ते नन्दने तथा ॥ १७ ॥ स्वात्यामथ धनं दत्त्वा यदिष्टतममात्मनः। प्राप्नोति लोकान् स शुभानिह चैव महद्यशः ॥ १८ ॥ विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदां। सप्रासङ्गञ्च शकटं सधान्यं वस्त्रसंयुतं ॥ १९ ॥ पितॄन् देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते। न च दुर्गाण्यवाप्नोति स्वर्गलोकञ्च गच्छति ॥ २० ॥ दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति। नरकादींश्च संक्लेशान् नाप्नोतीति विनिश्चयः ॥ २१ ॥ अनुराधासु प्रावारं वस्त्रान्नं समुपोषितः। दत्त्वा युगशतञ्चापि नरः स्वर्गे

महीयते ॥ २२ ॥ कालशाकन्तु विप्रेभ्यो दत्त्वा मर्त्त्यः समूलकं ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां स गच्छति ॥ २३ ॥ मूले मूल-
फलं दत्त्वा ब्राह्मणेभ्यः समाहितः । पितॄन् प्रीणयते चापि गति-
मिष्टाञ्च गच्छति ॥ २४ ॥ अथ पूर्व्वास्वाषाढ़ासु दधिपात्राण्यु-
पोषितः । कुलवृत्तोपसम्पन्नो ब्राह्मणे वेदपारगे ॥ २५ ॥ पुरुषो
जायते प्रेत्य कुले सुबहुगोधने । उदमन्थं ससर्पिष्कं प्रभूतमधि-
फाणितं ॥ २६ ॥ दत्त्वोत्तरास्वाषाढ़ासु सर्व्वान् कामानवाप्नुयात्
॥ २७ ॥ दुग्धन्त्वभिजिते योगे दत्त्वा मधुघृतप्लुतं । धर्म्मनित्यो
मनीषिभ्यः स्वर्गलोके महीयते ॥ २८ ॥ श्रवणे कम्बलं दत्त्वा
वस्त्रान्तरितमेव वा । श्वेतेन याति यानेन सर्व्वलोकानसंवृतान्
॥ २९ ॥ गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः । वस्त्र-
राशिधनं सद्यः प्रेत्य राज्यं प्रपद्यते ॥ ३० ॥ गन्धाञ्छतभिषा-
योगे दत्त्वा सागुरुचन्दनान् । प्राप्नोत्यप्सरसां सङ्घान् प्रेत्य गन्धांश्च
शाश्वतान् ॥ ३१ ॥ पूर्व्वभाद्रपदा योगे राजमासान् प्रदाय तु ।
सर्व्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत् ॥ ३२ ॥ औरभ्रमुत्तरा-
योगे यस्तु मांसं प्रयच्छति । स पितॄन् प्रीणयति वै प्रेत्य चान-
न्त्यमश्नुते ॥ ३३ ॥ कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामनादाय दातारमुपतिष्ठति ॥ ३४ ॥ रथमश्वसमा-
युक्तं दत्त्वाऽश्विन्यां नरोत्तम । हस्त्यश्वरथसम्पन्ने वर्च्चस्वी जायते
कुले ॥ ३५ ॥ भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै । गाः
सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥ ३६ ॥

भीष्म उवाच । इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः ।
देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदम् ॥ ३७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि नक्षत्रयोगदानधर्म्म-
कथने चतुःषष्टोऽध्यायः ॥ ६४ ॥

भीष्म उवाच। सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनं। इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत्॥ १॥ पवित्रमथ वायुष्यं पितृणामक्षयञ्च तत्। सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्त्तितं॥ २॥ पानीयं परमं दानं दानानां मनुरब्रवीत्। तस्मात् कूपांश्च वापीश्च तड़ागानि च खानयेत्॥ ३॥ अर्द्धं पापस्य हरति पुरुषस्येह कर्म्मणः। कूपःप्रवृत्तपानीयः सुप्रवृत्तश्च नित्यशः॥ ४॥ सर्वं तारयते वंशं यस्य खाते जलाशये। गावः पिबन्ति विप्राश्च साधवश्च नराः सदा॥ ५॥ निदाघकाले पानीयं यस्य तिष्ठत्यवारितं। स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुते॥ ६॥ वृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च। अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा॥ ७॥ परमं भेषजं ह्येतत् यज्ञानामेतदुत्तमं। रसानामुत्तमञ्चैतत् फलानाञ्चैतदुत्तमं॥ ८॥ फलकामो यशस्कामः पुष्टिकामश्च नित्यदा। घृतं दद्याद्द्विजातिभ्यः पुरुषः शुचिरात्मवान्॥ ९॥ घृतं मासि आश्वयुजी विप्रेभ्यो यः प्रयच्छति। तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ॥ १०॥ पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति। गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन॥ ११॥ पिपासया न म्रियते सोपच्छन्दश्च जायते। न प्राप्नुयाच्च व्यसनं करकान् यः प्रयच्छति॥ १२॥ प्रयतो ब्राह्मणाग्रेभ्यः श्रद्धया परया युतः। उपसर्ज्जनषड्भागं लभते पुरुषः सदा॥ १३॥ यः साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति। प्रतापनार्थं राजेन्द्र वृत्तवद्भ्यः सदा नरः॥ १४॥ सिद्ध्यन्त्यर्थाः सदा तस्य कार्य्याणि विविधानि च। उपर्य्युपरि शत्रूणां वपुषा दीप्यते च सः॥ १५॥ भगवांश्चापि संप्रीतो वह्निर्भवति नित्यशः। न तं त्यजन्ति पशवः संग्रामे च जयत्यपि॥ १६॥ पुत्रान् श्रियञ्च लभते यश्छत्रं संप्रयच्छति। न चक्षुर्व्याधिं लभते यज्ञभागमथा-

श्नुते॥ १७॥ निदाघकाले वर्षे वा यश्छत्रं संप्रयच्छति। नास्य कश्चिन्मनोदाहः कदाचिदपि जायते॥ १८॥ कृच्छ्रात् सविषमाच्चैव क्षिप्रं मोक्षमवाप्नुते। प्रदानं सर्व्वदानानां शकटस्य विशाम्पते॥ १९॥ एवमाह महाभागः शाण्डिल्यो भगवानृषिः॥२०॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने
पञ्चषष्टोऽध्यायः॥ ६५॥

---

युधिष्ठिर उवाच। दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ। यत् फलं तस्य भवति तन्मे ब्रूहि पितामह॥ १॥

भीष्म उवाच। उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यः समाहितः। मर्द्दते कण्टकान् सर्व्वान् विषमान् निस्तरत्यपि॥ २॥ स शत्रूणामुपरि च सन्तिष्ठति युधिष्ठिर। यानञ्चाश्वतरीयुक्तं तस्य शुभ्रं विशाम्पते॥ ३॥ उपतिष्ठति कौन्तेय रौप्यकाञ्चनभूषितं। शकटं दम्यसंयुक्तं दत्तं भवति चैव हि॥ ४॥

युधिष्ठिर उवाच। यत् फलं तिलदाने च भूमिदाने च कीर्त्तितं। गोदाने चान्नदाने च भूयस्तद्ब्रूहि कौरव॥ ५॥

भीष्म उवाच। शृणुष्व मम कौन्तेय तिलदानस्य यत्फलं। निशम्य च यथान्यायं प्रयच्छ कुरुसत्तम॥ ६॥ पितॄणां परमं भोज्यं तिलाः सृष्टाः स्वयम्भुवा। तिलदानेन वै तस्मात् पितृपक्षः प्रमोदते॥ ७॥ माघमासे तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति। सर्व्वसत्त्वसमाकीर्णं नरकं स न पश्यति॥ ८॥ सर्व्वसत्रैश्च यजते यस्तिलैर्यजते पितॄन्। न चाकामेन दातव्यं तिलश्राद्धं कदाचन॥ ९॥ महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः। ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो॥ १०॥ पौष्टिका रूपदाश्चैव तथा पापविनाशनाः। तस्मात् सर्व्वप्रदानेभ्यस्तिलदानं

विशिष्यते ॥ ११ ॥ आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा ।
महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः ॥ १२ ॥ तिलहोमरता
विप्राः सर्वे संयतमैथुनाः । समा गव्येन हविषा प्रवृत्तिषु च
संस्थिताः ॥ १३ ॥ सर्वेषामपि दानानां तिलदानं विशिष्यते ।
अक्षयं सर्वदानानां तिलदानमिहोच्यते ॥ १४ ॥ उच्छिन्ने तु
पुरा हव्ये कुशिकर्षिः परन्तपः । तिलैरग्नित्रयं हुत्वा प्राप्तवान्
गतिमुत्तमां ॥ १५ ॥ इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमं ।
विधानं येन विधिना तिलानामिह शस्यते ॥ १६ ॥ अत ऊर्द्ध
निबोधेदं देवानां यष्टुमिच्छतां । समागमे महाराज ब्रह्मणा
वै स्वयम्भुवा ॥ १७ ॥ देवाः समेत्य ब्रह्माणं भूमिभागे यियक्षवः ।
शुभं देशमयाचन्त यजेम इति पार्थिव ॥ १८ ॥

देवा ऊचुः । भगवंस्त्वं प्रभुर्भूमेः सर्वस्य त्रिदशस्य च ।
यजेमहि महाभाग यज्ञं भवदनुज्ञया ॥ १९ ॥ नाननुज्ञात-
भूमिर्हि यज्ञस्य फलमश्नुते । त्वं हि सर्वस्य जगतः स्थावरस्य
चरस्य च । प्रभुर्भवसि तस्मात्त्वं समनुज्ञातुमर्हसि ॥ २० ॥

ब्रह्मोवाच । ददानि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः ।
यस्मिन्देशे करिष्यध्वं यज्ञान् काश्यपनन्दनाः ॥ २१ ॥

देवा ऊचुः । भगवन् कृतकार्य्याः स्म यक्ष्यामहे स्वाप्तदक्षिणैः ।
इमन्तु देशं मुनयः पर्य्युपासन्ति सर्वदा ॥ २२ ॥ ततोऽगस्त्यश्च
कण्वश्च भृगुरत्रिर्वृषाकपिः । असितो देवलश्चैव देवयज्ञमुपागमन्
॥ २३ ॥ ततो देवा महात्मान ईजिरे यज्ञमच्युत । तथा समा-
पयामासुर्यथाकालं सुरर्षभाः ॥ २४ ॥ त इष्टयज्ञास्त्रिदशा
हिमवत्यचलोत्तमे । षष्ठमंशं क्रतोस्तस्य भूमिदानं प्रचक्रिरे ॥२५॥
प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतं । न सीदति स कृच्छ्रेषु
न च दुर्गाण्यवाप्नुते ॥ २६ । शीतवातातपसहां गृहभूमिं सुसं-
स्कृतां । प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते ॥ २७ ॥

सुदितो वसति प्राज्ञः शक्रेण सह पार्थिव। प्रतिश्रयप्रदानाच्च सोऽपि स्वर्गे महीयत ॥ २८ ॥ अध्यापककुले जातः श्रोत्रियो नियतेन्द्रियः। गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते ॥ २९ ॥ तथा गवार्थे शरणं शीतवर्षसहं दृढ़ं। आसप्तमं तारयति कुलं भरतसत्तम ॥ ३० ॥ क्षेत्रभूमिं ददल्लोके शुभां श्रियमवाप्नुयात्। रत्नभूमिं प्रदद्यात्तु कुलवंशं प्रवर्द्धयेत् ॥ ३१ ॥ न चोषरां न निर्द्दग्धां महीं दद्यात् कदाचन। न श्मशानपरीताञ्च न च पापनिषेवितां ॥ ३२ ॥ पारक्ये भूमिदेशे तु पितृणां निर्वपेत्तु यः। तद्भूमिं वापि पितृभिः श्राद्धं कर्म विहन्यते ॥ ३३ ॥ तस्मात् क्रीत्वा महीं दद्यात् स्वल्पामपि विचक्षणः। पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः ॥ ३४ ॥ अटवी पर्वताश्चैव नद्यस्तीर्थानि यानि च। सर्वाण्यस्वामिकान्याहुर्न हि तत्र परिग्रहः ॥ ३५ ॥ इत्येतद्भूमिदानस्य फलमुक्तं विशाम्पते। अतः परन्तु गोदानं कीर्त्तयिष्यामि तेऽनघ ॥ ३६ ॥ गावोऽधिकास्तपस्विभ्यो यस्मात् सर्वेभ्य एव च। तस्मान्महेश्वरो देवस्तपस्ताभिः सहास्थितः ॥ ३७ ॥ ब्रह्मलोके वसन्त्येताः सोमेन सह भारत। यान्तां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिं ॥ ३८ ॥ पयसा हविषा दध्ना शकृता चाथ चर्म्मणा। अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ॥ ३९ ॥ नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते। न वर्षविषयं वापि दुःखमासां भवत्युत ॥ ४० ॥ ब्राह्मणैः सहिता यान्ति तस्मात् परमकं पदं। एकं गोब्राह्मणं तस्मात् प्रवदन्ति मनीषिणः ॥ ४१ ॥ रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्म्मण्वती राजन् गोचर्म्मभ्यः प्रवर्त्तिता ॥ ४२ ॥ पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः। ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ॥ ४३ ॥ निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिवः। गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते ॥ ४४ ॥ सर्वत्र

विजयञ्चापि लभते मनुजाधिप। अमृतं वै गवां चीरमित्याह त्रिदशाधिपः॥ ४५॥ तस्माद्ददाति यो धेनुममृतं स प्रयच्छति। अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः॥ ४६॥ अस्माद्ददाति यो धेनुं स हौम्यं संप्रयच्छति। स्वर्गो वा मूर्त्तिमानेष वृषभं यो गवां पतिं॥ ४७॥ विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते। प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ॥ ४८॥ तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति। गावः शरण्या भूतानामिति वेदविदो विदुः॥ ४९॥ तस्माद्ददाति यो धेनुं शरणं स प्रयच्छति। न वधार्थं प्रदातव्या न कीनाशे न नास्तिके। गोजीविने न दातव्या तथा गौर्भरतर्षभ॥ ५०॥ ददत् स तादृशानां वै नरो गां पापकर्मणां। अक्षयं नरकं यातीत्येवमाहुर्मनीषिणः॥ ५१॥ न कृशां नापवत्सां वा वन्ध्यां रोगान्वितां तथा। न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय च॥ ५२॥ दशगोसहस्रदो हि शक्रेण सह मोदते। अक्षयाल्लभते लोकान् नरः शतसहस्रदः॥ ५३॥ इत्येतद्गोप्रदानञ्च तिलदानञ्च कीर्त्तितं। तथा भूमिप्रदानञ्च शृणुष्वान्ने च भारत॥ ५४॥ अन्नदानं प्रदानं हि कौन्तेय परिचक्षते। अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः॥ ५५॥ श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिपः। स्वायम्भुवं महास्थानं स गच्छति नराधिप॥ ५६॥ न हिरण्यैर्न वासोभिर्नान्यदानेन भारत। प्राप्नुवन्ति नराः श्रेयो यथा ह्यन्नप्रदा प्रभो॥ ५७॥ अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता। अन्नात् प्राणः प्रभवति तेजो वीर्य्यं बलं तथा॥ ५८॥ सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः। न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः॥ ५९॥ अर्च्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत्। यदन्ना हि नरा राजं स्तदन्नास्तस्य देवताः॥ ६०॥ कौमुदे शुक्लपक्षे तु योऽन्नदानं करोत्युत। स सन्तरति दुर्गाणि

प्रेत्य चानन्तमश्नुते ॥ ६१ ॥ अभ्यूक्षातिथये चान्नं प्रयच्छेद्द्वयः समाहितः। स वै ब्रह्मविदो लोकान् प्राप्नुयात् भरतर्षभ ॥६२॥ स कृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत्। पापं तरति चैवेह दुष्कृतञ्चापकर्षति ॥ ६३ ॥ इत्येतदन्नदानस्य तिलदानस्य चैव ह। भूमिदानस्य च फलं गोदानस्य च कीर्त्तितं ॥ ६४ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने
षट्षष्टोऽध्यायः ॥ ६६ ॥

---

युधिष्ठिर उवाच। श्रुतं दानफलं तात यत्त्वया परिकीर्त्तितं। अन्नदानं विशेषेण प्रशस्तमिह भारत ॥ १ ॥ पानीयदानमेवैतत् कथञ्चेह महाफलं। इत्येतत् श्रोतुमिच्छामि विस्तरेण पितामह ॥ २ ॥

भीष्म उवाच। हन्त ते कथयिष्यामि यथावद्भरतर्षभ। गदतस्तन्ममाद्येह शृणु सत्यपराक्रम ॥ ३ ॥ पानीयदानात् प्रभृति सर्वं वक्ष्यामि तेऽनघ। यदन्नं यच्च पानीयं सम्प्रदायाश्नुते नरः न तस्मात् परमं दानं किञ्चिदस्तीति मे मनः। अन्नात् प्राणभृतस्तात प्रवर्त्तन्ते हि सर्वशः ॥ ५ ॥ तस्मादन्नं परं लोके सर्वलोकेषु कथ्यते। अन्नाद्बलञ्च तेजश्च प्राणिनां वर्द्धते सदा ॥ ६ ॥ अन्नदानमतस्तस्मात् श्रेष्ठमाह प्रजापतिः। सावित्र्या ह्यपि कौन्तेय श्रुतं ते वचनं शुभं ॥ ७ ॥ यतश्च यद्यथा चैव देवसत्रे महामते। अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत ॥ ८ ॥ प्राणदानाद्धि परमं न दानमिह विद्यते। श्रुतं हि ते महाबाहो लोमशस्यापि तद्वचः ॥ ९ ॥ प्राणान् दत्त्वा कपोताय यत् प्राप्तं शिविना पुरा। तां गतिं लभते दत्त्वा द्विजस्यान्नं विशाम्पते ॥१०॥ तस्माद्विशिष्टा गच्छन्ति प्राणदा इति नः श्रुतं। अन्नञ्चापि प्रभ-

वति पानीयात् कुरुसत्तम ॥ ११ ॥ नीरजातेन हि विना न किञ्चित् संप्रपद्यते । नीरजातश्च भगवान् सोमो ग्रहगणेश्वरः ॥ १२ ॥ अमृतञ्च सुधा चैव स्वधा चैवामृतं तथा । अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः ॥ १३ ॥ यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते । देवानाममृतं ह्यन्नं नागानाञ्च सुधा तथा ॥ १४ ॥ पितॄणाञ्च स्वधा प्रोक्ता पशूनाञ्चापि वीरुधः । अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः ॥ १५ ॥ तच्च सर्वं नरव्याघ्र पानीयात् संप्रवर्त्तते । तस्मात् पानीयदानाद्वै न परं विद्यते क्वचित् ॥ १६ ॥ तच्च दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः । धन्यं यशस्यमायुष्यं जलदानमिहोच्यते ॥ १७ ॥ शत्रूंश्चाप्यधि कौन्तेय सदा तिष्ठति तोयदः । सर्वकामानवाप्नोति कीर्त्तिञ्चैव हि शाश्वतीं ॥ १८ ॥ प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते । तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते । अक्षयान् समवाप्नोति लोकानित्यब्रवीन्मनुः ॥ १९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

युधिष्ठिर उवाच । तिलानां कीदृशं दानमथ दीपस्य चैव हि । अन्नानां वाससाञ्चैव भूय एव ब्रवीहि मे ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनं । ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर ॥ २ ॥ मध्यदेशे महान् ग्रामो ब्राह्मणानां बभूव ह । गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥ ३ ॥ पर्णशालेति विख्यातो रमणीयो नराधिप । विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तथा ॥ ४ ॥ अथ प्राह यमः कञ्चित् पुरुषं कृष्णवाससं । रक्ताक्षमूर्द्ध्वरोमाणं काकजङ्घाक्षि-

नासिकं ॥ ५ ॥ गच्छ त्वं ब्राह्मण ग्रामं ततो गत्वा तमानय । अगस्त्यं गोत्रतश्चापि नामतश्चापि धर्म्मिणं ॥ ६ ॥ शमे निविष्टं विद्वांसमध्यापकमनावृतं । न चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ॥ ७ ॥ स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना । अपत्येषु तथा वृत्ते समस्तेनैव धीमता ॥ ८ ॥ तमानय यथोद्दिष्टं पूजाकार्य्या च तस्य वै । स गत्वा प्रतिकूलन्तच्चकार यमशासनं ॥ ९ ॥ तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः । तस्मै यमः समुत्थाय पूजां कृत्वा च वीर्य्यवान ॥ १० ॥ प्रोवाच नियतामेष सोऽन्य आनीयतामिति । एवमुक्ते तु वचने धर्म्मराजेन स द्विजः ॥ ११ ॥ उवाच धर्म्मराजानं निर्विण्णोऽध्ययनेन वै । यो मे कालो भवेच्छेषस्तं वसेयमिहाच्युत ॥

यम उवाच । नाहं कालस्य विहितं प्राप्नोमीह कथञ्चन । यो हि धर्म्मं चरति वै तन्तु जानामि केवलं ॥ १३ ॥ गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते । ब्रूहि स्वं यथा स्वैरं करवाणि किमच्युत ॥ १४ ॥

ब्राह्मण उवाच । यत्तत्र कृत्वा सुमहत् पुण्यं स्यात्तद्ब्रवीहि मे । सर्व्वस्य हि प्रमाणं त्वं त्रैलोक्यस्यापि सत्तम ॥ १५ ॥

यम उवाच । शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमं । तिलाः परमकं दानं पुण्यञ्चैवेह शाश्वतं ॥ १६ ॥ तिलाश्च संप्रदातव्या यथाशक्ति द्विजर्षभ । नित्यदानात् सर्व्वकामांस्तिलानि वर्त्तयन्त्यत ॥ १७ ॥ तिलान् श्राद्धे प्रशंसन्ति दानमेतदनुत्तमं । तान् प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्म्मणा ॥ १८ ॥ वैशाख्यां पौर्णमास्यान्तु तिलान् दद्यात् द्विजातिषु । तिला भक्षयितव्याश्च सदा त्वालम्भनञ्च तैः ॥ १९ ॥ कार्य्यं सततमिच्छद्भिः श्रेयः सर्व्वात्मना गृहे । तथापः सर्व्वदा देयाः प्रपाश्चैव न संशयः ॥ २० ॥ पुष्करिण्यस्तड़ागानि कूपांश्चैवात्र खानयेत् । एतत् सुदुर्लभतरमिह

लोके द्विजोत्तम॥ २१॥ आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमं। प्रपाश्च कार्य्या दानार्थं नित्यं ते द्विजसत्तम॥ २२॥ भुक्तेऽप्यथ प्रदेयन्तु पानीयं वै विशेषतः॥ २३॥

भीष्म उवाच। इत्युक्ते स तदा तेन यमदूतेन वै गृहान्। नीतश्च कारयामास सर्वं तद्यमशासनं॥ २४॥ नीत्वा तं यमदूतोऽपि गृहीत्वा शर्म्मिणं तदा। ययौ स धर्मराजाय न्यवेदयत चापि तं॥ २५॥ तं धर्मराजो धर्मज्ञं पूजयित्वा प्रतापवान्। कृत्वा च संविदं तेन विससर्ज्ज यथागतं॥ २६॥ तस्यापि च यमः सर्वमुपदेशञ्चकार ह। प्रेत्यागत्य च ततः सर्वं चकारोक्तं यमेन तत्॥ २७॥ तथा प्रशंसते दीपान् यमः पितृहितेप्सया। तस्माद्दीपप्रदो नित्यं सन्तारयति वै पितॄन्॥ २८॥ दातव्याः सततं दीपाः तस्माद्भरतसत्तम। दैवतानां पितॄणाञ्च चक्षुष्यञ्चात्मनो विभो॥ २९॥ रत्नदानञ्च सुमहत् पुण्यमुक्तं जनाधिप। यद्वै ददाति विक्रीय ब्राह्मणः प्रतिगृह्य वै। उभयोः स्यात्तदक्षय्यं दातुरादातुरेव च॥ ३१॥ यो ददाति स्थितः स्थित्यां तादृशाय प्रतिग्रहं। उभयोरक्षयं धर्म्मं तां मनुः प्राह धर्मवित्॥ ३२॥ वाससां सम्प्रदानेन स्वदारनिरतो नरः। सुवस्त्रश्च सुवेशश्च भवतीत्यनुशुश्रुम॥ ३३॥ गावः सुवर्णञ्च तथा तिलाश्चैवानुवर्णिताः। बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात्॥ ३४॥ विवाहांश्चैव कुर्वीत पुत्रानुत्पादयीत च। पुत्रलाभो हि कौरव्य सर्वलाभाद्विशिष्यते॥ ३५॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने अष्टषष्टोऽध्यायः॥ ६८॥

---

युधिष्ठिर उवाच। भूय एव कुरुश्रेष्ठ दानानां विधिमुत्तमं।

कथयस्व महाप्राज्ञ भूमिदानं विशेषतः ॥ १ ॥ पृथिवीं क्षत्रियो दद्यात् ब्राह्मणायेष्टिकर्म्मणि । विधिवत् प्रतिगृह्णीयान्नत्वन्यो दातुमर्हति ॥ २ ॥ सर्व्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः । वेदे वा यत् समाख्यातं तन्मे व्याख्यातुमर्हसि ॥ ३ ॥

भीष्म उवाच । तुल्यनामानि देयानि त्रीणि तुल्यफलानि च । सर्व्वकामफलानीह गावः पृथ्वी सरस्वती ॥ ४ ॥ यो ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीं । पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते ॥ ५ ॥ तथैव गाः प्रशंसन्ति न तु देयं ततः परं । सन्निकृष्टफलास्ता हि लघ्वार्थाश्च युधिष्ठिर ॥ ६ ॥ मातरः सर्व्वभूतानां गावः सर्व्वसुखप्रदाः । वृद्धिमाकाङ्क्षता नित्यं गावः कार्य्याः प्रदक्षिणाः ॥ ७ ॥ सन्ताड्या न तु पादेन गवां मध्ये न च व्रजेत् । मङ्गलायतनं देव्यस्तस्मात् पूज्याः सदैव हि ॥ ८ ॥ प्रचोदनं देवकृतं गवां कर्म्मसु वर्त्ततां । पूर्व्वमेवाक्षरं चान्यदभिधेयं ततः परं ॥ ९ ॥ प्रचारे वा निपाते वा बुधो नोद्विजयेत गाः । तृषिता ह्यभिवीक्ष्यन्त्यो नरं हन्युः सबान्धवं ॥ १० ॥ पितृसद्मानि सततं देवतायतनानि च । पूयन्ते शकृता यासां पूतं किमधिकं ततः ॥ ११ ॥ घासमुष्टिं परगवे दद्यात् सम्वत्सरन्तु यः । अकृत्वा स्वयमाहारं व्रतं तत् सार्व्वकामिकं ॥ १२ ॥ स हि पुत्रान् यशोऽर्थञ्च श्रियञ्चाप्यधिगच्छति । नाशयत्यशुभञ्चैव दुःस्वप्नञ्चाप्यपोहति ॥ १३ ॥

युधिष्ठिर उवाच । देयाः किं लक्षणा गावः काश्चापि परिवर्ज्जयेत् । कीदृशाय प्रदातव्या न देयाः कीदृशाय च ॥ १४ ॥

भीष्म उवाच । असद्वृत्ताय पापाय लुब्धायानृतवादिने । हव्यकव्यव्यपेताय न देया गौः कथञ्चन ॥ १५ ॥ भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये । दत्त्वा दश गवां दाता लोकानाप्नोत्यनुत्तमान् ॥ १६ ॥ यथैव धर्म्मं कुरुते तस्य धर्म्मफलञ्च यत् ।

सर्व्वस्यैवाग्रभाग्दाता तन्निमित्तं प्रवृत्तयः॥ १७॥ यश्चैनमुत्पा-
दयते यश्चैनं त्रायते भयात्। यश्चास्य कुरुते वृत्तिं सर्व्वे ते पितर-
स्त्रयः॥ १८॥ कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः।
अपुत्रतां त्रयः पुत्रा अवृत्तिं दशधेनवः। निर्विशन्त्यां पुरा पार्थ
द्वारवत्यामिति श्रुतिः॥ १९॥ वेदान्तनिष्ठस्य बहुश्रुतस्य प्रज्ञान-
तृप्तस्य जितेन्द्रियस्य। शिष्टस्य दान्तस्य यतस्य चैव भूतेषु नित्यं
प्रियवादिनश्च॥ २०॥ यः क्षुद्भयाद्वै न विकर्म्म कुर्य्यात् मृदुश्च
शान्तो ह्यतिथिप्रियश्च। वृत्तिं द्विजायातिसृजेत तस्मै यस्तुल्य-
शीलश्च सपुत्रदारः॥ २१॥ शुभे पात्रे ये गुणा गोप्रदाने तावान्
दोषो ब्राह्मणस्वापहारे। सर्व्वावस्थं ब्राह्मणस्वापहारो दारा-
श्चैषां दूरतो वर्ज्जनीयाः॥ २२॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने
ऊनसप्ततोऽध्यायः॥ ६९॥

---

भीष्म उवाच। अत्रैव कीर्त्त्यते सद्भिर्ब्राह्मणस्वाभिमर्षणे।
नृगेण सुमहत् कृच्छ्रं यदवाप्तं कुरूद्वह॥ १॥ अदृश्यत महा-
कूपस्तृणवीरुत्समावृतः॥ २॥ प्रयत्नं तत्र कुर्व्वाणास्तस्मात् कूपा-
ज्जलार्थिनः। श्रमेण महता युक्तास्तस्मिं स्तोये सुसंवृते॥ ३॥
ददृशुस्ते महाकायं कृकलासमवस्थितं। तस्य चोद्धरणे यत्नमकु-
र्व्वंस्ते सहस्रशः॥ ४॥ प्रग्रहैश्चर्म्मपट्टैश्च तं बद्ध्वा पर्व्वतोपमं।
नाशक्नुवन् समुद्धर्त्तुं ततो जग्मुर्ज्जनार्द्दनं॥ ५॥ खमावृत्योद-
पानस्य कृकलासः स्थितो महान्। तस्य नास्ति समुद्धर्त्तेत्यतत्
कृष्णे न्यवेदयन्॥ ६॥ स वासुदेवेन समुद्धृतश्च पृष्टश्च कार्य्यं
निजगाद राजा। नृगस्तदात्मानमथो न्यवेदयत् पुरातनं यज्ञ-
सहस्रयाजिनं॥ ७॥ तथा ब्रुवाणन्तु तमाह माधवः शुभं त्वया

कर्म्म कृतं न पापकं। कथं भवान् दुर्गतिमीदृशीं गतो नरेन्द्र तद्ब्रूहि किमेतदीदृशं ॥ ८ ॥ शतं सहस्राणि गवां शतं पुनः पुनः शतान्यष्टशतायुतानि च। त्वया पुरा दत्तमितीह शुश्रुम नृप द्विजेभ्यः क्व नु तद्गतं तव ॥ ९ ॥ नृगस्ततोऽब्रवीत् कृष्णं ब्राह्मणस्याग्निहोत्रिणः। प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने ॥ १० ॥ गवां सहस्रे संख्याता तदा सा पशुपैर्म्मम। सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ॥ ११ ॥ अपश्यत् परिमार्गंश्च तां गां परगृहे द्विजः। ममेयमिति चोवाच ब्राह्मणो यस्य साऽभवत् ॥ १२ ॥ तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ। भवान् दाता भवान् हर्त्तेत्यथ तौ मामवोचतां ॥ १३ ॥ शतेन शतसंख्येन गवां विनिमयेन वै। याचे प्रतिग्रहीतारं स तु मामब्रवीदिदं ॥ १४ ॥ देशकालोपसम्पन्ना दोग्ध्री क्षान्तातिवत्सला। स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने ॥ १५ ॥ कृशञ्च भरते सा गौर्म्मम पुत्रमपस्तनं। न सा शक्या मया दातुमित्युक्त्वा स जगाम ह ॥ १६ ॥ ततस्तमपरं विप्रं याचे विनिमयेन वै। गवां शतसहस्रं हि तत्कृते गृह्यतामिति ॥ १७ ॥

ब्राह्मण उवाच। न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे। सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥ १८ ॥ रुक्ममश्वांश्च ददतो रजतं स्यन्दनांस्तथा। न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥ १९ ॥ एतस्मिन्नेव काले तु चोदितः कालधर्म्मणा। पितृलोकमहं प्राप्य धर्म्मराजमुपागमं ॥ २० ॥ यमस्तु पूजयित्वा मां ततो वचनमब्रवीत्। नान्तः संख्यायते राजं स्तव पुण्यस्य कर्म्मणः ॥ २१ ॥ अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया। चरस्व पापं पश्चाद्वा पूर्व्वं वा त्वं यथेच्छसि ॥२२॥ रक्षितास्मीति चोक्तन्ते प्रतिज्ञा चानृता तव। ब्राह्मणस्वस्य चादानं द्विविधस्ते व्यतिक्रमः ॥ २३ ॥ पूर्व्वं कृच्छ्रं चरिष्येऽहं पश्चात्

शुभमिति प्रभो। धर्मराजं ब्रुवन्नेवं पतितोऽस्मि महीतले ॥ २४ ॥ अश्रौषं पतितश्चाहं यमस्योच्चैः प्रभाषतः। वासुदेव समुद्धर्त्ता भविता ते जनार्द्दनः ॥ २५ ॥ पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते। प्राप्स्यसे शाश्वताल्लोकान् जितान् स्वेनैव कर्मणा ॥२६॥ कूपेऽऽत्मानमधः शीर्षमपश्यं पतितश्च ह। तिर्य्यग्योनिमनुप्राप्तं न च मामजहात् स्मृतिः ॥ २७ ॥ त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात्। अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै ॥ २८ ॥ अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्द्दनं। विमानं दिव्यमास्थाय ययौ दिवमरिन्दम ॥ २९ ॥ ततस्तस्मिन् दिवं याते नृगे भरतसत्तम। वासुदेव इमं श्लोकं जगाद कुरुनन्दन ॥ ३० ॥ ब्राह्मणस्वं न हर्त्तव्यं पुरुषेण विजानता। ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ॥ ३१ ॥ सतां समागमः सद्भिर्नाफलः पार्थ विद्यते। विमुक्तं नरकात् पश्य नृगं साधुसमागमात् ॥ ३२ ॥ प्रदानं फलवत्तत्र द्रोहस्तत्र तथाफलः। अपचारं गवां तस्माद्वर्ज्जयेत युधिष्ठिर ॥ ३३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने नृगोपाख्याने सप्ततितमोऽध्यायः ॥ ७० ॥

---

युधिष्ठिर उवाच। दत्तानां फलसंप्राप्तिं गवां प्रब्रूहि मेऽनघ। विस्तरेण महाबाहो न हि तृप्यामि कथ्यतां ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनं। ऋषिरुद्दालकेर्वाक्यं नाचिकेतस्य चोभयोः ॥ २ ॥ ऋषिरुद्दालकिर्दीक्षामुपगम्य ततः सुतं। त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥ ३ ॥ समाप्ते नियमे तस्मिन् महर्षिः पुत्रमब्रवीत्। उपस्पर्शनसक्तस्य स्वाध्यायाभिरतस्य च ॥ ४ ॥ इध्मा दर्भाः सुमनसः कलस-

स्नातिभोजनं । विस्मृतं मे तदादाय नदीतीरादिहाव्रज ॥ ५ ॥
गत्वानवाप्य तत् सर्व्वं नदीवेगसमाप्लुतं । न पश्यामि तदित्येव
पितरं सोऽब्रवीन्मुनि ॥ ६ ॥ क्षुत्पिपासाश्रमाविष्ट ऋषिरुद्दा-
लकिस्तदा । यमं पश्येति तं पुत्रमशपत् स महातपाः ॥ ७ ॥
तथा स पित्राभिहितो वाग्वज्रेण कृताञ्जलिः । प्रसीदेति ब्रुव-
न्नेव गतसत्त्वोऽपतद्भुवि ॥ ८ ॥ नाचिकेतं पिता दृष्ट्वा पतितं दुःख-
मूर्च्छितः । किं मया कृतमित्युक्त्वा निपपात महीतले ॥ ९ ॥
तस्य दुःखपरीतस्य स्वं पुत्रमनुशोचतः । व्यतीतं तदहःशेषं सा
चोग्रा तत्र शर्व्वरी ॥ १० ॥ पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरू-
द्वह । प्रास्पन्दच्छयने कौश्ये वृष्ट्या शस्यमिवाप्लुतं ॥ ११ ॥ स
पर्य्यपृच्छत्तं पुत्रं क्षीणं पर्य्यागतं पुनः । दिव्यैर्गन्धैः समादिग्धं
क्षीणस्वप्नमिवोत्थितं ॥ १२ ॥ अपि पुत्र जिता लोकाः शुभास्ते
स्वेन कर्म्मणा । दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं वपुः
॥ १३ ॥ प्रत्यक्षदर्शी सर्व्वस्य पित्रा पृष्टो महात्मना । स तां
वार्त्तां पितुर्मध्ये महर्षीणां न्यवेदयत् ॥ १४ ॥ कुर्व्वन् भवच्छास-
नमाशु यातो ह्यहं विशालां रुचिरप्रभावां । वैवस्वतीं प्राप्य
सभामपश्यं सहस्रशो योजनहैमभासं ॥ १५ ॥ दृष्ट्वैव मामभि-
मुखमापतन्तं देहीति सह्यासनमादिदेश । वैवस्वतोऽर्घ्यादिभिर-
र्हणैश्च भवत्कृते पूजयामास मां सः ॥ १६ ॥ ततस्त्वहं तं शन-
कैरवोचं वृतः सदस्यैरभिपूज्यमानः । प्राप्तोऽस्मि ते विषयं धर्म्म-
राज लोकानर्हेयानर्हं तान् विधत्स्व ॥ १७ ॥ यमोऽब्रवीन्मां
न मृतोऽसि सौम्य यमं पश्येत्याह स त्वान्तपस्वी । पिता प्रदीप्ता-
ग्निसमानतेजा न तच्छक्यमनृतं विप्रकर्त्तुं ॥ १८ ॥ दृष्टस्तेऽहं
प्रतिगच्छस्व तात शोचत्यसौ तव देहस्य कर्त्ता । ददानि किञ्चापि
मनः प्रणीतं प्रियातिथेस्तव कामान् वृणीष्व ॥ १९ ॥ तेनैव-
मुक्तस्तमहं प्रत्यवोचं प्राप्तोऽस्मि ते विषयं दुर्निवर्त्तं । इच्छाम्यहं

पुण्यकृतां सम्भवाल्लोकान् द्रष्टुं यदि तेऽहं वरार्हः ॥ २० ॥ यानं समारोप्य तु मां स देवो वाहैर्युक्तं सुप्रभं भानुमत्तत् । सन्दर्शयामास तदात्मलोकान् सर्वां स्तथा पुण्यकृतां द्विजेन्द्र ॥ २१ ॥ अपश्यन्तत्र वेश्मानि तैजसानि महात्मनां । नानासंस्थानरूपाणि सर्वरत्नमयानि च ॥ २२ ॥ चन्द्रमण्डलशुभ्राणि किङ्किनीजालवन्ति च । अनेकशतभौमानि सान्तर्ज्जलचराणि च ॥ २३ ॥ वैदूर्य्यार्कप्रकाशानि रूप्यरुक्ममयाणि च । तरुणादित्यवर्णाणि स्थावराणि चराणि च ॥ २४ ॥ भक्ष्यभोज्यमयाञ्छैलान् वासांसि शयनानि च । सर्वकामफलांश्चैव वृक्षान् भवनसंस्थितान् ॥ २५ ॥ नद्यो वीथ्यः सभा वाप्यो दीर्घिकाश्चैव सर्वशः । घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ २६ ॥ क्षीरस्रवा वै सरितो गिरींश्च सर्पिस्तथा विमलञ्चापि तोयं । वैवस्वतस्यानुमतांश्च देशानदृष्टपूर्वान् सुवहूनपश्यं ॥ २७ ॥ सर्वान् दृष्ट्वा तदहं धर्मराजमवोचं वै प्रभविष्णुं पुराणं । क्षीरस्यैताः सर्पिषश्चैव नद्यः शश्वत्स्रोताः कस्य भोज्याः प्रदिष्टाः ॥ २८ ॥ यमोऽब्रवीद्विद्धि भोज्यास्त्वमेता ये दातारः साधवो गोरसानां । अन्ये लोकाः शाश्वतैर्वीतशोकैः समाकीर्णा गोप्रदाने रतानां ॥ २९ ॥ नत्वे तासां दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च । ज्ञात्वा देयं विप्रगवान्तरं हि दुःखं ज्ञातुं पावकादित्यभूतं ॥ ३० ॥ स्वाध्यायवान् योऽतिमात्रं तपस्वी वैतानस्थो ब्राह्मणः पात्रमासां । कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥ ३१ ॥ तिस्रो रात्रस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः । वत्सैः प्रीताः सुप्रजाः सोपचारास्त्र्यहं दत्त्वा गोरसैर्वर्त्तितव्यं ॥ ३२ ॥ दत्त्वा धेनुं सुव्रतां कांस्यदोहां कल्याणवत्सामपलायिनीञ्च । यावन्ति रोमाणि भवन्ति तस्यास्तावद्वर्षाण्यश्नुते स्वर्गलोकं ॥ ३३ ॥ तथानड्वाहं ब्राह्मणेभ्यः प्रदाय दान्तं धुर्य्यं

सत्त्ववन्तं युवानं। कल्याणजीव्यं वीर्य्यवन्तं वृहन्तं भुङ्क्ते लोकान् सम्मितान् धेनुदस्य॥ ३४॥ गोषु चान्तं गोशरण्यं कृतज्ञं वृत्तिग्लानं तादृशं पात्रमाहुः। वृद्धे ग्लाने सम्भ्रमे वा महार्थे कृष्यर्थं वा होम्यहेतोः प्रसूत्यां॥ ३५॥ गुर्व्वर्थे वा बालपुष्ट्याभिषङ्गां गां वै दातुं देशकालोविशिष्टः। अन्तर्ज्ञाताः सक्रयज्ञानलब्धाः प्राणक्रीता निर्जिता यौतकाश्च॥ ३६॥

नाचिकेत उवाच। श्रुत्वा वैवस्वतवचस्तमहं पुनरब्रुवं। अभावे गोप्रदातॄणां कथं लोकान् हि गच्छति॥ ३७॥ ततोऽब्रवीद्यमो धीमान् गोप्रदानपरां गतिं। गोप्रदानानुकल्पन्तु गामृते सन्ति गोप्रदाः॥ ३८॥ अलाभे यो गवां दद्यात् घृतधेनुं यतव्रतः। तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव॥ ३९॥ घृतालाभे तु यो दद्यात् तिलधेनुं यतव्रतः। स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते॥ ४०॥ तिलालाभे तु यो दद्यात् जलधेनुं यतव्रतः। सकामप्रवहां शीतां नदीमेतामुपाश्नुते॥४१॥ एवमेतानि मे तत्र धर्मराजो न्यदर्शयत्। दृष्ट्वा च परमं हर्षमवापमहमच्युत॥ ४२॥ निवेदये चाहमिमं प्रियन्ते क्रतुर्महानल्पधनप्रचारः। प्राप्तो मया तात स मत्प्रसूतः प्रपत्स्यते वेदविधिप्रवृत्तः॥ ४३॥ शापो ह्ययं भवतोऽनुग्रहाय प्राप्तो मया यत्र दृष्टो यमो वै। दानव्युष्टिं तत्र दृष्ट्वा महात्मनिःसन्दिग्धान् दानधर्मांश्चरिष्ये॥ ४४॥ इदञ्च मामब्रवीद्धर्मराजः पुनः पुनः संप्रहृष्टो महर्षे। दानेन यः प्रयतोऽभूत् सदैव विशेषतो गोप्रदानञ्च कुर्य्यात् ॥ ४५॥ शुद्धो ह्यर्थो नावमन्यस्व धर्मान् पात्रे देयं देशकालोपपन्ने। तस्माद्गावस्ते नित्यमेव प्रदेया मा भूच्च ते संशयः कश्चिदत्र॥ ४६॥ एताः पुरा ह्यददन्नित्यमेव शान्तात्मानो दानपथे निविष्टाः। तपांस्युग्राण्यप्रतिशङ्कमानास्ते वै दानं प्रददुश्चैव शक्त्या ॥ ४७॥ काले च शक्त्या मत्सरं वर्जयित्वा शुद्धात्मानः श्रद्धिनः

पुण्यशीलाः । दत्त्वा गा वै लोकममुं प्रपन्ना देदीप्यन्ते पुण्य-शीलास्तु नाके ॥ ४८ ॥ एतद्दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्तं प्रापणीयं परीक्ष्य । काम्याष्टम्यां वर्त्तितव्यं दशाहं रसैर्गवां शकृता प्रस्नवैर्वा ॥ ४९ ॥ देवव्रती स्याद्वृषभप्रदाने वेदावाप्ति-र्गोयुगस्य प्रदाने । तीर्थावाप्तिर्गोप्रयुक्तप्रदाने पापोत्सर्गः कपि-लायाः प्रदाने ॥ ५० ॥ गामप्येकां कपिलां सम्प्रदाय न्यायो-पेतां कलुषाद्विप्रमुच्येत् । गवां रसात् परमं नास्ति किञ्चित् गवां दानं सुमहत्तद्वदन्ति ॥ ५१ ॥ गावो लोकांस्तारयन्ति चरन्त्यो गावश्चान्नं संजनयन्ति लोके । यस्तज्जानन्न गवां हार्द्दमेति स वै गन्ता निरयं पापचेताः ॥ ५२ ॥ यैस्तद्दत्तं गोसहस्रं शतं वा दशार्द्धं वा दश वा साधुवत्सं । अप्येका वै साधवे ब्राह्मणाय सास्यामुष्मिन् पुण्यतीर्था नदी वै ॥ ५३ ॥ प्राप्तया पुष्ट्या लोक-संरक्षणेन गावस्तुल्याः सूर्य्यपादैः पृथिव्यां । शब्दश्चैकः सन्तति-श्चोपभोगस्तस्माद्गोदः सूर्य्य इवावभाति ॥ ५४ ॥ गुरुं शिष्यो वर-येद्गोप्रदाने स वै गन्ता नियतं स्वर्गमेव । विधिज्ञानां सुमहान् धर्म्म एष विधिं ह्याद्यं विधयः संविशन्ति ॥ ५५ ॥ इदं दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्त्वा प्रापयेथाः परीक्ष्य । त्वय्याशंसन्त्य-मरा मानवाश्च वयञ्चापि प्रसृते पुण्यशीले ॥ ५६ ॥ इत्युक्तोऽहं धर्मराजं द्विजर्षे धर्मात्मानं शिरसाभिप्रणम्य । अनुज्ञातस्तेन वैवस्वतेन प्रत्यागमं भगवत्पादमूलं ॥ ५७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने एकसप्ततोऽध्यायः ॥ ७१ ॥

---

युधिष्ठिर उवाच । उक्तं ते गोप्रदानं वै नाचिकेतमृषिं प्रति । माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो ॥ १ ॥ नृगेण च मह-

दुःखमनुभूतं महात्मना । एकापराधादज्ञानात् पितामह महामते ॥ २ ॥ दारवल्यां यथा चासौ निविशन्त्यां समुद्धृतः । मोक्षहेतुरभूत कृष्णास्तदप्यवधृतं मया ॥ ३ ॥ किन्त्वस्ति मम सन्देहो गवां लोकं प्रति प्रभो । तत्त्वतः श्रोतुमिच्छामि गोदा यत्र वसन्त्युत ॥ ४ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनं । यथपृच्छत् पद्मयोनिमेतदेव शतक्रतुः ॥ ५ ॥

शक्र उवाच । स्वर्लोकवासिनां लक्ष्मीमभिभूय स्वयार्च्चिषा । गोलोकवासिनः पश्ये व्रजतः संशयोऽत्र मे ॥ ६ ॥ कीदृशा भगवन् लोका गवां तद्ब्रूहि मेऽनघ । यानावसन्ति दातार एतदिच्छामि वेदितुं ॥ ७ ॥ कीदृशाः किं फलाः किंस्वित् परमस्तत्र कोगुणः । कथञ्च पुरुषास्तत्र गच्छन्ति विगतज्वराः ॥ ८ ॥ कियत्कालं प्रदानस्य दाता च फलमश्नुते । कथं बहुविधं दानं स्यादल्पमपि वा कथम् ॥ ९ ॥ बह्वीनां कीदृशं दानमल्पानां वापि कीदृशं । अदत्त्वा गोप्रदाः सन्ति केन वा तच्च शंस मे ॥ १० ॥ कथं वा बहुदाता स्यादल्पदात्रा समः प्रभो । अल्पप्रदाता बहुदः कथंस्वित् स्यादिहेश्वर ॥ ११ ॥ कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते । एतत्तथ्येन भगवन् मम शंसितुमर्हसि ॥ १२ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने शक्रप्रश्ने द्विसप्ततोऽध्यायः ॥ ७२ ॥

---

पितामह उवाच । योऽयं प्रश्नस्त्वया पृष्टो गोप्रदानादिकारितः । नास्ति प्रष्टास्ति लोकेऽस्मिन् त्वत्तोन्यो हि शतक्रतो ॥ १ ॥ सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि । पश्यामि

यानहं लोकानेकपत्न्यश्च याः स्त्रियः ॥ २ ॥ कर्मभिश्चापिसुशुभैः सुव्रता ऋषयस्तथा। सशरीरा हि तान् यान्ति ब्राह्मणाः शुभवुद्धयः ॥ ३ ॥ शरीरन्यासमोक्षेण मनसा निर्मलेन च। स्वप्नभूतांश्च तान् लोकान् पश्यन्तीहापि सुव्रताः ॥ ४ ॥ ते तु लोकाः सहस्राक्ष शृणु यादृग्गुणान्विताः। न तत्र क्रमते कालो न जरा न च पावकः। तथा नास्त्यशुभं किञ्चित् न व्याधिस्तत्र न क्लमः ॥ ५ ॥ यद्यच्च गावो मनसा तस्मिन् वाञ्छन्ति वासव। तत् सर्वं प्राप्नुवन्ति स्म मम प्रत्यक्षदर्शनात् ॥ ६ ॥ कामगाः कामचारिण्यः कामात् कामांश्च भुञ्जते। वाप्यः सरांसि सरितो विविधानि वनानि च। गृहाणि पर्वताश्चैव यावत् द्रव्यञ्च किञ्चन ॥ ७ ॥ मनोज्ञं सर्वभूतेभ्यः सर्वं तत्र प्रदिश्यते। ईदृशाद्विपुलालोकान्नास्ति लोकस्तथाविधः ॥ ८ ॥ तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्त्तिनः। अहङ्कारैर्विरहिता यान्ति शक्र नरोत्तमाः ॥ ९ ॥ यः सर्वमांसानि न भक्षयीत पुमान् सदा भावितो धर्मयुक्तः। मातापित्रोरर्च्चिता सत्ययुक्तः शुश्रूषिता ब्राह्मणानामनिन्द्यः ॥ १० ॥ अक्रोधनो गोषु तथा द्विजेषु धर्मे रतो गुरुशुश्रकश्च। यावज्जीवं सत्यवृत्ते रतश्च दाने रतो यः क्षमी चापराधे ॥ ११ ॥ मृदुर्दान्तो देवपरायणश्च सर्वातिथिश्चापि तथा दयावान्। ईदृग्गुणो मानवस्तं प्रयाति लोकं गवां शाश्वतमव्ययञ्च ॥ १२ ॥ न पारदारी पश्यति लोकमेतं न वै गुरुघ्नो न मृषाप्रलापी। सदा प्रवादी ब्राह्मणेष्वात्तवैरो दोषैरेतैर्यश्च युक्तोदुरात्मा ॥ १३ ॥ न मि भुङ्नैकृतिकः कृतघ्नः शठोऽनृजुर्धर्मविद्वेषकश्च। न ब्रह्महा मनसापि प्रपश्येद्गवां लोकं पुण्यकृतां निवासं ॥ १४ ॥ एतत्ते सर्वमाख्यातं निपुणेन सुरेश्वर। गोप्रदानरतानान्तु फलं शृणु शतक्रतो ॥ १५ ॥ दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा संप्रयच्छति। धर्मार्ज्जितधनक्रीतान् स लोकानाप्नुतेऽक्षयान् ॥ १६ ॥ यो वै द्यूते

धनं जित्वा गाः क्रीत्वा संप्रयच्छति । स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते ॥ १७ ॥ दायाद्याः स च वै गावो न्यायपूर्वैरुपार्जिताः । प्रदद्यात्ताः प्रदातृणां सम्भवन्त्यक्षया ध्रुवाः ॥ १८ ॥ प्रतिगृह्य तु यो दद्याद्गाः संशुद्धेन चेतसा । तस्यापीहाक्षयान् लोकान् ध्रुवान् विद्धि शचीपते ॥ १९ ॥ जन्मप्रभृति सत्यञ्च यो ब्रूयान्नियतेन्द्रियः । गुरुद्विजसहः क्षान्तस्तस्य गोभिः समा गतिः ॥ २० ॥ न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते । मनसा गोषु न द्रुह्येद्गोवृत्तिर्गोनुकम्पकः ॥ २१ ॥ सत्ये धर्मे च निरतस्तस्य शक्र फलं शृणु । गोसहस्रेण समिता तस्य धेनुर्भवत्युत ॥ २२ ॥ क्षत्रियस्य गुणैरेतैरपि तुल्यफलं शृणु । तस्यापि द्विजतुल्या गौर्भवतीति विनिश्चयः ॥ २३ ॥ वैश्यस्यैते यदि गुणास्तस्य पञ्चशतं भवेत् । शूद्रस्यापि विनीतस्य चतुर्भागं फलं स्मृतं ॥ २४ ॥ एतच्चैनं योऽनुतिष्ठेत युक्तः सत्ये रतो गुरुशुश्रूषया च । दक्षः क्षान्तो देवतार्थी प्रशान्तः शुचिर्बुद्धो धर्मशीलोऽनहंवाक् ॥ २५ ॥ महत् फलं प्राप्यते स द्विजाय दत्त्वा दोग्ध्रीं विधिनानेन धेनुं । नित्यं दद्यादेकभक्तः सदा च सत्ये स्थितो गुरुशुश्रूषिता च ॥ २६ ॥ वेदाध्यायी गोषु यो भक्तिमांश्च नित्यं दृष्ट्वा योऽभिनन्देत गाश्च । आजातितो यश्च गवां नमेत इदं फलं शक्र निबोध तस्य ॥ २७ ॥ यत् स्यादिष्ट्वा राजसूये फलन्तु यत्तादिष्ट्वा बहुना काञ्चनेन । एतत्तुल्यं फलमप्याहुरग्र्यं सर्व्वे सन्तस्त्वृषयो ये च सिद्धाः ॥ २८ ॥ योऽग्रं भक्तं किञ्चिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी । शान्तोऽलुब्धो गोसहस्रस्य पुण्यं सम्वत्सरेणाप्नुयात् सत्यशीलः ॥२९॥ यदेकभक्तमश्नीयाद्दद्यादेकं गवाञ्च यत् । दशवर्षाण्यनन्तानि गोव्रती गोनुकम्पकः ॥ ३० ॥ एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति । यावन्ति तस्या रोमाणि सम्भवन्ति शतक्रते । तावत् प्रदानात् स गवां फलमाप्नोति शाश्वतं

॥ ३१ ॥ ब्राह्मणस्य फलं ह्रीदं क्षत्रियस्य तु वै शृणु। पञ्च-
वार्षिकमेयन्तु क्षत्रियस्य फलं स्मृतं। तदर्द्धेन तु वैश्यस्य शूद्रो
वैश्यार्द्धतः स्मृतः ॥ ३२ ॥ यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा संप्रय-
च्छति। यावत् सन्दर्शयेत्तां वै स तावत् फलमश्नुते ॥ ३३ ॥
रोम्णि रोम्णि महाभाग लोकाश्चास्याक्षयाः स्मृताः। संग्रामेष्व-
र्ज्जयित्वा तु यो वै गाः संप्रयच्छति ॥ ३४ ॥ आत्मविक्रयतुल्यास्ताः
शाश्वता विद्धि कौशिक। अभावे यो गवां दद्यात्तिलधेनुं यत-
व्रतः। दुर्गात् स तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ ३५ ॥
न त्वेवासां दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च काल-
ज्ञानं विप्रगवान्तरं हि दुःखं ज्ञातुं पावकादित्यभूतं ॥ ३६ ॥
स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञं।
गोषु क्षान्तं नातितीक्ष्णं शरण्यं वृत्तिग्लानं तादृशं पात्रमाहुः
॥ ३७ ॥ वृत्तिग्लाने सीदति चातिमात्रं कृष्यर्थं वा होम्यहेतोः
प्रसूते। गुर्वर्थं वा बालसंवृद्धये वा धेनुं दद्याद्देशकाले विशिष्टे
॥ ३८ ॥ अन्तर्ज्ञाताः सक्र या ज्ञानलब्धाः प्राणैः क्रीतास्तेजसा
यौतुकाश्च। कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः
प्रशस्ताः ॥ ३९ ॥ बलान्विताः शीलवयोपपन्नाः सर्वाः प्रशंसन्ति
सुगन्धवत्यः। यथा हि गङ्गा सरितां वरिष्ठा तथार्जुनीनां कपिला
वरिष्ठा ॥ ४० ॥ तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ तृप्ता गाव-
स्तर्पितेभ्यः प्रदेयाः। वत्सैः पुष्टैः क्षीरपैः सुप्रचारास्त्र्यहं दत्त्वा
गोरसैर्वर्त्तितव्यं ॥ ४१ ॥ दत्त्वा धेनुं सुव्रतां साधुदोहां कल्याण-
वत्सामपलायिनीञ्च। यावन्ति रोमाणि भवन्ति चास्यास्तावन्ति
वर्षाणि भवन्त्यमुत्र ॥ ४२ ॥ तथानड्वाहं ब्राह्मणाय प्रदाय धूर्य्यं
युवानं बलिनं विनीतं। हलस्य वोढ़ारमनन्तवीर्य्यं प्राप्नोति
लोकान् दशधेनुदस्य ॥ ४३ ॥ कान्तारे ब्राह्मणान् गाश्च यः
परित्राति कौशिक। क्षेमेण विप्रमुच्येरंस्तस्य पुण्यफलं शृणु ॥४४॥

अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतं। मृत्युकाले सहस्राच यां वृत्तिमनुकाङ्क्षते ॥ ४५ ॥ लोकान् बहुविधान् दिव्यान् यश्चास्य हृदि वर्त्तते। तत् सर्वं समवाप्नोति कर्म्मणानेन मानवः ॥ ४६ ॥ गोभिश्च समनुज्ञातः सर्व्वत्र च महीयते। यस्त्वेतेनैव कल्पेन गां वनेष्वनुगच्छति ॥ ४७ ॥ तृणगोमयपर्णाशी निस्पृहो नियतः शुचिः। अकामं तेन वस्तव्यं मुदितेन शतक्रतो। मम लोके सुरैः सार्द्धं लोके यत्रापि चेच्छति ॥ ४८ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्मकथने त्रिसप्ततोऽध्यायः ॥ ७३ ॥

---

इन्द्र उवाच। जानन् यो गामपहरेद्विक्रीयाच्चार्थकारणात्। एतद्विज्ञातुमिच्छामि क्व नु तस्य गतिर्भवेत् ॥ १ ॥

पितामह उवाच। भक्ष्यार्थं विक्रयार्थं वा येऽपहारं हि कुर्व्वते। दानार्थं ब्राह्मणार्थाय तत्रेदं श्रूयतां फलम् ॥ २ ॥ विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः। घातयानं हि पुरुषं ये तु मन्येयुरर्थिनः ॥ ३ ॥ घातकः खादको वापि तथा यश्चानुमन्यते। यावन्ति तस्या रोमाणि तावर्षाणि मज्जति ॥ ४ ॥ ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके। विक्रये चापहारे च ते दोषा वै स्मृताः प्रभो ॥ ५ ॥ अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति। यावद्दानफलं तस्यास्तावन्निरयमृच्छति ॥ ६ ॥ सुवर्णं दक्षिणामाहुर्गोप्रदाने महाद्युते। सुवर्णं परमित्युक्तं दक्षिणार्थमसंशयं ॥ ७ ॥ गोप्रदानात्तारयेत सप्त पूर्व्वां स्तथापरान्। सुवर्णं दक्षिणां कृत्वा तावद्द्विगुणमुच्यते ॥ ८ ॥ सुवर्णं परमं दानं सुवर्णं दक्षिणा परा। सुवर्णं पावनं शक्र पावनानां

परं स्मृतं ॥ ९ ॥ कुलानां पावनं प्राहुर्ज्ञातरूपं शतक्रतो । एषा मे दक्षिणा प्रोक्ता समासेन महाद्युते ॥ १० ॥

भीष्म उवाच । एतत् पितामहेनोक्तमिन्द्राय भरतर्षभ । इन्द्रो दशरथायाह रामायाह पिता तथा ॥ ११ ॥ राघवोऽपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने । ऋषिभ्यो लक्ष्मणेनोक्तमरण्ये वसता प्रभो ॥ १२ ॥ पारम्पर्य्यागतञ्चेदमृषयः शंसितव्रताः । दुर्द्धरं धारयामासू राजानश्चैव धार्मिकाः ॥ १३ ॥ उपाध्यायेन गदितं मम चेदं युधिष्ठिर । य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि ॥ १४ ॥ यज्ञेषु गोप्रदानेषु द्वयोरपि समागमे । तस्य लोकाः किलाक्षय्या दैवतैः सह नित्यदा ॥ १५ ॥ इति ब्रह्मा स भगवानुवाच परमेश्वरः ॥ १६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने
चतुःसप्ततोऽध्यायः ॥ ७४ ॥

---

युधिष्ठिर उवाच । विश्रम्भितोऽहं भवता धर्मान् प्रवदता प्रभो । प्रवक्ष्यामि तु सन्देहं तन्मे ब्रूहि पितामह ॥ १ ॥ व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते । नियमानां फलञ्चैव स्वधीतस्य च किं फलं ॥ २ ॥ दत्तस्येह फलं किञ्च वेदानां धारणे च किं । अध्यापने फलं किञ्च सर्वमिच्छामि वेदितुं ॥ ३ ॥ अप्रतिग्राहके किञ्च फलं लोके पितामह । तस्य किञ्च फलं दृष्टं श्रुतं यस्तु प्रयच्छति ॥ ४ ॥ स्वकर्मनिरतानाञ्च शूराणाञ्चापि किं फलं । शौचे च किं फलं प्रोक्तं ब्रह्मचर्य्येञ्च किं फलं ॥ ५ ॥ पितृशुश्रूषणे किञ्च मातृशुश्रूषणे तथा । आचार्य्यगुरुशुश्रूषास्वनुक्रोशानुकम्पने ॥ ६ ॥ एतत् सर्वमशेषेण पितामह यथातथं । वेत्तुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥ ७ ॥

भीष्म उवाच। यो व्रतं वै यथोद्दिष्टं तथा सम्प्रतिपद्यते। अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः ॥ ८ ॥ नियमानां फलं राजन् प्रत्यक्षमिह दृश्यते। नियमानां क्रतूनाञ्च त्वयावाप्तमिदं फलं ॥ ९ ॥ स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च। इह लोके च वा नित्यं ब्रह्मलोके च मोदते ॥ १० ॥ दमस्य तु फलं राजन् शृणु त्वं विस्तरेण मे। दान्ताः सर्व्वत्र सुखिनो दान्ताः सर्व्वत्र निर्वृताः ॥ ११ ॥ यत्रेच्छागामिनो दान्ताः सर्व्वशत्रुनिसूदनाः। प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ॥ १२ ॥ युज्यन्ते सर्व्वकामैर्हि दान्ताः सर्व्वत्र पाण्डव। स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ॥ १३ ॥ दानैर्यज्ञैश्च विविधैस्तथा दान्ताः क्षमान्विताः। दानाद्दमो विशिष्टो हि दानं किञ्चित् द्विजातये ॥ १४ ॥ दाता कुप्यति नो दान्तस्तस्माद्दानात् परं दमः। यस्तु दद्यादकुप्यन् हि तस्य लोकाः सनातनाः ॥ १५ ॥ क्रोधो हन्ति हि यद्दानं तस्माद्दानात् परं दमः ॥ १६ ॥ अदृश्यानि महाराज स्थानान्ययुतशो दिवि। ऋषीणां सर्व्वलोकेषु यानीतो यान्ति देवताः ॥ १७ ॥ दमेन यानि नृपते गच्छन्ति परमर्षयः। कामयाना महत् स्थानं तस्माद्दानात् परं दमः ॥ १८ ॥ अध्यापकः परिक्लेशादक्षयं फलमश्नुते। विधिवत् पावकं हुत्वा ब्रह्मलोके नराधिप ॥ १९ ॥ अधीत्यापि हि यो वेदान् न्यायविद्भ्यः प्रयच्छति। गुरुकर्म प्रशंसी तु सोऽपि स्वर्गे महीयते ॥ २० ॥ क्षत्रियोऽध्ययने युक्तो यजने दानकर्म्मणि। युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते ॥ २१ ॥ वैश्यः स्वकर्म्मनिरतः प्रदानाल्लभते महत्। शूद्रः स्वकर्म्मनिरतः स्वर्गं शुश्रूषयार्च्छति ॥ २२ ॥ शूरा बहुविधाः प्रोक्तास्तेषामर्थांस्तु मे शृणु। शूरान्वयानां निर्द्दिष्टं फलं शूरस्य चैव हि ॥ २३ ॥ यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे। युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥ २४ ॥ सांख्य-

शूराश्च बहवो योगशूरास्तथापरे। अरण्ये गृहवासे च त्यागे शूरास्तथापरे ॥ २५ ॥ बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथापरे। आर्जवे च तथाशूराः शमे वर्त्तन्ति मानवाः ॥ २६ ॥ तैस्तैस्तु नियमैः शूरा बहव सन्ति चापरे। वेदाध्ययनशूराश्च शूराश्चाध्ययने रताः ॥ २७ ॥ गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे। मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे ॥ २८ ॥ अरण्ये गृहवासे च शूराश्चातिथिपूजने। सर्वे यान्ति पराल्लोकान् स्वकर्मफलनिर्ज्जितान् ॥ २९ ॥ धारणं सर्ववेदानां सर्वतीर्थावगाहनं। सत्यञ्च ब्रुवतो नित्यं समं वा स्यान्न वा समं ॥ ३० ॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतं। अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ३१ ॥ सत्येन सूर्य्यस्तपति सत्येनाग्निः प्रदीप्यते। सत्येन मरुतो वान्ति सर्वं सत्ये प्रतिष्ठितं ॥ ३२ ॥ सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा। सत्यमाहुः परो धर्मस्तस्मात् सत्यं न लङ्घयेत् ॥ ३३ ॥ मुनयः सत्यनिरता मुनयः सत्यविक्रमाः। मुनयः सत्यशपथास्तस्मात् सत्यं विशिष्यते। सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ ॥ ३४ ॥ दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया। असंशयं विनीतात्मा स वै स्वर्गे महीयते ॥ ३५ ॥ ब्रह्मचर्य्यस्य च गुणं शृणु त्वं वसुधाधिप। आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ॥ ३६ ॥ न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप। बह्व्यः कोट्यस्त्वृषीणाञ्च ब्रह्मलोके वसन्त्युत ॥ ३७ ॥ सत्ये रतानां सततं दान्तानामूर्द्ध्वरेतसां। ब्रह्मचर्य्यं दहेद्राजन् सर्वपापान्युपासितं ॥ ३८ ॥ ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते। प्रत्यक्षं हि तथा ह्येतद्ब्राह्मणेषु तपस्विषु ॥ ३९ ॥ बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः। तद्ब्रह्मचर्य्यस्य फलमृषीणामिह दृश्यते ॥ ४० ॥ मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु। शुश्रूषते यः पितरं नावसूयेत् कदाचन ॥ ४१ ॥ मातरं भ्रातरं

वाप गुरुमाचार्य्यमेव च। तस्य राजन् फलं विद्धि स्वर्लोके स्थानमर्च्चितं। न च पश्येत नरकं गुरुशुश्रूषयात्मवान् ॥ ४२ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

---

युधिष्ठिर उवाच। विधिं गवां परं श्रोतुमिच्छामि नृप सत्त्वतः। येन तांच्छाश्वतान् लोकानखिलान् प्राप्नुयादिह ॥१॥ भीष्म उवाच। न गोदानात् परं किञ्चित् विद्यते वसुधाधिप। गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलं ॥ २ ॥ सतामर्थे सम्यगुत्पादितो यः स वै क्लृप्तः सम्यगाभ्यः प्रजाभ्यः। तस्मात् पूर्वं ह्यादिकालप्रवृत्तं गोदानार्थं शृणु राजन् विधिं मे ॥ ३ ॥ पुरा गोषूपनीतासु गोषु सन्दिग्धदर्शिना। मान्धात्रा प्रकृतं प्रश्नं वृहस्पतिरभाषत ॥ ४ ॥ द्विजातिमतिसत्कृत्य श्वः कालमभिवेद्य च। गोदानार्थं प्रयुञ्जीत रोहिणीं नियतव्रतः ॥ ५ ॥ आह्वानञ्च प्रयुञ्जीत समङ्गे वहुलेति च। प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥ ६ ॥ गौर्मे माता वृषभः पिता मे दिवं शर्म्म जगती मे प्रतिष्ठा। प्रपद्यैवं शर्वरीमुष्य गोषु पुनर्वाणीमुत्सृजेद्गोप्रदाने ॥ ७ ॥ स तामेकां निशां गोभिः समसंख्यः समव्रतः। ऐकात्म्यगमनात् सद्यः कलुषाद्विप्रमुच्यते ॥ ८ ॥ उत्सृष्टवृषवत्सा हि प्रदेया सूर्य्यदर्शने। त्रिदिवं प्रतिपत्तव्यमर्थवादाशिषस्तव ॥ ९ ॥ ऊर्ज्जस्विन्य ऊर्ज्जमेधाश्च यज्ञेगर्भोऽमृतस्य जगतोऽस्य प्रतिष्ठा। क्षितेरोहः प्रवहः शश्वदेव प्राजापत्याः सर्वमित्यर्थवादाः ॥ १० ॥ गावो ममैनः प्रणुदन्तु सौर्य्यास्तथा सौम्याः स्वर्गयानाय सन्तु। आत्मानं मे मातृवच्चाश्रयन्तु तथानुक्ताः सन्तु सर्वाशिषो मे ॥ ११ ॥ शेषोत्सर्गे कर्म्मभिर्देहमोक्षे

सरस्वत्यः श्रेयसे संप्रवृत्ताः। यूयं नित्यं सर्वपुण्योपवाह्या दिशध्वं मे गतिमिष्टां प्रसन्नाः॥ १२ ॥ या वै यूयं सोऽहमद्यैकभावो युष्मान् दत्त्वा चाहमात्मप्रदाता। मनश्च्युता मन एवोपपन्नाः सन्धुक्षध्वं सौम्यरूपोग्ररूपाः। १३ ॥ एवं तस्याग्रे पूर्वमर्द्धं वदेत गवां दाता विधिवत् पूर्वदृष्टं। प्रतिब्रूयाच्छेषमर्द्धं द्विजातिः प्रतिगृह्णन् वै गोप्रदाने विधिज्ञः॥ १४॥ गोप्रदानीति वक्तव्यमर्घवस्त्रवसुप्रदः। ऊर्ध्वास्या भवितव्या च वैष्णवीति च चोदयेत् ॥ १५॥ नामसंकीर्त्तयेत्तस्या यथा संख्योत्तरं स वै। फलं षट्त्रिंशदष्टौ च सहस्राणि च विंशतिः॥ १६॥ एवमेतान् गुणान् विद्याद्गवादीनां यथाक्रमं। गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे॥ १७॥ गोदः शीली निर्भयश्चार्घदाता न स्याद्दुःखी वसुदाता च कामं। उपस्योढ़ा भारते यश्च विद्वान् विख्यातास्ते वैष्णवाश्चन्द्रलोकाः॥ १८॥ गां वै दत्त्वा गोव्रती स्यात्त्रिरात्रं निशाञ्चैकां संवसेतेह ताभिः। काम्याष्टम्यां वर्त्तितव्यं त्रिरात्रं रसैर्वा गोशकृता प्रस्नवैर्वा॥ १९॥ देवव्रती स्याद्वृषभप्रदाने वेदावाप्तिर्गोयुगस्य प्रदाने। तथा गवां विधिमासाद्य यज्वा लोकानग्र्यान् विन्दते नाविधिज्ञः॥ २०॥ कामान् सर्वान् पार्थिवानेकसंस्थान् यो वै दद्यात् कामदुघाञ्च धेनुं। सम्यक् ताः स्युर्हव्यकव्यौघवत्यस्तासामुक्ष्णां ज्यायसां सम्प्रदानं॥ २१ ॥ न चाशिष्यायाव्रतायोपकुर्य्यान्नाश्रद्दधानाय न वक्रबुद्धये। गुह्यो ह्ययं सर्वलोकस्य धर्मो नेमं धर्मं यत्र तत्र प्रजल्पेत्॥ २२॥ सन्ति लोके श्रद्दधाना मनुष्याः सन्ति क्षुद्रा राक्षसा मानुषेषु। एषामेतद्दीयमानं ह्यनिष्टं ये नास्तिक्यञ्चाश्रयन्तेऽल्पपुण्याः॥ २७॥ बार्हस्पत्यं वाक्यमेतन्निशम्य ये राजानो गोप्रदानानि दत्त्वा। लोकान् प्राप्ताः पुण्यशीलाः प्रवृत्तास्तान्मे राजन् कीर्त्त्यमानान्निबोध॥ २४॥ उशीनरो विष्वगश्वो नृगश्च भगीरथो विश्रुतो

यौवनाश्वः । मान्धाता वै मुचुकुन्दश्च राजा भूमिद्युम्नो नैषधः सोमकश्च ॥ २५ ॥ पुरूरवा भरतश्चक्रवर्त्ती यस्यान्ववाये भारताः सर्व एव । तथा वीरो दाशरथिश्च रामो ये चाप्यन्ये विश्रुताः कीर्त्तिमन्तः ॥ २६ ॥ तथा राजा पृथुकर्मा दिलीपो दिवं प्राप्तो गोप्रदानैर्विधिज्ञः । यज्ञैर्दानैस्तपसा राजधर्मैर्मान्धाताभूद्गोप्रदानैश्च युक्तः ॥ २७ ॥ तस्मात् पार्थ त्वमपीमां मयोक्तां वार्हस्पतीं भारतीं धारयस्व । द्विजाग्र्येभ्यः संप्रयच्छस्व प्रीतो गाः पुण्या वै प्राप्य राज्यं कुरूणां ॥ २८ ॥

वैशम्पायन उवाच । तथा सर्वं कृतवान् धर्म्मराजो भीष्मेणोक्तो विधिवद्गोप्रदाने । स मान्धातुर्द्देवदेवोपदिष्टं सम्यक् धर्मं धारयामास राजा ॥ २९ ॥ इति नृप सततं गवां प्रदाने यवशकलान् सह गोमयैः पिवानः । क्षितितलशयनः शिखी यतात्मा वृष इव राजवृषस्तदा बभूव ॥ ३० ॥ नरपतिरभवत् सदैव ताभ्यः प्रयतमनास्त्वभिसंस्तुवंश्च ताः स्म । नृपतिधुरि न गामयुक्त भूयस्तुरगवरैरगमच्च यत्र तत्र ॥ ३१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

वैशम्पायन उवाच । ततो युधिष्ठिरो राजा भूयः शान्तनवं नृपं । गोदाने विस्तरं धीमान् पप्रच्छ विनयान्वितः ॥ १ ॥

युधिष्ठिर उवाच । गोप्रदानगुणान् सम्यक् पुनर्मे ब्रूहि भारत । न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशं ॥ २ ॥

वैशम्पायन उवाच । इत्युक्तो धर्मराजेन तदा शान्तनवो नृपः । सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ॥ ३ ॥

भीष्म उवाच । वत्सलां गुणसम्पन्नां तरुणीं वस्त्रसंयुतां ।

दत्त्वेदृशीं गां विप्राय सर्व्वपापैः प्रमुच्यते ॥ ४ ॥ असूर्य्या नाम ते लोका गां दत्त्वा तान्न गच्छति ॥ ५ ॥ पीतोदकां जग्धतृणां नष्टक्षीरां निरिन्द्रियां। जरारोगोपसम्पन्नां जीर्णां वापीमिवाजलां। दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ॥ ६ ॥ रुष्टा दुष्टा व्याधिता दुर्ब्बला वा नो दातव्या याश्च मूल्यैरदत्तैः। क्लेशैर्विप्रं योऽफलैः संयुनक्ति तस्यावीर्य्याश्चाफलाश्चैव लोकाः ॥ ७ ॥ बलान्विताः शीलवयोपपन्नाः सर्व्वे प्रशंसन्ति सुगन्धवत्यः। यथा हि गङ्गा सरितां वरिष्ठा तथार्जुनीनां कपिला वरिष्ठा ॥ ८ ॥

युधिष्ठिर उवाच। कस्मात् समाने बहुला प्रदाने सद्भिः प्रशस्तं कपिलाप्रदानं। विशेषमिच्छामि महाप्रभाव श्रोतुं समर्थोऽसि भवान् प्रवक्तुं ॥ ९ ॥

भीष्म उवाच। वृद्धानां ब्रुवतां तात श्रुतं मे तत् पुरातनं। वक्ष्यामि तदशेषेण रोहिण्यो निर्म्मिता यथा ॥ १० ॥ प्रजाः सृजेति चादिष्टः पूर्व्वं दक्षः स्वयम्भुवा। असृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ॥ ११ ॥ यथा ह्यमृतमाश्रित्य वर्त्तयन्ति दिवौकसः। तथा वृत्तिं समाश्रित्य वर्त्तयन्ति प्रजा विभो ॥ १२ ॥ अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठाः सदा नराः। ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ॥ १३ ॥ यज्ञैरवाप्यते सोमः स च गोषु प्रतिष्ठितः। ततो देवाः प्रमोदन्ते पूर्व्वं वृत्तिस्ततः प्रजाः ॥ १४ ॥ प्रजा तान्येव भूतानि प्राक्रोशन् वृत्तिकाङ्क्षया। वृत्तिदञ्चान्वपद्यन्त तृषिताः पितृमातृवत् ॥ १५ ॥ इतीदं मनसा गत्वा प्रजासर्गार्थमात्मनः। प्रजापतिस्तु भगवानमृतं प्रापिवत्तदा ॥ १६ ॥ स गतस्तस्य तृप्तिन्तु गन्धं सुरभिमुद्गिरन्। ददर्शोद्गारसंवृत्तां सुरभीं मुखजां सुतां ॥ १७ ॥ सासृजत् सौरभेयीस्तु सुरभिर्लोकमातृकाः। सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ॥ १८ ॥ तासाममृतवर्णानां चरन्तीनां समन्ततः। बभूवासृजतः फेणः

स्रवन्ती नाभिवोर्म्मिजः ॥ १९ ॥ सवत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः । शिरस्यवापतत् क्रुद्धः स तदैचत च प्रभुः ॥ २० ॥ ललाटप्रभवेणाक्ष्णा रोहिणीं प्रदहन्निव । तत्तेजस्तु ततो रौद्रं कपिलास्ता विशाम्पते ॥ २१ ॥ नानावर्णत्वमनयन्मेघानिव दिवाकरः । यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः ॥ २२ ॥ यथोत्पन्नाः स्ववर्णस्थास्ता नीता नान्यवर्णतां । अथ क्रुद्धं महादेवं प्रजापतिरभाषत ॥ २३ ॥ अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यते गवां । यथा ह्यमृतमादाय सोमो विस्यन्दते पुनः ॥ २४ ॥ तथा चीरं चरन्त्येता रोहिण्योऽमृतसम्भवं । न दुष्यत्यनिलो नाग्निर्न सुवर्णं न चोदधिः ॥ २५ ॥ नामृतेनामृतं पीतं वत्सपीता न वत्सला । इमान् लोकान् भरिष्यन्ति हविषा प्रस्रवेण च ॥ २६ ॥ आसामैश्वर्य्यमिच्छन्ति सर्व्वेऽमृतमयं शुभं । वृषभञ्च ददौ तस्मै सह गोभिः प्रजापतिः ॥ २७ ॥ प्रसादयामास मनस्तेन रुद्रस्य भारत । प्रीतश्चापि महादेवश्चकार वृषभं तदा । ध्वजञ्च वाहनञ्चैव तस्मात् स वृषभध्वजः ॥ २८ ॥ ततो देवैर्महादेवस्तदा पशुपतिः कृतः । ईश्वरः स गवां मध्ये वृषभाङ्क प्रकीर्त्तितः ॥ २९ ॥ एवमव्यग्रवर्णानां कपिलानां महौजसां । प्रदाने प्रथमः कल्पः सर्व्वासामेव कीर्त्तितः ॥ ३० ॥ लोकज्येष्ठा लोकवृत्तिप्रवृत्ता रुद्रोपेताः सोमविस्यन्दभूताः । सौम्याः पुण्याः कामदाः प्राणदाश्च गा वै दत्त्वा सर्व्वकामप्रदः स्यात् ॥ ३१॥ इमं गवां प्रभवविधानमुत्तमं पठन् सदा शुचिरपि मङ्गलप्रियः । विमुच्यते कलिकलुषेण मानवः श्रियं सुतान् धनपशुमाप्नुयात् सदा ॥ ३२ ॥ हव्यं कव्यं तर्पणं शान्तिकर्म यानं वासो वृद्धबालस्य तुष्टिः । एतान् सर्व्वान् गोप्रदाने गुणान् वै दाता राजन्नाप्नुयाद्वै सदैव ॥ ३३ ॥

वैशम्पायन उवाच । पितामहस्याथ निशम्य वाक्यं राजा

सह भ्रातृभिराजमीढः। सुवर्णवर्णानडुहस्तथा गाः पार्थो ददौ ब्राह्मणसत्तमेभ्यः ॥ ३४ ॥ तथैव तेभ्योऽपि ददौ द्विजेभ्यो गवां सहस्राणि शतानि चैव। यज्ञान् समुद्दिश्य च दक्षिणार्थं लोकान् विजेतुं परमाञ्च कीर्त्तिं ॥ ३५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने सप्तसप्ततोऽध्यायः ॥ ७७ ॥

---

भीष्म उवाच। एतस्मिन्नेव काले तु वशिष्ठमृषिसत्तमं। इक्ष्वाकुवंशजो राजा सौदासो वदतां वरः ॥ १ ॥ सर्वलोकचरं सिद्धं ब्रह्मकोषं सनातनं। पुरोहितमभिप्रष्टुमभिवाद्योपचक्रमे ॥२॥

सौदास उवाच। त्रैलोक्ये भगवन् किंस्वित् पवित्रं कथ्यतेऽनघ। यत् कीर्त्तयन् सदा मर्त्त्यः प्राप्नुयात् पुण्यमुत्तमं ॥ ३ ॥

भीष्म उवाच। तस्मै प्रोवाच वचनं प्रणताय हितं तदा। गवामुपनिषद्विद्वान् नमस्कृत्य गवां शुचिः ॥ ४ ॥ गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धयः। गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥ ५ ॥ गावो भूतञ्च भव्यञ्च गावः पुष्टिः सनातनी। गावो लक्ष्म्यास्तथामूलं गोषु दत्तं न नश्यति ॥ ६ ॥ अन्नं हि परमं गावो देवानां परमं हविः। स्वाहाकारवषट्कारौ नित्यं गोषु प्रतिष्ठितौ ॥ ७ ॥ गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः। गावो भविष्यं भूतञ्च गोषु यज्ञाः प्रतिष्ठिताः ॥ ८ ॥ सायं प्रातश्च सततं होमकाले महाद्युते। गावो ददति वै हव्यमृषिभ्यः पुरुषर्षभ ॥ ९ ॥ यानि कानि च दुर्गाणि दुष्कृतानि कृतानि च। तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ॥ १० ॥ एकाञ्च दशगुर्दद्याद्दश दद्याच्च गोमती। शतं सहस्रगुर्दद्यात् सर्वे तुल्यफला हि ते ॥ ११ ॥ अनाहिताग्निः शतगुरजज्वा च

सहस्रशुः। समृद्धो यस्य कीनाशो नार्य्यमर्द्दन्ति ते नयः॥ १२॥ कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनां। सुव्रतां वस्त्रसंवीतामुभौ लोकौ जयन्ति ते॥ १३॥ युवानमिन्द्रियोपेतं शतेन शतयूथपं। गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतं॥ १४॥ वृषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप। ऐश्वर्य्यन्तेऽधिगच्छन्ति जायमानाः पुनःपुनः॥ १५॥ नाकीर्त्तयित्वा गाः सुप्यात्ता नासंस्मृत्य चोत्पतेत्। सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात्॥ १६॥ गवां मूत्रपुरीषस्य नोद्विजेत कथञ्चन। न चासां मांसमश्नीयाद्गवां पुष्टिं तथाप्नुयात्॥ १७॥ गाश्च संकीर्त्तयेन्नित्यं नावमन्येत तास्तथा। अनिष्टं स्वप्नमालक्ष्य गां नराः संप्रकीर्त्तयेत्॥ १८॥ गोमयेन सदा स्नायात् करीषे चापि संविशेत्। श्लेष्ममूत्रपुरीषाणि प्रतिघातञ्च वर्ज्जयेत्॥ १९॥ सार्द्रे चर्म्मणि भुञ्जीत निरीक्षेत् वारुणीं दिशं। वाग्यतः सर्पिषा भूमौ गवां पुष्टिं सदाश्नुते॥ २०॥ घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत्। घृतं दद्यात् घृतं प्राश्येद्गवां पुष्टिं सदाश्नुते॥ २१॥ गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः। सर्वरत्नमयीं दद्यात् न स शोचेत् कृताकृते॥ २२॥ गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः। सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा॥ २३॥ गा वै पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा। गावोऽस्माकं वयं तासां यतो गावस्ततो वयं॥ २४॥ एवं रात्रौ दिवा चापि समेषु विषमेषु च। महाभयेषु च नरः कीर्त्तयन् मुच्यते भयात्॥२५॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने अष्टसप्ततोऽध्यायः॥ ७८॥

---

वशिष्ठ उवाच। शतं वर्षसहस्राणां तपस्तप्तं सुदुष्करं।

गोभिः पूर्वं विसृष्टाभिर्गच्छेम श्रेष्ठतामिति॥ १॥ लोकेऽस्मिन् दक्षिणानां सर्वासां वयमुत्तमाः। भवेम न च लिप्येम दोषेणेति परन्तप॥ २॥ अस्मत् पुरीषस्नानेन जनः पूयेत सर्वदा। शकृता च पवित्रार्थं कुर्वीरन् देवमानुषाः॥ ३॥ तथा सर्वाणि भूतानि स्थावराणि चराणि च। प्रदातारश्च लोकान्नो गच्छेयुरिति मानद॥ ४॥ ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः। एवं भवत्विति प्रभुर्लोकां स्तारयतेति च॥ ५॥ उत्तस्थुः सिद्ध-कामास्ता भूतभव्यस्य मातरः। प्रातर्नमस्यास्ता गावस्ततः पुष्टि-मवाप्नुयात्॥ ६॥ तपसोऽन्ते महाराज गावो लोकपरायणाः। तस्माद्गावो महाभागाः पवित्रं परमुच्यते। तथैव सर्वभूतानां समतिष्ठन्त मूर्द्धनि॥ ७॥ समानवत्सां कपिलां धेनुं दत्त्वा पय-स्विनीं। सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते॥ ८॥ लोहितां तुल्यवत्साञ्च धेनुं दत्त्वा पयस्विनीं। सुव्रतां वस्त्रसंवीतां सूर्य्य-लोके महीयते॥ ९॥ समानवत्सां सवलां धेनुं दत्त्वा पयस्विनीं। सुव्रतां वस्त्रसंवीतां सोमलोके महीयते॥ १०॥ समानवत्सां श्वेतान्तु धेनुं दत्त्वा पयस्विनीं। सुव्रतां वस्त्रसंवीतामैन्द्रलोके महीयते॥ ११॥ समानवत्सां कृष्णान्तु धेनुं दत्त्वा पयस्विनीं। सुव्रतां वस्त्रसंवीतामग्निलोके महीयत॥ १२॥ समानवत्सां धूम्रान्तु धेनुं दत्त्वा पयस्विनीं। सुव्रतां वस्त्रसंवीतां याम्यलोके महीयते॥ १३॥ अपां फेणसवर्णान्तु सवत्सां कांस्यदोहनां। प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते॥ १४॥ वातरेणुसव-र्णान्तु सवत्सां कांस्यदोहनां। प्रदाय वस्त्रसंवीतां वायुलोके महीयते॥ १५॥ हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनां। प्रदाय वस्त्रसम्वीतां कौवेरं लोकमश्नुते॥ १६॥ पलालधूम्र-वर्णान्तु सवत्सां कांस्यदोहनां। प्रदाय वस्त्रसंवीतां पितृलोके महीयते॥ १७॥ सवत्सां पीवरीं दत्त्वा दृतिकण्ठामलङ्कृतां।

वैश्वदेवमसंबाधं स्थानं श्रेष्ठं प्रपद्यते ॥ १८ ॥ समानवत्सां गौरीन्तु धेनुं दत्त्वा पयस्विनीं । सुव्रतां वस्त्रसंवीतां वसूनां लोकमाप्नुयात् ॥ १९ ॥ पाण्डुकम्बलवर्णाभां सवत्सां कांस्यदोहनां । प्रदाय वस्त्रसंवीतां साध्यानां लोकमाप्नुयात् ॥ २० ॥ वैराटपृष्ठमुक्षाणं सर्व्वरत्नैरलङ्कृतं । प्रदाय मरुतां लोकान् स राजन् प्रतिपद्यते ॥ २१ ॥ वयोपपन्नं नीलाङ्गं सर्व्वरत्नसमन्वितं । गन्धर्व्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः ॥ २२ ॥ द्वतिकण्ठमनड्वाहं सर्व्वरत्नैरलङ्कृतं । दत्त्वा प्रजापतेर्लोकान् विशोकः प्रतिपद्यते ॥ २३ ॥ गोप्रदानरतो याति भित्त्वा जलदसञ्चयान् । विमानेनार्कवर्णेन दिवि राजन् विराजते ॥ २४ ॥ तञ्चारुवेशाः सुश्रोण्यः सहस्रं सुरयोषितः । रमयन्ति नरश्रेष्ठं गोप्रदानरतं नरं ॥ २५ ॥ वीणानां वल्लकीनाञ्च नूपुराणाञ्च शिञ्जितैः । हासैश्च हरिणाक्षीणां सुप्तः स प्रतिबुद्ध्यते ॥ २६ ॥ यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते सः । स्वर्गच्युतश्चापि ततो नृलोके प्रसूयते वै विपुले गृहे सः ॥ २७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने एकोनाशीतोऽध्यायः ॥ ७९ ॥

---

वशिष्ठ उवाच । घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे ॥ १ ॥ घृतं मे हृदयं नित्यं घृतं नाभ्यां प्रतिष्ठितं । घृतं सर्व्वेषु गात्रेषु घृतं मे मनसि स्थितं ॥ २ ॥ गावो ममाग्रतो नित्यं गावः पृष्ठत एव च । गावो मे सर्व्वतश्चैव गवां मध्ये वसाम्यहं ॥ ३ ॥ इत्याचम्य जपेत् सायं प्रातश्च पुरुषः सदा । यदह्ना कुरुते पापं स तस्मात् परिमुच्यते ॥ ४ ॥ प्रासादा यत्र सौवर्णा वसोर्द्धारा च यत्र सा । गन्धर्व्वा-

प्सरसो यत्र तत्र यान्ति सहस्रदाः ॥ ५ ॥ नवनीतपङ्काः क्षीरोदा दधिशैवलसङ्कुलाः । वहन्ति यत्र वै नद्यस्तत्र यान्ति सहस्रदाः ॥ ६ ॥ गवां शतसहस्रन्तु यः प्रयच्छेद्यथाविधि । परां वृद्धि-मवाप्याथ स्वर्गलोके महीयते ॥ ७ ॥ दश चोभयतः पुत्रो माता-पित्रोः पितामहान् । दधाति सुकृतान् लोकान् पुनाति च कुलं नरः ॥ ८ ॥ धेन्वाः प्रमाणेन समप्रमाणां धेनुं तिलानामपि च प्रदाय । पानीयदाता च यमस्य लोके न यातनां काञ्चिदुपैति तत्र ॥ ९ ॥ पवित्रमग्र्यं जगतः प्रतिष्ठा दिवौकसां मातरोऽथा-प्रमेयाः । अन्वालभेद्दक्षिणतो व्रजेच्च दद्याच्च पात्रे प्रसमीक्ष्य कालं ॥ १० ॥ धेनुं सवत्सां कपिलां भूरिशृङ्गीं कांस्योपदोहां वसनोत्तरीयां । प्रदाय तां गाहति दुर्विगाह्यां याम्यां सभां वीतभयो मनुष्यः ॥११॥ सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः । गावो मामुपतिष्ठन्तामिति नित्यं प्रकीर्त्तयेत् ॥ १२ ॥ नातः पुण्य-तरं दानं नातः पुण्यतरं फलं । नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥ १३ ॥ त्वचा लोम्नाथ शृङ्गैर्वा वालैः क्षीरेण मेदसा । यज्ञं वहति संभूय किमस्त्यभ्यधिकं ततः ॥ १४ ॥ यया सर्वमिदं व्याप्तं जगत् स्थावरजङ्गमं । तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरं ॥ १५ ॥ गुणवचनसमुच्चयैकदेशो नृवर मयैष गवां प्रकीर्त्तितस्ते । न च परमिह दानमस्ति गोभ्यो भवति न चापि परायणं तथान्यत् ॥ १६ ॥

भीष्म उवाच । वरमिदमिति भूमिदो विचिन्त्य प्रवरमृषि-वचनं ततो महात्मा । व्यसृजत नियतात्मवान् द्विजेभ्यः सुबहु च गोधनमाप्तवांश्च लोकान् ॥ १७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने अशीतितमोऽध्यायः ॥ ८० ॥

---

युधिष्ठिर उवाच। पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत्। पावनं परमञ्चैव तन्मे ब्रूहि पितामह॥ १॥

भीष्म उवाच। गावो महार्थाः पुण्याश्च तारयन्ति च मानवान्। धारयन्ति प्रजाश्चेमा हविषा पयसा तथा॥ २॥ न हि पुण्यतमं किञ्चिद्गोभ्यो भरतसत्तम। एताः पुण्याः पवित्राश्च त्रिषु लोकेषु सत्तमाः॥ ३॥ देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै। दत्त्वा चैतास्तारयते यान्ति स्वर्गं मनीषिणः॥ ४॥ मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा। गा वै ददन्तः सततं सहस्रशतसम्मिताः॥ ५॥ गताः परमकं स्थानं देवैरपि सुदुर्लभं। अपि चात्र पुरा गीतं कथयिष्यामि तेऽनघ॥ ६॥ ऋषीणामुत्तमं धीमान् कृष्णद्वैपायनं शुकः। अभिवाद्याह्निककृतः शुचिः प्रयतमानसः॥ ७॥ पितरं परिपप्रच्छ दृष्टलोकपरावरं। को यज्ञः सर्वयज्ञानां वरिष्ठो ह्युपलक्ष्यसे॥ ८॥ किञ्च कृत्वा परं स्थानं प्राप्नुवन्ति मनीषिणः। केन देवाः पवित्रेण स्वर्गमश्नन्ति वा विभो॥ ९॥ किञ्च यज्ञस्य यज्ञत्वं क्व च यज्ञः प्रतिष्ठितः। देवानामुत्तमं किञ्च किञ्च सत्रमितः परं। पवित्राणां पवित्रञ्च यत्तद्ब्रूहि पितर्मम॥ १०॥ एतच्छ्रुत्वा तु वचनं व्यासः परमधर्म्मवित्। पुत्रायाकथयत् सर्वं तत्त्वेन भरतर्षभ॥ ११॥

व्यास उवाच। गावः प्रतिष्ठा भूतानां तथा गावः परायणं। गावः पुण्याः पवित्राश्च गोधनं पावनं तथा॥ १२॥ पूर्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुम। शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययं॥ १३॥ ततो ब्रह्मानुगाः प्रायमुपविष्टाः समीक्ष्य ह। ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः॥ १४॥ तासां शृङ्गाण्यजायन्त यस्या यादृङ्मनोगतं। नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक॥ १५॥ ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः। पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः॥ १६॥

गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते। ये वै ताः संप्रयच्छन्ति साधवो वीतमत्सराः॥ १७॥ ते वै सुकृतिनः प्रोक्ताः सर्वदान-प्रदाश्च ते। गवां लोकं तथापुण्यमाप्नुवन्ति च तेऽनघ॥ १८॥ यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः। पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम॥ १९॥ सर्वा मणिमयी भूमिः सर्वकाञ्चन-वालुका। सर्वर्त्तुसुखसंस्पर्शा निष्पङ्का नीरजाः शुभा॥ २०॥ रक्तोत्पलवनैश्चैव मणिखण्डैर्हिरण्मयैः। तरुणादित्यसङ्काशै-र्भान्ति तत्र जलाशयाः॥ २१॥ महार्हमणिपत्रैश्च काञ्चनप्रभ-केशरैः। नीलोत्पलविमिश्रैश्च सरोभिर्बहुपङ्कजैः॥ २२॥ करवी-रवनैः फुल्लैः सहस्रावर्त्तसंवृतैः। सन्तानकवनैः फुल्लैर्वृक्षैश्च समलङ्कृताः॥ २३॥ निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाप्रभैः। उद्भूतपुलिनास्तत्र जातरूपैश्च निम्नगाः॥ २४॥ सर्वरत्नमयै-श्चित्रैरवगाढ़ा द्रुमोत्तमैः। जातरूपमयैश्चान्यैर्हुताशनसमप्रभैः॥ २५॥ सौवर्णा गिरयस्तत्र मणिरत्नशिलोच्चयाः। सर्वरत्न-मयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः॥ २६॥ नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः। दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ॥ २७॥ रमन्ते पुण्यकर्माणस्तत्र नित्यं युधिष्ठिर। सर्वकाम-समृद्धार्था निःशोका गतमन्यवः॥ २८॥ विमानेषु विचित्रेषु रमणीयेषु भारत। मोदन्ते पुण्यकर्माणो विहरन्तो यशस्विनः॥ २९॥ उपक्रीड़न्ति तान्राजन् शुभाश्चाप्सरसां गणाः। एतान् लोकानवाप्नोति गां दत्त्वा वै युधिष्ठिर॥ ३०॥ येषामधिपतिः पूषा मारुतो बलवान् बली। ऐश्वर्य्ये वरुणो राजा नाममात्रं युगन्धराः॥ ३१॥ सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः। प्राजापत्यमिति ब्रह्मन् जपेन्नित्यं यतव्रतः॥ ३२॥ गाश्च शुश्रूषते यश्च समन्वेति च सर्वशः। तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान्॥ ३३॥ द्रुह्येन्न मनसा वापि गोषु नित्यं सुखप्रदः।

अर्च्चयीत सदा चैव नमस्कारैश्च पूजयेत् ॥ ३४ ॥ दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाश्नुते । त्र्यहमुष्णां पिबेन्मूत्रं त्र्यहमुष्णां पिबेत् पयः ॥ ३५ ॥ गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्त्र्यहं ॥ ३६ ॥ येन देवाः पवित्रेण भुञ्जते लोकमुत्तमं । यत् पवित्रं पवित्राणां बहु-घृतं शिरसा वहेत् ॥ ३७ ॥ घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् । घृतं प्राशेद्घृतं दद्यात् गवां पुष्टिं तथाश्नुते ॥ ३८ ॥ निर्हृतैश्च यवैर्गोभिर्म्मासं प्राशितयावकः । ब्रह्महत्यासमं पापं सर्व्वमेतेन शुध्यते ॥ ३९ ॥ पराभवाच्च दैत्यानां देवैः शौचमिदं कृतं । ते देवत्वमपि प्राप्ताः संसिद्धाश्च महाबलाः ॥ ४० ॥ गावः पवित्राः पुण्याश्च पावनं परमं महत् । ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ॥ ४१ ॥ गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् । पूताभिरद्भिराचम्य शुचिर्भवति निर्म्मलः ॥ ४२ ॥ अग्नि-मध्ये गवां मध्ये ब्राह्मणानाञ्च संसदि । विद्यावेदव्रतस्नाता ब्राह्मणाः पुण्यकर्म्मिणः ॥ ४३ ॥ अध्यापयेरन् शिष्यान् वै गोमतीं यज्ञसंमितां । त्रिरात्रोपोषितो भूत्वा गोमतीं लभते वरं ॥४४॥ पुत्रकामश्च लभते पुत्रं धनमथापि वा । पतिकामा च भर्त्तारं सर्व्वकामांश्च मानवः ॥ ४५ ॥ गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः । एवमेता महाभागा यज्ञियाः सर्व्वकामदाः । रोहिण्य इति जानीहि नैताभ्यो विद्यते परं ॥ ४६ ॥

भीष्म उवाच । इत्युक्तः स महातेजाः शुकः पित्रा महा-त्मना । पूजयामास गा नित्यं तस्मात्त्वमपि पूजय ॥ ४७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने गोप्रदानिके एकाशितोऽध्यायः ॥ ८१ ॥

---

युधिष्ठिर उवाच। मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतं। एतदिच्छाम्यहं श्रोतुं संशयोऽत्र पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनं। गोभिर्नृपेह सम्वादं श्रिया भरतसत्तम ॥ २ ॥ श्रीः कृत्वेह वपुः कान्तं गोमध्येषु विवेश ह। गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य सम्पदं ॥ ३ ॥

गाव ऊचुः। कासि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि। विस्मिताः स्म महाभागे तव रूपस्य सम्पदा ॥ ४ ॥ इच्छाम त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि। तत्त्वेन वरवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ ५ ॥

श्रीरुवाच। लोककान्तास्मि भद्रं वः श्रीर्नाम्नाहं परिश्रुता। मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ॥ ६ ॥ मयाभिपन्ना देवाश्च मोदन्ते शाश्वतीः समाः। इन्द्रो विवस्वान् सोमश्च विष्णुरापोऽग्निरेव च ॥ ७ ॥ मयाभिपन्नाः सिध्यन्ते ऋषयो देवतास्तथा। यान्नाविशाम्यहं गावस्ते विनश्यन्ति सर्वशः ॥ ८ ॥ धर्म्मश्चार्थश्च कामश्च मया जुष्टाः सुखान्विताः। एवं प्रभावां मां गावो विजानीत सुखप्रदाः ॥ ९ ॥ इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा। आगत्य प्रार्थये युष्मान् श्रीजुष्टा भवताथ वै ॥ १० ॥

गाव ऊचुः। अध्रुवा चपला च त्वं सामान्या बहुभिः सह। न त्वामिच्छाम भद्रन्ते गम्यतां यत्र रंस्यसे ॥ ११ ॥ वपुष्मत्यो वयं सर्वाः किमस्माकं त्वयाद्य वै। यथेष्टं गम्यतां तत्र कृतकार्य्या वयं त्वया ॥ १२ ॥

श्रीरुवाच। किमेतद्वः क्षमं गावो यन्मां नेहाभिनन्दथ। न मां संप्रतिगृह्णीध्वं कस्माद्वै दुर्लभां सतीं ॥ १३ ॥ सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः। स्वयं प्राप्ते परिभवो भवतीति

विनिश्चयः ॥ १४ ॥ महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः । देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ १५ ॥ प्रभाव एष वो गावः प्रतिगृह्णीत मामिह । नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे ॥ १६ ॥

गाव ऊचुः । नावमन्यामहे देवि न त्वां परिभवामहे । अध्रुवा चलचित्तासि ततस्त्वां वर्ज्जयामहे ॥ १७ ॥ बहुनात्र किमुक्तेन गम्यतां यत्र वाञ्छसि । वपुष्मत्यो वयं सर्वाः किमस्माकं त्वयानघे ॥ १८ ॥

श्रीरुवाच । अवज्ञाता भविष्यामि सर्व्वलोकस्य मानदाः । प्रत्याख्यानेन युष्माकं प्रसादः क्रियतां मम ॥ १९ ॥ महाभागा भवत्यो वै शरण्याः शरणागतां । परित्रायन्तु मां नित्यं भजमानामनिन्दितां ॥ २० ॥ माननामहमिच्छामि भवत्यः सततं शुभाः । अप्येकाङ्गेऽप्यधो वस्तुमिच्छामि च सुकुत्सिते ॥ २१ ॥ न वोऽस्ति कुत्सितं किञ्चिदङ्गेष्वालक्ष्यतेऽनघाः । पुण्याः पवित्राः सुभगा ममादेशं प्रयच्छत । वसेयं यत्र वो देहे तन्मे व्याख्यातुमर्हथ ॥ २२ ॥ एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः । संमन्त्र्य सहिताः सर्वाः श्रियमूचुर्नराधिप ॥ २३ ॥ अवश्यं मानना कार्य्या तवास्माभिर्यशस्विनि । शकृन्मूत्रे निवस त्वं पुण्यमेतद्धि नः शुभे ॥ २४ ॥

श्रीरुवाच । दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः । एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः ॥ २५ ॥ एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत । पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ॥ २६ ॥ एवं गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितं । माहात्म्यं च गवां भूयः श्रूयतां गदतो मम ॥ २७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने गोप्रदानिके द्व्यशीतोऽध्यायः ॥ ८२ ॥

भीष्म उवाच। ये च गां संप्रयच्छन्ति हुतशिष्टाशिनश्च ये। तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ १ ॥ ऋते दधिघृतेनेह न यज्ञः संप्रवर्त्तते। तेन यज्ञस्य यज्ञत्वमतो मूलञ्च कथ्यते ॥ २ ॥ दानानामपि सर्व्वेषां गवां दानं प्रशस्यते। गावः श्रेष्ठाः पवित्राश्च पावनं ह्येतदुत्तमं ॥ ३ ॥ पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह। पयोदधिघृतञ्चासां सर्वपापप्रमोचनं ॥ ४ ॥ गावस्तेजः परं प्रोक्तमिह लोके परत्र च। न गोभ्यः परमं किञ्चित् पवित्रं भरतर्षभ ॥ ५ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। पितामहस्य सम्वादमिन्द्रस्य च युधिष्ठिर ॥ ६ ॥ पराभूतेषु दैत्येषु शक्रस्त्रिभुवनेश्वरः। प्रजा समुदिताः सर्व्वाः सत्यधर्मपरायणाः ॥ ७ ॥ अथर्षयः सगन्धर्व्वा किन्नरोरगराक्षसाः। देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ॥ ८ ॥ पर्य्युपासन्त कौरव्य कदाचिद्वै पितामहं। नारदः पर्वतश्चैव विश्वावसुर्हाहाहुहूः ॥९॥ दिव्यतानेषु गायन्तः पर्य्युपासन्त तं प्रभुं। तत्र दिव्यानि पुष्पाणि प्रावहत् पवनस्तदा ॥ १० ॥ आजह्रुर्ऋतवश्चापि सुगन्धिनी पृथक् पृथक्। तस्मिन् देवसमावाये सर्व्वभूतसमागमे ॥ ११ ॥ दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते। इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च ॥ १२ ॥ देवानां भगवन् कस्माल्लोकेशानां पितामह। उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुं ॥ १३ ॥ किन्तपो ब्रह्मचर्य्यं वा गोभिः कृतमिहेश्वर। देवानामुपरिष्टाद्धि यद्वसन्त्यरजसः सुखं ॥ १४ ॥ ततः प्रोवाच ब्रह्मा तं शक्रं वलनिसूदनं। अवज्ञातास्त्वया नित्यं गावो वलनिसूदन ॥ १५ ॥ तेन त्वमासां माहात्म्यं न वेत्सि शृणु यत् प्रभो। गवां प्रभावं परमं माहात्म्यञ्च सुरर्षभ ॥ १६ ॥ यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव। एताभिश्च विना यज्ञो न वर्त्तेत कथञ्चन ॥ १७ ॥ धारयन्ति प्रजाश्चैव पयसा हविषा तथा ॥ १८ ॥ एतासां तनयाश्चापि

कृषियोगमुपासते । जनयन्ति च धान्यानि बीजानि विविधानि च ॥ १९ ॥ ततो यज्ञाः प्रवर्त्तन्ते हव्यं कव्यञ्च सर्वशः । पयो-दधिघृतञ्चैव पुण्याश्चैताः सुराधिप । वहन्ति विविधान् भारान् क्षुत्तृष्णापरिपीड़िताः ॥ २० ॥ मुनींश्च धारयन्तीह प्रजाश्चै-वाभिकर्म्मणा । वासवाकूटवाहिन्यः कर्म्मणा सुकृतेन च । उप-रिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि ॥ २१ ॥ एतत्ते कारणं शक्र निवासकृतमद्य वै । गवां देवोपरिष्टाद्धि समाख्यातं शत-क्रतो ॥ २२ ॥ एता हि वरदत्ताश्च वरदाश्चापि वासव । सुरभ्यः पुण्यकर्म्मिण्यः पावनाः शुभलक्षणाः ॥ २३ ॥ यदर्थं गाङ्गताश्चैव सुरभ्यः सुरसत्तम । तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन ॥ २४ ॥ पुरा देवयुगे तात दैवेन्द्रेषु महात्मसु । त्रील्लोंकाननु-शासत्सु विष्णौ गर्भत्वमागते ॥ २५ ॥ अदित्यास्तप्यमानाया-स्तपो घोरं सुदुश्चरं । पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥२६॥ तान्तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः । दक्षस्य दुहिता देवी सुरभी नाम नामतः ॥ २७ ॥ अतप्यत तपोघोरं हृष्टा धर्म्मपरा-यणा । कैलासशिखरे रम्ये देवगन्धर्व्वसेविते ॥ २८ ॥ व्यतिष्ठ-देकपादेन परमं योगमास्थिता । दशवर्षसहस्राणि दशवर्ष-शतानि च ॥ २९ ॥ सन्तप्तास्तपसा तस्या देवाः सर्षिमहोरगाः । तत्र गत्वा मया सार्द्धं पर्य्युपासन्त तां शुभां ॥ ३० ॥ अथाह-मब्रुवं तत्र देवीं तां तपसान्वितां । किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ॥ ३१ ॥ प्रीतस्तेऽहं महाभागे तपसानेन शोभने । वरयस्व वरं देवि दातास्मीति पुरन्दर ॥ ३२ ॥

सुरभ्युवाच । वरेण भगवन् मह्यं कृतं लोकपितामह । एष एव वरो मेऽद्य यत् प्रीतोऽसि ममानघ ॥ ३३ ॥

ब्रह्मोवाच । तामेवं ब्रुवतीं देवीं सुरभीं त्रिदशेश्वर । प्रत्य-ब्रुवं यद्देवेन्द्र तन्निबोध शचीपते ॥ ३४ ॥ अलोभकाम्यया देवि

तपसा च शुभानने। प्रसन्नोऽहं वरं तस्मादमरत्वं ददामि ते ॥ ३५ ॥ त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि। मत्प्रसादाच्च विख्यातो गोलोकः स भविष्यति ॥३६॥ मानुषेषु च कुर्वाणाः प्रजाः कर्म्म शुभन्तथा। निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ॥ ३७ ॥ मनसा चिन्तिता भोगास्त्वया वै दिव्यमानुषाः। यच्च स्वर्गे सुखं देवि तत्तत् संपत्स्यसे शुभे ॥ ३८ ॥ तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः। न तत्र क्रमते मृत्युर्न जरा न च पावकः ॥ ३९ ॥ न दैवं वाशुभं किञ्चित् विद्यते तत्र वासव। यत्र दिव्यान्यरण्याणि दिव्यान्याभरणानि च ॥ ४० ॥ विमानानि सुयुक्तानि कामगानि च वासव। ब्रह्मचर्य्येण तपसा सत्येन च दमेन च। दानैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात् ॥ ४१ ॥ तपसा महता चैव सुकृतेन च कर्म्मणा। शक्यः समासादयितुं गोलोकः पुष्करेक्षण ॥ ४२ ॥ एतत्ते सर्व्वमाख्यातं मया शक्रानुपृच्छते। न ते परिभवः कार्य्यो गवामसुरसूदन ॥ ४३ ॥

भीष्म उवाच। एवं श्रुत्वा सहस्राक्षः पूजयामास नित्यदा। गाश्चक्रे बहुमानञ्च तासु नित्यं युधिष्ठिर ॥ ४४ ॥ एतत्ते सर्वमाख्यातं पावनञ्च महाद्युते। पवित्रं परमञ्चापि गवां माहात्म्यमुत्तमं ॥ ४५ ॥ कीर्त्तितं पुरुषव्याघ्र सर्वपापप्रमोचनं। य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः ॥ ४६ ॥ हव्यकव्येषु यज्ञेषु पितृकार्य्येषु चैव हि। सार्वकामिकमक्षय्यं पितॄंस्तस्योपतिष्ठते ॥ ४७ ॥ गोषु भक्तश्च लभते यद्यदिच्छति मानवः। स्त्रियोऽपि भक्ता या गोषु ताश्च काममवाप्नुयुः ॥ ४८ ॥ पुत्रार्थी लभते पुत्रं कन्यार्थी तामवाप्नुयात्। धनार्थी लभते वित्तं धर्मार्थी धर्ममाप्नुयात् ॥ ४९ ॥ विद्यार्थी चाप्नुयात् विद्यां सुखार्थी प्राप्नुयात् सुखं। न किञ्चित्दुर्लभञ्चैव गवां भक्तस्य भारत ॥ ५० ॥

इत्यनुशासनपर्वणि दानधर्मकथने त्र्यशीतोऽध्यायः ॥ ८३ ॥

युधिष्ठिर उवाच। उक्तं पितामहेनेदं गवां दानमनुत्तमं। विशेषेण नरेन्द्राणामिह धर्ममवेक्षतां ॥ १ ॥ राज्यं हि सततं दुःखं दुर्धरञ्चाकृतात्मभिः। भूयिष्ठञ्च नरेन्द्राणां विद्यते न शुभा गतिः ॥ २ ॥ पूयन्ते तत्र नियतं प्रयच्छन्तो वसुन्धरां। सर्वं च कथिता धर्म्मास्त्वया मे कुरुनन्दन ॥ ३ ॥ एवमेव गवामुक्तं प्रदानन्ते नृगेण ह। ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितं ॥४॥ वेदोपनिषदा चैव सर्वकर्मसुदक्षिणाः। सर्वक्रतुषु चोद्दिष्टं भूमि-र्गावोऽथ काञ्चनं ॥ ५ ॥ तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै। एतदिच्छाम्यहं श्रोतुं पितामह यथातथं ॥ ६ ॥ किं सुवर्णं कथं जातं कस्मिन् काले किमात्मकं। किं दैवं किं फलञ्चैव कस्माच्च परमुच्यते ॥ ७ ॥ कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः। कस्माच्च दक्षिणार्थं तद्यज्ञकर्मसु शस्यते ॥ ८ ॥ कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनं। परमं दक्षिणार्थं च तद्ब्रवीहि पितामह ॥ ९ ॥

भीष्म उवाच। शृणु राजन्नवहितो बहुकारणविस्तरं। जातरूपसमुत्पत्तिमनुभूतञ्च यन्मया ॥ १० ॥ पिता मम महा-तेजाः शान्तनुर्निधनं गतः। तस्य दित्सुरहं श्राद्धं गङ्गाद्वार-मुपागमं ॥ ११ ॥ तत्रागम्य पितुः पुत्र श्राद्धकर्मसमारभं। माता मे जाह्नवी चात्र साहाय्यमकरोत्तदा ॥ १२ ॥ ततोऽग्रतस्तपः-सिद्धानुपवेश्य बहूनृषीन्। तोयप्रदानात् प्रभृतिकार्य्याण्यहमथा-रभं ॥ १३ ॥ तत् समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः। दातुं निर्वपणं सम्यक् यथावदहमारभं ॥ १४ ॥ ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः। प्रलम्बाभरणो बाहुरुदतिष्ठद्विशाम्पते ॥ १५ ॥ समुत्थितमहं दृष्ट्वा परं विस्मयमागमं। प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ॥ १६ ॥ ततो मे पुनरेवासीत् संज्ञा सञ्चिन्त्य शास्त्रतः। नायं वेदेषु विहितो विधिर्हस्त इति

प्रभो ॥ १७ ॥ पिण्डो देयो नरेणेह ततो मतिरभून्मम। साक्षान्नेह मनुष्यस्य पिण्डं हि पितरः क्वचित् ॥ १८ ॥ गृह्णन्ति विहितन्त्वेत्थं पिण्डो देयः कुशेष्विति। ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनं ॥ १९ ॥ शास्त्रप्रामाण्यसूक्ष्मन्तु विधिं पिण्डस्य संस्मरन्। ततो दर्भेषु तत् सर्वमददं भरतर्षभ ॥ २० ॥ शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ। ततः सोन्तर्हितो बाहुः पितुर्मम नराधिप ॥ २१ ॥ ततो मे दर्शयामासुः स्वप्नान्ते पितरस्तथा। प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ ॥ २२ ॥ विज्ञानेन त्वयानेन यन्न मुह्यसि धर्मतः। त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव ॥ २३ ॥ आत्मा धर्मः श्रुतं वेदाः पितरश्चर्षिभिः सह। साक्षात् पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ॥ २४ ॥ प्रमाणमुपनीता वै स्थितिश्च न विचालिता। तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ ॥ २५ ॥ किन्तु भूमेर्गवाञ्चार्थे सुवर्णं दीयतामिति। एवं वयञ्च धर्मश्च सर्वे चास्मत् पितामहाः ॥ २६ ॥ पाविता वै भविष्यन्ति पावनं परमं हि तत्। दश पूर्वान् दशैवान्यांस्तथा सन्तारयन्ति वै ॥ २७ ॥ सुवर्णं ये प्रयच्छन्ति एवं मत्पितरोऽब्रुवन्। ततोऽहं विस्मितो राजन् प्रतिबुद्धो विशाम्पते ॥ २८ ॥ सुवर्णदानेऽकरवं मतिञ्च भरतर्षभ। इतिहासमिमञ्चापि शृणु राजन् पुरातनं ॥ २९ ॥ जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च। जामदग्न्येन रामेण तीव्ररोषान्वितेन वै ॥ ३० ॥ त्रिः सप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा। ततो जित्वा महीं कृत्स्नां रामो राजीवलोचनः ॥ ३१ ॥ आजहार क्रतुं वीरो ब्रह्मक्षत्रेण पूजितं। वाजिमेधं महाराज सर्वकामसमन्वितं ॥ ३२ ॥ पावनं सर्वभूतानां तेजो द्युतिविवर्द्धनं। विपाप्मा स च तेजस्वी तेन क्रतुफलेन च ॥ ३३ ॥ नैवात्मनोऽथ लघुतां जामदग्न्योऽध्यगच्छत। स तु क्रतुवरेणेष्ट्वा महात्मा दक्षिणावता ॥ ३४ ॥ पप्रच्छागम-

सम्पन्नानृषीन् देवांश्च भार्गवः। पावनं यत्परं नृणामुग्रे कर्मणि वर्त्ततां॥ ३५॥ तदुच्यतां महाभागा इति जातघृणोऽब्रवीत्। इत्युक्ता वेदशास्त्रज्ञास्तमूचुस्ते महर्षयः॥ ३६॥ राम विप्राः सत्क्रियन्तां वेदप्रामाण्यदर्शनात्। भूयश्च विप्रर्षिगणाः प्रष्टव्याः पावनं प्रति॥ ३७॥ ते यद्ब्रूयुर्महाप्राज्ञास्तच्चैव समुदाचर। ततो वशिष्ठं देवर्षिमगस्त्यमथ काश्यपं॥ ३८॥ तमेवार्थं महातेजाः पप्रच्छ भृगुनन्दनः। जाता मतिर्मे विप्रेन्द्राः कथं पूयेयमित्युत॥ ३९॥ केन वा कर्मयोगेन प्रदानेनेह केन वा। यदि वोनुग्रहकृता बुद्धिर्मां प्रतिसत्तमाः। प्रब्रूत पावनं किं मे भवेदिति तपोधनाः॥ ४०॥

ऋषय ऊचुः। गाश्च भूमिञ्च वित्तञ्च दत्त्वेह भृगुनन्दन। पापकृत् पूयते मर्त्त्य इति भार्गव शुश्रुम॥ ४१॥ अन्यद्दानन्तु विप्रर्षे श्रूयतां पावनं महत्। दिव्यमत्यद्भुताकारमपत्यं जातवेदसः॥ ४२॥ दग्ध्वा लोकान् पुरा वीर्य्यात् सम्भूतमिह शुश्रुम। सुवर्णमिति विख्यातं तद्ददत् सिद्धिमेष्यसि॥ ४३॥ ततोऽब्रवीद्वशिष्ठस्तं भगवान् संशितव्रतः। शृणु राम यथोत्पन्नं सुवर्णमनलप्रभं॥ ४४॥ फलं दास्यति ते यत्तु दाने परमिहोच्यते। सुवर्णं यच्च यस्माच्च यथा च गुणवत्तरं॥ ४५॥ तन्निबोध महाबाहो सर्वं निगदतो मम। अग्नीषोमात्मकमिदं सुवर्णं विद्धि निश्चयं॥ ४६॥ अजोऽग्निर्वरुणो मेषः सूर्य्योऽश्व इति दर्शनं। कुञ्जराश्च मृगा नागा महिषाश्चासुरा इति॥ ४७॥ कुक्कुटाश्च वराहाश्च राक्षसा भृगुनन्दन। इडागावः पयः सोमो भूरित्येव च स्मृतिः॥ ४८॥ जगत् सर्वञ्च निर्मथ्य तेजोराशिः समुत्थितः। सुवर्णमेभ्यो विप्रर्षे रत्नं परमनुत्तमं॥ ४९॥ एतस्मात् कारणाद्देवा गन्धर्वोरगराक्षसाः। मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत्॥ ५०॥ मुकुटैरङ्गदयुतैरलङ्कारैः पृथग्विधैः। सुवर्णविकृतै-

स्तत्र विराजन्ते भृगूत्तम ॥ ५१ ॥ तस्मात् सर्वपवित्रेभ्यः पवित्रं
परमं स्मृतं। भूमेर्गोभ्योऽथ रत्नेभ्यस्तद्विद्धि मनुजर्षभ ॥ ५२ ॥
पृथिवीं गाश्च दत्त्वेह यच्चान्यदपि किञ्चन। विशिष्यते सुवर्णस्य
दानं परमकं विभो ॥ ५३ ॥ अक्षयं पावनञ्चैव सुवर्णममरद्युते।
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमं ॥ ५४ ॥ सुवर्णमेव
सर्वासु दक्षिणासु विधीयते। सुवर्णं ये प्रयच्छन्ति सर्वदास्ते
भवन्त्युत ॥ ५५ ॥ देवतास्ते प्रयच्छन्ति ये सुवर्णं ददत्यथ।
अग्निर्हि देवताः सर्वाः सुवर्णञ्च तदात्मकं ॥ ५६ ॥ तस्मात् सुवर्णं
ददता दत्ताः सर्वाः स्म देवताः। भवन्ति पुरुषव्याघ्र न ह्यतः
परमं विदुः ॥ ५७ ॥ भूय एव च माहात्म्यं सुवर्णस्य निबोध
मे। गदतो मम विप्रर्षे सर्वशस्त्रभृताम्बर ॥ ५८ ॥ मया श्रुत-
मिदं पूर्वं पुराणे भृगुनन्दन। प्रजापतेः कथयतो यथा न्यायन्तु
तस्य वै ॥ ५९ ॥ शूलपाणेर्भगवतो रुद्रस्य च महात्मनः। गिरौ
हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ॥ ६० ॥ देव्या विवाहे निर्वृत्ते
रुद्राण्या भृगुनन्दन। समागमे भगवतो देव्या सह महात्मनः
॥ ६१ ॥ ततः सर्वे समुद्विग्ना देवा रुद्रमुपागमन्। ते महादेव-
मासीनं देवीञ्च वरदामुमां ॥ ६२ ॥ प्रसाद्य शिरसा सर्वे रुद्र-
मूचुर्भृगूद्वह। अयं समागमो देव देव्या सह तवानघ ॥ ६३ ॥
तपस्विनस्तपस्विन्या तेजस्विन्यातितेजसः। अमोघतेजास्त्वं देव
देवी चेयमुमा तथा ॥ ६४ ॥ अपत्यं युवयोर्देव बलवद्भविता
विभो। तन्नूनं त्रिषु लोकेषु न किञ्चिच्छेषयिष्यति ॥ ६५ ॥
तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन। वरं प्रयच्छ लोकेश
त्रैलोक्यहितकाम्यया ॥ ६६ ॥ अपत्यार्थं निगृह्णीष्व तेजः पर-
मकं विभो। त्रैलोक्यसारौ हि युवां लोकं सन्तापयिष्यथ ॥ ६७ ॥
तदपत्यं हि युवयोर्देवानभिभवेत् ध्रुवं। न हि ते पृथिवी देवी
न च द्यौर्न दिवं विभो ॥ ६८ ॥ नेदं धारयितुं शक्ताः समस्ता

इति नो मतिः । तेजःप्रभावनिर्द्दग्धं तस्मात् सर्व्वमिदं जगत् ॥६९॥
तस्मात् प्रसादं भगवन् कर्त्तुमर्हसि नः प्रभो । न देव्यां सम्भवेत्
पुत्रो भवतः सुरसत्तम ॥ ७० ॥ धैर्य्यादेव निगृह्णीष्व तेजो
ज्वलितमुत्तमं । इति तेषां कथयतां भगवान् गोवृषध्वजः ॥७१॥
एवमस्त्विति देवांस्तान् विप्रर्षे प्रत्यभाषत । इत्युक्त्वा चोर्द्ध्वमनय-
द्रेतो वृषभवाहनः ॥ ऊर्द्ध्वरेताः समभवत्ततः प्रभृति चापि सः ।
रुद्राणी तु ततः क्रुद्धा प्रजोच्छेदे तथा कृते ॥ ७३ ॥ देवानथा-
ब्रवीत्तत्र स्त्रीभावात् परुषं वचः । यस्मादपत्यकामो वै भर्त्ता मे
विनिवर्त्तितः ॥ ७४ ॥ तस्मात् सर्व्वे सुरा यूयमनपत्या भविष्यथ ।
प्रजोच्छेदो मम कृतो यस्माद्युष्माभिरद्य वै ॥ ७५ ॥ तस्मात्
प्रजा वः खगमाः सर्व्वेषां न भविष्यति । पावकस्तु न तत्रासी-
च्छापकाले भृगूद्वह ॥ ७६ ॥ देवा देव्यास्तथा शापादनपत्या-
स्तथाभवन् । रुद्रस्तु तेजोऽप्रतिमं धारयामास वै तदा ॥ ७७ ॥
प्रस्कन्नन्तु ततस्तस्मात् किञ्चित्तत्रापतद्भुवि । उत्पपात तदा
वह्नौ ववृधे चाद्भुतोपमं ॥ ७८ ॥ तेजस्तेजसि संयुक्तमात्मयो-
नित्वमागतं । एतस्मिन्नेव काले तु देवाः शक्रपुरोगमाः ॥ ७९ ॥
असुरस्तारको नाम तेन सन्तापिता भृशं । आदित्या वसवो
रुद्रा मरुतोऽथाश्विनावपि ॥ ८० ॥ साध्याश्च सर्व्वे सन्त्रस्ता दैते-
यस्य पराक्रमात् । स्थानानि देवतानां हि विमानानि पुराणि
च ॥ ८१ ॥ ऋषीणाञ्चाश्रमाश्चैव बभूवुरसुरैर्हृताः । ते दीन-
मनसः सर्व्वे देवता ऋषयश्च ये । प्रजग्मुः शरणं देवं ब्रह्माण-
मजरं विभुं ॥ ८२ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने
सुवर्णोत्पत्तौ चतुरशीतोऽध्यायः ॥ ८४ ॥

---

देवा ऊचुः । असुरस्तारको नाम त्वया दत्तवरः प्रभो । सुरानृषींश्च क्लिश्नाति वधस्तस्य विधीयतां ॥ १ ॥ तस्माद्भयं समुत्पन्नमस्माकं वै पितामह । परित्रायस्व नो देव न ह्यन्या गतिरस्ति नः ॥ २ ॥

ब्रह्मोवाच । समोऽहं सर्वभूतानामधर्मं नेह रोचये । हन्यतां तारकः क्षिप्रं सुरर्षिगणबाधिता ॥ ३ ॥ वेदा धर्माश्च नोच्छेदं गच्छेयुः सुरसत्तमाः । विहितं पूर्वमेवात्र मया वै व्येतु वो ज्वरः ॥ ४ ॥

देवा ऊचुः । वरदानाद्भगवतो दैतेयो बलगर्वितः । देवैर्न शक्यते हन्तुं स कथं प्रशमं व्रजेत् ॥ ५ ॥ स हि नैव स्म देवानां नासुराणां न रक्षसां । वध्यः स्यामिति जग्राह वरं त्वत्तः पितामह ॥ ६ ॥ देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुरा कृते । न भविष्यति वोऽपत्यमिति सर्वे जगत्पते ॥ ७ ॥

ब्रह्मोवाच । हुताशनो न तत्रासीच्छापकाले सुरोत्तमाः । स उत्पादयितापत्यं वधाय त्रिदशद्विषां ॥ ८ ॥ तद्वै सर्वानतिक्रम्य देवदानवराक्षसान् । मनुष्यानथ गन्धर्वान्नागानथ च पक्षिणः ॥ ९ ॥ अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति । यतो वो भयमुत्पन्नं ये चान्ये सुरशत्रवः ॥ १० ॥ सनातनो हि संकल्पः काम इत्यभिधीयते । रुद्रस्य रेतः प्रस्कन्नमग्नौ निपतितञ्च यत् ॥ ११ ॥ तत्तेजोऽग्निर्महद्भूतं द्वितीयमिव पावकं । वधार्थं देवशत्रूणां गङ्गायां जनयिष्यति ॥ १२ ॥ स तु नावाप तं शापं नष्टः स हुतभुक् तदा । तस्माद्वो भयहृद्देवाः समुत्पत्स्यति पावकिः ॥ १३ ॥ अन्विष्यतां वै ज्वलनस्तथा चाद्य नियुज्यतां । तारकस्य वधोपायः कथितो वै मयानघाः ॥ १४ ॥ न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै । बलान्यतिबलं प्राप्य दुर्बलानि भवन्ति वै ॥ १५ ॥ हन्यादवध्यान् वरदानपि चैव तप-

ख्विनः। सङ्कल्पाभिरुचिः कामः सनातनतमोऽभवत् ॥ १६ ॥ जगत्पतिरनिर्द्देश्यः सर्व्वगः सर्व्वभावनः। हृच्छयः सर्व्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥ १७ ॥ अन्विष्यतां स तु क्षिप्रं तेजोराशिर्हुताशनः। स वो मनोगतं कामं देवः सम्पादयिष्यति ॥ १८ ॥ एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः। जग्मुः संसिद्धसंकल्पाः पर्य्यषन्तो विभावसुं ॥ १९ ॥ ततस्त्रैलोक्यमृषयो व्यचिन्वन्त सुरैः सह। काङ्क्षन्तो दर्शनं वह्नेः सर्व्वे तद्गतमानसाः ॥ २० ॥ परेण तपसा युक्ताः श्रीमन्तो लोकविश्रुताः। लोकाननुचरन् सिद्धाः सर्व्व एव भृगूत्तम ॥ २१ ॥ नष्टमात्मनि संलीनं नाधिजग्मुर्हुताशनं। ततः संजातसंत्रासानग्नेर्द्दर्शनलालसान् ॥ २२ ॥ जलेचरः क्लान्तमनास्तेजसाग्नेः प्रदीपितः। उवाच देवान्मण्डूको रसातलतलोत्थितः ॥ २३ ॥ रसातलतले देवा वसत्यग्निरिति प्रभो। सन्तापादिह संप्राप्तः पावकप्रभवादहं ॥२४॥ स संसुप्तो जले देवा भगवान् हव्यवाहनः। आपः संसृज्य तेजोभिस्तेन सन्तापिता वयं ॥ २५ ॥ तस्य दर्शनमिष्टं वो यदि देवा विभावसोः। तत्रैनमधिगच्छध्वं कार्य्यं वो यदि वह्निना ॥ २६ ॥ गम्यतां साधयिष्यामो वयं ह्यग्निभयात् सुराः। एतावदुक्त्वा मण्डूकस्त्वरितो जलमाविशत् ॥२७॥ हुताशनस्तु बुबुधे मण्डूकस्य च पैशुनं। शशाप स तमासाद्य न रसान् वेत्स्यसीति वै ॥ २८ ॥ तं वै संयुज्य शापेन मण्डूकं त्वरितो ययौ। अन्यत्र वासाय विभुर्न चात्मानमदर्शयत् ॥ २९ ॥ देवास्त्वनुग्रहं चक्रुर्मण्डूकानां भृगूत्तम। यत्तत् शृणु महाबाहो गदतो मम सर्व्वशः ॥ ३० ॥

देवा ऊचुः। अग्निशापादजिह्वापि रसज्ञानवहिष्कृताः। सरस्वतीं बहुविधां यूयमुच्चारयिष्यथ ॥ ३१ ॥ बिलवासगतांश्चैव निराहारानचेतसः। गतासूनपि संशुष्कान् भूमिः सन्धारयिष्यति ॥ ३२ ॥ तमोघनायामपि वै निशायां विचरिष्यथ। इत्युक्त्वा

तांस्ततो देवाः पुनरेव महीमिमां । परीयुर्ज्वलनस्यार्थे न चाविन्दन् हुताशनं ॥ ३३ ॥ अथ तान् द्विरदः कश्चित् सुरेन्द्रद्विरदोपमः । अश्वत्थस्थोऽग्निरित्येवमाह देवान् भृगूद्वह ॥ ३४ ॥ शशाप ज्वलनः सर्वान् द्विरदान् क्रोधमूर्च्छितः । प्रतीपा भवतां जिह्वा भवित्रीति भृगूद्वह ॥ ३५ ॥ इत्युक्त्वा निःसृतोऽश्वत्थादग्निर्वारणसूचितः । प्रविवेश शमीगर्भमथ वह्निः सुषुप्सया ॥ ३६ ॥ अनुग्रहन्तु नागानां यच्चक्रुः शृणु तं प्रभो । देवा भृगुकुलश्रेष्ठ प्रीत्या सत्यपराक्रमाः ॥ ३७ ॥

देवा ऊचुः । प्रतीपया जिह्वयापि सर्वाहारं करिष्यथ । वाचञ्चोच्चारयिष्यध्वमुच्चैरव्यञ्जिताक्षरां ॥ ३८ ॥ इत्युक्त्वा पुनरेवाग्निमनुसस्रुर्दिवौकसः । अश्वत्थान्निःसृतश्चाग्निः शमीगर्भमुपाविशत् ॥ ३९ ॥ शुकेन ख्यापितो विप्र तं देवाः समुपाद्रवन् । शशाप शुकमग्निस्तु वाग्विहीनो भविष्यसि ॥ ४० ॥ जिह्वामावर्त्तयामास तस्यापि हुतभुक् तथा । दृष्ट्वा तु ज्वलनं देवाः शुकमूचुर्दयान्विताः ॥ ४१ ॥ भविता न त्वमत्यन्तं शुकत्वे नष्टवागिति । आवृत्तजिह्वस्य सतो वाक्यं कान्तं भविष्यति ॥ ४२ ॥ बालस्येव प्रवृद्धस्य कलमव्यक्तमद्भुतं । इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः ॥ ४३ ॥ तदेवायतनं चक्रुः पुण्यं सर्वक्रियास्वपि । ततः प्रभृति चाप्यग्निः शमीगर्भेषु दृश्यते ॥ ४४ ॥ उत्पादने तथोपायमधिजग्मुश्च मानवाः । आपो रसातले यास्तु संस्पृष्टाश्चित्रभानुना ॥४५॥ ताः पर्वतप्रस्रवणैरूष्मामुञ्चन्ति भार्गव । पावकेनाधिशयता सन्तप्तास्तस्य तेजसा ॥ ४६ ॥ अथाग्निर्देवता दृष्ट्वा वभूव व्यथितस्तदा । किमागमनमित्येवं तानपृच्छत पावकः ॥ ४७ ॥ तमूचुर्विबुधाः सर्वे ते चैव परमर्षयः । त्वां नियोक्ष्यामहे कार्य्ये तद्भवान् कर्त्तुमर्हति ॥ ४८ ॥ कृते च तस्मिन् भविता तवापि सुमहान् गुणः ॥ ४९ ॥

अग्निरुवाच। ब्रूत यद्भवतां कार्य्यं कर्त्तास्मि तदहं सुराः। भवतान्तु नियोज्योऽस्मि मा वोऽत्रास्ति विचारणा ॥ ५० ॥

देवा ऊचुः। असुरस्तारको नाम ब्रह्मणो वरदर्पितः। अस्मान् प्रवाधते वीर्य्याद्वधस्तस्य विधीयतां ॥ ५१ ॥ इमान् देवगणांस्तात प्रजापतिगणांस्तथा। ऋषींश्चापि महाभाग परित्रायस्व पावक ॥ ५२ ॥ अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो। यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन ॥ ५३ ॥ शप्तानां न महादेव्या नान्यदस्ति परायणं। अन्यत्र भवतो वीर्य्यात्तस्मात् त्रायस्व नः प्रभो ॥ ५४ ॥ इत्युक्तः स तथेत्युक्त्वा भगवान् हव्यवाहनः। जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति ॥ ५५ ॥ तया चाप्यभवन् मिश्रो गर्भं चास्यां दधे तदा। ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा ॥ ५६ ॥ तेजसा तस्य देवस्य गङ्गा विह्वलचेतना। सन्तापमगमत्तीव्रं सा सोढुं न शशाक ह ॥ ५७ ॥ आहिते ज्वलनेनाथ गर्भे तेजःसमन्विते। गङ्गायामसुरः कश्चिद्भैरवं नादमानदत् ॥ ५८ ॥ अबुद्धिपतितेनाथ नादेन विपुलेन सा। वित्रस्तोद्भ्रान्तनयना गङ्गा विह्वललोचना ॥ ५९ ॥ विसंज्ञा नाशकद्गर्भं वोढुमात्मानमेव च। सा तु तेजःपरीताङ्गी कम्पयन्तीव जाह्नवी ॥ ६० ॥ उवाच ज्वलनं विप्र तदा गर्भबलोद्धुता। न ते शक्तास्मि भगवंस्तेजसोऽस्य विधारणे ॥ ६१ ॥ विमूढ़ास्मि कृतानेन न मे स्वास्थ्यं यथा पुरा। विह्वला चास्मि भगवंश्चेतो नष्टञ्च मेऽनघ ॥ ६२ ॥ धारणे नास्य शक्ताहं गर्भस्य तपतांवर। उत्स्रक्ष्येहमिमं दुःखान्न तु कामात् कथञ्चन ॥ ६३ ॥ न तेजसोऽस्ति संस्पर्शो मम देव विभावसो। आपदर्थे हि सम्बन्धः सुसूक्ष्मोऽपि महाद्युते ॥ ६४ ॥ यदत्र गुणसम्पन्नमितरद्वा हुताशन। त्वय्येव तदहं मन्ये धर्माधर्मौ च केवलौ ॥ ६५ ॥ तामुवाच ततो वह्निर्धार्य्यतां धार्य्यतामिति। गर्भो मत्तेजसा युक्तो महा-

गुणफलोदयः ॥ ६६ ॥ भक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं तथा । न हि ते किञ्चिदप्राप्यमन्यतो धारणादृते ॥ ६७ ॥ सा वह्निना वार्य्यमाणा देवैरपि सरिद्वरा । समुत्ससर्ज्ज तं गर्भं मेरौ गिरिवरे तदा ॥ ६८ ॥ समर्था धारणे चापि रुद्रतेजः प्रधर्षिता । नाशकत्तं तदा गर्भं संधारयितुमोजसा ॥ ६९ ॥ सा समुत्सृज्य तं दुःखाद्दीप्तं वैश्वानरप्रभं । दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह ॥ ७० ॥ पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः । कीदृग्वर्णोऽपि वा देवि कीदृग्रूपश्च दृश्यते । तेजसा केन वा युक्तः सर्वमेतद्ब्रवीहि मे ॥ ७१ ॥

गङ्गोवाच । जातरूपः स गर्भो वै तेजसा त्वमिवानघ । सुवर्णो विमलो दीप्तः पर्वतञ्चावभासयत् ॥ ७२ ॥ पद्मोत्पलविमिश्राणां ह्रदानामिव शीतलः । गन्धोऽस्य सकदम्बानां तुल्यो वै तपतांवर ॥ ७३ ॥ तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः । यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु च ॥ ७४ ॥ तत् सर्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यते । पर्य्यधावत शैलांश्च नदीः प्रस्रवणानि च ॥ ७५ ॥ व्यादीपयंस्तेजसा च त्रैलोक्यं स चराचरं । एवं रूपः स भगवान् पुत्रस्ते हव्यवाहन ॥ ७६ ॥ सूर्य्यवैश्वानरसमः कान्त्या सोम इवापरः । एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत ॥ ७७ ॥ पावकश्चापि तेजस्वी कृत्वा कार्य्यं दिवौकसां । जगामेष्टं ततो देशं तदा भार्गवनन्दन ॥ ७८ ॥ एतैः कर्म्मगुणैर्लोके नामाग्नेः परिगीयते । हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा ॥ ७९ ॥ पृथिवी च तदा देवी ख्याता वसुमतीति वै । स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः ॥ ८० ॥ दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः । ददृशुः कृत्तिकास्तन्तु बालार्कसदृशद्युतिं ॥ ८१ ॥ पुत्रत्वे चैताश्च तं बालं पुपुषुस्तन्यविस्रवैः । ततः स कार्त्तिकेयत्वमवाप परमद्युतिः ॥ ८२ ॥ स्कन्दत्वात् स्कन्दता-

स्थापि गुहावासाद्गुह्योऽभवत् । एवं सुवर्णमुत्पन्नमपत्यं जातवेदसः ॥ ८३ ॥ तत्र जाम्बुनदं श्रेष्ठं देवानामपि भूषणं । ततः प्रभृति चाप्येतज्जातरूपमुदाहृतं ॥ ८४ ॥ रत्नानामुत्तमं रत्नं भूषणानां तथोत्तमं । पवित्रञ्च पवित्राणां मङ्गलानाञ्च मङ्गलं यत् सुवर्णं स भगवानग्निरीशः प्रजापतिः । पवित्राणां पवित्रं हि कणकं द्विजसत्तम । अग्निषोमात्मकञ्चैव जातरूपमुदाहृतं ॥ ८६ ॥

वशिष्ठ उवाच । अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनं । पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥ ८७ ॥ देवस्य महतस्तात वारुणीं बिभ्रतस्तनुं । ऐश्वर्य्ये वारुणे राम रुद्रस्येशस्य वै प्रभो ॥ ८८ ॥ आजग्मुर्मुनयः सर्व्वे देवाश्चाग्निपुरोगमाः । यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्त्तिमान् ॥ ८९ ॥ मूर्त्तिमन्ति च सामानि यजूंषि च सहस्रशः । ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ॥ ९० ॥ लक्षणानि सुरास्तोमा निरुक्तं सुरपङ्क्तयः । ओंकारश्चावसन् नेत्रे निग्रहप्रग्रहौ तथा ॥ ९१ ॥ वेदाश्च सोपनिषदो विद्यासावित्र्यथापि च । भूतं भव्यं भविषञ्च दधार भगवान् शिवः ॥ ९२ ॥ संजुहवात्मनात्मानं स्वयमेव तदा प्रभो । यज्ञञ्च शोभयामास बहुरूपं पिनाकधृक् ॥ ९३ ॥ द्यौर्नभः पृथिवी खञ्च तथा चैवैष भूपतिः । सर्वविद्येश्वरः श्रीमानेष चापि विभावसुः ॥ ९४ ॥ एष ब्रह्मा शिवो रुद्रो वरुणोऽग्निः प्रजापतिः । कीर्त्त्यते भगवान् देवः सर्वभूतपतिः शिवः ॥ ९५ ॥ तस्य यज्ञः पशुपतेस्तपः क्रतव एव च । दीक्षा दीप्तव्रता देवी दिशश्च सदिगीश्वराः ॥ ९६ ॥ देवपत्नश्च कन्याश्च देवानाञ्चैव मातरः । आगमुः सहितास्तत्र तदा भृगुकुलोद्वह ॥ ९७ ॥ यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः । स्वयम्भवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ॥ ९८ ॥ तस्य शुक्रस्य विस्पन्दात् पांशून् संगृह्य

भूमितः । प्रास्यत् पूषा कराभ्यां वै तस्मिन्नेव हुताशने ॥ ९९ ॥
ततस्तस्मिन् संप्रवृत्ते सत्रे ज्वलितपावके । ब्रह्मण्यो जुह्वतस्तत्र
प्रादुर्भावो बभूव ह ॥ १०० ॥ स्कन्नमात्रञ्च तच्छुक्रं स्रुवेण परि-
गृह्य सः । आज्यवन्मन्त्रतश्चापि सोऽजुहोद्भृगुनन्दन ॥ १०१ ॥
ततस्तु जनयामास भूतग्रामञ्च वीर्य्यवान् । तस्य तत्तेजसस्तस्मा-
ज्जज्ञे लोकेषु तैजसं ॥ १०२ ॥ तमसस्तामसा भावा व्यापि सत्त्वं
तथोभयं । सगुणस्तेजसो नित्यस्तस्य चाकाशमेव च ॥ १०३ ॥
सर्वभूतेषु च तथा सत्त्वं तेजस्तथोत्तमं । शुक्रे हुतेऽग्नौ तस्मिंस्तु
प्रादुरासंस्त्रयः प्रभो ॥ १०४ ॥ पुरुषा वपुषा युक्ताः स्वैः स्वैः
प्रसवजैर्गुणैः । भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराभवत् ॥१०५॥
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् । सह ज्वालाभिरुत्पन्नो
भृगुस्तस्मात् भृगुः स्मृतः ॥ १०६ ॥ मरीचिभ्यो मरीचिस्तु मारीचः
कश्यपो ह्यभूत् । अङ्गारेभ्योऽङ्गिरास्तात वालिखिल्याः कुशो-
च्चयात् ॥ १०७ ॥ अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि ।
तथा भस्मव्यपोहेभ्यो ब्रह्मर्षिगणसंमताः ॥ १०८ ॥ वैखानसाः
समुत्पन्नास्तपः श्रुतगुणेप्सवः ॥ १०९ ॥ अश्रुतोऽस्य समुत्पन्ना-
वश्विनौ रूपसंमतौ । शेषाः प्रजानां पतयः स्रोतोभ्यस्तस्य
जज्ञिरे ॥ ११० ॥ ऋषयो रोमकूपेभ्यः स्वेदाच्छन्दो बलान्मनः ।
एतस्मात् कारणादाहुरग्निं सर्वास्तु देवताः ॥ १११ ॥ ऋषयः
श्रुतसम्पन्ना वेदप्रामाण्यदर्शनात् । यानि दारूणि ते मासा
निर्यासाः पक्षसंज्ञिताः ॥ ११२ ॥ अहोरात्रा मुहूर्त्ताश्च पित्तं
ज्योतिश्च वारुणं । रौद्रं लोहितमित्याहुर्लोहितात् कनकं
स्मृतं ॥ ११३ ॥ तन्मैत्र इति विज्ञेयं धूमाच्च वसवः स्मृताः ।
अर्चिषो याश्च ते रुद्रास्तथादित्या महाप्रभाः ११४ ॥ उद्दिष्टास्ते
तथाङ्गारा ये धिष्णेषु दिवि स्थिताः । आदिकर्त्ता च लोकस्य
तत् परंब्रह्म तद्ध्रुवं ॥ ११५ ॥ सर्वकामदमित्याहुस्तद्रहस्य-

मुवाच ह। ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः॥ ११६॥ मम सत्रमिदं दिव्यमहं ग्रहपतिस्त्विह। त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः। इति जानीत खगमा मम यज्ञफलं हि तत्॥ ११७॥

अग्निरुवाच। मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च। ममैव तान्यपत्यानि वरुणो ह्यवशात्मकः॥ ११८॥ अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः। ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत्॥ ११९॥ अहं कर्त्ता हि सत्रस्य होता शुक्रस्य चैव हि। यस्य वीजं फलं तस्य शुक्रञ्चेत् कारणं मतं॥ १२०॥ ततोऽब्रुवन् देवगणाः पितामहमुपेत्य वै। कृताञ्जलिपुटाः सर्व्वे शिरोभिरभिवन्द्य च॥ १२१॥ वयञ्च भगवन् सर्व्वे जगच्च सचराचरं। तवैव प्रसवाः सर्व्वे तस्मादग्निर्विभावसुः॥ १२२॥ वरुणश्चेश्वरो देवो लभतां काममीप्सितं। निसर्गाद्ब्रह्मणश्चापि वरुणो यादसां पतिः॥ १२३॥ जग्राह वै भृगुं पूर्व्वमपत्यं सूर्य्यवर्च्चसं। ईश्वरोऽङ्गिरसञ्चाग्नेरपत्यार्थमकल्पयत्॥ १२४॥ पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित्। तदा स वारुणः ख्यातो भृगुः प्रसवकर्म्मकृत्॥ १२५॥ आग्नेयस्त्वङ्गिराः श्रीमान् कविर्ब्राह्मो महायशाः। भार्गवाङ्गिरसौ लोके लोकसन्तानलक्षणौ॥ १२६॥ एते हि प्रसवाः सर्व्वे प्रजानां पतयस्त्रयः। सर्व्वं सन्तानमेतेषामिदमित्युपधारय॥ १२७॥ भृगोस्तु पुत्राः सप्तासन् सर्व्वे तुल्या भृगोर्गुणैः। च्यवनो वज्रशीर्षश्च शुचिरौर्व्वस्तथैव च॥ १२८॥ शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते। भार्गवा वारुणाः सर्व्वे येषां वंशो भवानपि॥ १२९॥ अष्टौ चाङ्गिरसः पुत्रा वारुणास्तेऽप्युदाहृताः। वृहस्पतिरुतथ्यश्च पयस्यः शान्तिरेव च॥१३०॥ घोरो विरूपः सम्वर्त्तः सुधन्वा चाष्टमः स्मृतः। एतेऽष्टौ वह्निजाः सर्व्वे ज्ञाननिष्ठा निरामयाः॥ १३१॥ ब्रह्मणस्तु कवेः पुत्रा

वारुणास्तेऽप्युदाहृताः । अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः ॥ १३२ ॥ कविः काव्यश्च धृष्णुश्च बुद्धिमानुशना तथा । भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्म्मवित् ॥ १३३ ॥ अष्टौ कविसुता ह्येते सर्वमेभिर्जगत्ततं । प्रजापतय एते हि प्रजाता यैरिह प्रजाः ॥ १३४ ॥ एवमङ्गिरसश्चैव कवेश्च प्रसवान्वयैः । भृगोश्च भृगुशार्द्दूल वंशजैः सततं जगत् ॥ १३५ ॥ वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः । कविन्तात भृगुञ्चापि तस्मात्तौ वारुणौ स्मृतौ ॥ १३६ ॥ जग्राहाङ्गिरसं देवः शिखी तस्माद्धुताशनः । तस्मादाङ्गिरसा ज्ञेयाः सर्व एव तदन्वयाः ॥ १३७ ॥ ब्रह्मा पितामह पूर्वं देवताभिः प्रसादितः । इमे नः सन्तरिष्यन्ति प्रजाभिर्जगतीश्वराः ॥ १७८ ॥ सर्वे प्रजानां पतयः सर्वे चापि तपस्विनः । त्वत् प्रसादादिमं लोकं तारयिष्यन्ति साम्प्रतं ॥ १३९ ॥ तथैव वंशकर्त्तारस्तव तेजोविवर्द्धनाः । भवेयुर्वेदविदुषः सर्वे च कृतिनस्तथा ॥ १४० ॥ देवपक्षचराः सौम्याः प्राजापत्या महर्षयः । प्राप्नुवन्ति तपश्चैव ब्रह्मचर्य्यं परन्तथा ॥ १४१ ॥ सर्वे हि वयमेते च तवैव प्रसवाः प्रभो । देवानां ब्राह्मणानाञ्च त्वं हि कर्त्ता पितामह ॥ १४२ ॥ मरीचिमादितः कृत्वा सर्वे चैवाथ भार्गवाः । अपत्यानीति संप्रेक्ष्य क्षमयाम पितामह ॥ १४७ ॥ ते त्वनेनैव रूपेण प्रजनिष्यन्ति वै प्रजाः । स्थापयिष्यन्ति चात्मानं युगादिनिधने तथा ॥ १४४ ॥ इत्युक्तः स तदा तैस्तु ब्रह्मा लोकपितामहः । तथेत्येवाब्रवीत् प्रीतस्तेऽपि जग्मुर्यथागतं ॥ १४५ ॥ एवमेतत् पुरावृत्तं तस्य यज्ञे महात्मनः । देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुं ॥ १४६ ॥ अग्निर्ब्रह्मा पशुपतिः सर्वो रुद्रः प्रजापतिः । अग्नेरपत्यमेतद्वै सुवर्णमिति धारणा ॥ १४७ ॥ अग्न्यभावे च कुरुते वह्निस्थानेषु काञ्चनं । जामदग्न्यः प्रमाणज्ञो वेदश्रुतिनिदर्शनात् ॥ १४८ ॥ कुशस्तम्बे जुहोत्यग्निं सुवर्णे

तत्र चास्थिते। वल्मीकस्य वपायाञ्च कर्णे चाजस्य दक्षिणे ॥१४९॥ शकटोर्व्व्यां परस्यास्तु ब्राह्मणस्य करेऽपि वा। इति प्रीतिकरीमृद्धिं भगवांस्तत्र मन्यते ॥ १५० ॥ तस्मादग्निपराः सर्व्वे देवता इति शुश्रुम। ब्रह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनं ॥१५१॥ तस्मात् ये वै प्रयच्छन्ति सुवर्णं धर्म्मदर्शिनः। देवतास्ते प्रयच्छन्ति समन्ता इति नः श्रुतं ॥ १५२ ॥ तस्य चातमसो लोकान् गच्छतः परमां गतिं। स्वर्लोके राजराज्येन सोऽभिषिच्येत भार्गव ॥ १५३ ॥ आदित्योदयसम्प्राप्ते विधिमन्त्रपुरस्कृतं। ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः ॥ १५४ ॥ ददात्युदितमात्रे यस्तस्य पाप्मा विधूयते। मध्याह्ने ददतो रुक्मं हन्ति पापमनागतं ॥ १५५ ॥ ददाति पश्चिमां सन्ध्यां यः सुवर्णं यतव्रतः। ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ॥ १५६ ॥ सेन्द्रेषु चैव लोकेषु प्रतिष्ठां विन्दते शुभां। इह लोके यशः प्राप्य शान्तपाप्मा च मोदते ॥ १५७ ॥ ततः सम्पद्यतेऽन्येषु लोकेष्वप्रतिमः सदा। अनावृत्तगतिश्चैव कामचारोऽभवत्युत ॥ १५८ ॥ न च क्षरति तेभ्यश्च यशश्चैवाप्नुते महत्। सुवर्णमक्षयं दत्त्वा लोकांश्चाप्नोति पुष्कलान् ॥ १५९ ॥ यस्तु संजनयित्वाग्निमादित्योदयनं प्रति। दद्याद्वै व्रतमुद्दिश्य सर्व्वकामान् समश्नुते ॥ १६० ॥ अग्निमित्येव तत् प्राहुः प्रदानं वै सुखावहं। यथेष्टगुणसंवृत्तं प्रवर्त्तकमिति स्मृतं ॥ १६१ ॥ एषा सुवर्णस्योत्पत्तिः कथिता ते मयानघ। कार्त्तिकेयस्य च विभो तद्विद्धि भृगुनन्दन ॥ १६२ ॥ कार्त्तिकेयस्तु संवृद्धः कालेन महता तदा। देवैः सेनापतित्वेन वृतः सेन्द्रैर्भृगूद्वह ॥ १६३ ॥ जघान तारकञ्चापि दैत्यमन्यांस्तथासुरान्। त्रिदशेन्द्राज्ञया ब्रह्मन् लोकानां हितकाम्यया ॥ १६४ ॥ सुवर्णदाने च मया कथितास्ते गुणा विभो। तस्मात् सुवर्णं विप्रेभ्यः प्रयच्छ ददतां वर ॥ १६५ ॥

भीष्म उवाच। इत्युक्तः स वशिष्ठेन जामदग्न्यः प्रतापवान्। ददौ सुवर्णं विप्रेभ्यो व्यमुच्यत च किल्बिषात्॥ १६६॥ एतत्ते सर्वमाख्यातं सुवर्णस्य महीपते। प्रदानस्य फलञ्चैव जन्म चास्य युधिष्ठिर॥ १६७॥ तस्मात्त्वमपि विप्रेभ्यः प्रयच्छ कनकं बहु। ददत् सुवर्णं नृपते किल्बिषाद्विप्रमोक्ष्यसि॥ १६८॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने सुवर्णोत्पत्तौ पञ्चाशीतोऽध्यायः॥ ८५॥

---

युधिष्ठिर उवाच। उक्ताः पितामहेनेह सुवर्णस्य विधानतः। विस्तरेण प्रदानस्य ये गुणाः श्रुतिलक्षणाः॥ १॥ यत्तु कारणमुत्पत्तेः सुवर्णस्य प्रकीर्त्तितं। स कथं तारकः प्राप्तो निधनं तद्ब्रवीहि मे॥ २॥ उक्तं स देवतानां हि अवध्य इति पार्थिव। कथं तस्याभवन्मृत्युर्विस्तरेण प्रकीर्त्तय॥ ३॥ एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह। कार्त्स्न्येन तारकवधं परं कौतूहलं हि मे॥ ४॥

भीष्म उवाच। विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा। कृत्तिकाश्चोदयामासुरपत्यभरणाय वै॥ ५॥ न देवतानां काचिद्धि समर्था जातवेदसः। एता हि शक्तास्तं गर्भं सन्धारयितुमोजसा॥ ६॥ षण्णां तासां ततः प्रीतः पावको गर्भधारणात्। स्वेन तेजोविसर्गेण वीर्य्येण परमेण च॥ ७॥ तास्तु षट् कृत्तिका गर्भं पुपुषुर्जातवेदसः। षट्सु वर्त्मसु तेजोऽग्नेः सकलं निहितं प्रभो॥ ८॥ ततस्ता वर्द्धमानस्य कुमारस्य महात्मनः। तेजसाभिपरीताङ्ग्यो न क्वचिच्छर्म्मलेभिरे॥ ९॥ ततस्तेजःपरीताङ्ग्यः सर्वाः काल उपस्थिते। समं गर्भं सुषुविरे कृत्तिकास्तं नरर्षभ॥ १०॥ ततस्तं षडधिष्ठानं गर्भमेकत्वमागतं। पृथिवी प्रति-

जग्राह कार्त्तस्वरसमीपतः ॥ ११ ॥ स गर्भो दिव्यसंस्थानो दीप्तिमान् पावकप्रभः । दिव्यं शरवणं प्राप्य वद्वृधे प्रियदर्शनः ॥१२॥ ददृशुः कृत्तिकास्तन्तु बालमर्कसमद्युतिं । जातस्नेहाच्च सौहार्द्दात् पुपुषुस्तन्यविस्रवैः ॥ १३ ॥ अभवत् कार्त्तिकेयः स त्रैलोक्ये स चराचरे । स्कन्नत्वात् स्कन्दतां प्राप्तो गुहावासाद्गुहोऽभवत् ॥ १४ ॥ ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिगीश्वराः । रुद्रो धाता च विष्णुश्च यमः पूषार्य्यमा भगः ॥ १५ ॥ अंशो मित्रश्च साध्याश्च वासवो वसवोऽश्विनौ । आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः ॥ १६ ॥ पृथग्भूतानि चान्यानि यानि देवार्पणानि वै । आजग्मुस्तेऽद्भुतं द्रष्टुं कुमारं ज्वलनात्मजं ॥ १७ ॥ ऋषयस्तुष्टुवुश्चैव गन्धर्वाश्च जगुस्तथा । षड़ाननं कुमारन्तु द्विषड़क्षं द्विजप्रियं ॥ १८ ॥ पीनांसं द्वादशभुजं पावकादित्यवर्च्चसं । शयानं शरगुल्मस्थं दृष्ट्वा देवाः सहर्षिभिः ॥ १९ ॥ लेभिरे परमं हर्षं मेनिरे चासुरं हतं । ततो देवाः प्रियाख्यस्य सर्व्व एव समाहरन् ॥ २० ॥ क्रीड़तः क्रीड़नीयानि ददुः पक्षिगणांश्च ह । सुवर्णोऽस्य ददौ पुत्रं मयूरं चित्रवर्हिणं ॥ २१ ॥ राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ । कुक्कुटञ्चाग्निसङ्काशं प्रददावरुणः स्वयं ॥ २२ ॥ चन्द्रमाः प्रददौ मेषमादित्यो रुचिरां प्रभां । गवां माता च गा देवी ददौ शतसहस्रशः ॥ २३ ॥ छागमग्निर्गुणोपेतमिला पुष्पफलं बहु । सुधन्वा शकटञ्चैव रथञ्चामितकूवरं ॥ २४ ॥ वरुणो वारुणान् दिव्यान् सगजान् प्रददौ शुभान् । सिंहान् सुरेन्द्रो व्याघ्रांश्च द्विपानन्यांश्च पक्षिणः ॥ २५ ॥ श्वापदांश्च बहून् घोरान् छत्राणि विविधानि च । राक्षसासुरसंघाश्च अनुजग्मुस्तमीश्वरं ॥ २६ ॥ वर्द्धमानन्तु तं दृष्ट्वा प्रार्थयामास तारकः । उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुं ॥ २७ ॥ सैनापत्येन तं देवाः पूजयित्वा गुहालयं । शशंसुर्विप्रकारं तं

तस्मै तारककारितं ॥ २८ ॥ स विद्धो महावीर्य्यो देवसेनापतिः प्रभुः। जघानामोघया शक्त्या दानवं तारकं गुहः ॥ २९ ॥ तेन तस्मिन् कुमारेण क्रीड़ता निहतेऽसुरे। सुरेन्द्रः स्थापितो राज्ये देवानां पुनरीश्वरः ॥ ३० ॥ स सेनापतिरेवाथ बभौ स्कन्दः प्रतापवान्। ईशो गोप्ता च देवानां प्रियकृच्छङ्करस्य च ॥ ३१ ॥ हिरण्यमूर्त्तिर्भगवानेष एव च पावकिः। सदा कुमारो देवानां सैनापत्यमवाप्तवान् ॥ ३२ ॥ तस्मात् सुवर्णं मङ्गल्यं रत्नमक्षय्यमुत्तमं। सहजं कार्त्तिकेयस्य वह्नेस्तेजः परं मतं ॥ ३३ ॥ एवं रामाय कौरव्य वशिष्ठोऽकथयत् पुरा। तस्मात् सुवर्णदानाय प्रयतस्व नराधिप ॥ ३४ ॥ रामः सुवर्णं दत्त्वा हि विमुक्तः सर्वकिल्बिषैः। त्रिपिष्टपे महत्स्थानमवापासुलभं नरैः ॥ ३५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मकथने तारकवधोपाख्याने षड़शीतोऽध्यायः ॥ ८६ ॥

---

युधिष्ठिर उवाच। चातुर्वर्ण्यस्य धर्मात्मन् धर्माः प्रोक्ता यथा त्वया। तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव ॥ १ ॥

वैशम्पायन उवाच। युधिष्ठिरेणैवमुक्तो भीष्मः शान्तनवस्तदा। इमं श्राद्धविधिं कृत्स्नं वक्तुं समुपचक्रमे ॥ २ ॥

भीष्म उवाच। शृणुष्वावहितो राजन् श्राद्धकर्म्मविधिं शुभं। धन्यं यशस्यं पुत्रीयं पितृयज्ञं परन्तप ॥ ३ ॥ देवासुरमनुष्याणां गन्धर्वोरगरक्षसां। पिशाचकिन्नराणाञ्च पूज्या वै पितरः सदा ॥ ४ ॥ पितॄन् पूज्यादितः पश्चात् देवतास्तर्पयन्ति वै। तस्मात्तान् सर्वयत्नेन पुरुषः पूजयेत् सदा ॥ ५ ॥ अन्वाहार्य्यं महाराज पितॄणां श्राद्धमुच्यते। तस्माद्विशेषविधिना विधिः प्रथमकल्पितः ॥ ६ ॥ सर्वेष्वहःसु प्रीयन्ते कृते श्राद्धे पितामहाः।

प्रवक्ष्यामि तु ते सर्व्वांस्तिथ्यातिथ्यगुणागुणान् ॥ ७ ॥ येष्वहःसु कृतैः श्राद्धैर्यत्फलं प्राप्यतेऽनघ । तत् सर्व्वं कीर्त्तयिष्यामि यथावत्त्वं निबोध मे ॥ ८ ॥ पितॄनर्च्च्य प्रतिपदि प्राप्नुयात् स्वगृहे स्त्रियः । अभिरूपप्रजायिन्यो दर्शनीया बहुप्रजाः ॥ ९ ॥ स्त्रियो द्वितीयां जायन्ते तृतीयायान्तु वाजिनः । चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे ॥ १० ॥ पञ्चम्यां बहवः पुत्रा जायन्ते कुर्व्वतां नृप । कुर्व्वाणास्तु नराः षष्ठ्यां भवन्ति द्युतिभागिनः ॥ ११ ॥ कृषिभागी भवेत् श्राद्धं कुर्व्वाणः सप्तमीं नृप । अष्टम्यान्तु प्रकुर्व्वाणो वाणिज्ये लाभमाप्नुयात् ॥ १२ ॥ नवम्यां कुर्व्वतः श्राद्धं भवत्येकशफं बहु । विवर्द्धन्ते तु दशमीं गावः श्राद्धानि कुर्व्वतः ॥ १३ ॥ कुप्यभागी भवेन्मर्त्त्यः कुर्व्वन्नेकादशीं नृप । ब्रह्मवर्च्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि ॥ १४ ॥ द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते । रजतं बहुवित्तञ्च सुवर्णञ्च मनोरमं ॥ १५ ॥ ज्ञातीनान्तु भवेच्छ्रेष्ठः कुर्व्वन् श्राद्धं त्रयोदशीं । अवश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे ॥ १६ ॥ युद्धभागी भवेन्मर्त्त्यः कुर्व्वन् श्राद्धं चतुर्द्दशीं । अमावस्यान्तु निर्व्वापात् सर्व्वकामानवाप्नुयात् ॥ १७ ॥ कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीं । श्राद्धकर्म्मणि तिथ्यस्तु प्रशस्ता न तथेतराः ॥ १८ ॥ यथा चैवापरः पक्षः पूर्व्वपक्षात् विशिष्यते । तथा श्राद्धस्य पूर्व्वाह्लादपराह्लो विशिष्यते ॥ १९ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि श्राद्धकथने सप्ताशीतोऽध्यायः ॥ ८७ ॥

---

युधिष्ठिर उवाच । किंस्विद्दत्तं पितृभ्यो वै भवत्यक्षयमीश्वर । किं हविश्चिररात्राय किमानन्त्याय कल्पते ॥ १ ॥

भीष्म उवाच। हवींषि श्राद्धकल्पे तु यानि श्राद्धविदो विदुः। तानि मे शृणु काम्यानि फलञ्चैव युधिष्ठिर॥ २॥ तिलै-र्व्रीहियवैर्मासैरद्भिर्मूलफलैस्तथा। दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप॥ ३॥ वर्द्धमानतिलश्राद्धमक्षयं मनुरब्रवीत्। सर्वे-ष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः॥ ४॥ द्वौ मासौ तु भवेत्तृप्तिर्मत्स्यैः पितृगणस्य च। त्रीन् मासानाविकेनाहुश्चतुर्मासं शशेन ह॥ ५॥ अजेन मासान् प्रीयन्ते पञ्चैव पितरो नृप। वाराहेण तु षण्मासान् सप्त वै शाकुनेन तु॥ ६॥ मासानष्टौ पार्षतेन रौरवेण नव प्रभो। गवयस्य तु मांसेन तृप्तिः स्याद्दश-मासिकी॥ ७॥ मांसेनैकादशप्रीतिः पितॄणां माहिषेण तु। गव्येन दत्ते श्राद्धे तु सम्वत्सरमिहोच्यते॥ ८॥ यथा गव्यं तथा युक्तं पायसं सर्पिषा सह। वाध्रीणसस्य मांसेन तृप्तिर्द्वादश-वार्षिकी॥ ९॥ आनन्त्याय भवेद्दत्तं खड्गिमांसं पितृक्षये। कालशाकञ्च लौहञ्चाप्यानन्त्यं छाग उच्यते॥ १०॥ गाथाश्चाप्यत्र गायन्ती पितृगीता युधिष्ठिर। सनत्कुमारो भगवान् पुरा मय्यभ्यभाषत॥ ११॥ अपि नः स कुले जायात् यो नो दद्या-त्त्रयोदशीं। मघासु सर्पिः संयुक्तं पायसं दक्षिणायने॥ १२॥ अजेन वापि लौहेन मघास्वेव यतव्रतः। हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितं॥ १३॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यत्रासौ प्रथितो लोकेष्वक्षय्यकरणो वटः॥ १४॥ आपो मूलं फलं मांसमन्नञ्चापि पितृक्षये। यत् किञ्चित् मधुसंमिश्रं तदानन्त्याय कल्पते॥ १५॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने श्राद्धकल्पे अष्टाशीतोऽध्यायः॥ ८८॥

भीष्म उवाच। यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे। तानि मे शृणु काम्यानि नक्षत्रेषु पृथक् पृथक्॥ १॥ श्राद्धं यः कृत्तिकायोगे कुर्वीत सततं नरः। अग्नीनाधाय सापत्यो यजेत विगतज्वरः॥ २॥ अपत्यकामो रोहिण्यां तेजस्कामो मृगोत्तमे। क्रूरकर्मा ददच्छ्राद्धमार्द्रायां मानवो भवेत्॥ ३॥ कृषिभागी भवेन्मर्त्त्यः कुर्वन् श्राद्धं पुनर्वसौ। पुष्टिकामोऽथ पुष्येण श्राद्धमीहेत मानवः॥ ४॥ अश्लेषायां ददत् श्राद्धं वीरान् पुत्रान् प्रजायते। ज्ञातीनान्तु भवेच्छ्रेष्ठो मघासु श्राद्धमावपन्॥ ५॥ फल्गुनीषु ददत् श्राद्धं सुभगः श्राद्धदो भवेत्। अपत्यभागुत्तरासु हस्तेन फलभाग्भवेत्॥ ६॥ चित्रायान्तु ददत् श्राद्धं लभेद्रूपवतः सुतान्। स्वातियोगे पितृनर्च्च्य वाणिज्यमुपजीवति॥ ७॥ बहुपुत्रो विशाखासु पुत्रमीहन् भवेन्नरः। अनुराधासु कुर्व्वाणो राजचक्रं प्रवर्त्तयेत्॥ ८॥ आधिपत्यं व्रजेन्मर्त्त्यो ज्येष्ठायामपवर्ज्जयन्। नरः कुरुकुलश्रेष्ठ श्रद्धादमपुरःसरः॥ ९॥ मूलेनारोग्यमर्च्चेत यशोऽषाढ़ासु चोत्तमं। उत्तरासु त्वषाढ़ासु वीतशोकश्चरेन्महीं॥ १०॥ श्राद्धं त्वभिजिता कुर्वन् विद्यां श्रेष्ठामवाप्नुयात्। श्रवणे तु ददच्छ्राद्धं प्रेत्य गच्छेत् सुसद्गतिं॥११॥ राज्यभागी धनिष्ठायां भवेत नियतं नरः। नक्षत्रे वारुणे कुर्वन् भिषक्सिद्धिमवाप्नुयात्॥ १२॥ पूर्वप्रोष्ठपदाः कुर्वन् बहून् विन्दत्यजाविकान्। उत्तरासु प्रकुर्व्वाणो विन्दते गाः सहस्रशः॥ १३॥ बहुकुप्यकृतं वित्तं विन्दते रेवतीं श्रितः। अश्विनीष्वश्वान् विन्देत भरणीष्वायुरुत्तमं॥ १४॥ इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाकरोत्। अक्लेशेनाजयच्चापि महीं सोऽनुशशास च॥ १५॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने श्राद्धकल्पे ऊननवतोऽध्यायः॥ ८९॥

युधिष्ठिर उवाच। कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह। द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि॥ १॥

भीष्म उवाच। ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित्। दैवे कर्मणि पित्र्ये तु न्यायमाहुः परीक्षणं॥ २॥ देवताः पूजयन्तीह दैवेनैवेह तेजसा। उपेत्य तस्माद्देवेभ्यः सर्वेभ्यो दापयेन्नरः॥ ३॥ श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान् बुधः। कुलशीलवयोरूपैर्विद्ययाभिजनेन च॥ ४॥ तेषामन्ये पङ्क्तिदूषास्तथान्ये पङ्क्ति पावनाः। अपाङ्क्तेयास्तु ये राजन् कीर्त्तयिष्यामि तान् शृणु॥ ५॥ कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः। ग्रामप्रेष्यो वार्द्धुषिको गायनः सर्वविक्रयी॥ ६॥ आगारदाही गरदः कुण्डाशी सोमविक्रयी। सामुद्रिको राजभृतस्तैलिकः कूटकारकः॥ ७॥ पित्रा विवदमानश्च यस्य चोपपतिर्गृहे। अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति॥ ८॥ पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः। अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च॥ ९॥ श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च। परिवित्तिश्च यश्च स्याद्दुश्चर्मा गुरुतल्पगः॥ १०॥ कुशीलवो देवलको नक्षत्रैर्यश्च जीवति॥ ११॥ ईदृशैर्ब्राह्मणैर्भुक्तमपाङ्क्तेयैर्युधिष्ठिर। रक्षांसि गच्छते हव्यमित्याहुर्ब्रह्मवादिनः॥ १२॥ श्राद्धं भुक्त्वा त्वधीयीत वृषलीतल्पगश्च यः। पुरीषे तस्य तं मासं पितरस्तस्य शेरते॥ १३॥ सोमविक्रयिणे विष्ठा भिषजे पूयशोणितं। नष्टं देवलके दत्तमप्रतिष्ठञ्च वार्द्धुषि॥ १४॥ यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत्। भस्मनीव हुतं द्रव्यं तथा पौनर्भवे द्विजे॥ १५॥ ये तु धर्मव्यपेतेषु चारित्रापगतेषु च। हव्यं कव्यं प्रयच्छन्ति तेषां तत् प्रेत्य नश्यति॥ १६॥ ज्ञानपूर्वन्तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः। पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चयः॥ १७॥ एतानिमान् विजानीयादपाङ्क्तेयान् द्विजा-

धमान्। शूद्राणामुपदेशञ्च ये कुर्वन्त्यल्पचेतसः ॥ १८ ॥ षष्टि-
र्ज्ञाणः शतं शण्ढः श्वित्री यावत् प्रपश्यति। पङ्क्त्यां समुप-
विष्टायां तावद्दूषयते नृप ॥ १९ ॥ यद्वेष्टितशिरा भुङ्क्ते यद्‌-
भुङ्क्ते दक्षिणामुखः। सोपानत्कश्च यद्भुङ्क्ते सर्वं विद्यात्तदा-
सुरं ॥ २० ॥ असूयता च यद्दत्तं यच्च श्रद्धाविवर्ज्जितं। सर्वं
तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥ २१ ॥ श्वानश्च पङ्क्ति-
दूषाश्च नावेक्षेरन् कथञ्चन। तस्मात् परिश्रुते दद्यात् तिलांश्चा-
न्ववकीरयेत् ॥ २२ ॥ तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ॥ २३ ॥ अपाङ्क्तो
यावतः पङ्क्त्यां भुञ्जानाननुपश्यति। तावत् फलाद्भ्रंशयति
दातारं तस्य बालिशं ॥ २४ ॥ इमे तु भरतश्रेष्ठ विज्ञेया पङ्क्ति
पावनाः। ये त्वतस्तान् प्रवक्ष्यामि परीक्षस्वेह तान् द्विजान् ॥२५॥
विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि। सदाचारपराश्चैव
विज्ञेयाः सर्वपावनाः ॥ २६ ॥ पाङ्क्तेयांस्तु प्रवक्ष्यामि ज्ञेयास्ते
पङ्क्तिपावनाः। त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्
॥ २७ ॥ ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगः। मातापित्रो-
र्यश्च वश्यः श्रोत्रियो दशपुरुषः ॥ २८ ॥ ऋतुकालाभिगामी च
धर्मपत्नीषु यः सदा। वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुना-
त्युत ॥ २९ ॥ अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः। सत्य-
वादी धर्मशीलः स्वकर्मनिरतश्च यः ॥ ३० ॥ ये च पुण्येषु तीर्थेषु
अभिषेककृतश्रमाः। मखेषु च समन्त्रेषु भवन्त्यवभृथप्लुताः ॥ ३१ ॥
अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः। सर्वभूतहिता
ये च श्राद्धेष्वेतान्निमन्त्रयेत् ॥ ३२ ॥ एतेषु दत्तमक्षय्यमेते वै
पङ्क्तिपावनाः। इमेऽपरे महाभागा विज्ञेयाः पङ्क्तिपावनाः
॥ ३३ ॥ यतयो मोक्षधर्मज्ञा योगाः सुचरितव्रताः। ये चेति-
हासं प्रयताः श्रावयन्ति द्विजोत्तमान् ॥ ३४ ॥ ये च भाष्यविदः

केचिद् येच व्याकरणे रताः। अधीयते पुराणं ये धर्मशास्त्राण्यथापि च ॥ ३५ ॥ अधीत्य च यथान्यायं विधिवत्तस्य कारिणः। उपपन्नो गुरुकुले सत्यवादी सहस्रदः ॥ ३६ ॥ अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। यावदेते प्रपश्यन्ति पङ्क्त्यास्तावत् पुनन्त्युत ॥ ३७ ॥ ततो हि पावनात् पङ्क्त्याः पङ्क्तिपावनउच्यते। क्रोशादर्द्धतृतीयाच्च पावयेदेक एव हि। ब्रह्मदेयानुसन्तान इति ब्रह्मविदो विदुः ॥ ३८ ॥ अनृत्विगनुपाध्यायः स चेदग्रासनं ब्रजेत्। ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतं ॥ ३९ ॥ अथ चेत वेदवित् सर्वैः पङ्क्तिदोषैर्विवर्ज्जितः। न च स्यात् पतितो राजन् पङ्क्तिपावन एव सः ॥ ४० ॥ तस्मात् सर्वं प्रयत्नेन परीक्ष्यामन्त्रयेत् द्विजान्। स्वकर्म्मनिरतानन्यान् कुले जातान् बहुश्रुतान् ॥ ४१ ॥ यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च। न प्रीणाति पितॄन् देवान् स्वर्गञ्च न स गच्छति ॥ ४२ ॥ यश्च श्राद्धे कुरुते सङ्गतानि न देवयानेन पथा स याति। स वै मुक्तः पिप्पलं वन्धनाद्वा स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ॥ ४३ ॥ तस्मान्मित्रं श्राद्धकृन्नाद्रियेत दद्यान्मित्रेभ्यः संग्रहार्थं धनानि। यन्मन्यते नैव शत्रुं न मित्रं तं मध्यस्थं भोजयेद्धव्यकव्ये ॥ ४४ ॥ यथोषरे वीजमुप्तं न रोहेन्न वा वप्ता प्राप्नुयाद्वीजभागं। एवं श्राद्धं भुक्तमनर्हमानैर्न चेह नामुत्र फलं ददाति ॥ ४५ ॥ ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति। तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते ॥ ४६ ॥ सम्भोजनी नाम पिशाचदक्षिणा सा नैव देवान्न पितॄनुपैति। इहैव सा भ्राम्यति हीनपुण्या शालान्तरे गौरिव नष्टवत्सा ॥ ४७ ॥ यथाग्नौ शान्ते घृतमाजुहोति तन्नैव देवान्न पितॄनुपैति। तथा दत्तं नर्त्तने गायने च याञ्चानृते दक्षिणामावृणोति ॥ ४८ ॥ उभौ हिनस्ति न भुनक्ति चैषा या चानृते दक्षिणा दीयते वै। आघातिनी गर्हितैषा पतन्ती तेषां

प्रेतान् पातयेद्देवयानात् ॥ ४९ ॥ ऋषीणां समये नित्यं ये चरन्ति युधिष्ठिर। निश्चिताः सर्व्वधर्मज्ञास्तान् देवा ब्राह्मणान् विदुः ॥ ५० ॥ स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च। तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥ ५१ ॥ कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत। तत्र ये ब्राह्मणान् केचिन्न निन्दन्ति हि ते नराः ॥ ५२ ॥ ये तु निन्दन्ति जल्पेषु न तान् श्राद्धेषु भोजयेत्। ब्राह्मणा निन्दिता राजन् हन्युस्त्रैपुरुषं कुलं ॥५३॥ वैखानसानां वचनमृषीणां श्रूयते नृप। दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ॥ ५४ ॥ प्रियो वा यदि वा द्वेष्यस्तेषान्तु श्राद्धमावपेत्। यः सहस्रं सहस्राणां भोजयेदनृतान्नरः। एकस्तान्मन्त्रवित् प्रीतः सर्व्वानर्हति भारत ॥ ५५ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने नवतितमोऽध्यायः ॥ ९० ॥

---

युधिष्ठिर उवाच। केन सङ्कल्पितं श्राद्धं तस्मिन् काले किमात्मकं। भृग्वङ्गिरसके काले मुनिना कतरेण वा ॥ १ ॥ कानि श्राद्धानि वर्ज्ज्यानि कानि मूलफलानि च। धान्यजात्यश्च का वर्ज्ज्यास्तन्मे ब्रूहि पितामह ॥ २ ॥

भीष्म उवाच। यथा श्राद्धं संप्रवृत्तं यस्मिन्काले यदात्मकं। येन सङ्कल्पितञ्चैव तन्मे शृणु जनाधिप ॥ ३ ॥ स्वायम्भुवोऽत्रिः कौरव्य परमर्षिः प्रतापवान्। तस्य वंशे महाराज दत्तात्रेय इति स्मृतः ॥ ४ ॥ दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः। निमेश्चाप्यभवत् पुत्रः श्रीमान्नाम श्रिया वृतः ॥ ५ ॥ पूर्णे वर्षसहस्रान्ते स कृत्वा दुष्करं तपः। कालधर्मपरीतात्मा निधनं समुपागतः ॥ ६ ॥ निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्मणा।

सन्तापमगमत्तीव्रं पुत्रशोकपरायणः ॥ ७ ॥ अथ कृत्वोपहार्य्याणि चतुर्दश्यां महामतिः । तमेव गणयञ्छोकं विरात्रे प्रत्यबुध्यत ॥८॥ तस्यासीत् प्रतिबुद्धस्य शोकेन व्यथितात्मनः । मनः संहृत्य विषये बुद्धिविस्तारगामिनी ॥ ९ ॥ ततः सञ्चिन्तयामास श्राद्धकल्पं समाहितः । यानि तस्यैव भोज्यानि मूलानि च फलानि च ॥१०॥ उक्तानि यानि चान्नानि यानि चेष्टानि तस्य ह । तानि सर्वाणि मनसा विनिश्चित्य तपोधन ॥ ११ ॥ अमावस्यां महाप्राज्ञो विप्रानानाय्य पूजितान् । दक्षिणा वर्त्तिकाः सर्वा वृषीः स्वयमथाकरोत् ॥ १२ ॥ सप्त विप्रांस्ततोऽभ्येत्य युगपत् समुपानयत् । ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः ॥ १३ ॥ दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः । पादयोश्चैव विप्राणां ये तन्नमुपभुञ्जते ॥ १४ ॥ कृत्वा च दक्षिणाग्रान् वै दर्भान् स प्रयतः शुचिः । प्रददौ श्रीमतः पिण्डान् नामगोत्रमुदाहरन् ॥ १५ ॥ तत् कृत्वा स मुनिश्रेष्ठो धर्मसङ्करमात्मनः । पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् ॥ १६ ॥ अकृतं मुनिभिः पूर्वं किं मयेदमनुष्ठितं । कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति ॥ १७ ॥ ततः स चिन्तयामास वंशकर्त्तारमात्मनः । ध्यातमात्रस्तथा रात्रिराजगाम तपोधन ॥ १८ ॥ अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्षितं । भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः ॥ १९ ॥ निमे सङ्कल्पितस्तेऽयं पितृयज्ञस्तपोधन । मा ते भूद्भीः पूर्वदृष्टो धर्मोऽयं ब्रह्मणा स्वयं ॥ २० ॥ सोऽयं स्वयम्भुविहितो धर्मः सङ्कल्पितस्त्वया । ऋते स्वयम्भुवः कोऽन्यः श्राद्धेऽयं विधिमाहरेत् ॥ २१ ॥ अथाख्यास्यामि ते पुत्र श्राद्धेऽयं विधिमुत्तमं । स्वयम्भुविहितं पुत्र तत् कुरुष्व निबोध मे ॥ २२ ॥ कृत्वाग्नौ करणं पूर्वं मन्त्रपूर्वं तपोधन । ततोऽग्नये च सोमाय वरुणाय च नित्यशः ॥ २३ ॥ विश्वेदेवाश्च ये नित्यं पितृभिः सह गोचराः ।

तेभ्यः सङ्कल्पिता भागाः स्वयमेव स्वयम्भुवा ॥ २४ ॥ स्तोतव्या चेह पृथिवी निवापस्येह धारिणी । वैष्णवी काश्यपी चेति तथैवेहाक्षयेति च ॥ २५ ॥ उदकानयने चैव स्तोतव्यो वरुणो विभुः । ततोऽग्निश्चैव सोमश्च आप्याय्या विह्तेऽनघ ॥ २६ ॥ देवास्तु पितरो नाम निर्म्मिता ये स्वयम्भुवा । उष्णपा ये महा-भागास्तेषां भागः प्रकल्पितः ॥ २७ ॥ ते श्राद्धेनार्च्च्यमाना वै विमुच्यन्ते हि किल्विषात् । सप्तकः पितृवंशस्तु पूर्व्वदृष्टः स्वयम्भुवा ॥ २८ ॥ विश्वे चाग्निमुखा देवाः सङ्ख्याताः पूर्व्वमेव ते । तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम् ॥ २८ ॥ बलं धृति-र्व्विपाप्मा च पुण्यकृत् पावनस्तथा । पार्ष्णिक्षेमासमूहश्च दिव्य-सानुस्तथैव च ॥ ३० ॥ विवस्वान् वीर्य्यवान् ह्रीमान् कीर्त्तिमान् कृत एव च । जितात्मा मुनिवीर्य्यश्च दीप्तरोमा भयङ्करः ॥ ३१ ॥ अनुकर्म्मा प्रतीतश्च प्रदाताथांशुमांस्तथा । शैलाभः परमः क्रोधी धीरोष्णी भूपतिस्तथा ॥ ३२ ॥ स्रजो वज्री वरी चैव विश्वेदेवाः सनातनाः । विद्युद्वर्च्चाः सोमवर्च्चाः सूर्य्यश्रीश्चेति नामतः ॥ ३३ ॥ सोमपः सूर्य्यसावित्रो दत्तात्मा पुण्डरीयकः । उष्णीनाभो नभो-दश्च विश्वायुर्दीप्तिरेव च ॥ ३४ ॥ चमूहरः सुरेशश्च व्योमारिः शङ्करो भवः । ईशः कर्त्ता कृतिर्द्दक्षो भुवनो दिव्यकर्म्मकृत् ॥ ३५॥ गणितः पञ्चवीर्य्यश्च आदित्यो रश्मिवांस्तथा । सप्तकृत् सोम-वर्च्चाश्च विश्वकृत् कविरेव च ॥ ३६ ॥ अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च । कीर्त्तितास्ते महाभागाः कालस्य गतिगोचराः ॥ ३७ ॥ अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा । हिङ्गु-द्रव्येषु शाकेषु पलाण्डुं लशुनं तथा ॥ ३८ ॥ शोभाञ्जनः कोवि-दारस्तथा गृञ्जनकादयः । कुष्माण्डजात्यलावुञ्च कृष्णं लवणमेव च ॥ ३९ ॥ ग्राम्यवाराहमांसञ्च यच्चैवाप्रोक्षितं भवेत् । कृष्णा-जाजीविड्श्चैव शीतपाकी तथैव च ॥ ४० ॥ अङ्कुराद्यास्तथा

वर्ज्जया इह शृङ्गाटकानि च। वर्ज्जयेल्लवणं सर्वं तथा जम्बुफलानि च ॥ ४१ ॥ अवक्षुत विरुदितं तथा श्राद्धेषु वर्ज्जयेत्। निवापे हव्यकव्ये वा गर्हितञ्च सुदर्शनम् ॥ ४२ ॥ पितरश्च हि देवाश्च नाभिनन्दन्ति तद्धविः। चाण्डालश्वपचौ वर्ज्ज्यौ निवापे समुपस्थिते ॥ ४३ ॥ काष ायवासाः कुष्ठी वा पतितो ब्रह्महापि वा। सङ्कीर्णयोनिर्विप्रश्च सम्बन्धी पतितस्य यः। वर्ज्जनीया बुधैरेते निवापे समुपस्थिते ॥ ४४ ॥ इत्येवमुक्ता भगवान् स्ववंशजन्तमृषिं पुरा। पितामहसभां दिव्यां जगामा त्रिस्तपोधनः ॥ ४५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि श्राद्धधर्म्मकथने
एकनवतोऽध्यायः ॥ ९१ ॥

---

भीष्म उवाच। तथा निमौ प्रवृत्ते तु सर्वे एव महर्षयः। पितृयज्ञन्तु कुर्वन्ति विधिदृष्टेन कर्म्मणा ॥ १ ॥ ऋषयो धर्म्मनित्यास्तु कृत्वा निवप नान्युत। तर्पणञ्चाप्यकुर्वन्त तीर्थाम्भोभिर्यतव्रताः ॥ २ ॥ निवापैर्द्दीयमानैश्च चातुर्वर्ण्येन भारत। तर्पिताः पितरो देवास्तत्रान्नं जरयन्ति वै ॥ ३ ॥ अजीर्णेनाभिहन्यन्ते ते देवाः पितृभिः सह। सोममेवाभ्यपद्यन्त तदा ह्यन्नाभिपीड़िताः ॥ ४ ॥ तेऽब्रुवन् सोममासाद्य पितरो जीर्णपीड़िताः। निवापान्नेन पीड्यामः श्रेयो नोऽत्र विधीयताम् ॥ ५ ॥ तान् सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः। स्वयम्भुसदनं यात स वः श्रेयोऽभिधास्यति ॥ ६ ॥ ते सोमवचनाद्देवाः पितृभिः सह भारत। मेरुशृङ्गे समासीनं पितामहमुपागमन् ॥ ७ ॥

पितर ऊचुः। निवापान्नेन भगवन् भृशं पीड्यामहे वयम्। प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ॥ ८ ॥ इति तेषां वचः श्रुत्वा स्वयम्भुरिदमब्रवीत्। एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति ॥ ९ ॥

अग्निरुवाच । सहितास्तात भोच्यामो निवापे समुपस्थिते । जरयिष्यथ चाप्यन्नं मया सार्द्धं न संशयः ॥ १० ॥ एतत् श्रुत्वा तु पितरस्ततस्ते विज्वराभवन् । एतस्मात् कारणाच्चाग्नेः प्राक् त्वावद्दीयते नृप ॥ ११ ॥ निवप्ते चाग्निपूर्व्वं वै निवापे पुरुषर्षभ । न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत ॥ १२ ॥ रक्षांसि चापवर्त्तन्ते स्थिते देवे हुताशने । पूर्व्वं पिण्डं पितुर्दद्यात् ततो दद्यात् पितामहे ॥ १३ ॥ प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः । ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः ॥ १४ ॥ सोमायेति च वक्तव्यं तथा पितृमतेति च । रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या । निवापे नोपतिष्ठेत संग्राह्या नान्यवंशजा ॥ १५ ॥ जलं प्रतरमाणश्च कीर्त्तयेत पितामहान् । नदीमासाद्य कुर्व्वीत पितॄणां पिण्डतर्पणम् ॥ १६ ॥ पूर्व्वं स्ववंशजानान्तु कृत्वाद्भिस्तर्पणं पुनः । सुहृत्सम्बन्धिवर्गाणां ततो दद्यात् जलाञ्जलिम् ॥ १७ ॥ कल्माषगोयुगेनाथ युक्तेन तरतो जलम् । पितरोऽभिलषन्ते वै नावञ्चाप्यधिरोहिताः ॥ १८ ॥ सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः । मासार्द्धे कृष्णपक्षस्य कुर्य्यान्निर्व्वपणानि वै ॥ १९ ॥ पुष्टिरायुस्तथा वीर्य्यं श्रीश्चैव पितृभक्तितः । पितामहः पुलस्त्यश्च वशिष्ठः पुलहस्तथा ॥ २० ॥ अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः । एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः ॥ २१ ॥ एते च पितरो राजन्नेष श्राद्धविधिः परः । प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्म्मणा ॥ २२ ॥ इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम् । व्याख्याता पूर्व्वनिर्द्दिष्टा दानं वक्ष्याम्यतः परम् ॥ २३ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि श्राद्धकल्पे
द्विनवतोऽध्यायः ॥ ९२ ॥

---

युधिष्ठिर उवाच । द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते । अन्नं ब्राह्मणकामाय कथमेतत् पितामह ॥ १ ॥

भीष्म उवाच । अवेदोक्तव्रताश्चैव भुञ्जानाः कामकारणे । वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ २ ॥

युधिष्ठिर उवाच । यदिदं तप इत्याहुरुपवासं पृथग्जनाः । तपः स्यादेतदेवेह तपोऽन्यद्वापि किं भवेत् ॥ ३ ॥

भीष्म उवाच । मासार्द्धमासोपवासाद्यत्तपो मन्यते जनः । आत्मतन्त्रोपघाती यो न तपस्वी न धर्म्मवित् ॥ ४ ॥ त्यागस्य चापि सम्पत्तिः शिष्यते तप उत्तमम् । सदोपवासी च भवेद्ब्रह्मचारी तथैव च ॥ ५ ॥ मुनिश्च स्यात् सदा विप्रो वेदांश्चैव सदा जपेत् । कुटुम्बिको धर्म्मकामः सदास्वप्नश्च मानवः ॥ ६ ॥ अमांसाशी सदा च स्यात् पवित्रञ्च सदा पठेत् । ऋतवादी सदा च स्यात् नियतश्च सदा भवेत् ॥ ७ ॥ विघसाशी सदा च स्यात् सदा चैवातिथिप्रियः । अमृताशी सदा च स्यात् पवित्री च सदा भवेत् ॥ ८ ॥

युधिष्ठिर उवाच । कथं सदोपवासी स्यात् व्रतचारी च पार्थिव । विघसाशी कथञ्च स्यात् कथञ्चैवातिथिप्रियः ॥ ९ ॥

भीष्म उवाच । अन्तरा सायमाशञ्च प्रातराशञ्च यो नरः । सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ १० ॥ भार्य्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव ह । ऋतवादी सदा च स्यात् दानशीलस्तु मानवः ॥ ११ ॥ अभक्षयन् वृथामांसममांसाशी भवत्युत । दानं ददत् पवित्री स्यादस्वप्नश्च दिवास्वपन् ॥ १२ ॥ भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा । अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १३ ॥ अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः । अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १४ ॥ देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च । अवशिष्टानि

यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ १५ ॥ तेषां लोका ह्यपर्य्यन्ताः सदने ब्रह्मणः स्मृताः । उपस्थिता ह्यप्सरसो गन्धर्वैश्च जनाधिप ॥ १६ ॥ देवतातिथिभिः सार्द्धं पितृभिश्चोपभुञ्जते । रमन्ते पुत्र-पौत्रेण तेषां गतिरनुत्तमा ॥ १७ ॥

युधिष्ठिर उवाच । ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च । दातृप्रतिग्रहीत्रोर्वै को विशेषः पितामह ॥ १८ ॥

भीष्म उवाच । साधोर्यः प्रतिगृह्णीयात् तथैवासाधुतो द्विजः । गुणवत्यल्पदोषः स्यात् निर्गुणे तु निमज्जति ॥ १९ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । वृषादर्भेश्च सम्वादं सप्तर्षीणाञ्च भारत ॥ २० ॥ कश्यपोऽत्रिर्वशिष्ठश्च भरद्वाजोऽथ गौतमः । विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ॥ २१ ॥ सर्व्वेषामथ तेषान्तु गण्डाभूत् कर्म्मकारिका ॥ २२ ॥ शूद्रः पशुसखश्चैव भर्त्ता चास्या बभूव ह । ते च सर्व्वे तपस्यन्तः पुरा चेरुर्म्महीमिमाम् ॥ २३ ॥ समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम् । अथाभवदनावृष्टिर्म्महती कुरुनन्दन ॥ २४ ॥ कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः ॥ २५ ॥ कस्मिंश्चिच्च पुरा यज्ञे शैब्येन शिविसूनुना । दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रः पुरा किल ॥२६॥ अस्मिन् काले तु सोऽल्पायुर्दिष्टान्तमगत् प्रभुः । ते तं क्षुधाभिसन्तप्ताः परिवार्य्योपतस्थिरे ॥ २७ ॥ याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः । अपचन्त तदा स्थाल्यां क्षुधार्त्ताः किल भारत ॥ २८ ॥ निरन्ने मर्त्त्यलोकेऽस्मिन् नात्मानन्ते परीप्सवः । कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ॥ २९ ॥ अटमानोऽथ तान्मार्गे पचमानान्महीपतिः । राजा शैब्यो वृषादर्भिः क्लिश्यमानान् ददर्श ह ॥ ३० ॥

वृषादर्भिरुवाच । प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम् । मयि यद्विद्यते वित्तं तत् शृणुध्वं तपोधनाः ॥ ३१ ॥ प्रियो हि

मे ब्राह्मणो याकमानो ददाम्यहं वोऽश्वतरीसहस्रम्। एकैकशः सवृषाः संप्रसूताः सर्वेषां वै शीघ्रगाः श्वेतरोमाः ॥ ३२ ॥ कुलम्भराननडुहः शतं शतान् धूर्य्यान् श्वेतान् सर्वशोऽहं ददामि। प्रष्ठौहीनां पीवराणाञ्च तावदग्र्या गृष्ट्यो धेनवः सुव्रताश्च ॥ ३३ ॥ वरान् ग्रामान् व्रीहिरसं यवांश्च रत्नं चान्यद्दुर्लभं किं ददानि। नास्मिन्नभक्ष्ये भावमेवं कुरुध्वं पुष्ट्यर्थं वः किं प्रयच्छाम्यहं वै ॥ ३४ ॥

ऋषय ऊचुः। राजन् प्रतिग्रहो राज्ञां मध्वास्वादो विषोपमः। तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥ ३५ ॥ क्षेत्रं हि दैवतमिदं ब्राह्मणान् समुपाश्रितम्। अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ ३६ ॥ अह्नापीह तपो जातु ब्राह्मणस्योपजायते। तद्दाव इव निर्द्दह्यात् प्राप्तो राजप्रतिग्रहः ॥ ३७ ॥ कुशलं सह दानेन राजन्नस्तु सदा तव। अर्थिभ्यो दीयतां सर्वमित्युक्त्वान्येन ते ययुः ॥ ३८ ॥ अपक्वमेव तन्मांसमभूत्तेषां महात्मनाम्। अथ हित्वा ययुः सर्वे वनमाहारकाङ्क्षिणः ॥ ३९ ॥ ततः प्रचोदिता राज्ञा वनङ्गत्वास्य मन्त्रिणः। प्रचीयोडुम्बराणि स्म दातुं तेषां प्रचक्रिरे ॥ ४० ॥ उडुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन्। भृत्यास्तेषां ततस्तानि प्रग्राहितुमुपाद्रवन् ॥ ४१ ॥ गुरूणीति विदित्वाथ न ग्राह्याण्यत्रिरब्रवीत्। न स्म हे मन्दविज्ञाना न स्म हे मन्दबुद्धयः ॥ ४२ ॥ हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृमः। इह ह्येतदुपादत्तं प्रेत्य स्यात् कटुकोदयम्। अप्रतिग्राह्यमेवैतत् प्रेत्येह च सुखेप्सुना ॥ ४३ ॥

वशिष्ठ उवाच। शतेन निष्कं गणितं सहस्रेण च संमितम्। तथा बहु प्रतीच्छन् वै पापिष्ठां पतते गतिम् ॥ ४४ ॥

कश्यप उवाच। यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्छमञ्चरेत् ॥ ४५ ॥

भरद्वाज उवाच। उत्पन्नस्य रुरोः शृङ्गं वर्द्धमानस्य वर्द्धते। प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते ॥ ४६ ॥

गौतम उवाच। न तल्लोके द्रव्यमस्ति यल्लोकं प्रतिपूरयेत्। समुद्रकल्पः पुरुषो न कदाचन पूर्य्यते ॥ ४७ ॥

विश्वामित्र उवाच। कामं कामयमानस्य यदा कामः समृध्यते। अथैनमपरः कामस्तृष्णा विध्यति वाणवत् ॥ ४८ ॥

जमदग्निरुवाच। प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम्। तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ ४९ ॥

अरुन्धत्युवाच। धर्म्मार्थं सञ्चयो यो वै द्रव्याणां पक्षसंमतः। तपःसञ्चय एवेह विशिष्टो द्रव्यसञ्चयात् ॥ ५० ॥

गण्डोवाच। उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः। बलीयांसो दुर्ब्बलवद्बिभेम्यहमतः परम् ॥ ५१ ॥

पशुसख उवाच। यद्वै धर्म्मं परं नास्ति ब्राह्मणास्तद्धनं विदुः। विनयार्थं सुविद्वांसमुपासेयं यथातथम् ॥ ५२ ॥

ऋषय ऊचुः। कुशलं सह दानेन तस्मै यस्य द्रमः प्रजाः। फलान्युपधियुक्तानि य एवं न प्रयच्छति ॥ ५३ ॥

भीष्म उवाच। इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि वै। ऋषयो जग्मुरन्यत्र सर्व्व एव धृतव्रताः ॥ ५४ ॥

मन्त्रिण ऊचुः। उपधिं शंसमानास्ते हित्वा तानि फलानि वै। ततोऽन्येनैव गच्छन्ति विदितं तेऽस्तु पार्थिव ॥ ५५ ॥ इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह। तेषां वै प्रतिकर्त्तुञ्च सर्व्वेषामगमद्गृहम् ॥ ५६ ॥ स गत्वा हवनीयेऽग्नौ तीव्रं नियममास्थितः। जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृपः ॥ ५७ ॥ तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयङ्करी। तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ॥ ५८ ॥ सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता। वृषादर्भिं नरपतिं किं करोमीति चाब्रवीत् ॥ ५९

वृषादर्भिरुवाच। ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च। दासीभर्त्तुश्च दास्याश्च मनसा नाम धारय ॥ ६० ॥ ज्ञात्वा नामानि चैवैषां सर्वानेतान् विनाशय। विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव ॥ ६१ ॥ सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी। जगाम तद्वनं यत्र विचेरुस्ते महर्षयः ॥ ६२ ॥

भीष्म उवाच। अथात्रिप्रमुखा राजन् वने तस्मिन् महर्षयः। व्यचरन् भक्षयन्तो वै मूलानि च फलानि च ॥ ६३ ॥ अथापश्यन् सुपीनांसपाणिपादमुखोदरम्। परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुना सह ॥ ६४ ॥ अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभम्। भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ ६५ ॥

वशिष्ठ उवाच। नैतस्येह यथास्माकमग्निहोत्रमनिर्हुतम्। सायं प्रातश्च होतव्यं तेन पीवाञ्छुना सह ॥ ६६ ॥

अत्रिरुवाच। नैतस्येह यथास्माकं क्षुधा वीर्य्यं समाहृतम्। कृच्छ्राधीतं प्रणष्टञ्च तेन पीवाञ्छुना सह ॥ ६७ ॥

विश्वामित्र उवाच। नैतस्येह यथास्माकं शश्वच्छास्त्रं जरद्गवः। अलसः क्षुत्परो मूर्खस्तेन पीवाञ्छुना सह ॥ ६८ ॥

जमदग्निरुवाच। नैतस्येह यथास्माकं भक्तमिन्धनमेव च। संचिन्त्यं वार्षिकं किञ्चित्तेन पीवाञ्छुना सह ॥ ६९ ॥

कश्यप उवाच। नैतस्येह यथास्माकं चत्वारश्च सहोदराः। देहि देहीति भिक्षन्ति तेन पीवाञ्छुना सह ॥ ७० ॥

भरद्वाज उवाच। नैतस्येह यथास्माकं ब्रह्मबन्धोरचेतसः। शोको भार्य्यापवादेन तेन पीवाञ्छुना सह ॥ ७१ ॥

गौतम उवाच। नैतस्येह यथास्माकं त्रिकौशेयञ्च राङ्कवम्। एकैकं वै त्रिवर्षीयं तेन पीवाञ्छुना सह ॥ ७२ ॥

भीष्म उवाच। अथ दृष्ट्वा परिव्राट् स तान् महर्षीञ्छुना सह। अभिगम्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ ७३ ॥ परि-

चर्य्यां वने तान्तु क्षुत्प्रतीघातकारिकाम् । अन्योऽन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ ७४ ॥ एकनिश्चयकार्य्याश्च व्यचरन्त वनानि ते । आददानाः समुद्धृत्य मूलानि च फलानि च ॥ ७५ ॥ कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम् । शुचिवारिप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥ ७६ ॥ बालादित्यवपुःप्रख्यैः पुष्करैरुपशोभिताम् । वैदूर्य्यवर्णसदृशैः पद्मपत्रैरथावृताम् ॥ ७७ ॥ नानाविधैश्च विहगैर्जलप्रकरसेविभिः । एकद्वारामनादेयां सूपतीर्थामकर्द्दमाम् ॥ ७८ ॥ वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना । यातुधानी तु विख्याता पद्मिनीं तामरक्षत ॥ ७९ ॥ पशुसखसहायास्तु विसार्थं ते महर्षयः । पद्मिनीमभिजग्मुस्ते सर्व्वे कृत्याभिरक्षिताम् ॥ ८० ॥ ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम् । स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः ॥ ८१ ॥ एका तिष्ठसि का च त्वं तस्यार्थे किं प्रयोजनम् । पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किञ्चिकीर्षसि ॥ ८२ ॥

यातुधान्युवाच । यास्मि सास्म्यनुयोगो मे न कर्त्तव्यः कथञ्चन । आरक्षणीं मां पद्मिन्या वित्त सर्व्वे तपोधनाः ॥ ८३ ॥

ऋषय ऊचुः । सर्व्व एव क्षुधार्त्ताः स्म न चान्यत् किञ्चिदस्ति नः । भवत्याः संमते सर्व्वे गृह्णीयाम विसान्युत ॥ ८४ ॥

यातुधान्युवाच । समयेन विसानीतो गृह्णीध्वं कामकारतः । एकैको नाम मे प्रोक्त्वा ततो गृह्णीत मा चिरम् ॥ ८५ ॥

भीष्म उवाच । विज्ञाय यातुधानीं तां कृत्यामृषिवधैषिणीम् । अत्रिः क्षुधापरीतात्मा ततो वचनमब्रवीत् ॥ ८६ ॥

अत्रिरुवाच । अरात्रिरत्रिः सा रात्रिर्यां नाधीते त्रिरद्य वै । अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने ॥ ८७ ॥

यातुधान्युवाच । यथोदाहृतमेतत्ते मयि नाम महाद्युते । दुर्द्धार्य्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ८८ ॥

वशिष्ठ उवाच। वशिष्ठोऽस्मि वरिष्ठोऽस्मि वशे वासगृहेष्वपि।
वशिष्ठत्वाच्च वासाच्च वशिष्ठ इति विद्धि माम् ॥ ८९ ॥

यातुधान्युवाच। नाम नैरुक्तमेतत्ते दुःखव्याभ्याषिताक्षरम्।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९० ॥

कश्यप उवाच। कुलं कुलञ्च कुपपः कुपपः कश्यपो द्विजः।
काश्यः काशनिकाशत्वादेतन्मे नाम धारय ॥ ९१ ॥

यातुधान्युवाच। यथोदाहृतमेतत्ते मयि नाम महाद्युते।
दुर्द्धार्य्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ९२ ॥

भरद्वाज उवाच। भरेऽसुतान् भरेऽशिष्यान् भरे देवान् भरे द्विजान्। भरे भार्य्यामनव्याजो भरद्वाजोऽस्मि शोभने ॥९३॥

यातुधान्युवाच। नाम नैरुक्तमेतत्ते दुःखव्याभ्याषिताक्षरम्।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९४ ॥

गोतम उवाच। गोदमोऽहमतोऽधूमोऽदमस्ते समदर्शनात्। गोभिस्तमो समध्वस्तं जातमात्रस्य देहतः। विद्धि मां गोतमं कृत्ये यातुधानि निबोध माम् ॥ ९५ ॥

यातुधान्युवाच। यथोदाहृतमेतत्ते मयि नाम महामुने।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९६ ॥

विश्वामित्र उवाच। विश्वे देवाश्च मे मित्रं मित्रमस्मि गवान्तथा। विश्वामित्रमिति ख्यातं यातुधानि निबोध माम् ॥ ९७ ॥

यातुधान्युवाच। नाम नैरुक्तमेतत्ते दुःखव्याभ्याषिताक्षरम्।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९८ ॥

जमदग्निरुवाच। जाजमद्यजजानेऽहं जिजाहीह जिजायिषि। जमदग्निरिति ख्यातमतो मां विद्धि शोभने ॥ ९९ ॥

यातुधान्युवाच। यथोदाहृतमेतत्ते मयि नाम महामुने।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ १०० ॥

अरुन्धत्युवाच । धरान्धरित्रीं वसुधां भर्त्तुस्तिष्ठाम्यनन्तरम् ।
मनोऽनुरुन्धती भर्त्तुरिति मां विद्यरुन्धतीम् ॥ १०१ ॥

यातुधान्युवाच । नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ १०२ ॥

गण्डोवाच । वक्त्रैकदेशे गण्डेति धातुमेतं प्रचक्षते ।
तेनोन्नतेन गण्डेति विद्धि मानलसम्भवे ॥ १०३ ॥

यातुधान्युवाच । नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ १०४ ॥

पशुसख उवाच । पशून् रञ्जामि दृष्ट्वाऽहं पशूनाञ्च सखा सदा ।
गौणं पशुसखेत्येवं विद्धि मामग्निसम्भवे ॥ १०५ ॥

यातुधान्युवाच । नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ १०६ ॥

शुनःसख उवाच । एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे ।
शुनःसखसखायं मां यातुधान्युपधारय ॥ १०७ ॥

यातुधान्युवाच । नाम नैरुक्तमेतत्ते वाक्यं सन्दिग्धया गिरा ।
तस्मात् सकृदिदानीं त्वं ब्रूहि तन्नाम ते द्विज ॥ १०८ ॥

शुनःसख उवाच । सकृदुक्तं मया नाम न गृहीतं त्वया यदि ।
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति मा चिरम् ॥ १०९ ॥ सा ब्रह्म-
दण्डकल्पेन तेन मूर्द्ध्नि हता तदा । कृत्या पपात मेदिन्यां भस्मसाच्च
जगाम ह ॥११०॥ शुनःसखा च हत्वा तां यातुधानीं महाबलाम् ।
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ॥१११ ॥ ततस्ते मुनयः सर्वे
पुष्कराणि बिसानि च । यथाकाममुपादाय समुत्तस्थुर्मुदान्विताः
॥११२॥ श्रमेण महता कृत्वा ते बिसानि कलापशः । तीरे निक्षिप्य
पद्मिन्यास्तर्पणञ्चक्रुरम्भसा ॥११३॥ अथोत्थाय जलात्तस्मात् सर्वे ते
समुपागमन् । नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभाः ॥ ११४ ॥

ऋषय ऊचुः । केन क्षुधापरीतानामस्माकं पापकर्म्मणा ।

नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥ ११५ ॥ ते शङ्कमानास्त्वन्योऽन्यं पप्रच्छुर्द्विजसत्तमाः । त ऊचुः समयं सर्वे कुर्म इत्यरिकर्षण ॥ ११६ ॥ त उक्त्वा बाढमित्येवं सर्व एव तदा समम् । क्षुधार्त्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ॥ ११७ ॥

अत्रिरुवाच । स गां स्पृशतु पादेन सूर्य्यञ्च प्रतिमेहतु । अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥ ११८ ॥

वशिष्ठ उवाच । अनध्यायपरो लोके शुनः स परिकर्षतु । परिव्राट् कामवृत्तस्तु बिसस्तैन्यं करोति यः ॥ ११९ ॥ शरणागतं स निहन्तु स्वसुताञ्चोपजीवतु । अर्थान् काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ॥ १२० ॥

कश्यप उवाच । सर्वत्र सर्वं लपतु न्यासलोपं करोतु च । कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ १२१ ॥ वृथा मांसाशनश्चास्तु वृथा दानं करोतु च । यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥ १२२ ॥

भारद्वाज उवाच । नृशंसस्त्यक्तधर्मास्तु स्त्रीषु ज्ञातिषु गोषु च । ब्राह्मणञ्चापि जयतां बिसस्तैन्यं करोति यः ॥ १२३ ॥ उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च । जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ॥ १२४ ॥

जमदग्निरुवाच । पुरीषमुत्सृजत्वप्सु हन्तु गाञ्चैव दुह्यतु । अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥ १२५ ॥ द्वेष्यो भार्य्योपजीवी स्यात् दूरबन्धुश्च वैरवान् । अन्योऽन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ॥ १२६ ॥

गौतम उवाच । अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु । विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ॥ १२७ ॥ उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः । तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ॥ १२८ ॥

विश्वामित्र उवाच । जीवतो वै गुरून् भृत्यान् भरन्त्वस्यापरे जनाः । अगतिर्बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः ॥ १२९॥ अशुचिर्ब्रह्मकूटोऽस्तु ऋद्धया चैवाप्यहङ्कृतः । कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥ १३० ॥ वर्षाचरोऽस्तु भृतको राज्ञश्चास्तु पुरोहितः । अयाज्यस्य भवत्वृत्विक् बिसस्तैन्यं करोति यः ॥ १३१ ॥

अरुन्धत्युवाच । नित्यं परिभवेच्छ्वश्रूं भर्त्तुर्भवतु दुर्म्मनाः । एका स्वादु समश्नातु बिसस्तैन्यं करोति या ॥ १३२ ॥ ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिवाक्षये । अभोग्या वीरसूरस्तु बिसस्तैन्यं करोति या ॥ १३३ ॥

गण्डोवाच । अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु । ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥ १३४ ॥ साधयित्वा स्वयं प्राशेत् दास्ये जीर्य्यतु चैव ह । विकर्म्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥ १३५ ॥

पशुसख उवाच । दास एव प्रजायेत सप्रसूतिरकिञ्चनः । दैवतेष्वनमस्कारी बिसस्तैन्यं करोति यः ॥ १३६ ॥

शुनःसख उवाच । अध्वर्य्यवे दुहितरं वा ददातु च्छन्दोगे वा चरितब्रह्मचर्य्ये । आथर्वणं वेदमधीत्य विप्रः स्नायीत वा यो हरते बिसानि ॥ १३७ ॥

ऋषय ऊचुः । इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः । त्वया कृतं बिसस्तैन्यं सर्व्वेषां नः शुनःसखः ॥ १३८ ॥

शुनःसख उवाच । न्यस्तमद्यं न पश्यद्भिर्यदुक्तं कृतकर्म्मभिः । सत्यमेतन्नमिथ्यैतद्बिसस्तैन्यं कृतं मया ॥ १३९ ॥ मया ह्यन्तर्हितानीह बिसानीमानि पश्यत । परीक्षार्थं भगवतां कृतमेवं मयानघाः ॥ १४० ॥ रक्षणार्थञ्च सर्व्वेषां भवतामहमागतः । यातुधानी ह्यतिक्रूरा कृत्यैषा वो बधैषिणी ॥ १४१ ॥ वृषादर्भिप्रयुक्तैषा

निहता मे तपोधनाः । दुष्टा हिंस्यादियं पापा युष्मान् प्रत्यग्नि-सम्भवा ॥ १४२ ॥ तस्मादभ्यागतो विप्रा वासवं मां निबोधत । अलोभादक्षया लोकाः प्राप्ता वै सार्वकामिकाः । उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥ १४३ ॥

भीष्म उवाच । ततो महर्षयः प्रीतास्तथेत्युक्त्वा पुरन्दरम् । सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिपिष्टपम् ॥ १४४ ॥ एवमेते महात्मानो भोगैर्बहुविधैरपि । क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः ॥ १४५ ॥ नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन् । तस्मात् सर्वास्ववस्थासु नरो लोभं विवर्ज्जयेत् ॥ १४६ ॥ एष धर्म्मः परो राजंस्तस्माल्लोभं विवर्ज्जयेत् । इदं नरः सच्चरितं समवायेषु कीर्त्तयन् ॥ १४७ ॥ अर्थभागी च भवति न च दुर्गाण्यवाप्नुते । प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा । यशोधर्म्मार्थभागी च भवति प्रेत्य मानवः ॥ १४८ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि श्राद्धधर्म्मकथने
एकनवतोऽध्यायः ॥ ९१ ॥

---

भीष्म उवाच । अत्रैवोदाहरन्तीममितिहासं पुरातनम् । यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥ १ ॥ पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम । राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥ २ ॥ ऋषयः समेताः पश्चिमे वै प्रभासे समागता मन्त्रममन्त्रयन्त । चराम सर्वां पृथिवीं पुण्यतीर्थां ततः कामं हन्त गच्छाम सर्वे ॥ ३ ॥ शुक्रोऽङ्गिराश्चैव कविश्च विद्वांस्तथागस्त्यो नारदपर्वतौ च । भृगुर्वशिष्ठः कश्यपो गौतमश्च विश्वामित्रो जमदग्निश्च राजन् ॥ ४ ॥ ऋषिस्तथा गालवोऽथाष्टकश्च भारद्वाजोऽरुन्धती बालखिल्याः । शिबिर्दिलीपो नहुषोऽम्बरीषो

राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥ ५ ॥ जग्मुः पुरस्कृत्य महानुभावं शतक्रतुं वृत्रहनं नरेन्द्राः। तीर्थानि सर्व्वाणि परिभ्रमन्तो माघ्यां ययुः कौशिकीं पुण्यतीर्थाम् ॥ ६ ॥ सर्व्वेषु तीर्थेष्ववधूतपापा जग्मुस्ततो ब्रह्मसरः सुपुण्यम्। देवस्य तीर्थे जलमग्निकल्पा विगाह्य ते भुक्त विसप्रसूनाः ७ ॥॥ केचिद्विसान्यखनंस्तत्र राजन्नन्ये मृणालान्यखनंस्तत्र विप्राः। अथापश्यन् पुष्करं ते ह्रियन्तं ह्रदादगस्त्येन समुद्धृतं तत् ॥ ८ ॥ तानाह सर्व्वानृषिमुख्यानगस्त्यः केनादत्तं पुष्करं मे सुजातम्। युष्मान् शङ्के पुष्करं दीयतां मे न वै भवन्तो हर्त्तुमर्हन्ति पद्मम् ॥ ९ ॥ शृणोमि कालो हिंसते धर्म्मवीर्य्यं सोऽयं प्राप्तो वर्त्तते धर्म्मपीड़ा। पुरा धर्म्मो वर्त्तते नेह यावत्तावद्गच्छामः सुरलोकं चिराय ॥ १० ॥ पुरा वेदान् ब्राह्मणा ग्राममध्ये घुष्टस्वरा वृषलान् श्रावयन्ति। पुरा राजा व्यवहारेण धर्म्मान् पश्यत्यहं परलोकं व्रजामि ॥ ११ ॥ पुरा वरान् प्रत्यवरान् गरीयसो यावन्नरा नावमंस्यन्ति सर्व्वे। तमोत्तरं यावदिदं न वर्त्तते तावत् व्रजामि परलोकं चिराय ॥ १२ ॥ पुरा प्रपश्यामि परेण मर्त्यान् बलीयसान् दुर्व्वलान् भुज्यमानान्। तस्माद्यास्यामि परलोकं चिराय न ह्युत्सहे द्रष्टुमिह जीवलोकम् ॥ १३ ॥ तमाहुरार्त्ता ऋषयो महर्षिं न ते वयं पुष्करं चोरयामः। मिथ्याभिषङ्गो भवता न कार्य्यः शपाम तीक्ष्णैः शपथैर्म्महर्षे॥ १४ ॥ ते निश्चितास्तत्र महर्षयस्तु सम्पश्यन्तो धर्म्ममेतं नरेन्द्र। ततोऽशपन्त शपथान् पर्य्यायेण सहैव ते पार्थिवपुत्रपौत्रैः ॥ १५ ॥

भृगुरुवाच। प्रत्याक्रोशेदिहाक्रुष्टस्ताड़ितः प्रतिताड़येत्। खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥ १६ ॥

वशिष्ठ उवाच। अस्वाध्यायपरो लोके श्वानञ्च परिकर्षतु। पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥ १७ ॥

कश्यप उवाच। सर्वत्र सर्वं पणतु न्यासलोपं करोतु च।
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम्॥ १८॥

गौतम उवाच। जीवत्वहङ्कृतो बुद्ध्या विषमेण समेन सः।
कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम्॥ १९॥

अङ्गिरा उवाच। अशुचिर्ब्रह्मकूटोऽस्तु श्वानञ्च परिकर्षतु।
ब्रह्महानिष्कृतिश्चास्तु यस्ते हरति पुष्करम्॥ २०॥

धुन्धुमार उवाच। अकृतघ्नश्च मित्राणां शूद्रायान्तु प्रजायतु।
एकः सम्पन्नमश्नातु यस्ते हरति पुष्करम्॥ २१॥

दिलीप उवाच। उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः।
तस्य लोकान् स व्रजतु यस्ते हरति पुष्करम्॥ २२॥

पूरुरुवाच। चिकित्सायां प्रवर्त्ततु भार्य्यया चैव पुष्यतु।
श्वशुरात्तस्य वृत्तिः स्याद्यस्ते हरति पुष्करम्॥ २३॥

शुक्र उवाच। वृथामांसं समश्नातु दिवा गच्छतु मैथुनम्।
प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम्॥ २४॥

जमदग्निरुवाच। अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत्।
श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करम्॥ २५॥

शिविरुवाच। अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च।
तपस्विभिर्विरुध्येच्च यस्ते हरति पुष्करम्॥ २६॥

ययातिरुवाच। अनृती व्रती जटी चैव भार्य्यायां स प्रजायतु।
निराकरोतु वेदांश्च यस्ते हरति पुष्करम्॥ २७॥

नहुष उवाच। अतिथिर्गृहसंस्थोऽस्तु कामवृत्तश्च दीक्षितः।
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम्॥ २८॥

अम्बरीष उवाच। नृशंसस्त्यक्तधर्म्मास्तु स्त्रीषु ज्ञातिषु गोषु च।
निहन्तु ब्राह्मणञ्चापि यस्ते हरति पुष्करम्॥ २९॥

नारद उवाच। गृहेऽज्ञानी वहिःशास्त्रं पठतां विस्वरं पदम्।
गरीयसोऽवजानातु यस्ते हरति पुष्करम्॥ ३०॥

नाभाग उवाच । अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु । शुल्केन तु ददत्कन्यां यस्ते हरति पुष्करम् ॥ ३१ ॥

कविरुवाच । पद्भ्यां स गान्ताडयतु सूर्य्यञ्च प्रतिमेहतु । शरणागतं सन्त्यजतु यस्ते हरति पुष्करम् ॥ ३२ ॥

विश्वामित्र उवाच । करोतु भृतकोऽवर्षां राज्ञश्चास्तु पुरोहितः । ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम् ॥ ३३ ॥

पर्वत उवाच । ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु । शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम् ॥ ३४ ॥

भरद्वाज उवाच । सर्व्वपापसमादानं नृशंसे चानृते च यत् । तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥ ३५ ॥

अष्टक उवाच । स राजास्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत् । अधर्म्मेणाभिशास्तूर्व्वीं यस्ते हरति पुष्करम् ॥ ३६ ॥

गालव उवाच । पापिष्ठेभ्यो ह्यनर्घार्हः स नरोऽस्तु स्वपापकृत् । दत्त्वा दानं कीर्त्तयतु यस्ते हरति पुष्करम् ॥ ३७ ॥

अरुन्धत्युवाच । श्वश्रूपवादं वदतु भर्त्तुर्भवतु दुर्म्मनाः । एका स्वादु समश्नातु या ते हरति पुष्करम् ॥ ३८ ॥

बालखिल्या ऊचुः । एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु । धर्म्मज्ञस्त्यक्तधर्म्मास्तु यस्ते हरति पुष्करम् ॥ ३९ ॥

शुनःसख उवाच । अग्निहोत्रमनादृत्य स सुखं स्वपितु द्विजः । परिव्राट् कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ॥ ४० ॥

सुरभिरुवाच । बालजेन निदानेन कांस्यं भवतु दोहनम् । दुह्येत परवत्सेन यस्ते हरति पुष्करम् ॥ ४१ ॥

भीष्म उवाच । ततस्तु तैः शपथैः शप्यमानैर्नानाविधैर्बहुभिः कौरवेन्द्र । सहस्राक्षो देवराट् सम्प्रहृष्टः समीक्ष्य तं कोपनं विप्रमुख्यम् ॥४२॥ अथाब्रवीन्मघवा प्रत्ययं स्वं समाभाष्य तमृषिं जातरोषम् । ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये यत्तन्निबोधेह ममाद्य राजन् ॥४३॥

शक्र उवाच। अध्वर्य्यवे दुहितरं ददातु छन्दोगे वा चरितब्रह्मचर्य्ये। अथर्वणं वेदमधीत्य विप्रः स्नायीत यः पुष्करमाददाति ॥४४॥ सर्वान् वेदानधीयीत पुण्यशीलोऽस्तु धार्म्मिकः। ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ॥ ४५ ॥

अगस्त्य उवाच। आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन। दीयतां पुष्करं मह्यमेष धर्म्मः सनातनः ॥ ४६ ॥

इन्द्र उवाच। न मया भगवन् लोभाद्धृतं पुष्करमद्य वै। धर्म्मांस्तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥ ४७ ॥ धर्म्मश्रुतिसमुत्कर्षो धर्म्मसेतुरनामयः। आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ॥ ४८ ॥ तदिदं गृह्यतां विद्वन् पुष्करं द्विजसत्तम। अतिक्रमं मे भगवन् क्षन्तुमर्हस्यनिन्दित ॥ ४९ ॥ इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम्। जग्राह पुष्करं धीमान् प्रसन्नश्चाभवन्मुनिः ॥ ५० ॥ प्रययुस्ते ततो भूयस्तीर्थानि वनगोचराः। पुण्येषु तीर्थेषु तथा गात्राण्याप्लावयन्त ते ॥ ५१ ॥ आख्यानं य इदं युक्तः पठेत् पर्व्वणि पर्व्वणि। न मूर्खं जनयेत् पुत्रं न भवेच्च निराकृतिः ॥ ५२ ॥ न तमापत् स्पृशेत् काचिद्विज्वरो न जरावहः। विरजाः श्रेयसा युक्तः प्रेत्य स्वर्गमवाप्नुयात् ॥ ५३ ॥ यश्च शास्त्रमधीयीत ऋषिभिः परिपालितम्। स गच्छेद्ब्रह्मणो लोकमव्ययञ्च नरोत्तम ॥ ५४ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि शपथविधिकथने चतुर्नवतोऽध्यायः ॥ ९४ ॥

---

युधिष्ठिर उवाच। यदिदं श्राद्धकृत्येषु दीयते भरतर्षभ। छत्रञ्चोपानहौ चैव केनैतत् संप्रवर्त्तितम् ॥ १ ॥ कथञ्चैतत् समुत्पन्नं किमर्थञ्चैव दीयते। न केवलं श्राद्धकृत्ये पुण्यकेष्वपि दीयते

॥ २ ॥ बह्वष्वपि निमित्तेषु पुण्यमाश्रित्य दीयते । एतद्विस्तरतो ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥

भीष्म उवाच । शृणु राजन्नातपत्रोपानहविस्तरम् । यथैतत् प्रथितं लोके यथा चैतत् प्रवर्त्तितम् ॥ ४ ॥ यथा चाक्षय्यतां प्राप्तं पुण्यताञ्च यथा गतम् । सर्व्वमेतदशेषेण प्रवक्ष्यामि नराधिप ॥ ५ ॥ जमदग्नेश्च संवादं सूर्य्यस्य च महात्मनः । पुरा स भगवान् साक्षाद्धनुषाक्रीडत प्रभो ॥ ६ ॥ सन्धाय सन्धाय शरांश्चिक्षेप किल भार्गवः । तान् सर्व्वान् रेणुका क्षिप्तांस्तस्येषून् दीप्ततेजसः ॥७॥ आनीय सा तदा तस्मै प्रादादसकृदच्युत । अथ तेन स शब्देन ज्यायाश्चैव शरस्य च ॥ ८ ॥ प्रहृष्टः सम्प्रचिक्षेप सा च प्रत्याजहार तान् । ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे । स सायकान् द्विजो मुक्त्वा रेणुकामिदमब्रवीत् ॥१०॥ गच्छानय विशालाक्षि शरानेतान् धनुश्च्युतान् । यावदेतान् पुनः सुभ्रु क्षिपामीति जनाधिप ॥ ११ ॥ सा गच्छन्त्यन्तराच्छायां वृक्षमाश्रित्य भाविनी । तस्थौ तस्या हि सन्तप्तं शिरः पादौ तथैव च ॥ १२ ॥ स्थिता सा तु मुहूर्त्तं वै भर्त्तुः शापभयाच्छुभा । ययावानयितुं भूयः सायकानसितेक्षणा । प्रत्याजगाम च शरांस्तानादाय यशस्विनी ॥ १३ ॥ सा वै खिन्ना सुचार्व्वङ्गी पद्भ्यां दुःखं नियच्छती । उपाजगाम भर्त्तारं भयाद्भर्त्तुः प्रवेपती ॥१४॥ स तामृषिस्तदा क्रुद्धो वाक्यमाह शुभाननाम् । रेणुके किञ्चिरेण त्वमागतेति पुनः पुनः ॥ १५ ॥

रेणुकोवाच । शिरस्तावत् प्रदीप्तं मे पादौ चैव तपोधन । सूर्य्यतेजो निरुद्धाहं वृक्षच्छायां समाश्रिता ॥ १६ ॥ एतस्मात् कारणाद्ब्रह्मंश्चिरायैतत् कृतं मया । एतत् श्रुत्वा मम विभो मा क्रुद्धस्त्वं तपोधन ॥ १७ ॥

जमदग्निरुवाच । अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम् । शरैर्निपातयिष्यामि सूर्य्यमस्त्राग्नितेजसा ॥ १८ ॥

भीष्म उवाच। स विष्फार्य्य धनुर्द्दिव्यं गृहीत्वा च शरान् बहून्। अतिष्ठत् सूर्य्यमभितो यतो याति ततो मुखः ॥ १९ ॥ अथ तं प्रेक्ष्य सन्नद्धं सूर्य्योऽभ्येत्य तथाब्रवीत्। द्विजरूपेण कौन्तेय किन्ते सूर्य्योऽपराध्यते ॥ २० ॥ आदत्ते रश्मिभिः सूर्य्यो दिवि तिष्ठंस्ततस्ततः। रसं स तं वै वर्षासु प्रवर्षति दिवाकरः ॥ २१ ॥ ततोऽन्नं जायते विप्र मनुष्याणां सुखावहम्। अन्नं प्राणा इति यथा वेदेषु परिपठ्यते ॥ २२ ॥ अथाभ्रेषु निगूढ़श्च रश्मिभिः परिवारितः। सप्तद्वीपानिमान् ब्रह्मन् वर्षेणाभिप्रवर्षति ॥ २३ ॥ ततस्तदौषधीनाञ्च वीरुधां पुष्पपत्रजम्। सर्वं वर्षाभिनिर्वृत्तमन्नं सम्भवति प्रभो ॥ २४ ॥ जातकर्माणि सर्वाणि व्रतोपनयनानि च। गोदानानि विवाहाश्च तथा यज्ञसमृद्धयः ॥ २५ ॥ शास्त्राणि दानानि तथा संयोगा वित्तसञ्चयाः। अन्नतः संप्रवर्त्तन्ते यथा त्वं वेत्थ भार्गव ॥ २६ ॥ रमणीयानि यावन्ति यावदारम्भिकाणि च। सर्वमन्नात् प्रभवति विदितं कीर्त्तयामि ते ॥ २७ ॥ सर्वं हि वेत्थ विप्र त्वं यदेतत् कीर्त्तितं मया। प्रसादये त्वां विप्रर्षे किन्ते सूर्य्यं निपात्य वै ॥ २८ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने छत्रोपानहोत्पत्तौ पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

युधिष्ठिर उवाच। एवं प्रयाचति तदा भास्करे मुनिसत्तमः। जमदग्निर्महातेजाः किं कार्य्यं प्रत्यपद्यत ॥ १ ॥

भीष्म उवाच। स तथा याचमानस्य मुनिरग्निसमप्रभः। जमदग्निः शमं नैव जगाम कुरुनन्दन ॥ २ ॥ ततः सूर्य्यो मधुरया वाचा तमिदमब्रवीत्। कृताञ्जलिर्विप्ररूपी प्रणम्यैनं विशाम्पते ॥ ३ ॥ चलं निमित्तं विप्रर्षे सदा सूर्य्यस्य गच्छतः। कथञ्च त्वं वेत्स्यसि त्वं सदा यान्तं दिवाकरम् ॥ ४ ॥

जमदग्निरुवाच। स्थिरश्चापि चलश्चापि जाने त्वां ज्ञान-
चक्षुषा। अवश्यं विनयाधानं कार्य्यमद्य मया तव ॥ ५ ॥ मध्याह्ने
वै निमेषार्द्धं तिष्ठसि त्वं दिवाकर। तत्र वेत्स्यामि सूर्य्य त्वां न
मेऽत्रास्ति विचारणा ॥ ६ ॥

सूर्य्य उवाच। असंशयं मां विप्रर्षे वेत्स्यसे धन्विनां वर।
अपकारिणं मां विद्धि भगवन् शरणागतम् ॥ ७ ॥

भीष्म उवाच। ततः प्रहस्य भगवान् जमदग्निरुवाच तम्।
न भीः सूर्य्य त्वया कार्य्या प्रणिपातगतो ह्यसि ॥ ८ ॥ ब्राह्मणे-
ष्वार्जवं यच्च स्थैर्य्यञ्च धरणीतले। सौम्यताञ्चैव सोमस्य गाम्भीर्य्यं
वरुनस्य च ॥ ९ ॥ दीप्तिमग्नेः प्रभां मेरोः प्रतापं तपनस्य च।
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम् ॥ १० ॥ भवेत् स गुरु-
तल्पी च ब्रह्महा च स वै भवेत्। सुरापानं स कुर्य्याच्च यो हन्या-
च्छरणागतम् ॥ ११ ॥ एतस्य त्वपनीतस्य समाधिन्तात चिन्तय।
यथासुखगमः पन्था भवेत्त्वद्रश्मिभावितः ॥ १२ ॥

भीष्म उवाच। एतावदुक्त्वा स तदा तूष्णीमासीद्भृगूत्तमः।
अथ सूर्य्योऽददत्तस्मै छत्रोपानहमाशु वै ॥ १३ ॥

सूर्य्य उवाच। महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम्।
प्रतिगृह्णीष्व पद्भ्याञ्च त्राणार्थं चर्म्मपादुके ॥१४॥ अद्यप्रभृति चैवेह
लोके सम्प्रचरिष्यति। पुण्यकेषु च सर्व्वेषु परमक्षय्यमेव च ॥ १५ ॥

भीष्म उवाच। छत्रोपानहमेतत्तु सूर्य्येणैतत् प्रवर्त्तितम्।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥ १६ ॥ तस्मात् प्रयच्छ
विप्रेषु छत्रोपानहमुत्तमम्। धर्म्मस्तेषु महान् भावी न मेऽत्रास्ति
विचारणा ॥ १७ ॥ छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥ १८ ॥ स शक्रलोके वसति
पूज्यमानो द्विजातिभिः। अप्सरोभिश्च सततं देवैश्च भरतर्षभ
॥ १९ ॥ दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ। स्नातकाय

महाबाहो संश्रिताय द्विजातये ॥ २० ॥ सोऽपि लोकानवाप्नोति दैवतैरपि पूजितान्। गोलोके स मुदा युक्तो वसति प्रेत्य भारत ॥ २१ ॥ एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्त्तितम्। छत्रोपानह्दानस्य फलं भरतसत्तम ॥ २२ ॥

इत्यनुशासनपर्वणि अनुशासनिकेपर्वणि दानधर्मकथने छत्रोपानह्दानप्रशंसायां षराणवतोऽध्यायः ॥ ९६ ॥

---

युधिष्ठिर उवाच। गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ। ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव ॥ १ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि पुरावृत्तं जनाधिप। वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥२॥ संस्तूय पृथिवीं देवीं वासुदेवः प्रतापवान्। पप्रच्छ भरतश्रेष्ठ मां त्वं यत् पृच्छसेऽद्य वै ॥३॥

वासुदेव उवाच। गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा। किमवश्यं धरे कार्य्यं किं वा कृत्वा कृतं भवेत् ॥ ४ ॥

पृथिव्युवाच। ऋषयः पितरो देवा मनुष्याश्चैव माधव। इज्याश्चैवार्च्चनीयाश्च तथा चैवं निबोध मे ॥ ५ ॥ सदा यज्ञेन देवाः स्युः सदातिथ्येन मानुषाः। छन्दतश्च यथा नित्यमर्हान् युञ्जीत नित्यशः ॥ ६ ॥ तेन ह्यृषिगणाः प्रीता भवन्ति मधुसूदन। नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म्म च ॥ ७॥ कुर्य्यात्तथैव देवा वै प्रीयन्ते मधुसूदन। कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥ ८ ॥ पयोमूलफलैर्वापि पितॄणां प्रीतिमावहन्। सिद्धान्नाद्वैश्वदेवं वै कुर्य्यादग्नौ यथाविधि ॥ ९ ॥ अग्नीषोमं वैश्वदेवं धान्वन्तर्य्यमनन्तरम्। प्रजानां पतये चैव पृथक् होमो विधियते ॥ १० ॥ तथैव चानुपूर्व्येण बलिकर्म्म प्रयोजयेत्। दक्षिणायां यमायेति प्रतीच्यां वरुणाय च ॥ ११ ॥ सोमाय

ष्याप्युदीच्यां वै वास्तुमध्ये प्रजापतेः। धन्वन्तरे प्रागुदीच्यां प्राच्यां शक्राय माधव ॥ १२ ॥ मनुष्येभ्य इति प्राहुर्बलिं द्वारि गृहस्य वै। मरुद्भ्यो दैवतेभ्यश्च बलिमन्तर्गृहे हरेत् ॥ १३ ॥ तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत्। निशाचरेभ्यो भूतेभ्यो बलिं नक्तं तथा हरेत् ॥ १४ ॥ एवं कृत्वा बलिं सम्यक् दद्याद्भिक्षां द्विजातये। अलाभे ब्राह्मणस्याग्नावग्रमुद्धृत्य निक्षिपेत् ॥ १५ ॥ यदा श्राद्धं पितृभ्योऽपि दातुमिच्छेत मानवः। तदा पश्चात् प्रकुर्व्वीत निवृत्ते श्राद्धकर्म्मणि ॥ १६ ॥ पितॄन् सन्तर्पयित्वा तु बलिं कुर्य्याद्विधानतः। वैश्वदेवं ततः कुर्य्यात् पश्चाद्ब्राह्मणवाचनम् ॥ १७ ॥ ततोऽन्नेन विशेषेण भोजयेदतिथीनपि। अर्च्चापूर्वं महाराज ततः प्रीणाति मानवान् ॥ १८ ॥ अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते। आचार्य्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः ॥ १९ ॥ इदमस्ति गृहे मह्यमिति नित्यं निवेदयेत्। ते यद्वदेयुस्तत्कुर्य्यादिति धर्म्मो विधीयते ॥ २० ॥ गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत्। राजर्त्विजं स्नातकञ्च गुरुं श्वशुरमेव च ॥ २१ ॥ अर्च्चयेन्मधुपर्केण परिसंवत्सरोषितान्। श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ २२ ॥ वैश्वदेवं हि नामैतत् सायम्प्रातर्विधीयते। एतांस्तु धर्म्मान् गार्हस्थ्यान् यः कुर्य्यादनसूयकः ॥ २३ ॥ स इहर्षिवरान् प्राप्य प्रेत्य नाके महीयते ॥ २४ ॥

भीष्म उवाच। इति भूमेर्वचः श्रुत्वा वासुदेवः प्रतापवान्। तथा चकार सततं त्वमप्येवं समाचर ॥ २५ ॥ एतद्गृहस्थधर्म्मन्तु चेष्टमानो जनाधिप। इह लोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ २६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने सप्तनवतोऽध्यायः ॥ ९७ ॥

---

युधिष्ठिर उवाच। आलोकदानं नामैतत् कीदृशं भरतर्षभ। कथमेतत् समुत्पन्नं फलं वा तद्ब्रवीहि मे ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। मनोः प्रजापतेर्वादं सुवर्णस्य च भारत ॥ २ ॥ तपस्वी कश्चिदभवत् सुवर्णो नाम भारत। वर्णतो हेमवर्णः स सुवर्ण इति पप्रथे ॥ ३ ॥ कुलशीलगुणोपेतः स्वाध्याये च परङ्गतः। बहून् सुवंशप्रभवान् समतीतः स्वकैर्गुणैः ॥ ४ ॥ स कदाचिन्मनुं विप्रो ददर्शोपससर्प च। कुशलप्रश्नमन्योन्यं तौ चोभौ तत्र चक्रतुः ॥ ५ ॥ ततस्तौ सत्यसङ्कल्पौ मेरौ काञ्चनपर्वते। रमणीये शिलापृष्ठे सहितौ संन्यषीदतम् ॥ ६ ॥ तत्र तौ कथयन्तौ स्तां कथा नाना-विधाश्रयाः। ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनाम् ॥ ७ ॥ सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायम्भुवं प्रति। हितार्थं सर्वभूतानां प्रश्नं मेवक्तुमर्हसि ॥ ८ ॥ सुमनोभिर्यदिज्यन्ते दैवतानि प्रजेश्वर। किमेतत् कथमुत्पन्नं फलयोगञ्च शंस मे ॥ ९ ॥

मनुरुवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। शुक्रस्य च बलेश्चैव संवादं वै महात्मनोः ॥ १० ॥ बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः। समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ॥ ११ ॥ तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः। निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः ॥ १२ ॥ कथेयमभवत्तत्र त्वया या परिकीर्त्तिता। सुमनोधूपदीपानां सम्प्रदाने फलं प्रति। ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम् ॥ १३ ॥

बलिरुवाच। सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम। प्रदानस्य द्विजश्रेष्ठ तद्भवान् वक्तुमर्हति ॥ १४ ॥

शुक्र उवाच। तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम्। एतस्मिन्नन्तरे चैव वीरुधौषध्य एव च ॥ १५ ॥ सोमस्यात्मा च बहुधा सम्भूतः पृथिवीतले। अमृतञ्च विषञ्चैव ये चान्ये तुल्य-

जातयः ॥ १६ ॥ अमृतं मनसः प्रीतिं सद्यस्तुष्टिं ददाति च । मनो
ग्लपयतेतीव्रं विषं गन्धेन सर्व्वशः ॥ १७ ॥ अमृतं मङ्गलं विद्धि
महा द्विषममङ्गलम् । ओषध्यो ह्यमृतं सर्व्वा विषन्तेजोग्निसम्भवम्
॥ १८ ॥ मनो ह्लादयते यस्माच्छ्रियञ्चापि ददाति च । तस्मात्
सुमनसः प्रोक्ता नरैः सुकृतकर्म्मभिः ॥ १९ ॥ देवताभ्यः सुमनसो
यो ददाति नरः शुचिः । तस्य तुष्यन्ति वै देवास्तुष्टा पुष्टं ददत्यपि
॥ २० ॥ यं यमुद्दिश्य दीयेरन् देवं सुमनसः प्रभो । मङ्गलार्थं स
तेनास्य प्रीतो भवति दैत्यप ॥ २१ ॥ उग्रयास्तूग्राश्च सौम्याश्च तेज-
स्विन्यश्च ताः पृथक् । ओषध्यो बहुवीर्य्या हि बहुरूपास्तथैव च
॥ २२ ॥ यज्ञियानाञ्च वृक्षाणामयज्ञीयान्निबोध मे । आसुराणि
च माल्यानि दैवतेभ्यो हितानि च ॥ २३ ॥ रक्षसामुरगाणाञ्च
यक्षाणाञ्च तथा प्रियाः । मनुष्याणां पितॄणाञ्च कान्तायास्त्वनु-
पूर्व्वशः ॥ २४ ॥ वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्व्वताश्रयाः ।
अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः ॥ २५ ॥ द्विविधो हि
स्मृतो गन्ध इष्टोऽनिष्टश्च पुष्पजः । इष्टगन्धानि देवानां पुष्पाणीति
विभावय ॥ २६ ॥ अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः ।
तेषां पुष्पाणि देवानामिष्टानि सततं प्रभो ॥ २७ ॥ जलजानि
च माल्यानि पद्मादीनि च यानि वै । गन्धर्व्वनागयक्षेभ्यस्तानि दद्या-
द्विचक्षणः ॥ २८ ॥ ओषध्यो रक्तपुष्पाश्च कटुकाः कण्टकान्विताः ।
शत्रूणामभिचारार्थमथर्व्वसु निदर्शिताः ॥ २९ ॥ तीक्ष्णवीर्य्यास्तु
भूतानां दुरालभ्याः सकण्टकाः । रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवो-
पहारयेत् ॥ ३० ॥ मनोहृदयनन्दिन्यो विमर्द्दे मधुराश्च याः ।
चारुरूपाः सुमनसो मनुष्याणां स्मृता विभो ॥ ३१ ॥ न तु श्मशान-
सम्भूता देवतायतनोद्भवाः । सन्नयेत् पुष्टियुक्तेषु विवाहेषु रहःसु
च ॥ ३२ ॥ गिरिसानुरुहाः सौम्याः देवानामुपपादयेत् ।
प्रोक्षिताऽभ्युक्षिताः सौम्या यथायोग्यं यथास्मृति ॥ ३३ ॥ गन्धेन

देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः। नागाः समुपभोगेन त्रिभि-
रेतैस्तु मानुषाः॥ ३४॥ सद्य प्रीणाति देवान् वै ते प्रीता भाव-
यन्त्युत। सङ्कल्पसिद्धा मर्त्यानामीप्सितैश्च मनोरमैः॥ ३५॥
प्रीताः प्रीणन्ति सततं मानिता मानयन्ति च। अवज्ञाता-
ऽवधूताश्च निर्द्दहन्त्यधमान्नरान्॥ ३६॥ अत ऊर्द्ध्वं प्रवक्ष्यामि
धूपदानविधेः फलम्। धूपांश्च विविधान् साधूनसाधूंश्च निबोध
मे॥ ३७॥ निर्य्यासाः सारिणश्चैव कृत्रिमाश्चैव ते त्रयः। इष्टा-
निष्टो भवेद्गन्धस्तन्मे विस्तरशः शृणु॥ ३८॥ निर्य्यासाः सल्लकी-
वर्ज्जा देवानां दयितास्तु ते। गुग्गुलुः प्रवरस्तेषां सर्व्वेषामिति
निश्चयः॥ ३९॥ अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम्।
दैत्यानां सल्लकीयश्च काङ्क्षितो यश्च तद्विधः॥ ४०॥ अथ सर्ज्जर-
सादीनां गन्धैः पार्थिव दारवैः। फाणिता रससंयुक्तैर्म्मनुष्याणां
विधीयते॥ ४१॥ देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः।
येऽन्ये वै हारिकास्तत्र मानुषाणामिति स्मृताः॥ ४२॥ य एवोक्ताः
सुमनसां प्रदाने गुणहेतवः। धूपेष्वपि परिज्ञेयास्त एव प्रीति-
वर्द्धनाः॥ ४३॥ दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम्। यथा
येन यदा चैव प्रदेया यादृशाश्च ते॥ ४४॥ ज्योतिस्तेजः प्रकाशं
वाप्यूर्द्ध्वगञ्चापि वर्ण्यते। प्रदानं तेजसां तस्मात्तेजो वर्द्धयते नृणाम्
॥ ४५॥ अन्धन्तमस्तमिस्रञ्च दक्षिणायनमेव च। उत्तरायण-
मेतस्माज्ज्योतिर्द्दानं प्रशस्यते॥ ४६॥ यस्मादूर्द्ध्वगमेतत्तु तमस-
श्चैव भेषजम्। तस्मादूर्द्ध्वगतेर्द्दाता भवेदत्रेति निश्चयः॥ ४७॥
देवास्तेजस्विनो यस्मात् प्रभावन्तः प्रकाशकाः। तामसा राक्ष-
साश्चैव तस्माद्दीपः प्रदीयते॥ ४८॥ आलोकदानाच्चक्षुष्मान्
प्रभायुक्तो भवेन्नरः। तान् दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत्
॥ ४९॥ दीपहर्त्ता भवेदन्धस्तमोगतिरसुप्रभः। दीपप्रदः स्वर्ग-
लोके दीपमालेव राजते॥ ५०॥ हविषा प्रथमः कल्पो द्वितीय-

श्चौषधीरसैः । वसामेदोऽस्थिनिर्य्यासैर्न कार्य्यः पुष्टिमिच्छता ॥५१॥
गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे । दीपदाता भवेन्नित्यं य
इच्छेद्भूतिमात्मनः ॥ ५२ ॥ कुलोद्योतो विशुद्धात्मा प्रकाशत्वञ्च
गच्छति । ज्योतिषाञ्चैव सालोक्यं दीपदाता नरः सदा ॥ ५३ ॥
बलिकर्म्मसु वच्यामि गुणान् कर्म्मफलोदयान् । देवयचोरगनृणां
भूतानामथ रचसाम् ॥ ५४ ॥ येषां नाग्रभुजो विप्रा देवतातिथि-
बालकाः । राचसानेव तान् विद्धि निर्व्वशङ्कानमङ्गलान् ॥ ५५ ॥
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम् । शिरसा प्रयतश्चापि
हरेद्बलिमतन्द्रितः ॥ ५६ ॥ गृह्णन्ति देवता नित्यमाशंसन्ति सदा
गृहान् । वाह्याश्चागन्तवो येऽन्ये यचराचसपन्नगाः ॥ ५७ ॥ इतो
दत्तेन जीवन्ति देवताः पितरस्तथा । ते प्रीताः प्रीणयन्त्येन-
मायुषा यशसा धनैः ॥ ५८ ॥ बलयः सह पुष्पैस्तु देवानामुप-
हारयेत् । दधिदुग्धमयाः पुण्याः सुगन्धाः प्रियदर्शनाः ॥ ५९ ॥
कार्य्या रुधिरमांसाढ्या बलयो यचरचसाम् । सुरासवपुरस्कारा
लाजोल्लापिकभूषिताः ॥ ६० ॥ नागानां दयिता नित्यं पद्मोत्पल-
विमिश्रिताः । तिलान् गुडसुसम्पन्नान् भूतानामुपहारयेत् ॥६१॥
अग्रदाताऽग्रभोगी स्याद्बलवीर्य्यसमन्वितः । तस्मादग्रं प्रयच्छेत
देवेभ्यः प्रतिपूजितम् ॥ ६२ ॥ ज्वलत्यहरहो वेश्म याश्चास्य गृह-
देवताः । ता पूज्या भूतिकामेन प्रसृताग्रप्रदायिना ॥ ६३ ॥
इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः । सुवर्णाय मनुः प्राह
सुवर्णो नारदाय च ॥ ६४ ॥ नारदोऽपि मयि प्राह गुणानेतान्
महाद्युते । तमप्येतद्विदित्वेह सर्व्वमाचर पुत्रकः ॥ ६५ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने
सुवर्णमनुसंवादे अष्टनवतोऽध्यायः ॥ ९८ ॥

युधिष्ठिर उवाच । श्रुतं मे भरतश्रेष्ठ पुष्पधूपप्रदायिनाम् । फलं बलिविधाने च तद्ब्रूयो वक्तुमर्हसि ॥ १ ॥ धूपप्रदानस्य फलं प्रदीपस्य तथैव च । बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः ॥ २ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । नहुषस्य च संवादमगस्त्यस्य भृगोस्तथा ॥ ३ ॥ नहुषो हि महाराज राजर्षिः सुमहातपाः । देवराज्यमनुप्राप्तः सुकृतेनेह कर्म्मणा ॥ ४ ॥ तत्रापि प्रयतो राजन्नहुषस्त्रिदिवे वसन् । मानुषीश्चैव दिव्याश्च कुर्वाणो विविधाः क्रियाः ॥ ५ ॥ मानुष्यस्तत्र सर्वाः स्म क्रियास्तस्य महात्मनः । प्रवृत्तास्त्रिदिवे राजन् दिव्याश्चैव महात्मनः ॥ ६ ॥ अग्निकार्य्याणि समिधः कुशाः सुमनसस्तथा । बलयश्चान्नलाजाभिर्धूपनं दीपकर्म्म च ॥ ७ ॥ सर्वं तस्य गृहे राज्ञः प्रावर्त्तत महात्मनः । जपयज्ञान्मनोयज्ञांस्त्रिदिवेऽपि चकार सः ॥ ८ ॥ देवानभ्यर्चयच्चापि विधिवत् स सुरेश्वरः । सर्वानेव यथान्यायं यथापूर्वमरिन्दम ॥ ९ ॥ अथेन्द्रोऽहमिति ज्ञात्वा अहङ्कारं समाविशत् । सर्वाश्चैव क्रियास्तस्य पर्य्यहीयन्त भूपते ॥ १० ॥ स ऋषीन् वाहयामास वरदानमदान्वितः । परिहीनक्रियश्चैव दुर्बलत्वमुपेयिवान् ॥ ११ ॥ तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान् । अहङ्काराभिभूतस्य सुमहानत्यवर्त्तत ॥ १२ ॥ अथ पर्य्यायशः सर्वान् वाहनायोपचक्रमे । पर्य्यायश्चाप्यगस्त्यस्य समपद्यत भारत ॥१३॥ अथागत्य महातेजा भृगुर्ब्रह्मविदाम्वरः । अगस्त्यमाश्रमस्थं वै समुपेत्येदमब्रवीत् ॥ १४ ॥ एवं वयमसत्कारं देवेन्द्रस्यास्यदुर्म्मतेः । नहुषस्य किमर्थं वै मर्षयाम महामुने ॥ १५ ॥

अगस्त्य उवाच । कथमेष मया शक्यः शप्तुं यस्य महामुने । वरदेन वरो दत्तो भवतो विदितश्च सः ॥ १६ ॥ यो मे दृष्टिपथं

गच्छेत् स मे वध्यो भवेदिति। इत्यनेन वरं देवो याचितो गच्छता दिवम् ॥ १७ ॥ एवं स दग्धःस मया भवता च न संशयः। अन्येनाप्यृषिमुख्येन न दग्धो न च पातितः ॥ १८ ॥ अमृतञ्चैव पानाय दत्तमस्मै पुरा विभो। महात्मना तदर्थञ्च नास्माभिर्विनिपात्यते ॥ १९ ॥ प्रायच्छत वरं देवः प्रजानां दुःख-कारकम्। द्विजेष्वधर्म्मयुक्तानि स करोति नराधमः ॥ २० ॥ तत्र यत् प्राप्तकालं नस्तद्ब्रूहि वदताम्वर। भवांश्चापि यथा ब्रूया-त्तत् कर्त्तास्मि न संशयः ॥ २१ ॥

भृगुरुवाच। पितामहनियोगेन भवन्तं सोऽहमागतः। प्रतिकर्त्तुं बलवति नहुषे दैवमोहिते ॥ २२ ॥ अद्य हि त्वां सुदुर्बुद्धिरथे योक्ष्यति देवराट्। अद्यैनमहमुद्वृत्तं करिष्येऽनिन्द्र-मोजसा ॥ २३ ॥ अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुम्। सञ्चाल्य पापकर्म्माणमैन्द्रात् स्थानात् सुदुर्म्मतिम् ॥२४॥ अद्य चासौ कुदेवेन्द्रस्त्वां पदा धर्षयिष्यति। दैवोपहतचित्तत्वादात्मनाशाय मन्दधीः ॥ २५ ॥ व्युत्क्रान्तधर्म्मं तमहं धर्षणामर्षितो भृशम्। अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्रुहम् ॥ २६ ॥ तत एनं सुदुर्बुद्धिं धिक्शब्दाभिहतत्विषम्। धरण्यां पातयिष्यामि पश्य-तस्ते महामुने ॥ २७ ॥ नहुषं पापकर्म्माणमैश्वर्य्यबलमोहितम्। यथा च रोचते तुभ्यं तथा कर्त्तास्म्यहं मुने ॥ २८ ॥ एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः। अगस्त्यः परमप्रीतो बभूव विग-तज्वरः ॥ २९ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने अगस्त्यभृगुसंवादे नवनवतोऽध्यायः ॥ ९९ ॥

---

युधिष्ठिर उवाच। कथं वै स विपन्नश्च कथं वै पातितो भुवि। कथञ्चानिन्द्रतां प्राप्तस्तद्भवान् वक्तुमर्हति ॥ १ ॥

भीष्म उवाच। एवं तयोः संवदतोः क्रियास्तस्य महात्मनः। सर्वा एव प्रवर्त्तन्ते या दिव्या याश्च मानुषीः ॥ २ ॥ तथैव दीपदानानि सर्वोपकरणानि वै। बलिकर्म्म च यच्चान्यदुत्सवाश्च पृथग्विधाः ॥ ३ ॥ सर्वं तस्य समुत्पन्ना देवेन्द्रस्य महात्मनः। देवलोके नृलोके च सदाचारा बुधैः स्मृताः ॥ ४ ॥ ते चेद्भवन्ति राजेन्द्र ऋध्यन्ते गृहमेधिनः। धूपप्रदानैर्द्दीपैश्च नमस्कारैस्तथैव च ॥ ५ ॥ यथा सिद्धस्य चान्नस्य द्विजायाग्रं प्रदीयते। बलयश्च गृहोद्देशे अतः प्रीयन्ति देवताः ॥ ६ ॥ यथा च गृहिणस्तोषो भवेद्वै बलिकर्म्मणि। तथा शतगुणा प्रीतिर्द्देवतानां प्रजायते ॥ ७ ॥ एवं धूपप्रदानञ्च दीपदानञ्च साधवः। प्रयच्छन्ति नमस्कारैर्युक्तमात्मगुणावहम् ॥ ८ ॥ स्नानेनाद्भिश्च यत् कर्म्म क्रियते वै विपश्चिता। नमस्कारप्रयुक्तेन प्रीयन्ति देवताः ॥ ९ ॥ पितरश्च महाभागा ऋषयश्च तपोधनाः। गृह्याश्च देवताः सर्वाः प्रीयन्ते विधिनार्च्चिताः ॥ १० ॥ इत्येतां बुद्धिमास्थाय नहुषः स नरेश्वरः। सुरेन्द्रत्वं महत् प्राप्य कृतवानेतदद्भुतम् ॥ ११ ॥ कस्यचित्त्वथ कालस्य भाग्यक्षय उपस्थिते। सर्वमेतदवज्ञाय कृतवाननिदमीदृशम् ॥ १२ ॥ ततः स परिहीनोऽभूत् सुरेन्द्रो बलिकर्म्मतः। धूपदीपोदकविधिं यथावन्न चकार ह ॥ १३ ॥ ततोऽस्य यज्ञविषयो रक्षोभिः पर्य्यवध्यत। अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव ह ॥ १४ ॥ द्रुतं सरस्वतीकूलात् स्मयन्निव महाबलः। ततो भृगुर्म्महातेजा मैत्रावरुणिरब्रवीत् ॥ १५ ॥ निमीलयस्व नयने जटा यावद्विशामि ते। स्थाणुभूतस्य तस्याथ जटाः प्राविशदच्युतः ॥ १६ ॥ भृगुः स सुमहातेजाः पातनाय नृपस्य च। ततः स देवराट् प्राप्तस्तमृषिं वाहनाय वै ॥ १७ ॥

ततोऽगस्त्यः सुरपतिं वाक्यमाह विशाम्पते। योजयस्वेति मां क्षिप्रं कस्य देशं वहामि ते ॥ १८ ॥ यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप । इत्युक्तो नहुषस्तेन योजयामास तं मुनिं ॥ १९ ॥ भृगुस्तस्य जटान्तःस्थो बभूव हृषितो भृशम् । न चापि दर्शनं तस्य चकार स भृगुस्तदा ॥ २० ॥ वरदान-प्रभावज्ञो नहुषस्य महात्मनः । न चुकोप तदाऽगस्त्यो युक्तोऽपि नहुषेण वै ॥ २१ ॥ तन्तु राजा प्रतोदेन चोदयामास भारत । नचुकोप स धर्मात्मा ततः पादेन देवराट् ॥ २२ ॥ अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः । तस्मिञ्छिरस्यभिहते स जटा-न्तर्गतो भृगुः ॥ २३ ॥ शशाप बलवत् क्रुद्धो नहुषं पापचेतसम् । यस्मात् पदाहनः क्रोधाच्छिरसीमं महामुनिम् ॥ २४ ॥ तस्मा-दाशु महीं गच्छ सर्पो भूत्वा सुदुर्म्मते । इत्युक्तः स तदा तेन सर्पो भूत्वा पपात ह ॥ २५ ॥ अदृष्टेनाथ भृगुणा भूतले भरतर्षभ । भृगुं हि यदि सोऽद्रक्ष्यन्नहुषः पृथिवीपते ॥ २६ ॥ न च शक्तोऽभविष्यद्वै पातने तस्य तेजसा । स तु तैस्तैः प्रदानैश्च तपोभिर्नियमैस्तथा ॥ २७ ॥ पतितोऽपि महाराज भूतले स्मृतिमानभूत् । प्रसादयामास भृगुं शापान्तो मे भवेदिति ॥२८॥ ततोऽगस्त्यः कृपाविष्टः प्रासादयत तं भृगुम् । शापान्तार्थं महा-राज स च प्रादात् कृपान्वितः ॥ २९ ॥

भृगुरुवाच । राजा युधिष्ठिरो नाम भविष्यति कुलोद्वहः । स त्वां मोचयिता शापादित्युक्त्वान्तरधीयत ॥ ३० ॥ अगस्त्योऽपि महातेजा कृत्वा कार्य्यं शतक्रतोः । स्वमाश्रमपदं प्रायात् पूज्य-मानो द्विजातिभिः ॥ ३१ ॥ नहुषोऽपि त्वया राजंस्तस्मा च्छापात् समुद्धृतः । जगाम ब्रह्मभवनं पश्यतस्ते जनाधिप ॥ ३२ ॥ स तदा पातयित्वा तं नहुषं भूतले भृगुः । जगाम ब्रह्मभवनं ब्रह्मणे च न्यवेदयत् ॥ ३३ ॥ ततः शक्रं समानाय्य देवानाह पिता-

महः । वरदानाच्च सुरा नहुषो राज्यमाप्तवान् ॥ ३४ ॥ स चागस्त्येन क्रुद्धेन भ्रंशितो भूतलङ्गतः । न च शक्यं विना राज्ञा सुरा वर्त्तयितुं क्वचित् ॥ ३५ ॥ तस्मादयं पुनः शक्रो देवराज्येऽभिषिच्यताम् । एवं सम्भाषमाणान्तु देवाः पार्थ पितामहम् ॥३६॥ एवमस्त्विति संहृष्टाः प्रत्यूचुस्तं नराधिप । सोऽभिषिक्तो भगवता देवराज्ये च वासवः ॥ ३७ ॥ ब्रह्मणा राजशार्दूल यथा पूर्वं व्यरोचत । एवमेतत् पुरावृत्तं नहुषस्य व्यतिक्रमात् ॥ ३८ ॥ स च तैरेव संसिद्धो नहुषः कर्म्मभिः पुनः । तस्माद्दीपाः प्रदातव्याः सायं वै गृहमेधिभिः ॥ ३९ ॥ दिव्यचक्षुरवाप्नोति प्रेत्य दीपस्य दायकः । पूर्णचन्द्रप्रतीकाशा दीपदाश्च भवन्त्युत ॥ ४० ॥ यावदक्षिनिमेषाणि ज्वलन्ते तावतीः समाः । रूपवान् बलवांश्चापि नरो भवति दीपदः ॥ ४१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने नहुषोपाख्याने शततमोऽध्यायः ॥ १०० ॥

---

युधिष्ठिर उवाच । ब्राह्मणस्वानि ये मन्दा हरन्ति पुरुषर्षभ । नृशंसकारिणो मूढ़ाः क्व ते गच्छन्ति मानवाः ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । चाण्डालस्य च संवादं क्षत्रबन्धोश्च भारत ॥ २ ॥

राजन्य उवाच । वृद्धरूपोऽसि चाण्डाल बालवच्च विचेष्टसे । श्वखराणां रजःसेवी कस्मादुद्विजसे गवाम् ॥ ३ ॥ साधुभिर्गर्हितं कर्म्म चाण्डालस्य विधीयते । कस्माद्गोरजसा ध्वस्तमपां कुण्डे निषिञ्चसि ॥ ४ ॥

चाण्डाल उवाच । ब्राह्मणस्य गवां राजन् ह्रियतीनां रजः पुरा । सोममुद्ध्वंसयामास तं सोमं येऽपिबन् द्विजाः ॥ ५ ॥

दीक्षितश्च स राजापि क्षिप्रं नरकमाविशत् । सह तैर्याजकैः सर्व्वैस्त्रह्मस्वमुपजीव्य तत् ॥ ६ ॥ येऽपि तत्रापिवन् क्षीरं घृतं दधि च मानवाः । ब्राह्मणाः सहराजन्याः सर्व्वे नरकमाविशन् ॥ ७ ॥ जघ्नुस्ताः पयसा पुत्रांस्तथा पौत्रान् विधुन्वतीः । पशूनवेक्षमाणाश्च साधुवृत्तेन दम्पती ॥ ८ ॥ अहं तत्रावसं राजन् ब्रह्मचारी जितेन्द्रियः । तासां मे रजसा ध्वस्तं भैक्ष्यमासीन्नराधिप ॥ ९ ॥ चाण्डालोऽहं ततो राजन् भुक्त्वा तदभवं नृप । ब्रह्मस्वहारी च नृपः सोऽप्रतिष्ठां गतिं ययौ ॥ १० ॥ तस्माद्धरेन्न विप्रस्वं कदाचिदपि किञ्चन । ब्रह्मस्वं रजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम् ॥ ११ ॥ तस्मात् सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता । विक्रयन्त्विह सोमस्य गर्हयन्ति मनीषिणः ॥ १२ ॥ ये चैवं क्रीणते तात ये च विक्रीणते जनाः । ते तु वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः ॥ १३ ॥ सोमन्तु रजसा ध्वस्तं विक्रीणन् विधिपूर्व्वकम् । श्रोत्रियो वार्द्धुषी भूत्वा न चिरं न विनश्यति ॥ १४ ॥ नरकं त्रिंशतं प्राप्य स विष्ठामुपजीवति । श्वचर्य्यामभिमानञ्च सखिदारे च विप्लवम् ॥ १५ ॥ तुलया धारयन् धर्म्ममभिमान्यतिरिच्यते । श्वानं वै पापिनं पश्य विवर्णं हरिणं कृशम् ॥ १६ ॥ अभिमानेन भूतानामिमां गतिमुपागतम् । अहं वै विपुले जातः कुले धनसमन्विते ॥ १७ ॥ अन्यस्मिन् जन्मनि विभो ज्ञानविज्ञानपारगः । अभवन्तत्र जानानो ह्येतान् दोषान् मदात्तदा ॥ १८ ॥ संरब्ध एव भूतानां पृष्ठमांसमभक्षयम् । सोऽहं तेन च वृत्तेन भोजनेन च तेन वै ॥ १९ ॥ इमामवस्थां सम्प्राप्तः पश्य कालस्य पर्य्ययम् । आदीप्तमिव चैलान्तं भ्रमरैरिव चार्द्दितम् ॥ २० ॥ धावमानं सुसंरब्धं पश्य मां रजसान्वितम् । स्वाध्यायैन्तु महत् पापं तरन्ति गृहमेधिनः ॥ २१ ॥ दानैः पृथग्विधैश्चापि यथा प्राहुर्मनीषिणः । तथा पापकृतं विप्रमाश्रमस्थं महीपते ॥ २२ ॥

सर्वसङ्गविनिर्मुक्तं छन्दांस्युच्चारयन्त्युत। अहं हि पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ॥ २३ ॥ निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत। जातिस्मरत्वञ्च मम केनचित् पूर्वकर्मणा ॥ २४ ॥ शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप। त्वमिमं सम्प्रपन्नाय संशयं ब्रूहि पृच्छते। चाण्डालत्वात् कथमहं मुच्येयमिति सत्तम ॥ २५ ॥

राजन्य उवाच। चाण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि। ब्राह्मणार्थे त्यजन् प्राणान् गतिमिष्टामवाप्स्यसि ॥ २६ ॥ दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम्। हुत्वा प्राणान् प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥ २७ ॥

भीष्म उवाच। इत्युक्तः स तदा तेन ब्रह्मस्वार्थे परन्तप। हुत्वा रणमुखे प्राणान् गतिमिष्टामवाप ह ॥ २८ ॥ तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ। यदिच्छसि महाबाहो शाश्वतीं गतिमात्मनः ॥ २९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि राजन्य-
चाण्डालसंवादे एकाधिकशततोऽध्यायः ॥ १०१ ॥

---

युधिष्ठिर उवाच। एकलोकाः सुकृतिनः सर्वे त्वाहो पितामह। उत तत्रापि भिन्नास्ते तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः। पुण्यान् पुण्यकृतो यान्ति पापान् पापकृतो जनाः ॥२॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। गौतमस्य मुनेस्तात संवादं वासवस्य च ॥ ३ ॥ ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः। महावने हस्तिशिशुं परिद्यूनममातृकम् ॥ ४ ॥ तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः। स तु दीर्घेण कालेन बभूवातिबलो महान् ॥ ५ ॥ तं प्रभिन्नं महानागं प्रस्नुतं पर्वतो-

पमम् । धृतराष्ट्रस्य रूपेण शक्रो जग्राह हस्तिनम् ॥ ६ ॥ क्रियमाणन्तु तं दृष्ट्वा गौतमः संशितव्रतः । अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ॥ ७ ॥ मा मे हार्षीर्हस्तिनं पुत्रमेनं दुःखात् पुष्टं धृतराष्ट्राकृतज्ञ । मैत्रं सतां साप्तपदं वदन्ति मित्रद्रोहो नैव राजन् स्पृशेत् त्वाम् ॥ ८ ॥ इध्मोदकप्रदातारं शून्यपालं ममाश्रमे । विनीतमाचार्य्यकुले सुयुक्तं गुरुकर्मणि ॥ ९ ॥ शिष्टं दान्तं कृतज्ञञ्च प्रियञ्च सततं मम । न मे विक्रोशतो राजन् हन्तुमर्हसि कुञ्जरम् ॥ १० ॥

धृतराष्ट्र उवाच । गवां सहस्रं भवते ददामि दासीशतं निष्कशतानि पञ्च । अन्यच्च वित्तं विविधं महर्षे किं ब्राह्मणस्येह गजेन कृत्यम् ॥ ११ ॥

गौतम उवाच । तवैव गावो हि भवन्तु राजन् दास्यः सनिष्का विविधञ्च रत्नम् । अन्यच्च वित्तं विविधं नरेन्द्र किं ब्राह्मणस्येह धनेन कृत्यम् ॥ १२ ॥

धृतराष्ट्र उवाच । ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं राजन्यानां नागकुलानि विप्र । स्वं वाहनं नयतो नास्त्यधर्मो नागश्रेष्ठं गौतमास्मान्निवर्त्त ॥ १३ ॥

गौतम उवाच । यत्र प्रेतो नन्दति पुण्यकर्मा यत्र प्रेतः शोचते पापकर्मा । वैवस्वतस्य सदने महात्मंस्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ १४ ॥

धृतराष्ट्र उवाच । ये निष्क्रिया नास्तिकाश्रद्दधानाः पापात्मान इन्द्रियार्थे निविष्टाः । यमस्य ते यातनां प्राप्नुवन्ति परं गन्ता धृतराष्ट्रो न तत्र ॥ १५ ॥

गौतम उवाच । वैवस्वती संयमनी जनानां यत्रानृतं नोच्यते यत्र सत्यम् । यत्राबला बलिनं यातयन्ति तत्र त्वाहं हस्तिनं यातयिष्ये ॥ १६ ॥

धृतराष्ट्र उवाच । ज्येष्ठां स्वसारं पितरं मातरञ्च यथागुरुं मदमत्ताश्चरन्ति । तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र ॥ १७ ॥

गौतम उवाच । मन्दाकिनी वैश्रवणस्य राज्ञो महाभागा भोगिजनप्रवेश्या । गन्धर्वयक्षैरप्सरोभिश्च जुष्टा तत्र त्वाहं हस्तिनं यातयिष्ये ॥ १८ ॥

धृतराष्ट्र उवाच । अतिथिव्रताः सुव्रता ये जना वै प्रतिश्रयं ददति ब्राह्मणेभ्यः । शिष्टाशिनः संविभज्याश्रितांश्च मन्दाकिनीं तेऽपि विभूषयन्ति ॥ १९ ॥

गौतम उवाच । मेरोरग्रे यद्वनं भाति रम्यं सुपुष्पितं किन्नरीगीतजुष्टम् । सुदर्शना यत्र जम्बुर्विशाला तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २० ॥

धृतराष्ट्र उवाच । ये ब्राह्मणा मृदवः सत्यशीला बहुश्रुताः सर्वभूताभिरामाः । येऽधीयन्ते सेतिहासं पुराणं मध्वाहुत्या जुह्वति वै द्विजेभ्यः ॥ २१ ॥ तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र । यद्विद्यते विदितं स्थानमस्ति तद्ब्रूहि त्वं त्वरितो ह्येष यामि ॥ २२ ॥

गौतम उवाच । सुपुष्पितं किन्नरराजजुष्टं प्रियं वनं नन्दनं नारदस्य । गन्धर्वाणामप्सरसाञ्च शश्वत् तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २३ ॥

धृतराष्ट्र उवाच । ये नृत्यगीतकुशला जनाः सदा ह्ययाचमानाः सहिताश्चरन्ति । तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र ॥ २४ ॥

गौतम उवाच । यत्रोत्तराः कुरवो भान्ति रम्या देवैः सार्द्धं मोदमाना नरेन्द्र । यत्राग्नियोनाश्च वसन्ति लोका अव्योनयः पर्वतयोनयश्च ॥ २५ ॥ यत्र शक्रो वर्षति सर्वकामान् यत्र स्त्रियः

कामचारा भवन्ति। यत्र चेर्ष्या नास्ति नारीनराणां तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २६ ॥

धृतराष्ट्र उवाच। येसर्व्वभूतेषु निवृत्तकामा अमांसादा न्यस्त-दण्डाश्चरन्ति। न हिंसन्ति स्थावरं जङ्गमञ्च भूतानां ये सर्व्व-भूतात्मभूताः ॥ २७ ॥ निराशिषो निर्म्ममा वीतरागा लाभालाभे तुल्यनिन्दाप्रशंसाः। तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र ॥ २८ ॥

गौतम उवाच। ततोऽपरे भान्ति लोकाः सनातनाः सुपुण्य-गन्धा विरजा वीतशोकाः। सोमस्य राज्ञः सदने महात्मनस्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २९ ॥

धृतराष्ट्र उवाच। ये दानशीला न प्रतिगृह्णते सदा न चाप्यर्थांश्चाददते परेभ्यः। येषामदेयमर्हते नास्ति किञ्चित् सर्व्वा-तिथ्याः सुप्रसादा जनाश्च ॥ ३० ॥ ये क्षन्तारो नाभिजल्पन्ति चान्यान् सत्त्रीभूताः सततं पुण्यशीलाः। तथाविधानामेष लोको महर्षे परं गन्ता धृतराष्ट्रो न तत्र ॥ ३१ ॥

गौतम उवाच। तथापरे भान्ति लोकाः सनातना विरजसो वितमस्का विशोकाः। आदित्यदेवस्य पदे महात्मनस्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ३२ ॥

धृतराष्ट्र उवाच। स्वाध्यायशीला गुरुशुश्रूषणे रतास्तपस्विनः सुव्रताः सत्यसन्धाः। आचार्य्याणामप्रतिकूलभाषिणो नित्योत्थिता गुरुकर्म्मस्वचोद्याः ॥ ३३ ॥ तथाविधानामेष लोको महर्षे विशु-द्धानां भावितो वाग्यतानाम्। सत्य स्थितानां वेदविदां महात्मनां परं गन्ता धृतराष्ट्रो न तत्र ॥ ३४ ॥

गौतम उवाच। ततोऽपरे भान्ति लोकाः सनातनाः सुपुण्य-गन्धा विरजा विशोकाः। वरुणस्य राज्ञः सदने महात्मनस्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ३५ ॥

धृतराष्ट्र उवाच। चातुर्मास्यैर्यजन्ते जनाः सदा तथेष्टानां दशशतं प्राप्नुवन्ति। ये चाग्निहोत्रं जुह्वति श्रद्दधाना यथाम्नायं त्रीणि वर्षाणि विप्राः॥ ३६॥ सुधारिणां धर्मधुरे महात्मनां यथोदिते वर्त्मनि सुस्थितानाम्। धर्मात्मनामुद्वहतां गतिन्तां परं गन्ता धृतराष्ट्रो न तत्र॥ ३७॥

गौतम उवाच। इन्द्रस्य लोका विरजा विशोका दुरत्ययाः काङ्क्षिता मानवानाम्। तस्याहन्ते भवने भूरितेजसो राजन्निमं हस्तिनं यातयिष्ये॥ ३८॥

धृतराष्ट्र उवाच। शतवर्षजीवी यश्च शूरो मनुष्यो वेदाध्यायी यश्च यज्वा प्रमत्तः। एते सर्वे शक्रलोकं व्रजन्ति परं गन्ता धृतराष्ट्रो न तत्र॥ ३९॥

गौतम उवाच। प्राजापत्याः सन्ति लोका महान्तो नाकस्य पृष्ठे पुष्कला वीतशोकाः। मनीषिताः सर्वलोकोद्भवानां तत्र त्वाहं हस्तिनं यातयिष्ये॥ ४०॥

धृतराष्ट्र उवाच। ये राजानो राजसूयाभिषिक्ता धर्मात्मानो रक्षितारः प्रजानाम्। ये चाश्वमेधावभृथे प्लुताङ्गास्तेषां लोका धृतराष्ट्रो न तत्र॥ ४१॥

गौतम उवाच। ततः परं भान्ति लोकाः सनातनाः सुपुण्यगन्धा विरजा वीतशोकाः। तस्मिन्नहं दुर्लभे चाप्यधृष्ये गवां लोके हस्तिनं यातयिष्ये॥ ४२॥

धृतराष्ट्र उवाच। यो गोसहस्रीशतदः समां समां गवां शतीदश दद्याच्च शक्त्या। तथा दशभ्यो यश्च दद्यादिहैकां पञ्चभ्यो वा दानशीलस्तथैकाम्॥ ४३॥ ये जीर्यन्ते ब्रह्मचर्येण विप्रा ब्राह्मीं वाचं परिरक्षन्ति चैव। मनस्विनस्तीर्थयात्रापरायणास्ते तत्र मोदन्ति गवां निवासे॥ ४४॥ प्रभासं मानसं तीर्थं पुष्कराणि महत्सरः। पुण्यञ्च नैमिषं तीर्थं बाहुदां करतोयिनीम्

॥ ४५ ॥ गङ्गां गयशिरश्चैव विपाशां स्थूलवालुकाम् । कृशां गङ्गां पञ्चनदं महाह्रदमथापि वा ॥ ४६ ॥ गोमतीं कौशिकीं चम्पां महात्मानो धृतव्रताः । सरस्वतीदृषद्वत्यौ यमुनां ये प्रयान्ति च ॥ ४७ ॥ तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः । प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ॥ ४८ ॥

गौतम उवाच । यत्र शीतभयं नास्ति न चोष्णभयमन्वपि । न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा ॥ ४९ ॥ न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा । न जरामरणे तत्र न पुण्यं न च पातकम् ॥ ५० ॥ तस्मिन् विरजसि स्फीते प्रज्ञासत्त्वव्यवस्थिते । स्वयम्भुभवने पुण्ये हस्तिनं मे प्रदास्यसि ॥ ५१ ॥

धृतराष्ट्र उवाच । निर्मुक्ताः सर्वसङ्गैर्ये कृतात्मानो यतव्रताः । अध्यात्मयोगसंस्थाने युक्ताः स्वर्गगतिं गताः ॥ ५२ ॥ ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्त्विकाः । न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ॥ ५३ ॥

गौतम उवाच । रथन्तरं यत्र बृहच्च गीयते यत्र वेदीं पुण्डरीकैस्तृणोति । यत्रोपयान्ति हरिभिः सोमपीथी तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ५४ ॥ बुध्यामि त्वां वृत्रहणं शतक्रतुं व्यतिक्रमन्तं भुवनानि विश्वा । कच्चिन्न वाचा वृजिनं कदाचिदकार्षन्ते मनसोऽभिषङ्गात् ॥ ५५ ॥

शतक्रतुरुवाच । मघवाहं लोकपथं प्रजानामन्वागमं परिवादे गजस्य । तस्माद्भवान् प्रणतं मानुशास्तु ब्रवीषि यत्तत् करवाणि सर्वम् ॥ ५६ ॥

गौतम उवाच । श्वेतं करेणुं मम पुत्रनागं यं मेऽहार्षीर्दश वर्षाणि बालम् । यो मे वने वसतोऽभूद्द्वितीयस्तमेव मे देहि सुरेन्द्र नागम् ॥ ५७ ॥

शतक्रतुरुवाच । अयं सुतस्ते द्विजमुख्य नाग आगच्छति

त्वामभिवीक्षमाणः। पादौ च ते नासिकयोपजिघ्रते श्रेयो ममाध्याहि नमश्च तेऽस्तु॥ ५८॥

गौतम उवाच। शिवं सदैवेह सुरेन्द्र तुभ्यं ध्यायामि पूजाञ्च सदा प्रयुञ्जे। ममापि त्वं शक्र शिवं ददस्व त्वया दत्तं प्रतिगृह्णामि नागम्॥ ५९॥

शतक्रतुरुवाच। येषां वेदा निहिता वै गुहायां मनीषिणां सत्यवतां महात्मनाम्। तेषां त्वयैकेन महात्मनास्मि बुद्धस्तस्मात् प्रीतिमांस्तेऽहमद्य॥ ६०॥ हन्तेहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना। त्वं हि प्राप्तुं शुभान् लोकानह्नाय च चिराय च॥६१॥ स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना। दिवमाचक्रमे वज्री सद्भिः सह दुरासदम्॥ ६२॥ इदं यः शृणुयान्नित्यं यः पठेद्वा जितेन्द्रियः। स याति ब्रह्मणो लोकं ब्राह्मणो गौतमो यथा॥६३॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि हस्तिकूटे द्व्यधिकशतोऽध्यायः॥१०२॥

---

युधिष्ठिर उवाच। दानं बहुविधाकारं शान्तिः सत्यमहिंसितम्। स्वदारतुष्टिश्चोक्ता ते फलं दानस्य चैव यत्॥ १॥ पितामहस्य विदितं किमन्यत्तपसो बलात्। तपसो यत् परं तेऽद्य तन्नो व्याख्यातुमर्हसि॥ २॥

भीष्म उवाच। तपः प्रचक्षते यावत्तावल्लोको युधिष्ठिर। मतं ममात्र कौन्तेय तपो नानशनात् परम्॥ ३॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। भगीरथस्य संवादं ब्रह्मणश्च महात्मनः॥ ४॥ अतीत्य सुरलोकञ्च गवां लोकञ्च भारत। ऋषिलोकञ्च सोऽगच्छद्भगीरथ इति श्रुतम्॥ ५॥ तन्तु दृष्ट्वा वचः प्राह ब्रह्मा राजन् भगीरथम्। कथं भगीरथागास्त्वमिमं

लोकं दुरासदम् ॥ ६ ॥ न हि देवा न गन्धर्वा न मनुषा भगीरथ । आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ॥ ७ ॥

भगीरथ उवाच । निष्काणां वै त्वददं ब्राह्मणेभ्यः शतं सहस्राणि सदैव दानम् । ब्राह्मं व्रतं नित्यमास्थाय विद्धन्न त्वेवाहं तस्य फलादिहागाम् ॥ ८ ॥ दशैकरात्रान् दशपञ्चरात्रानेक दशैकादशकान् क्रतूंश्च । ज्योतिष्टोमानाञ्च शतं यदिष्टं फलेन तेनापि न चागतोऽहम् ॥ ९ ॥ यच्चावसं जाह्नवीतीरनित्यः शतं समास्तप्यमानस्तपोऽहम् । अदाञ्च तत्राश्वतरीसहस्रं नारीपुरं न च तेनाहमागाम् ॥ १० ॥ दशायुतानि चाश्वानां गोयुतानि च विंशतिम् । पुष्करेषु द्विजातिभ्यः प्रादां शतसहस्रशः ॥ ११ ॥ सुवर्णचन्द्रोत्तमधारिणीनां कन्योत्तमानामददं सहस्रम् । षष्टिं सहस्राणि विभूषितानां जाम्बूनदैराभरणैर्न तेन ॥ १२ ॥ दशार्वुदान्यददं गोसवेज्यास्वेकैकशो दशगा लोकनाथ । समानवत्साः पयसा समन्विताः सुवर्णकांस्योपदुहा न तेन ॥ १३ ॥ आप्तोर्यामेषु नियतमेकैकस्मिन् दशाददम् । गृष्टीनां चीरदात्रीणां रोहिणीनां शतानि च ॥ १४ ॥ दोग्ध्रीणां वै गवाञ्चापि प्रयुतानि दशैव ह । प्रादां दशगुणं ब्रह्मन्न तेनाहमुपागतः ॥ १५ ॥ वाजिनां वाह्लिजातानामयुतान्यददं दश । कर्कीणां हेममालीनां न च तेनाहमागतः ॥ १६ ॥ कोटीश्च काञ्चनस्याष्टौ प्रादां ब्रह्मन् दशस्वहम् । एकैकस्मिन् क्रतौ तेन फलेनाहं न चागतः ॥ १७ ॥ वाजिनां श्यामकर्णानां हरितानां पितामह । प्रादां हेमस्रजां ब्रह्मन् कोटीर्दश च सप्त च ॥ १८ ॥ ईशादन्तान्महाकायान् काञ्चनस्रग्विभूषितान् । पद्मिनो वै सहस्राणि प्रादां दश च सप्त च ॥ १९ ॥ अलङ्कृतानां देवेश दिव्यैः कनकभूषणैः । रथानां काञ्चनाङ्गानां सहस्राण्यददं दश ॥ २० ॥ सप्त चान्यानि युक्तानि वाजिभिः समलङ्कृतैः । दक्षिणावयवाः केचिद्वेदैर्ये सम्प्रकीर्त्तिताः ॥ २१ ॥ वाज-

पैरीषु दग्रसु प्रादान्तान्यपि चाप्यहम् । शक्रतुल्यप्रभावाणामिज्यया विक्रमेण च ॥ २२ ॥ सहस्रं निष्ककण्ठानामददं दक्षिणामहम् । विजित्य भूपतीन् सर्वानर्थैरिष्ट्वा पितामह ॥ २३ ॥ अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः । स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते ॥ २४ ॥ दक्षिणाभिः प्रवृत्ताभिर्मम नागाश्च तत् कृते । वाजिनाञ्च सहस्रे द्वे सुवर्णशतभूषिते ॥ २५ ॥ वरं ग्रामशतञ्चाहमेकैकस्य त्रिधाददम् । तपस्वी नियताहारः शममास्थाय वाग्यतः ॥ २६ ॥ दीर्घकालं हिमवति गङ्गायाश्च दुरुत्सहाम् । मूर्द्ध्नां धारां महादेवः शिरसा यामधारयत् । न तेनाप्यहमागच्छं फलेनेह पितामह ॥ २७ ॥ शम्याक्षेपैरयजं यच्च देवान् सद्यस्कानामयुतैश्चापि यत्तत् । त्रयोदश द्वादशाहैश्च देव सपौण्डरीकान्न च तेषां फलेन ॥ २८ ॥ अष्टौ सहस्राणि ककुद्मिनामहं शुक्लर्षभाणामददं द्विजेभ्यः । एकैकं वै काञ्चनं शृङ्गमेभ्यः पत्नीश्चैषामददं निष्ककण्ठीः ॥ २९ ॥ हिरण्यरत्ननिचयानददं रत्नपर्वतान् । धनधान्यैः समृद्धांश्च ग्रामाञ्छतसहस्रशः ॥ ३० ॥ शतं शतानां गृष्टीनामददञ्चाप्यतन्द्रितः । इष्ट्वानेकैर्महायज्ञैर्ब्राह्मणेभ्यो न तेन च ॥ ३१ ॥ एकादशाहैरयजं सदक्षिणैर्द्विर्द्वादशाहैरश्वमेधैश्च देव । आर्कायणैः षोड़शभिश्च ब्रह्मंस्तेषां फलेनेह न चागतोऽस्मि ॥ ३२ ॥ निष्कैककण्ठमददं योजनायतं तद्विस्तीर्णं काञ्चनपादपानाम् । वनं वृतानां रत्नविभूषितानां न चैव तेषामागतोऽहं फलेन ॥ ३३ ॥ तुरायणं हि व्रतमप्यधृष्यमक्रोधनोऽकरवं त्रिंशतोऽब्दान् । शतं गवामष्टशतानि चैव दिने दिने ह्यददं ब्राह्मणेभ्यः ॥ ३४ ॥ पयस्विनीनामथ रोहिणीनां तथैवान्याननडुहो लोकनाथ । प्रादान्नित्यं ब्राह्मणेभ्यः सुरेश नेहागतस्तेन फलेन चाहम् ॥ ३५ ॥ त्रिंशदग्नीनहं ब्रह्मन्नयजं यच्च नित्यदा । अष्टाभिः सर्वमेधैश्च नरमेधैश्च सप्तभिः

॥ ३६ ॥ दशभिर्विश्वजिद्भिश्च शतैरष्टादशोत्तरैः। न चैव तेषां देवेश फलेनाहमिहागमम् ॥ ३७ ॥ सरय्वां बाहुदायाञ्च गङ्गाया-मथ नैमिषे। गवां शतानामयुतमददं च न तेन वै ॥ ३८ ॥ इन्द्रेण गुह्यं निहितं वै गुहायां यद्भार्गवस्तपसेहाभ्यविन्दत्। जाज्वल्यमानमुशनस्तेजसेह तत् साधयामासमहं वरेण्य ॥ ३९ ॥ ततो मे ब्राह्मणास्तुष्टास्तस्मिन् कर्म्मणि साधिते। सहस्रमृषय-श्चासन् ये वै तत्र समागताः ॥ ४० ॥ उक्तस्तैरस्मि गच्छ त्वं ब्रह्म-लोकमिति प्रभो। प्रीतिनोक्तः सहस्रेण ब्राह्मणानामहं प्रभो। इमं लोकमनुप्राप्तो मा भूत्तेऽत्र विचारणा ॥ ४१ ॥ कामं यथा-वद्विहितं विधात्रा पृष्टेन वाच्यन्तु मया यथावत्। तपो हि नान्यच्चानशनान्मतं मे नमोऽस्तु ते देववर प्रसीद ॥ ४२ ॥

भीष्म उवाच। इत्युक्तवन्तं ब्रह्मा तु स राजानं भगीरथम्। पूजयामास पूजार्हं विधिदृष्टेन कर्म्मणा ॥ ४३ ॥ तस्मादनशनैर्युक्तो विप्रान् पूजय नित्यदा। विप्राणां वचनात् सर्वं परत्रेह च सिध्यति ॥ ४४ ॥ वासोभिरन्नैर्गोभिश्च शुभैर्नैवेशिकैरपि। शुभैः सुरगणैश्चापि तोष्या एव द्विजास्तथा। एतदेव परं गुह्यमलोभेन समाचर ॥ ४५ ॥

इत्यनुशासनपर्वणि अनुशासनिकेपर्वणि तपःकथने ब्रह्मभगीरथसंवादे त्र्यधिकशतोऽध्यायः ॥ १०३ ॥

---

युधिष्ठिर उवाच। शतायुरुक्तः पुरुषः शतवीर्य्यश्च जायते। कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ १ ॥ आयुष्मान् केन भवति अल्पायुर्वापि मानवः। केन वा लभते कीर्त्तिं केन वा लभते श्रियम् ॥ २ ॥ तपसा ब्रह्मचर्य्येण जपहोमैस्तथौषधैः। कर्मणा मनसा वाचा तन्मे ब्रूहि पितामह ॥ ३ ॥

भीष्म उवाच। अत तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि। अल्पायुर्येन भवति दीर्घायुर्वापि मानवः ॥ ४ ॥ येन वा लभते कीर्त्तिं येन वा लभते श्रियम्। यथा वर्त्तयन् पुरुषः श्रेयसा सम्प्रयुज्यते ॥ ५ ॥ आचाराल्लभते चायुराचाराल्लभते श्रियम्। आचाराल्लभते कीर्त्तिं पुरुषः प्रेत्य चेह च ॥ ६ ॥ दुराचारो हि पुरुषो नेहायुर्विन्दते महत्। यस्मात्त्रसन्ति भूतानि तथा परिभवन्ति च ॥ ७ ॥ तस्मात् कुर्य्यादिहाचारं यदीच्छेद्भूतिमात्मनः। अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥ ८ ॥ आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः। साधूनाञ्च यथावृत्तमेतदाचारलक्षणम् ॥ ९ ॥ अप्यदृष्टं श्रवादेव पुरुषं धर्मचारिणम्। भूतिकर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् ॥ १० ॥ ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः। अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ११ ॥ विशीला भिन्नमर्य्यादा नित्यं सङ्कीर्णमैथुनाः। अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ १२ ॥ सर्वलक्षणहीनोऽपि समुदाचारवान्नरः। श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ १३ ॥ अक्रोधनः सत्यवादी भूतानामविहिंसकः। अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ १४ ॥ लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः। नित्योच्छिष्टः शङ्कुशुको नेहायुर्विन्दते महत् ॥ १५ ॥ ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्। उत्थायाचम्य तिष्ठेत पूर्वां सन्ध्यां कृताञ्जलिः ॥ १६ ॥ एवमेवापरां सन्ध्यां समुपासीत वाग्यतः। नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन ॥ १७ ॥ नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्। ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन् ॥ १८ ॥ तस्मात्तिष्ठेत्सदा पूर्वां पश्चिमाञ्चैव वाग्यतः। ये न पूर्वामुपासन्ते द्विजाः सन्ध्यां न पश्चिमाम् ॥ १९ ॥ सर्वांस्तान् धार्मिको राजा शूद्रकर्माणि कारयेत्। परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित्

॥ २० ॥ नहीदृशमनायुष्यं लोके किञ्चन विद्यते। यादृशं पुरुषस्येह परदारोपसेवनम् ॥ २१ ॥ यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः। तावद्वर्षसहस्राणि नरकं पर्य्युपासते ॥ २२ ॥ प्रसाधनञ्च केशानामञ्जनं दन्तधावनम्। पूर्वाह्ण एव कार्य्याणि देवतानाञ्च पूजनम् ॥ २३ ॥ पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत् कदाचन। नातिकल्यं नातिसायं न च मध्यन्दिने स्थिते ॥ २४ ॥ नाज्ञातैः सह गच्छेत नैको न वृषलैः सह। पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ॥ २५ ॥ वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च। प्रदक्षिणं प्रकुर्वीत परिज्ञातान् वनस्पतीन् ॥ २६॥ चतुष्पथान् प्रकुर्वीत सर्वानेव प्रदक्षिणान्। मध्यन्दिने निशाकाले अर्द्धरात्रे च सर्वदा ॥ २७ ॥ चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च। उपानहौ च वस्त्रञ्च धृतमन्यैर्नधारयेत् ॥ २८ ॥ ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत्। अमावस्यां पौर्णमास्यां चतुर्द्दश्याञ्च सर्वशः ॥ २९ ॥ अष्टम्यां सर्वपक्षाणां ब्रह्मचारी सदा भवेत्। वृथामांसं न खादेत पृष्ठमांसं तथैव च। आक्रोशं परिवादञ्च पैशुन्यञ्च विवर्ज्जयेत् ॥ ३० ॥ नारुन्तुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत। ययास्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्याम् ॥ ३१ ॥ वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि। परस्य नामर्म्मसु निष्पतन्ति तान् पण्डितो नावसृजेत् परेषु ॥ ३२ ॥ रोहते शायकैर्विद्धं वनं परशुना हतम्। वाचा दुरुक्तया विद्धं न संरोहति वाक्क्षतम् ॥ ३३ ॥ कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः। वाक्शल्यस्तु न निर्हर्त्तुं शक्यो हृदिशयो हि सः ॥ ३४ ॥ हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् विगर्हितान्। रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाक्षिपेत् ॥ ३५ ॥ नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्। द्वेषस्तम्भाभिमानञ्च तैक्ष्ण्यञ्च परिवर्ज्जयेत् ॥ ३६ ॥

परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत्। अन्यत्र पुत्रा-च्छिष्याच्च शिष्टार्थं ताड़नं स्मृतम् ॥ ३७ ॥ न ब्राह्मणान् परि-वदेत् नक्षत्राणि न निर्द्दिशेत्। तिथिं पक्षस्य न ब्रूयात्तथा-स्यायुर्न रिष्यते ॥ ३८ ॥ कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः। पादप्रक्षालनं कुर्य्यात् स्वाध्याये भोजने तथा ॥ ३९ ॥ त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ४० ॥ संयावं कृशरं मांसं शष्कुलीम्पायसन्तथा। आत्मार्थं न प्रकर्त्तव्यं देवार्थन्तु प्रकल्पयेत् ॥ ४१ ॥ नित्यमग्निं परि-चरेद्भिक्षां दद्याच्च नित्यदा। वाग्यतो दन्तकाष्ठञ्च नित्यमेव समा-चरेत् ॥ ४२ ॥ न चाभ्युदितशायी स्यात् प्रायश्चित्ती तथा भवेत्। मातापितरमुत्थाय पूर्व्वमेवाभिवादयेत् ॥ ४३॥ आचार्य्यमथ वाप्यन्यं तथायुर्विन्दते महत्। वर्ज्जयेद्दन्तकाष्ठानि वर्ज्जनीयानि नित्यशः ॥ ४४ ॥ भक्षयेच्छास्त्रदृष्टानि पर्व्वस्वपि विवर्ज्जयेत्। उदङ्मुखश्च सततं शौचं कुर्य्यात् समाहितः ॥ ४५ ॥ अकृत्वा देवपूजाञ्च ना-चरेद्दन्तधावनम्। अकृत्वा देवपूजाञ्च नाभिगच्छेत् कदाचन ॥४६॥ अन्यत्र तु गुरुं वृद्धं धार्म्मिकं वा विचक्षणम्। अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ॥ ४७ ॥ न चाज्ञातां स्त्रियं गच्छे-द्गर्भिणीं वा कदाचन। उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ॥ ४८ ॥ प्राक्शिरास्तु शयेद्विद्वानथवा दक्षिणाशिराः। न भग्ने नावशीर्णे च शयने प्रस्वपीत च ॥ ४९ ॥ नान्तर्द्धाने न संयुक्ते न च तिर्य्यक्कदाचन। न चापि गच्छेत् कार्य्येण समयाद्वापि नास्तिके ॥ ५० ॥ आसनन्तु पदाकृष्य न प्रसज्येत्तथा नरः। न नग्नः कर्हिचित् स्नायात् न निशायां कदाचन ॥ ५१ ॥ स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः। न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्द्धुनेत् ॥ ५२ ॥ न चैवार्द्राणि वासांसि नित्यं सेवेत मानवः। स्रजश्च नावकृष्येत न बहिर्द्धारयतीव च ॥ ५३ ॥ उद-

क्यया च संभाषां न कुर्वीत कदाचन। नोत्सृजेत पुरीषञ्च क्षेत्रे ग्रामस्य चान्तिके ॥ ५४ ॥ उभे मूत्रपुरीषे तु नाप्सु कुर्य्यात् कदाचन। अन्नं बुभुक्षमाणस्तु त्रिर्मुखेन स्पृशेदपः ॥ ५५ ॥ भुक्त्वा चान्नं तथैव त्रिर्द्विः पुनः परिमार्ज्जयेत्। प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ॥ ५६ ॥ प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत्। आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ॥५७॥ धन्यं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः। अग्निमालभ्य तोयेन सर्वान् प्राणानुपस्पृशेत् ॥ ५८ ॥ गात्राणि चैव सर्वाणि नाभिं पाणितले तथा। नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः ॥ ५९ ॥ अन्यस्य चाप्यवस्नातं दूरतः परिवर्ज्जयेत्। शान्तिहोमांश्च कुर्वीत सावित्राणि च धारयेत् ॥ ६० ॥ निषसश्चापि खादेत न तु गच्छन् कदाचन। मूत्रं नोत्तिष्ठता कार्य्यं न भस्मनि न गोव्रजे ॥ ६१ ॥ आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्। आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ॥ ६२ ॥ त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन। अग्निं गां ब्राह्मणञ्चैव तथा ह्यायुर्न हीयते ॥ ६३ ॥ त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन। सूर्य्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ॥ ६४ ॥ ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। अभ्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ ६५ ॥ अभिवादयेत वृद्धांश्च दद्याच्चैवासनं स्वयम्। कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ॥ ६६ ॥ न चासीतासने भिन्ने भिन्नकांस्यञ्च वर्ज्जयेत्। नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति ॥ ६७ ॥ स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत्। उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ ६८ ॥ केशग्रहं प्रहारांश्च शिरस्येतान् विवर्ज्जयेत्। न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः ॥ ६९ ॥ न चाभीक्ष्णं शिरः स्नायात्तथास्यायुर्न रिष्यते। शिरः स्नातश्च तैलैश्च नाङ्गं किञ्चि-

दपि स्पृशेत्॥ ७० ॥ तिलभृष्टं न चाश्नीयात्तथास्यायुर्न रिष्यते।
नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन॥ ७१ ॥ वाते च पूति-
गन्धे च मनसापि न चिन्तयेत्। अत्र गाथा यमोद्गीताः कीर्त्त-
यन्ति पुराविदः॥ ७२ ॥ आयुरस्य निकृन्तामि प्रजास्तस्याददे
तथा। य उच्छिष्टः प्रद्रवति स्वाध्यायञ्चाधिगच्छति ॥ ७३ ॥
यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः। तस्य वेदः प्रणश्येत
आयुश्च परिहीयते ॥ ७४ ॥ तस्माद्युक्तो ह्यनध्याये नाधीयीत
कदाचन। प्रत्यादित्यं प्रत्यनलं प्रतिगाञ्च प्रतिद्विजान्॥ ७५ ॥ ये
मेहन्ति च पन्थानं ते भवन्ति गतायुषः। उभे मूत्रपुरीषे तु दिवा
कुर्य्यादुदङ्मुखः॥ ७६ ॥ दक्षिणाभिमुखो रात्रौ तथा ह्यायुर्न
रिष्यते। त्रीन् कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः॥ ७७ ॥
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः। दहत्याशीविषः क्रुद्धो
यावत् पश्यति चक्षुषा॥ ७८ ॥ क्षत्रियोऽपि दहेत् क्रुद्धो यावत्
पश्यति तेजसा। ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च॥७९॥
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः। गुरुणा चैव निर्ब्बन्धो न
कर्त्तव्यः कदाचन॥ ८० ॥ अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधि-
ष्ठिर। सम्यङ्मिथ्याप्रवृत्तेऽपि वर्त्तितव्यं गुराविह॥ ८१ ॥ गुरु-
निन्दा दहत्यायुर्म्मनुष्याणां न संशयः। दूरादावसथान् मूत्रं
दूरात् पादावसेचनम्॥ ८२ ॥ उच्छिष्टोत्सर्ज्जनं चैव दूरे कार्य्यं
हितैषिणा। रक्तमाल्यं न धार्य्यं स्यात् शुक्लं धार्य्यन्तु पण्डितैः
॥ ८३ ॥ वर्ज्जयित्वा तु कमलं तथा कुवलयं प्रभो। रक्तं शिरसि
धार्य्यन्तु तथा वानेयमित्यपि॥ ८४ ॥ काञ्चनीयापि माला या न
सा दुष्यति कर्हिचित्। स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशा-
म्पते॥ ८५ ॥ विपर्य्ययं न कुर्व्वीत वाससो बुद्धिमान्नरः। तथा
नान्यधृतं धार्य्यं न चापदशमेव च॥ ८६ ॥ अन्यदेव भवेद्वासः
शयनीये नरोत्तम। अन्यद्रथ्यासु देवानामर्च्चायामन्यदेव हि॥८७॥

प्रियङ्गुचन्दनाभ्याञ्च विल्वेन तगरेण च। पृथगेवानुलिम्पेत केशरेण च बुद्धिमान् ॥ ८८ ॥ उपवासञ्च कुर्वीत स्नातः शुचिरलङ्कृतः। पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ॥ ८९ ॥ समानमेकपात्रे तु भुञ्जेन्नान्यं जनेश्वर। आलीढ़या परिक्षतं भक्षयीत कदाचन ॥ ९० ॥ तथा नोद्धृतसाराणि प्रेक्षते नाप्रदाय च। न सन्निकृष्टो मेधावी नाशुचेर्न च सत्सु च ॥ ९१ ॥ प्रतिषिद्धान्न धर्मेषु भक्ष्यान् भुञ्जीत पृष्ठतः। पिप्पलञ्च वटञ्चैव शणशाकं तथैव च ॥ ९२ ॥ उडुम्बरं न खादेच्च भवार्थी पुरुषोत्तमः। आजं गव्यं तथा मांसं मायूरञ्चैव वर्ज्जयेत् ॥ ९३ ॥ वर्ज्जयेच्छुष्कमांसञ्च तथा पर्य्युषितञ्च यत्। न पाणौ लवणं विद्वान् प्राश्नीयान्न च रात्रिषु ॥ ९४ ॥ दधिसक्तून्न भुञ्जीत वृथामांसञ्च वर्ज्जयेत्। सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ॥ ९५ ॥ बालेन तु न भुञ्जीत परश्राद्धं तथैव च। वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन ॥ ९६ ॥ भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत्। तोयपूर्वं प्रदायान्नमतिथिभ्यो विशेषतः ॥ ९७ ॥ पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः। समानमेकपंक्त्यान्तु भोज्यमन्नं नरेश्वर ॥ ९८ ॥ विषं हलाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने। पानीयं पायसं शक्तून् दधिसर्पिर्मधून्यपि ॥ ९९ ॥ निरस्य शेषमेतेषां न प्रदेयन्तु कस्यचित्। भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ॥ १०० ॥ दधि चाप्यनुपानं वै कर्त्तव्यञ्च भवार्थिना। आचम्य चैकहस्तेन परिस्राव्यं तथोदकम् ॥ १०१ ॥ अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत्। पाणिं मूर्द्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः ॥ १०२ ॥ ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः। अद्भिः प्राणान् समालभ्य नाभिं पाणितले तथा ॥ १०३ ॥ स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना। अङ्गुष्ठस्यान्तराले च ब्राह्मं तीर्थमुदाहृतम् ॥ १०४ ॥ कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहो-

च्यते। अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत॥१०५॥ तेन पित्र्याणि कुर्वीत स्पृष्टापो न्यायतस्तथा। परापवादं न ब्रूया-न्नाप्रियञ्च कदाचन॥१०६॥ न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना। पतितैस्तु कथां नेच्छेद्दर्शनञ्च विवर्जयेत्॥१०७॥ संसर्गं न च गच्छेत तथायुर्विन्दते महत्। न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम्॥१०८॥ न चास्नातां स्त्रियं गच्छेत्तथायु-र्विन्दते महत्। स्वे स्वे तीर्थे समाचम्य कार्य्ये समुपकल्पिते॥१०९॥ त्रिः पीत्वापो द्विः प्रमृज्य कृतशौचो भवेन्नरः। इन्द्रियाणि सकृत् स्पृश्य त्रिरभ्युच्य च मानवः॥११०॥ कुर्वीत पित्र्यं दैवञ्च वेद-दृष्टेन कर्म्मणा। ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव॥१११॥ पवित्रञ्च हितञ्चैव भोजनाद्यन्तयोस्तथा। सर्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत्॥११२॥ निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत्। वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि॥११३॥ गृहे वासयितव्यास्ते धन्यमायुष्यमेव च। गृहे पारा-वता धन्याः शुकाश्च सहसारिकाः॥११४॥ गृहेष्वेते न पापाय तथा वै तैलपायिकाः। उद्दीपकाश्च गृध्राश्च कपोता भ्रमरा-स्तथा॥११५॥ निविशेयुर्यदा तत्र शान्तिमेव तदाचरेत्। अम-ङ्गल्यानि चैतानि तथोत्क्रोशा महात्मनाम्॥११६॥ महात्मनो-ऽतिगुह्यानि न वक्तव्यानि कर्हिचित्। अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीं तथा॥११७॥ वैद्यानां बालवृद्धानां भृत्यानाञ्च युधिष्ठिर। बन्धूनां ब्राह्मणानाञ्च तथा शारणिकस्य च॥११८॥ सम्बन्धिनाञ्च राजेन्द्र तथायुर्विन्दते महत्। ब्राह्मणस्थपतिभ्याञ्च निर्मितं यन्निवेशनम्॥११९॥ तदावसेत् सदा प्राज्ञो भवार्थी मनुजेश्वर। सन्ध्यायां न स्वपेद्राजन् विद्यां न च समाचरेत्॥१२०॥ न भुञ्जीत च मेधावी तथायुर्विन्दते महत्। नक्तं न कुर्य्यात् पित्र्याणि भुक्त्वा चैव प्रसाधनम्॥१२१॥ पानीयस्य क्रिया नक्तं

न कार्य्या भूतिमिच्छता । वर्ज्जनीयाश्च वै नित्यं सक्तवो निशि भारत ॥ १२२ ॥ शेषाणि चावदातानि पानीयञ्चापि भोजने । सौहित्यं न च कर्त्तव्यं रात्रौ न च समाचरेत् ॥ १२३ ॥ द्विजच्छेदं न कुर्वीत भुक्त्वा न च समाचरेत् । महाकुले प्रसूताञ्च प्रशस्तां लक्षणैस्तथा ॥ १२४ ॥ वयस्थाञ्च महाप्राज्ञः कन्यामावोढुमर्हति । अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं ततः ॥ १२५ ॥ पुत्राः प्रदेया ज्ञानेषु कुलधर्म्मेषु भारत । कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते ॥ १२६ ॥ पुत्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत । शिरःस्नातोऽथ कुर्वीत दैवं पित्र्यमथापि वा ॥ १२७ ॥ नक्षत्रे न च कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रोष्ठपदयोः कार्य्यं तथाग्नेये च भारत ॥ १२८ ॥ दारुणेषु च सर्व्वेषु प्रत्यरिञ्च विवर्ज्जयेत् । ज्योतिषे यानि चोक्तानि तानि सर्व्वाणि भारत ॥ १२९ ॥ प्राङ्मुखः श्मश्रुकर्म्माणि कारयेत् सुसमाहितः । उदङ्मुखो वा राजेन्द्र तथायुर्विन्दते महत् ॥ १३० ॥ परिवादं न च ब्रूयात् परेषामात्मनस्तथा । परिवादो ह्यधर्म्माय प्रोच्यते भरतर्षभ ॥१३१॥ वर्ज्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम । समार्षां व्यङ्गिताञ्चैव मातुः सकुलजां तथा ॥ १३२ ॥ वृद्धां प्रव्रजिताञ्चैव तथैव च पतिव्रताम् । अयोनिञ्च वियोनिञ्च न च गच्छेद्विचक्षणः ॥ १३३॥ पिङ्गलां कुष्ठिनीं नारीं न त्वमावोढुमर्हसि । अपस्मारिकुले जातां निहीनाञ्चैव वर्ज्जयेत् ॥ १३४ ॥ श्वित्रिणाञ्च कुले जातां क्षयिणां मनुजेश्वर । लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ॥१३५॥ मनोज्ञा दर्शनीया च तां भवान् वोढुमर्हसि । महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ॥ १३६ ॥ अवरा पतिता चैव न ग्राह्या भूतिमिच्छता । अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः ॥ १३७ ॥ वेदे च ब्राह्मणैः प्रोक्तास्ताश्च सर्व्वाः समाचरेत् । न चेर्ष्या स्त्रीषु कर्त्तव्या रक्ष्या दाराश्च सर्व्वशः ॥ १३८ ॥ अनायुष्या

भवेदीर्ष्या तस्मादीर्ष्यां विवर्ज्जयेत्। अनायुष्यं दिवा स्वप्नं तथाभ्युदितशायिता ॥ १३९ ॥ प्रगे निशामाशु तथा ये चोच्छिष्टाः स्वपन्ति वै। पारदार्य्यमनायुष्यं नापितोच्छिष्टता तथा ॥ १४० ॥ यत्नतो नैव कर्त्तव्यमभ्यासश्चैव भारत। सन्ध्यायां न च भुञ्जीत न स्नायेन्न पठेत्तथा ॥ १४१ ॥ प्रयतश्च भवेत्तस्यां न च किञ्चित् समाचरेत्। ब्राह्मणान् पूजयेच्चापि तथा स्नात्वा नराधिप ॥१४२॥ देवांश्च प्रणमेत् स्नातो गुरूंश्चाप्यभिवादयेत्। अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः ॥ १४३ ॥ अनर्च्चिते ह्यनायुष्यं गमनं तत्र भारत। न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि ॥ १४४॥ अनागतायां सन्ध्यायामागत्य च गृहे वसेत्। मातुः पितुर्गुरूणाञ्च कार्य्यमेवानुशासनम् ॥ १४५ ॥ हितं वाप्यहितं वापि न विचार्य्यं कथञ्चन। धनुर्व्वेदे च वेदे च यत्नः कार्य्यो नराधिप ॥ १४६ ॥ हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्य्यासु चैव ह। यत्नवान् भव राजेन्द्र यत्नवान् सुखमेधते ॥ १४७ ॥ अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च। प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् ॥ १४८ ॥ युक्तिशास्त्रञ्च ते ज्ञेयं शब्दशास्त्रञ्च भारत। गान्धर्व्वशास्त्रञ्च कलाः परिज्ञेया नराधिप ॥ १४९ ॥ पुराणमितिहासश्च तथाख्यानानि यानि च। महात्मनाञ्च चरितं श्रोतव्यं नित्यमेव च ॥ १५० ॥ पत्नी रजस्वला या च नाभिगच्छेन्न चाह्वयेत्। स्नाताञ्चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥ १५१ ॥ पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत्। एतेन विधिना पत्नीमुपागच्छेत पण्डितः ॥ १५२ ॥ ज्ञातिसम्बन्धिमित्राणि पूजनीयानि सर्व्वशः। यष्टव्यञ्च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥ १५३ ॥ अत ऊर्द्ध्वमरण्यञ्च सेवितव्यं नराधिप। एष ते लक्षणोद्देश आयुष्याणां प्रकीर्त्तितः ॥ १५४ ॥ शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्य्यो युधिष्ठिर। आचारो भूतिजनन आचारः कीर्त्तिवर्द्धनः ॥ १५५ ॥ आचारा-

दर्द्धते ह्यायुराचारो हन्त्यलक्षणम् । आगमानां हि सर्व्वेषामाचारः श्रेष्ठ उच्यते ॥ १५६ ॥ आचारप्रभवो धर्म धर्मादायुर्व्विवर्द्धते । एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् । अनुकम्प्य सर्व्ववर्णान् ब्रह्मणा समुदाहृतम् ॥ १५७ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि आयुष्याख्याने चतुरधिकशतोऽध्यायः ॥ १०४ ॥

---

युधिष्ठिर उवाच । यथा ज्येष्ठः कनिष्ठेषु वर्त्तते भरतर्षभ । कनिष्ठाश्च यथा ज्येष्ठे वर्त्तेरंस्तद्ब्रवीहि मे ॥ १ ॥

भीष्म उवाच । ज्येष्ठवत्तात वर्त्तस्व ज्येष्ठोऽसि सततं भवान् । गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ २ ॥ न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्त्तितुम् । गुरोर्हि दीर्घवृत्तित्वं यत्तच्छिष्यस्य भारत ॥ ३ ॥ अन्धः स्यादन्धवेलायां जड़ः स्यादपि वा बुधः । परिहारेण तद्ब्रूयाद्यस्तेषां स्यादयतिक्रमः ॥ ४ ॥ प्रत्यक्षं भिन्नहृदया भेदयेयुः कृतं नराः । श्रियाभितप्ताः कौन्तेय भेदकामास्तथारयः ॥ ५ ॥ ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः । हन्ति सर्व्वमपि ज्येष्ठः कुलं यत्र च जायते ॥ ६ ॥ अथ यो विनिकुर्व्वीत ज्येष्ठो भ्राता यवीयसः । अज्येष्ठः स्यादभागश्च नियम्यो राजभिश्च सः ॥ ७ ॥ निकृती हि नरो लोकान् पापान् गच्छत्यसंशयम् । विदुलस्येव तत् पुष्पं मोघं जनयितुः स्मृतम् ॥ ८ ॥ सर्व्वानर्थः कुले यत्र जायते पापपूरुषः । अकीर्त्तिं जनयत्येव कीर्त्तिमन्तर्द्दधाति च ॥ ९ ॥ सर्व्वे चापि विकर्म्मस्था भागं नार्हन्ति सोदराः । नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्व्वीत यौतकम् ॥ १० ॥ अनुपघ्नन् पितुर्दायं जङ्घाश्रमफलोऽध्वगः । स्वयमीहितलब्धन्तु नाकामो दातुमर्हति ॥ ११ ॥ भ्रातॄणामविभक्तानामुत्थानमपि चेत्

सह। न पुत्रभागं विषमं पिता दद्यात् कदाचन ॥ १२ ॥ न ज्येष्ठो नावमन्येत दुष्कृतः प्राकृतोऽपि वा। यदि स्त्री यद्यवरजः श्रेयश्चेत्तत्तदाचरेत् ॥ १३ ॥ धर्म्मं हि श्रेय इत्याहुरिति धर्म्मविदो जनाः। दशाचार्य्यानुपाध्याय उपाध्यायात् पिता दश ॥१४॥ दश चैव पितृन्माता सर्वां वा पृथिवीमपि। गौरवेणाभिभवति नास्ति मातृसमो गुरुः ॥ १५ ॥ माता गरीयसी यच्च तेनैतां मन्यते जनः। ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ॥ १६ ॥ स ह्येषां वृत्तिदाता स्यात् स चैतान् प्रतिपालयेत्। कनिष्ठास्तं नमस्येरन् सर्वे छन्दानुवर्त्तिनः ॥ १७ ॥ तमेव चोपजीवेरन् यथैव पितरं तथा। शरीरमेतौ सृजतः पिता माता च भारत ॥ १८ ॥ आचार्य्यशास्ता या जातिः सा सत्या साजरामरा। ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ। भ्रातुर्भार्य्या च तद्वत् स्यात् यस्या बाल्ये स्तनं पिबेत् ॥ १९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि ज्येष्ठकनिष्ठधर्म्मकथने पञ्चाधिकशतोऽध्यायः ॥ १०५ ॥

---

युधिष्ठिर उवाच। सर्वेषामेव वर्णानां म्लेच्छानाञ्च पितामह। उपवासे मतिरियं कारणञ्च न विद्महे ॥ १ ॥ ब्रह्मचत्रेण नियमाश्चर्त्तव्या इति नः श्रुतम्। उपवासे कथं तेषां कृत्यमस्ति पितामह ॥ २ ॥ नियमांश्चोपवासांश्च सर्वेषां ब्रूहि पार्थिव। आप्नोति कां गतिं तात उपवासपरायणः ॥ ३ ॥ उपवासः परं पुण्यमुपवासः परायणम्। उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ॥ ४ ॥ अधर्मान्मुच्यते केन धर्म्ममाप्नोति वा कथम्। स्वर्गं पुण्यञ्च लभते कथं भरतसत्तम ॥ ५ ॥ उपोष्य चापि किं तेन प्रदेयं स्यान्नराधिप। धर्म्मेण च सुखानर्थान् लभेद्येन ब्रवीहि तम् ॥६॥

वैशम्पायन उवाच। एवं ब्रुवाणं कौन्तेयं धर्म्मज्ञं धर्म्मतत्त्ववित्। धर्म्मपुत्रमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥ ७ ॥

भीष्म उवाच। इदं खलु मया राजन् श्रुतमासीत् पुरातनम्। उपवासविधौ श्रेष्ठा गुणा ये भरतर्षभ ॥ ८ ॥ ऋषिमङ्गिरसं पूर्वं पृष्टवानस्मि भारत। यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनम् ॥ ९ ॥ प्रश्नमेतन्मया पृष्टो भगवानग्निसम्भवः। उपवासविधिं पुण्यमाचष्ट भरतर्षभ ॥ १० ॥

अङ्गिरा उवाच। ब्रह्मक्षत्रे त्रिरात्रञ्च विहितं कुरुनन्दन। द्विस्त्रिरात्रमथैकाहं निर्द्दिष्टं पुरुषर्षभ ॥ ११ ॥ वैश्याः शूद्राश्च यन्मोहादुपवासं प्रचक्रिरे। त्रिरात्रं वा द्विरात्रं वा तयोर्व्युष्टिर्न विद्यते ॥ १२ ॥ चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते। त्रिरात्रं न तु धर्म्मज्ञैर्विहितं धर्म्मदर्शिभिः ॥ १३ ॥ पञ्चम्यां वापि षष्ठ्याञ्च पौर्णमास्याञ्च भारत। उपोष्य एकभक्तेन नियतात्मा जितेन्द्रियः ॥ १४ ॥ क्षमावान् रूपसम्पन्नः श्रुतवांश्चैव जायते। नानपत्यो भवेत् प्राज्ञो दरिद्रो वा कदाचन ॥ १५ ॥ यजिष्णुः पञ्चमीं षष्ठीं कुलेभ्यो भोजयेद्द्विजान्। अष्टमीमथ कौरव्य कृष्णपक्षे चतुर्द्दशीम् ॥ १६ ॥ उपोष्य व्याधिरहितो वीर्य्यवानभिजायते। मार्गशीर्षन्तु यो मासमेकभक्तेन सङ्क्षपेत् ॥ १७ ॥ भोजयेच्च द्विजान् भक्त्या स मुच्येद्व्याधिकिल्विषैः। सर्व्वकल्याणसम्पूर्णः सर्व्वौषधिसमन्वितः ॥१८॥ उपोष्य व्याधिरहितो वीर्य्यवानभिजायते। कृषिभागी बहुधनो बहुधान्यश्च जायते ॥ १९ ॥ पौषमासन्तु कौन्तेय भक्तेनैकेन यः क्षपेत्। सुभगो दर्शनीयश्च यशोभागी च जायते ॥ २० ॥ माघन्तु नियतो मासमेकभक्तेन यः क्षपेत्। श्रीमत्कुले ज्ञातिमध्ये स महत्त्वं प्रपद्यते ॥ २१ ॥ भगदैवतमासन्तु एकभक्तेन यः क्षपेत्। स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः ॥ २२ ॥ चैत्रन्तु नियतो मासमेकभक्तेन यः क्षपेत्। सुवर्णमणिमुक्ताढ्ये कुले

महति जायते॥ २३ ॥ निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः।
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत्॥ २४ ॥ ज्येष्ठा-
मूलन्तु यो मासमेकभक्तेन सङ्क्षपेत्। ऐश्वर्य्यमतुलं श्रेष्ठं पुमान्
स्त्री वा प्रपद्यते॥ २५॥ आषाढ़मेकभक्तेन स्थित्वा मासमतन्द्रितः।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते॥ २६ ॥ श्रावणं नियतो
मासमेकभक्तेन यः क्षपेत्। यत्र तत्राभिषेकेण पूज्यते ज्ञाति-
वर्द्धनः॥ २७ ॥ प्रोष्ठपदन्तु यो मासमेकाहारो भवेन्नरः। धनाढ्यं
स्फीतमचलमैश्वर्य्यं प्रतिपद्यते॥ २८॥ तथैवाश्वयुजं मासमेक-
भक्तेन यः क्षपेत्। मृजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते
॥ २९ ॥ कार्त्तिकन्तु नरो मासं यः कुर्य्यादेकभोजनम्। शूरश्च
बहुभार्य्यश्च कीर्त्तिमांश्चैव जायते॥ ३० ॥ इति मासा नरव्याघ्र
क्षपतां परिकीर्त्तिताः। तिथीनां नियमा ये तु शृणु तानपि
पार्थिव॥३१॥ पक्षे पक्षे गते यस्तु भक्तमश्नाति भारत। गवाढ्यो
बहुपुत्रश्च दीर्घायुश्च स जायते॥ ३२ ॥ मासि मासि त्रिरात्राणि
कृत्वा वर्षाणि द्वादश। गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलम्
॥ ३३ ॥ एते तु नियमाः सर्वे कर्त्तव्याः शरदो दश। द्वे चान्ये
भरतश्रेष्ठ प्रवृत्तिमनुवर्त्तताम्॥ ३४ ॥ यस्तु प्रातस्तथा सायं
भुञ्जानो नान्तरा पिबेत्। अहिंसा निरतो नित्यं जुह्वानो जात-
वेदसम्॥ ३५ ॥ षड्भिः स वर्षैर्नृपते सिध्यते नात्र संशय।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः॥ ३६ ॥ अधिवासे
सोऽप्सरसां नृत्यगीतविनादिते। रमते स्त्रीसहस्राढ्ये सुकृती
विरजा नरः॥ ३७॥ तप्तकाञ्चनवर्णाभं विमानमधिरोहति।
पूर्णं वर्षसहस्रञ्च ब्रह्मलोके महीयते॥ ३८॥ तत्क्षयादिह
चागम्य माहात्म्यं प्रतिपद्यते। यस्तु सम्वत्सरं पूर्णमेकाहारो
भवेन्नरः॥ ३९ ॥ अतिरात्रस्य यज्ञस्य स फलं समुपाश्नुते। दश-
वर्षसहस्राणि स्वर्गे च स महीयते॥ ४० ॥ तत्क्षयादिह चागम्य

माहात्म्यं प्रतिपद्यते । यस्तु सम्वत्सरं पूर्णं चतुर्थं भक्तमश्नुते ॥४१॥ अहिंसानिरतो नित्यं सत्यवाग्विजितेन्द्रियः । वाजपेयस्य यज्ञस्य स फलं समुपाश्नुते ॥ ४२ ॥ दशवर्षसहस्राणि स्वर्गलोके महीयते । षष्ठे काले तु कौन्तेय नरः सम्वत्सरं क्षपन् ॥ ४३ ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः । चक्रवाकप्रयुक्तेन विमानेन स गच्छति ॥ ४४ ॥ चत्वारिंशत्सहस्राणि वर्षाणां दिवि मोदते । अष्टमेन तु भक्तेन जीवेत् सम्वत्सरं नृप ॥ ४५ ॥ गवामयस्य यज्ञस्य फलं प्राप्नोति मानवः । हंससारसयुक्तेन विमानेन स गच्छति ॥ ४६ ॥ पञ्चाशत्तु सहस्राणि वर्षाणां दिवि मोदते । पक्षे पक्षे गते राजन् योऽश्नीयाद्वर्षमेव तु ॥ ४७ ॥ षण्मासानशनं तस्य भगवानङ्गिराब्रवीत् । षष्टिं वर्षसहस्राणि दिवमावसते च सः ॥ ४८ ॥ वीणानां वल्लकीनाञ्च वेणुनाञ्च विशाम्पते । सुघोषैर्मधुरैः शब्दैः सुप्तः सः प्रतिबोध्यते ॥ ४९ ॥ सम्वत्सरमिहैकन्तु मासि मासि पिवेदपः । फलं विश्वजितस्तात प्राप्नोति स नरो नृप ॥ ५० ॥ सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति । सप्ततिञ्च सहस्राणि वर्षाणां दिवि मोदते ॥ ५१ ॥ मासादूर्द्ध्वं नरव्याघ्र नोपवासो विधीयते । विधिं त्वनशनस्याहुः पार्थ धर्म्मविदो जनाः ॥ ५२ ॥ अनार्त्तो व्याधिरहितो गच्छेदनशनन्तु यः । पदे पदे यज्ञफलं समाप्नोति न संशयः ॥ ५३ ॥ दिवं हंसप्रयुक्तेन विमानेन स गच्छति । शतं वर्षसहस्राणां मोदते स दिवि प्रभुः ॥ ५४ ॥ शतञ्चाप्सरसः कन्या रमयन्त्यपि तं नरम् । आर्त्तो वा व्याधितो वापि गच्छेदनशनन्तु यः ॥ ५५ ॥ शतं वर्षसहस्राणां मोदते स दिवि प्रभो । काञ्चीनूपुरशब्देन सुप्तश्चैव प्रबोध्यते ॥ ५६ ॥ सहस्रहंसयुक्तेन विमानेन तु गच्छति । स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ ॥ ५७ ॥ क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणम् । व्याधितस्यौषधग्रामः क्रुद्धस्य च

प्रसादनम् ॥ ५८ ॥ दुःखितस्यार्थमानाभ्यां दुःखानां प्रतिषेधनम् । न चैते स्वर्गकामस्य रोचन्ते सुखमेधसः ॥ ५९ ॥ अतः स काम-संयुक्तो विमाने हेमसन्निभे । रमते स्त्रीशताकीर्णे पुरुषोऽलङ्कृतः शुचिः ॥ ६० ॥ स्वस्थः सफलसङ्कल्पः सुखी विगतकल्मषः । अन-श्नन् देहमुत्सृज्य फलं प्राप्नोति मानवः ॥ ६१ ॥ बालसूर्य्यप्रती-काशे विमाने हेमवर्णके । वैदूर्य्यमुक्ताखचिते वीणामुरजनादिते ॥ ६२ ॥ पताकादीपिकाकीर्णे दिव्यघण्टानिनादिते । स्त्रीसहस्रा-नुचरिते स नरः सुखमेधते ॥ ६३ ॥ यावन्ति रोमकूपाणि तस्य गात्रेषु पाण्डवः । तावन्त्येव सहस्राणि वर्षाणि दिवि मोदते ॥६४॥ नास्ति वेदात् परं शास्त्रं नास्ति मातृसमो गुरुः । न धर्मात् परमो लाभस्तपो नानशनात् परम् ॥ ६५ ॥ ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च । उपवासैस्तथा तुल्यं तपःकर्म्म न विद्यते ॥ ६६ ॥ उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे । ऋष-यश्च परां सिद्धिमुपवासैरवाप्नुवन् ॥ ६७ ॥ दिव्यं वर्षसहस्राणि विश्वामित्रेण धीमता । क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतः ॥ ६८ ॥ च्यवनो जमदग्निश्च वशिष्ठो गौतमो भृगुः । सर्व एव दिवं प्राप्ताः क्षमावन्तो महर्षयः ॥ ६९ ॥ इदमङ्गिरसा पूर्वं मह-र्षिभ्यः प्रदर्शितम् । यः प्रदर्शयते नित्यं न स दुःखमवाप्नुयात् ॥ ७० ॥ इमन्तु कौन्तेय यथाक्रमं विधिं प्रवर्त्तितं ह्यङ्गिरसा महर्षिणा । पठेच्च यो वै शृणुयाच्च नित्यदा न विद्यते तस्य नरस्य किल्बिषम् ॥ ७१ ॥ विमुच्यते चापि स सर्वसङ्करैर्न चास्य दोषैरभिभूयते मनः । वियोनिजानाञ्च विजानते रुतं ध्रुवाञ्च कीर्त्तिं लभते नरोत्तमः ॥ ७२ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने उपवासविधौ षडधिकशतोऽध्यायः ॥ १०६ ॥

---

युधिष्ठिर उवाच। पितामहेन विधिवद्यज्ञाः प्रोक्ता महात्मना। गुणाश्चैषां यथातथ्यं प्रेत्य चेह च सर्व्वशः ॥ १ ॥ न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह। बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥ २ ॥ पार्थिवै राजपुत्रैर्वा शक्याः प्राप्तुं पितामह। नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ॥ ३ ॥ यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत्। तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह ॥ ४ ॥

भीष्म उवाच। इदमङ्गिरसा प्रोक्तमुपवासफलात्मकम्। विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर ॥ ५ ॥ यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत्। अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ॥ ६ ॥ षड्भिरेव स वर्षैस्तु सिध्यते नात्र संशयः। तप्तकाञ्चनवर्णञ्च विमानं लभते नरः ॥ ७ ॥ देवस्त्रीणामधीवासे नृत्यगीतनिनादिते। प्राजापत्ये वसेत् पद्मं वर्षाणामग्निसन्निभे ॥ ८ ॥ त्रीणि वर्षाणि यः प्राशेत् सततन्त्वेकभोजनम्। धर्म्मपत्नीरतो नित्यमग्निष्टोमफलं लभेत् ॥ ९ ॥ यज्ञं बहुसुवर्णं वा वासवप्रियमाचरेत्। सत्यवाग्दानशीलश्च ब्रह्मण्यश्चानसूयकः ॥१०॥ क्षान्तो दान्तो जितक्रोधः स गच्छति परां गतिम्। पाण्डुराभ्रप्रतीकाशे विमाने हंसलक्षणे ॥ ११ ॥ द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत् सह। द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ॥ १२ ॥ सदा द्वादशमासांस्तु जुह्वानो जातवेदसम्। अग्निकार्य्यपरो नित्यं नित्यं कल्यप्रबोधनः ॥ १३ ॥ अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः। हंससारसयुक्तञ्च विमानं लभते नरः ॥१४॥ इन्द्रलोके च वसते वरस्त्रीभिः समावृतः। तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ॥ १५ ॥ सदा द्वादशमासांस्तु जुह्वानो जातवेदसम्। अग्निकार्य्यपरो नित्यं नित्यं कल्यप्रबोधनः ॥ १६ ॥ अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम्। मयूरहंससंयुक्तं विमानं

लभते नरः॥ १७॥ सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत् सह। निवर्त्तनञ्च तत्रास्य त्रीणि पद्मानि वै विदुः॥ १८॥ दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम्। सदा द्वादशमासान् वै जुह्वानो जातवेदसम्॥ १९॥ वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम्। इन्द्रकन्याधिरूढ़ञ्च विमानं लभते नरः॥ २०॥ सागरस्य च पर्य्यन्ते वासवं लोकमावसेत्। देवराजस्य च क्रीड़ां नित्यकालमवेक्षते॥ २१॥ दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनम्। सदा द्वादशमासांस्तु जुह्वानो जातवेदसम्॥ २२॥ अलुब्धः सत्यवादी च ब्रह्मण्यश्चाविहिंसकः। अनसूयुरपापस्थो वाजपेयफलं लभेत्॥ २३॥ जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम्। सूर्य्यमालासमाभासमारोहेत् पाण्डुरं गृहम्॥ २४॥ आवर्त्तनानि चत्वारि तथा पद्मानि द्वादश। शराग्निपरिमाणञ्च तत्रासौ वसते सुखम्॥ २५॥ दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनम्। सदा द्वादशमासान् वै जुह्वानो जातवेदसम्॥ २६॥ सदा त्रिषवणस्नायी ब्रह्मचर्य्यनसूयकः। गवां मेधस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम्॥ २७॥ अग्निज्वालासमाभासं हंसबर्हिणसेवितम्। शातकुम्भसमायुक्तं साधयेद्यानमुत्तमम्॥ २८॥ तथैवाप्सरसामङ्के प्रतिसुप्तः प्रबोध्यते। नूपुराणां निनादेन मेखलानाञ्च निस्वनैः॥ २९॥ कोटीसहस्रं वर्षाणां त्रीणि कोटिशतानि च। पद्मान्यष्टादश तथा पताके द्वे तथैव च॥ ३०॥ अयुतानि च पञ्चाशदृक्षचर्म्मशतस्य च। लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते॥ ३१॥ दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम्। सदा द्वादशमासान् वै जुह्वानो जातवेदसम्॥ ३२॥ सरस्वतीं गोपयानो ब्रह्मचर्य्यं समाचरेत्। सुमनो वर्णकञ्चैव मधुमांसञ्च वर्ज्जयेत्॥ ३३॥ पुरुषो मरुतां लोकमिन्द्रलोकं स गच्छति। तत्र तत्र च सिद्धार्थो देवकन्याभिरर्च्यते॥ ३४॥ फलं बहुसुवर्णस्य

यज्ञस्य लभते नरः। संख्यामतिगुणां वापि तेषु लोकेषु मोदते
॥ ३५ ॥ यस्तु सम्वत्सरं दान्तो भुङ्क्तेऽहन्यष्टमे नरः। देव-
कार्य्यपरो नित्यं जुह्वानो जातवेदसम् ॥ ३६ ॥ पौण्डरीकस्य
यज्ञस्य फलं प्राप्नोत्यनुत्तमम् । पद्मवर्णनिभञ्चैव विमानमधि-
रोहति ॥ ३७ ॥ कृष्णाः कनकवर्णाश्च नार्य्यः श्यामास्तथापराः।
वयोरूपविलासिन्यो लभते नात्र संशयः॥ ३८ ॥ यस्तु सम्वत्सरं
भुङ्क्ते नवमे नवमेऽहनि । सदा द्वादशमासान् वै जुह्वानो जात-
वेदसम् ॥ ३९ ॥ अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् । पुण्ड-
रीकप्रकाशञ्च विमानं लभते नरः॥ ४० ॥ दीप्तसूर्य्याग्नितेजोभि-
र्द्दिव्यमालाभिरेव च। नीयते रुद्रकन्याभिः सोऽन्तरीक्षं सना-
तनम् ॥ ४१ ॥ अष्टादशसहस्राणि वर्षाणां कल्पमेव च। कोटी-
शतसहस्रञ्च तेषु लोकेषु मोदते ॥ ४२ ॥ यस्तु सम्वत्सरं भुङ्क्ते
दशाहे वै गते गते। सदा द्वादशमासान् वै जुह्वानो जातवेदसम्
॥ ४३ ॥ ब्रह्मकन्यानिवासे च सर्व्वभूतमनोहरे। अश्वमेधसह-
स्रस्य फलं प्राप्नोत्यसंशयम् ॥ ४४ ॥ रूपवत्यश्च तं कन्या रमयन्ति
सदा नरम् । नीलोत्पलनिभैर्व्वर्णै रक्तोत्पलनिभैस्तथा ॥ ४५ ॥
विमानं मण्डलावर्त्तमावर्त्तगहनाकुलम् । सागरोर्म्मिप्रतीकाशं स
लभेद्यानमुत्तमम् ॥ ४६ ॥ विचित्रमणिमालाभिर्नादितं शङ्ख-
निस्वनैः। स्फाटिकैर्व्वज्रसारैश्च स्तम्भैः सुकृतवेदितम् ॥ ४७ ॥
आरोहति महद्यानं हंससारसनादितम्। कोटीशतसहस्रं स
देवलोके प्रमोदते ॥ ४८ ॥ एकादशे तु दिवसे यः प्राप्ते प्राशते
हविः। सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ४९ ॥ पर-
स्त्रियं नाभिलषेद्वाचाथ मनसापि वा। अनृतञ्च न भाषेत माता-
पित्रोः कृतेऽपि च ॥ ५० ॥ अभिगच्छेन्महादेवं विमानस्थं महा-
बलम्। अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ॥ ५१ ॥ स्वाय-
म्भुवञ्च पश्येत विमानं समुपस्थितम्। कुमार्य्यः काञ्चनाभासा रूप-

वत्यो नयन्ति तम् ॥ ५२ ॥ रुद्राणां तमधीवासं दिवि दिव्यं मनोहरम् । वर्षाण्यपरिमेयाणि युगान्ताग्निसमप्रभः ॥ ५३ ॥ कोटीशतसहस्रञ्च दशकोटिशतानि च । रुद्रं नित्यं प्रणमते देव-दानवसम्मतः ॥ ५४ ॥ स तस्मै दर्शनं प्राप्तो दिवसे दिवसे भवेत् । दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः ॥ ५५ ॥ सदा द्वादश-मासान् वै सर्वमेधफलं लभेत् । आदित्यद्वादशे तस्य विमानं संविधीयते ॥ ५६ ॥ मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितम् । हंसमालापरिक्षिप्तं नागवीथीसमाकुलम् ॥ ५७ ॥ मयूरैश्चक्र-वाकैश्च कूजद्भिरुपशोभितम् । अट्टैर्महद्भिः संयुक्तं ब्रह्मलोके प्रतिष्ठितम् ॥ ५८ ॥ नित्यमावसथं राजन्नरनारी समाकुलम् । ऋषिरेवं महाभागस्त्वङ्गिराः प्राह धर्म्मवित् ॥ ५९ ॥ त्रयोदशे तु दिवसे प्राप्ते यः प्राशते हविः । सदा द्वादशमासान् वै देवसत्र-फलं लभेत् ॥ ६० ॥ रक्तपद्मोदयं नाम विमानं साधयेन्नरः । जातरूपप्रयुक्तन्तु रत्नसञ्चयभूषितम् ॥ ६१ ॥ देवकन्याभिराकीर्णं दिव्याभरणभूषितम् । पुण्यगन्धोदयं दिव्यं वायव्यैरुपशोभितम् ॥ ६२ ॥ तत्र शङ्कुपताके द्वे युगान्तं कल्पमेव च । अयुतायुतं तथापद्मं समुद्रञ्च तथा वसेत् ॥ ६३ ॥ गीतगन्धर्वघोषैश्च भेरी-पणवनिःस्वनैः । सदा प्रह्लादितस्ताभिर्देवकन्याभिरिज्यते ॥ ६४ ॥ चतुर्द्दशे तु दिवसे यः पूर्णे प्राशते हविः । सदा द्वादशमासांस्तु महामेधफलं लभेत् ॥ ६५ ॥ अनिर्द्देश्यवयोरूपा देवकन्याः स्वलङ्कृताः । मृष्टतप्ताङ्गदधरा विमानैरुपयान्ति तम् ॥ ६६ ॥ कलहंसविनिर्घोषैर्नूपुराणाञ्च निःस्वनैः । काञ्चीनाञ्च समुत्कर्षै-स्तत्र तत्र विबोध्यते ॥ ६७ ॥ देवकन्यानिवासे च तस्मिन् वसति मानवः । जाह्नवीवालुकाकीर्णे पूर्णं सम्वत्सरं नरः ॥ ६८ ॥ यस्तु पक्षे गते भुङ्क्ते एकभक्तं जितेन्द्रियः । सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ६९ ॥ राजसूयसहस्रस्य फलं प्राप्नो-

त्यनुत्तमम्। यानमारोहते दिव्यं हंसबर्हिणसेवितम् ॥ ७० ॥ मणिमण्डलकैश्चित्रं जातरूपसमावृतम् । दिव्याभरणशोभाभिर्वरस्त्रीभिरलङ्कृतम् ॥ ७१ ॥ एकस्तम्भञ्चतुर्द्वारं सप्तभौमं सुमङ्गलम्। वैजयन्तीसहस्रैश्च शोभितं गीतनिःस्वनैः ॥ ७२ ॥ दिव्यं दिव्यगुणोपेतं विमानमधिरोहति। मणिमुक्ताप्रवालैश्च भूषितं वैद्युतप्रभम्। दसेद्युगसहस्रञ्च खड्गकुञ्जरवाहनः ॥ ७३ ॥ षोड़शे दिवसे प्राप्ते यः कुर्य्यादेकभोजनम्। सदा द्वादशमासान् वै सोमयज्ञफलं लभेत् ॥ ७४ ॥ सोमकन्यानिवासेषु सोऽध्यावसति नित्यशः। सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् ॥ ७५ ॥ सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च। अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते ॥ ७६ ॥ फलं पद्मशतप्रख्यं महाकल्पं दशाधिकम्। आवर्त्तनानि चत्वारि साधयेच्चाप्यसौ नरः ॥ ७७ ॥ दिवसे सप्तदशमे यः प्राप्ते प्राशते हविः। सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ७८ ॥ स्थानं वारुणमैन्द्रञ्च रौद्रञ्चाप्यधिगच्छति। मारुतोशनसे चैव ब्रह्मलोकं स गच्छति ॥ ७९ ॥ तत्र दैवतकन्याभिरासनेनोपचर्य्यते। भूर्भुवञ्चापि देवर्षिं विश्वरूपमवेक्षते ॥ ८० ॥ तत्र देवाधिदेवस्य कुमार्य्यो रमयन्ति तम्। द्वात्रिंशद्रूपधारिण्यो मधुराः समलङ्कृताः ॥ ८१ ॥ चन्द्रादित्यावुभौ यावत् गगणे चरतः प्रभो। तावच्चरत्यसौ वीरः सुधामृतरसाशनः ॥ ८२ ॥ अष्टादशे यो दिवसे प्राश्नीयादेकभोजनम्। सदा द्वादशमासान् वै सप्त लोकान् स पश्यति ॥ ८३ ॥ रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते। देवकन्याभिरूढ़ैस्तु भ्राजमानैः स्वलंकृतैः ॥ ८४ ॥ सिंहव्याघ्रप्रयुक्तञ्च मेघस्वननिनादितम्। विमानमुत्तमं दिव्यं सुसुखी ह्यधिरोहति ॥ ८५ ॥ तत्र कल्पसहस्रं स कन्याभिः सह मोदते। सुधारसञ्च भुञ्जीत अमृतोपममुत्तमम् ॥ ८६ ॥ एकोनविंशतिदिने यो भुङ्क्ते एकभोजनम्। सदा द्वादशमासान् वै

सप्तलोकान् स पश्यति ॥ ८७ ॥ उत्तमं लभते स्थानमप्सरोगण-सेवितम् । गन्धर्वैरुपगीतञ्च विमानं सूर्य्यवर्चसम् ॥ ८८ ॥ तत्रा-मरवरस्त्रीभिर्मोदते विगतज्वरः । दिव्याम्बरधरः श्रीमानयुतानां शतं शतम् ॥ ८९ ॥ पूर्णेऽथ विंशे दिवसे यो भुङ्क्ते ह्येकभोजनम् । सदा द्वादशमासांस्तु सत्यवादी धृतव्रतः ॥ ९० ॥ अमांसाशी ब्रह्म-चारी सर्वभूतहिते रतः । स लोकान् विपुलान्रम्यानादित्याना-मुपाश्नुते ॥ ९१ ॥ गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः । विमानैः काञ्चनैर्दिव्यैः पृष्ठतश्चानुगम्यते ॥ ९२ ॥ एकविंशे तु दिवसे यो भुङ्क्ते ह्येकभोजनम् । सदा द्वादशमासान् वै जुह्वानो जातवेद-सम् ॥ ९३ ॥ लोकमौशनसं दिव्यं शक्रलोकञ्च गच्छति । अश्विनो-र्मरुताञ्चैव सुखेष्वभिरतः सदा ॥ ९४ ॥ अनभिज्ञश्च दुःखानां विमानवरमास्थितः । सेव्यमानो वरस्त्रीभिः क्रीड़त्यमरवत् प्रभुः ॥ ९५ ॥ द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम् । सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ९६ ॥ अहिंसानिरतो धीमान् सत्यवागनसूयकः । लोकान् वसूनामाप्नोति दिवाकर-समप्रभः ॥ ९७ ॥ कामचारी सुधाहारी विमानवरमास्थितः । रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ ९८ ॥ त्रयोविंशे तु दिवसे यः प्राशेदेकभोजनम् । सदा द्वादशमासांस्तु मिताहारी जिते-न्द्रियः ॥ ९९ ॥ वायोरुशनसश्चैव रुद्रलोकञ्च गच्छति । कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ॥ १०० ॥ अनेकगुणपर्य्यन्तं विमान-वरमास्थितः । रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ १०१ ॥ चतुर्विंशे तु दिवसे यः प्राप्ते प्राशते हविः । सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ १०२ ॥ आदित्यानामधीवासे मोदमानो वसेच्चिरम् । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥ १०३ ॥ विमाने काञ्चने दिव्ये हंसयुक्ते मनोरमे । रमते देवकन्यानां सहस्रैरयुतैस्तथा ॥ १०४ ॥ पञ्चविंशे तु दिवसे यः प्राशेदेक-

भोजनम् । सदा द्वादशमासांस्तु पुष्कलं यानमारुहेत् ॥ १०५ ॥
सिंहव्याघ्रप्रयुक्तैस्तु मेघनिस्वननादितैः । स रथैर्नन्दिघोषैश्च पृष्ठतो
ह्यनुगम्यते ॥ १०६ ॥ देवकन्यासमारूढ़ैः काञ्चनैर्विमलैः शुभैः ।
विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् ॥ १०७ ॥ तत्र कल्प-
सहस्रं वै वसते स्त्रीशतावृते । सुधारसञ्चोपजीवन्नमृतोपममुत्त-
मम् ॥ १०८ ॥ षड्‌विंशे दिवसे यस्तु प्राश्नीयादेकभोजनम् । सदा
द्वादशमासांस्तु नियतो नियताशनः ॥ १०९ ॥ जितेन्द्रियो वीत-
रागो जुह्वानो जातवेदसम् । संप्राप्नोति महाभागः पूज्यमानो-
ऽप्सरोगणैः ॥ ११० ॥ सप्तानां मरुतां लोकान् वसूनाञ्चापि सो-
ऽश्नुते । विमानैः स्फाटिकैर्दिव्यैः सर्वरत्नैरलंकृतैः ॥ १११ ॥ गन्धर्व-
रप्सरोभिश्च पूज्यमानं प्रमोदते । द्वे युगानां सहस्रे तु दिव्ये
दिव्येन तेजसा ॥ ११२ ॥ सप्तविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ११३ ॥ फलं प्राप्नोति
विपुलं देवलोके च पूज्यते । अमृताशी वसंस्तत्र स वितृष्णः
प्रमोदते ॥ ११४ ॥ देवर्षिचरितं राजन् राजर्षिभिरनुष्ठितम् ।
अध्यावसति दिव्यात्मा विमानवरमास्थितः ॥ ११५ ॥ स्त्रीभि-
र्मनोभिरामाभीरममाणो मदोत्कटः । युगकल्पसहस्राणि त्री-
ण्यावसति वै सुखम् ॥ ११६ ॥ योऽष्टाविंशे तु दिवसे प्राश्नीयादेक-
भोजनम् । सदा द्वादशमासांस्तु जितात्मा विजितेन्द्रियः ॥ ११७ ॥
फलं देवर्षिचरितं विपुलं समुपाश्नुते । भोगवांस्तेजसा भाति
सहस्रांशुरिवामलः ॥ ११८ ॥ सुकुमार्य्यश्च नार्य्यस्तं रममाणाः
सुवर्च्चसः । पीनस्तनोरुजघना दिव्याभरणभूषिताः ॥ ११९ ॥ रम-
यन्ति मनःकान्ते विमाने सूर्य्यसन्निभे । सर्वकामगमे दिव्ये कल्पा-
युतशतं समाः ॥ १२० ॥ एकोनत्रिंशे दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासान् वै सत्यव्रतपरायणः ॥ १२१ ॥ तस्य लोकाः
शुभा दिव्या देवराजर्षिपूजिताः । विमानं सूर्य्यचन्द्राभं दिव्यं

समधिगच्छति ॥ १२२ ॥ जातरूपमयं युक्तं सर्वरत्नविभूषितम् । अप्सरोगणसम्पूर्णं गन्धर्वैरभिनादितम् ॥ १२३ ॥ तत्र चैनं शुभा नार्य्यो दिव्याभरणभूषिताः । मनोभिरामा मधुरा रमयन्ति मदोत्कटाः ॥ १२४ ॥ भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः । दिव्यो दिव्येन वपुषा भ्राजमान इवामरः ॥ १२५॥ वसूनां मरुताञ्चैव साध्यानामश्विनोस्तथा । रुद्राणाञ्च तथा लोकं ब्रह्मलोकञ्च गच्छति ॥ १२६ ॥ यस्तु मासे गते भुङ्क्ते एकभक्तं समात्मकः । सदा द्वादशमासान् वै ब्रह्मलोकमवाप्नुयात् ॥ १२७ ॥ सुधारसकृताहारः श्रीमान् सर्वमनोहरः । तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव ॥ १२८ ॥ दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः । सुखेष्वभिरतो योगी दुःखानामविजानकः ॥ १२९॥ स्वयं प्रभाभिर्नारीभिर्विमानस्थो विराजते । रुद्रदेवर्षिकन्याभिः सततञ्चाभिपूज्यते ॥ १३० ॥ नानारमणरूपाभिर्नानारामाभिरेव च । नानामधुरभाषाभिर्नानारतिभिरेव च ॥ १३१ ॥ बिमाने गगणाकारे सूर्य्यवैदूर्य्यसन्निभे । पृष्ठतः सोमसङ्काशे उदर्के चाभ्रसन्निभे ॥१३२॥ दक्षिणायान्तु रक्ताभे अधस्तान्नीलमण्डले । ऊर्द्ध्वं विचित्रसङ्काशे नैको वसति पूजितः ॥ १३३ ॥ यावद्वर्षसहस्रं वै जम्बूद्वीपे प्रवर्षति । तावत् सम्वत्सराः प्रोक्ता ब्रह्मलोकस्य धीमतः ॥ १३४ ॥ विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात् । वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः ॥ १३५ ॥ मासोपवासी वर्षैस्तु दशभिः स्वर्ग्यमुत्तमम् । महर्षित्वमथासाद्य सशरीरगतिर्भवेत् ॥ १३६ ॥ मुनिर्दान्तो जितक्रोधो जितशिश्नोदरः सदा । जुह्वदग्निंश्च नियतः सन्ध्योपासनसेविता ॥ १३७ ॥ बहुभिर्नियमैरेवं शुचिरश्नाति यो नरः । अभ्रावकाशशीलस्य तस्य भानोरिव त्विषः ॥ १३८ ॥ दिवं गत्वा शरीरेण स्वेन राजन् यथामरः । स्वर्गं पुण्यं यथाकाममुपभुङ्क्ते तथाविधः ॥ १३९ ॥ एष ते भरतश्रेष्ठ यज्ञानां विधि-

सत्तम । आख्यातो ह्यानुपूर्व्वेण ह्युपवासफलात्मकः ॥ १४० ॥
दरिद्रैर्मनुजैः पार्थ प्राप्तं यज्ञफलं तथा । उपवासानिमान् कृत्वा
गच्छेच्च परमां गतिम् ॥ १४१ ॥ देवद्विजातिपूजायां रतो भरत-
सत्तम । उपवासविधिस्त्वेष विस्तरेण प्रकीर्त्तितः ॥ १४२ ॥
नियतेष्वप्रमत्तेषु शौचवत्सु महात्मसु । दम्भद्रोहनिवृत्तेषु कृत-
बुद्धिषु भारत । अचलेष्वप्रमत्तेषु मा ते भूदत्र संशयः ॥ १४३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने
उपवासविधौ सप्ताधिकशततोऽध्यायः ॥ १०७ ॥

---

युधिष्ठिर उवाच । यद्वरं सर्वतीर्थानां तन्मे ब्रूहि पिता-
मह । यत्र चैव परं शौचं तन्मे व्याख्यातुमर्हसि ॥ १ ॥
भीष्म उवाच । सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणः ।
यत्तु तीर्थञ्च शौचञ्च तन्मे शृणु समाहितः ॥ २ ॥ अगाधे विमले
शुद्धे सत्यतोये धृतिह्रदे । स्नातव्यं मानसे तीर्थे सत्त्वमालम्ब्य
शाश्वतम् ॥ ३ ॥ तीर्थशौचमनर्थित्वमार्ज्जवं सत्यमार्द्दवम् । अहिंसा
सर्वभूतानामानृशंस्यं दमः शमः ॥ ४ ॥ निर्म्ममा निरहङ्कारा
निर्द्वन्द्वा निष्परिग्रहाः । शुचयस्तीर्थभूतास्ते ये भैक्ष्यमुपभुञ्जते
॥ ५ ॥ तत्त्ववित्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते । शौचलक्षणमेतत्ते
सर्वत्रैवान्ववेक्षणम् ॥ ६ ॥ रजस्तमः सत्त्वमथो येषां निर्द्धौत-
मात्मनः । शौचाशौचसमायुक्ताः स्वकार्य्यपरिमार्गिणः ॥ ७ ॥ सर्व-
त्यागेष्वभिरताः सर्वज्ञाः सर्वदर्शिनः । शौचेन वृत्तशौचार्थास्ते
तीर्थाः शुचयश्च ते ॥ ८ ॥ नोदकक्लिन्नगात्रस्तु स्नात इत्यभि-
धीयते । स स्नातो यो दमस्नातः सबाह्याभ्यन्तरः शुचिः ॥ ९ ॥
अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्म्ममाः । शौचमेव परं तेषां
येषां नोत्पद्यते स्पृहा ॥ १० ॥ प्रज्ञानं शौचमेवेह शरीरस्य विशे-

षतः। तथा निष्किञ्चनत्वञ्च मनसश्च प्रसन्नता॥ ११॥ वृत्तशौचं मनःशौचं तीर्थशौचमतःपरम्। ज्ञानोत्पन्नञ्च यच्छौचं तच्छौचं परमं मतम्॥ १२॥ मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च। स्नाति यो मानसे तीर्थे तत् स्नानं तत्त्वदर्शिनाम्॥ १३॥ समारोपितशौचस्तु नित्यं भावसमाहितः। केवलं गुणसम्पन्नः शुचिरेव नरः सदा॥ १४॥ शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत। पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि॥ १५॥ शरीरस्य यथोद्देशाः शुचयः परिकीर्त्तिताः। तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च॥ १६॥ कीर्त्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात्। धुनन्ति पापं तीर्थेषु ते प्रयान्ति सुखं दिवम्॥ १७॥ परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा। अतीव पुण्यभागास्ते सलिलस्य च तेजसा॥ १८॥ मनसश्च पृथिव्याश्च पुण्यास्तीर्थास्तथापरे। उभयोरेव यः स्नायात् स सिद्धिं शीघ्रमाप्नुयात्॥ १९॥ यथा बलं क्रियाहीनं क्रिया वा बलवर्ज्जिता। नेह साधयते कार्य्यं समायुक्ता तु सिद्ध्यति॥ २०॥ एवं शरीरशौचेन तीर्थशौचेन चान्वितः। शुचिः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम्॥ २१॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने शौचकथने अष्टाधिकशतोऽध्यायः॥ १०८॥

---

युधिष्ठिर उवाच। सर्व्वेषामुपवासानां यच्छ्रेयः सुमहत् फलम्। यच्चाप्यसंशयं लोके तन्मे त्वं वक्तुमर्हसि॥ १॥

भीष्म उवाच। शृणु राजन् यथा गीतं स्वयमेव स्वयम्भुवा। यत् कृत्वा निर्वृतो भूयात् पुरुषो नात्र संशयः॥ २॥ द्वादश्यां मार्गशीर्षे तु अहोरात्रेण केशवम्। अश्वमेधं प्राप्नोति

दुष्कृतञ्चास्य नश्यति ॥ ३ ॥ तथैव पौषमासे तु पूज्य नारायणेति च। वाजपेयमवाप्नोति सिद्धिञ्च परमां व्रजेत् ॥ ४ ॥ अहोरात्रेण द्वादश्यां माघमासे तु माधवम्। राजसूयमवाप्नोति कुलञ्चैव समुद्धरेत् ॥ ५ ॥ तथैव फाल्गुने मासि गोविन्देति च पूजयेत्। अतिरात्रमवाप्नोति सोमलोकञ्च गच्छति ॥ ६ ॥ अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन्। पौण्डरीकमवाप्नोति देवलोकञ्च गच्छति ॥ ७ ॥ वैशाखमासे द्वादश्यां पूजयेन्मधुसूदनम्। अग्निष्टोममवाप्नोति सोमलोकञ्च गच्छति ॥ ८ ॥ अहोरात्रेण द्वादश्यां ज्यैष्ठे मासि त्रिविक्रमम्। गवां मेधमवाप्नोति अप्सरोभिश्च मोदते ॥ ९ ॥ आषाढ़े मासि द्वादश्यां वामनेति च पूजयन्। नरमेधमवाप्नोति अप्सरोभिश्च मोदते ॥ १० ॥ अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम्। पञ्चयज्ञानवाप्नोति विमानस्थः स मोदते ॥ ११ ॥ तथा भाद्रपदे मासि हृषीकेशेति पूजयन्। सौत्रामणिमवाप्नोति पूतात्मा भवतेऽपि च ॥ १२ ॥ द्वादश्यामाश्विने मासि पद्मनाभेति चार्च्चयेत्। गोसहस्रफलं पुण्यं प्राप्नुयान्नात्र संशयः ॥ १३ ॥ द्वादश्यां कार्त्तिके मासि पूज्य दामोदरेति च। सर्वयज्ञफलं पुण्यं प्राप्नुयान्नात्र संशयः ॥ १४ ॥ अर्च्चयेत् पुण्डरीकाक्षमेवं सम्वत्सरन्तु यः। जातिस्मरत्वमाप्नोति विन्द्याद्बहुसुवर्णकम् ॥ १५ ॥ अहन्यहनि तद्भावमुपेन्द्रं योऽधिगच्छति। समाप्ते भोजयेद्विप्रानथ वा दापयेद्घृतम् ॥ १६ ॥ अतः परं नोपवासो भवतीति विनिश्चयः। उवाच भगवान् विष्णुः स्वयमेव पुरातनः ॥१७॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे विष्णोर्द्वादशनामकथने नवाधिकशततोऽध्यायः ॥ १०९ ॥

वैशम्पायन उवाच । शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् । उपगम्य महाप्राज्ञः पर्य्यपृच्छद्युधिष्ठिरः ॥ १ ॥

युधिष्ठिर उवाच । अङ्गानां रूपसौभाग्यं प्रियत्वञ्च कथं भवेत् । धर्मार्थकामसंयुक्तः सुखभागी कथं भवेत् ॥ २ ॥

भीष्म उवाच । मार्गशीर्षस्य मासस्य चन्द्रे मूलेन संयुते । पादौ मूलेन राजेन्द्र जङ्घायामथ रोहिणीम् ॥ ३ ॥ अश्विन्यां सक्थिनी चैव ऊरू चाषाढ़योस्तथा । गुह्यन्तु फाल्गुनीं विन्यात् कृत्तिकाः कटिकास्तथा ॥ ४ ॥ नाभिं भाद्रपदे विन्यात् रेवत्या-क्षिमण्डलम् । पृष्ठमेव धनिष्ठासु अनुराधोदरन्तथा ॥ ५ ॥ बाहुभ्यान्तु विशाखासु हस्तौ हस्तेन निर्द्दिशेत् । पुनर्वस्वङ्गुली राजन्नश्लेषास्तु नखास्तथा ॥ ६ ॥ ग्रीवां ज्येष्ठां च राजेन्द्र श्रवणेन तु कर्णयोः । मुखं पुष्येण राजेन्द्र दन्तोष्ठौ स्वातिरुच्यते ॥ ७ ॥ हासं शतभिषाञ्चैव मघाञ्चैवाथ नासिकाम् । नेत्रे मृग-शिरो विन्यात् ललाटे चित्रमेव तु ॥ ८ ॥ भरण्यान्तु शिरो विन्यात् केशानार्द्रा नराधिप । समाप्ते तु घृतं दद्यात् ब्राह्मणे वेदपारगे ॥ ९ ॥ सुभगो दर्शनीयश्च ज्ञानभाग्यथ जायते । जायते परिपूर्णाङ्गः पौर्णमास्येव चन्द्रमाः ॥ १० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे अङ्गविधौ दशाधिकशतोऽध्यायः ॥ ११० ॥

---

युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्वशास्त्रविशारद । ज्ञातुमिच्छामि मर्त्यानां संसारविधिमुत्तमम् ॥ १ ॥ केन वृत्तेन राजेन्द्र वर्त्तमाना नरा भुवि । प्राप्नुवन्त्युत्तमं स्वर्गं कथञ्च नरकं नृप ॥ २ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ट्रसमं जनाः । गच्छन्त्यमुत्र लोके वै क एताननुगच्छति ॥ ३ ॥

भीष्म उवाच । अयमायाति भगवान् वृहस्पतिरुदारधीः । पृच्छैनं सुमहाभागमेतद्गुह्यं सनातनम् ॥ ४ ॥ नैतदन्येन शक्यं हि बक्तुं केनचिदद्य वै । वक्ता वृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ॥ ५ ॥

वैशम्पायन उवाच । तयोः सम्वदतोरेवं पार्थगाङ्गेययोस्तदा । आजगाम विशुद्धात्मा नाकपृष्ठाद्वृहस्पतिः ॥ ६ ॥ ततो राजा समुत्थाय धृतराष्ट्रपुरोगमः । पूजामनुपमाञ्चक्रे सर्व्वे ते च सभासदः ॥ ७ ॥ ततो धर्म्मसुतो राजा भगवन्तं वृहस्पतिम् । उपगम्य यथान्यायं प्रश्नं पप्रच्छ तत्त्वतः ॥ ८ ॥

युधिष्ठिर उवाच । भगवन् सर्वधर्म्मज्ञ सर्वशास्त्रविशारद । मर्त्त्यस्य कः सहायो वै पिता माता सुतो गुरुः । ज्ञातिसम्बन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ ९ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ट्रसमं जनाः । गच्छन्त्यमुत्र लोके वै क एनमनुगच्छति ॥ १० ॥

वृहस्पतिरुवाच । एकः प्रसूयते राजन्नेक एव विनश्यति । एकस्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिम् ॥ ११ ॥ असहायः पिता माता तथा भ्राता सुतो गुरुः । ज्ञातिसम्बन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ १२ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ट्रसमं जनाः । मुहूर्त्तमिव रोदित्वा ततो यान्ति पराङ्मुखाः ॥ १३॥ तैस्तच्छरीरमुत्सृष्टं धर्म्म एकोऽनुगच्छति । तस्माद्धर्म्मः सहायश्च सेवितव्यः सदा नृभिः ॥१४॥ प्राणी धर्म्मसमायुक्तो गच्छेत् स्वर्गगतिं पराम् । तथैवाधर्म्मसंयुक्तो नरकञ्चोपपद्यते ॥ १५ ॥ तस्मान्न्यायागतैरर्थैर्द्धर्म्मं सेवेत पण्डितः । धर्म्म एको मनुष्याणां सहायः पारलौकिकः ॥ १६ ॥ लोभान्मोहादनुक्रोशाद्भयाद्वाप्यबहुश्रुतः । नरः करोत्यकार्य्याणि परार्थे लोभमोहितः ॥ १७ ॥ धर्म्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् । एतत्त्रयमवाप्तव्यमधर्म्मपरिवर्ज्जितम् ॥ १८ ॥

युधिष्ठिर उवाच। श्रुतं भगवतो वाक्यं धर्म्मयुक्तं परं हितम्। शरीरनिचयं ज्ञातुं बुद्धिस्तु मम जायते॥ १९॥ मृतं शरीरं हि नृणां सूक्ष्ममव्यक्ततां गतम्। अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति॥ २०॥

वृहस्पतिरुवाच। पृथिवीवायुराकाशमापोज्योतिर्म्मनोऽन्तगः। बुद्धिरात्मा च सहिता धर्म्मं पश्यन्ति नित्यशः॥ २१॥ प्राणिनामिह सर्वेषां साक्षिभूता निशानिशम्। एतैश्च सह धर्मोऽपि तं जीवमनुगच्छति॥ २२॥ त्वगस्थिमांसं शुक्रञ्च शोणितञ्च महामते। शरीरं वर्जयन्त्येते जीवितेन विवर्ज्जितम्॥ २३॥ ततो धर्म्मसमायुक्तः प्राप्नुते जीव एव हि। ततोऽस्य कर्म्म पश्यन्ति शुभं वा यदि वाशुभम्॥ २४॥ देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि। ततो धर्म्मसमायुक्तः स जीवः सुखमेधते। इह लोके परे चैव किं भूयः कथयामि ते॥ २५॥

युधिष्ठिर उवाच। तद्दर्शितं भगवता यथा धर्मोऽनुगच्छति। एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्त्तते॥ २६॥

वृहस्पतिरुवाच। अन्नमश्नन्ति यद्देवाः शरीरस्था नरेश्वर। पृथिवी वायुराकाशमापो ज्योतिर्मनस्तथा॥ २७॥ ततस्तृप्तेषु राजेन्द्र तेषु भूतेषु पञ्चसु। मनःषष्ठेषु शुद्धात्मन् रेतः सम्पद्यते महत्॥ २८॥ ततो गर्भः सम्भवति श्लेषात् स्त्रीपुंसयोर्नृप। एतत्ते सर्वमाख्यातं भूयः किं श्रोतुमिच्छसि॥ २९॥

युधिष्ठिर उवाच। आख्यातं मे भगवता गर्भः संजायते यथा। यथा जातस्तु पुरुषः प्रपद्यति तदुच्यताम्॥ ३०॥

वृहस्पतिरुवाच। आसन्नमात्रः पुरुषस्तैर्भूतैरभिभूयते। विप्रयुक्तश्च तैर्भूतैः पुनर्यात्यपरां गतिम्॥ ३१॥ सर्वभूतसमायुक्तः प्राप्नुते जीव एव हि। ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाशुभम्। देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि॥ ३२॥

युधिष्ठिर उवाच । त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्विवर्ज्जितः ।
जीवः स भगवन् क्वस्थः सुखदुःखे समश्नुते ॥ ३३ ॥
बृहस्पतिरुवाच । जीवः कर्म्मसमायुक्तः शीघ्रं रेतस्त्वमागतः ।
स्त्रीणां पुष्पं समासाद्य सूते कालेन भारत ॥ ३४ ॥ यमस्य
पुरुषैः क्लेशं यमस्य पुरुषैर्वधम् । दुःखं संसारचक्रञ्च नरः क्लेशञ्च
विन्दति ॥ ३५ ॥ इह लोके च स प्राणी जन्मप्रभृति पार्थिव ।
स्वकृतं कर्म्म वै भुङ्क्ते धर्म्मस्य फलमाश्रितः ॥ ३६ ॥ यदि धर्मं
यथाशक्ति जन्मप्रभृति सेवते । ततः स पुरुषो भूत्वा सेवते नित्यशः
सुखम् ॥ ३७ ॥ अथान्तरा तु धर्म्मस्याप्यधर्म्ममुपसेवते । सुख-
स्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति ॥ ३८ ॥ अधर्मेण समा-
युक्तो यमस्य विषयं गतः । महद्दुःखं समासाद्य तिर्य्यग्योनौ
प्रजायते ॥ ३९ ॥ कर्म्मणा येन येनेह यस्यां योनौ प्रजायते ।
जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु ॥ ४० ॥ यदेतदुच्यते
शास्त्रे सेतिहासे च छन्दसि । यमस्य विषयं घोरं मर्त्त्यलोकः
प्रपद्यते । इह स्थानानि पुण्यानि देवतुल्यानि भूपते ॥ ४१ ॥
तिर्य्यग्योन्यतिरिक्तानि गतिमन्ति च सर्वशः । यमस्य सदने
दिव्ये ब्रह्मलोकसमे गुणैः ॥ ४२ ॥ कर्म्मभिर्नियतैर्बद्धो जन्तु-
र्दुःखान्युपाश्नुते । येन येन तु भावेन कर्म्मणा पुरुषो गतिम् ॥४३॥
प्रयाति परुषां घोरां तत्ते वक्ष्याम्यतः परम् ॥ ४४ ॥ अधीत्य
चतुरो वेदान् द्विजो मोहसमन्वितः । पतितात् प्रतिगृह्याथ
खरयोनौ प्रजायते ॥ ४५ ॥ खरो जीवति वर्षाणि दश पञ्च च
भारत । खरो मृतो बलीवर्द्दः सप्तवर्षाणि जीवति ॥ ४६ ॥ बली-
वर्द्दो मृतश्चापि जायते ब्रह्मराक्षसः । ब्रह्मरक्षश्च मासांस्त्रींस्ततो
जायते ब्राह्मणः ॥ ४७ ॥ पतितं याजयित्वा तु कृमियोनौ प्रजा-
यते । तत्र जीवति वर्षाणि दश पञ्च च भारत ॥ ४८ ॥ कृमि-
भावाद्विमुक्तस्तु ततो जायति गर्द्दभः । गर्द्दभः पञ्चवर्षाणि पञ्च-

वर्षाणि शूकरः ॥ ४९ ॥ कुक्कुटः पञ्चवर्षाणि पञ्चवर्षाणि जम्बुकः । श्वा वर्षमेकं भवति ततो जायति मानवः ॥ ५० ॥ उपाध्यायस्य यः पापं शिष्यः कुर्य्यादबुद्धिमान् । स जीव इह संसारांस्त्रीनाप्नोति न संशयः ॥ ५१ ॥ प्राक् श्वा भवति राजेन्द्र ततः क्रव्यात्ततः खरः । ततः प्रेतः परिक्लिष्टः पश्चाज्जायति ब्राह्मणः ॥५२॥ मनसापि गुरोर्भार्य्यां यः शिष्यो याति पापकृत् । स उग्रान् प्रैति संसारानधर्म्मेणेह चेतसा ॥ ५३ ॥ श्वयोनौ तु स संभूतस्त्रीणि वर्षाणि जीवति । तत्रापि निधनं प्राप्तः कृमियोनौ प्रजायते ॥५४॥ कृमिभावमनुप्राप्तो वर्षमेकन्तु जीवति । ततस्तु निधनं प्राप्तो ब्रह्मयोनौ प्रजायते ॥ ५५ ॥ यदि पुत्रसमं शिष्यं गुरुर्हन्यादकारणे । आत्मनः कामकारेण सोऽपि हिंस्रः प्रजायते ॥ ५६ ॥ पितरं मातरञ्चैव यस्तु पुत्रोऽवमन्यते । सोऽपि राजन् मृतो जन्तुः पूर्वं जायेत गर्द्दभः ॥ ५७ ॥ गर्द्दभत्वञ्च संप्राप्य दशवर्षाणि जीवति । सम्वत्सरन्तु कुम्भीरस्ततो जायेत मानवः ॥ ५८ ॥ पुत्रस्य मातापितरौ यस्य रुष्टावुभावपि । गुर्वपध्यानतः सोऽपि मृतो जायति गर्द्दभः ॥ ५९ ॥ खरो जीवति मासांस्तु दश श्वा च चतुर्द्दश । विड़ालः सप्तमासांस्तु ततो जायेत मानवः ॥ ६० ॥ मातापितरावाक्रुश्य सारिकः संप्रजायते । ताड़यित्वा तु तावेव जायते कच्छपो नृप ॥ ६१ ॥ कच्छपो दशवर्षाणि त्रीणि वर्षाणि शल्यकः । व्यालो भूत्वा च षण्मासांस्ततो जायेत मानवः ॥ ६२॥ भर्त्तृपिण्डमुपाश्नन् यो राजद्विष्टानि सेवते । सोऽपि मोहसमापन्नो मृतो जायेत वानरः ॥ ६३ ॥ वानरो दशवर्षाणि पञ्च वर्षाणि मूषिकः । श्वाथ भूत्वा च षण्मासांस्ततो जायेत मानुषः ॥ ६४ ॥ न्यासापहर्त्ता तु नरो यमस्य विषयं गतः । संसाराणां शतं गत्वा कृमियोनौ प्रजायते ॥ ६५ ॥ तत्र जीवति वर्षाणि दश पञ्च च भारत । दुष्कृतस्य क्षयं कृत्वा ततो जायेत मानुषः ॥६६॥

असूयको नरश्चापि मृतो जायति शार्ङ्गकः। विश्वासहर्त्ता च नरो मीनो जायति दुर्म्मतिः॥ ६७॥ भूत्वा मीनोऽष्टवर्षाणि मृगो जायेत भारत। मृगस्तु चतुरो मासांस्ततश्छागः प्रजायते॥ ६८॥ छागस्तु निधनं प्राप्य पूर्णे सम्वत्सरे ततः। कीटः प्रजायते जन्तुस्ततो जायेत मानुषः॥ ६९॥ धान्यान् यवांस्तिलान् माषान् कुलत्थान् सर्षपांश्चणान्। कलायानथ मुद्गांश्च गोधमानतसीस्तथा॥ ७०॥ शस्यस्यान्यस्य हर्त्ता च मोहाज्जन्तुरचेतनः। स जायते महाराज मूषिको निरपत्रपः॥ ७१॥ ततः प्रेत्य महाराज मृगो जायेत शूकरः। शूकरो यातमात्रस्तु रोगेण म्रियते नृप॥ ७२॥ श्वा ततो जायते मूढ़ः कर्म्मणा तेन पार्थिव। भूत्वा श्वा पञ्चवर्षाणि ततो जायेत मानवः॥ ७३॥ परदाराभिमर्षन्तु कृत्वा जायेत वै वृकः। श्वा शृगालस्ततो गृध्रो व्यालः कङ्को वकस्तथा॥ ७४॥ भ्रातुर्भार्य्यान्तु पापात्मा यो धर्षयति मोहितः। पुंस्कोकिलत्वमाप्नोति सोऽपि सम्वत्सरं नृप॥ ७५॥ सखिभार्य्यां गुरोर्भार्य्यां राजभार्य्यान्तथैव च। प्रधर्षयित्वा कामाय मृतो जायति शूकरः॥ ७६॥ शूकरः पञ्चवर्षाणि दश वर्षाणि वै वृकः। विड़ालः पञ्च वर्षाणि दश वर्षाणि कुक्कुटः॥ ७७॥ पिपीलिकास्तु मासांस्त्रीन् कीटः स्यान्मासमेव तु। एतानासाद्य संसारान् कृमियोनौ प्रजायते॥ ७८॥ तत्र जीवति मासांस्तु कृमियोनौ चतुर्द्दश। ततोऽधर्म्मक्षयं कृत्वा पुनर्जायति मानवः॥ ७९॥ उपस्थिते विवाहे तु यज्ञे दानेऽथ वा विभो। मोहात् करोति यो विघ्नं स मृतो जायते कृमिः॥ ८०॥ कृमिर्जीवति वर्षाणि दश पञ्च च भारत। अधर्म्मस्य क्षयं कृत्वा ततो जायति मानवः॥ ८१॥ पूर्वं दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति। सोऽपि राजन् मृतो जन्तुः कृमियोनौ प्रजायते॥८२॥ तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर। अधर्म्मसंक्षये युक्तस्ततो

जायति मानुषः॥ ८३॥ दैवकार्य्यमकृत्वा तु पितृकार्य्यमथापि वा। अनिर्वाप्य समश्नन् वै मृतो जायति वायसः॥ ८४॥ वायसः शतवर्षाणि ततो जायति कुक्कुटः। जायते व्यालकश्चापि मासं तस्मात्तु मानुषः॥ ८५॥ ज्येष्ठं पितृसमञ्चापि भ्रातरं योऽवमन्यते। सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते॥ ८६॥ क्रौञ्चो जीवति मासांस्तु दश द्वौ सप्त पञ्च च। ततो निधनमापन्नो मानुषत्वमुपाश्नुते॥ ८७॥ वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते। ततः संप्राप्य निधनं जायते शूकरः पुनः॥ ८८॥ शूकरो जातमात्रस्तु रोगेण म्रियते नृप। श्वा ततो जायते मूढ़ः कर्मणा तेन पार्थिव॥ ८९॥ श्वा भूत्वा कृतकर्मासौ जायते मानुषस्ततः। तत्रापत्यं समुत्पाद्य मृतो जायेत मूषिकः॥ ९०॥ कृतघ्नस्तु मृतो राजन् यमस्य विषयं गतः। यमस्य पुरुषैः क्रुद्धैर्वधं प्राप्नोति दारुणम्॥ ९१॥ दण्डं समुद्गरं शूलमग्निकुम्भञ्च दारुणम्। असिपत्रवनं घोरं वालुकां कूटशाल्मलीम्॥ ९२॥ एताश्चान्याश्च बह्वीः स यमस्य विषयं गतः। यातनाः प्राप्य तत्रोग्रास्ततो बध्यति भारत॥ ९३॥ ततो हतः कृतघ्नः स तत्रोग्रैर्भरतर्षभ। संसारचक्रमासाद्य कृमियोनौ प्रजायते॥ ९४॥ कृमिर्भवति वर्षाणि दश पञ्च च भारत। ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः॥ ९५॥ ततो गर्भशतैर्जन्तुर्बहुभिः संप्रपद्यते। संसारांश्च बहून् गत्वा ततस्तिर्य्यक् प्रजायते॥ ९६॥ ततो दुःखमनुप्राप्य बहुवर्षगणानिह। अपुनर्भवसंयुक्तस्ततः कूर्मः प्रजायते॥ ९७॥ दधि हृत्वा वकश्चापि प्लवो मत्स्यानसंस्कृतान्। चोरयित्वा तु दुर्बुद्धिर्मधुदंशः प्रजायते॥ ९८॥ फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकः। चोरयित्वा तु निष्पावं जायते हलगोलकः॥ ९९॥ पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते। हृत्वा पिष्टमयं पूपं कुम्भोलूकः प्रजायते॥ १००॥ अयो हृत्वा तु

दुर्बुद्धिर्वायसो जायते नरः । कांस्यं हृत्वा तु दुर्बुद्धिर्हारीतो जायते नरः ॥ १०१ ॥ राजतं भाजनं हृत्वा कपोतः संप्रजायते । हृत्वा तु काञ्चनं भाण्डं क्रमियोनौ प्रजायते ॥ १०२ ॥ पत्त्रोर्णं चोरयित्वा तु कृकरत्वं नियच्छति । कौशिकन्तु ततो हृत्वा नरो जायति वर्त्तकः ॥ १०३ ॥ अंशुकं चोरयित्वा तु शुको जायति मानवः । चोरयित्वा दुकूलञ्च मृतो हंसः प्रजायते ॥ १०४ ॥ क्रौञ्चः कार्पासिकं हृत्वा मृतो जायति मानवः । चोरयित्वा नरः पट्टं त्वाविकञ्चैव भारत ॥ १०५ ॥ चौमञ्च वस्त्रमादाय शशो जन्तुः प्रजायते । वर्णान् हृत्वा तु पुरुषो मृतो जायति बर्हिणः ॥१०६॥ हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः । वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः ॥ १०७ ॥ छुछुन्दरित्वमाप्नोति राजं-ल्लोभपरायणः । तत्र जीवति वर्षाणि ततो दश च पञ्च च ॥१०८॥ अधर्म्मस्य चयं कृत्वा ततो जायति मानवः । चोरयित्वा पय-श्चापि बलाका संप्रजायते ॥ १०९ ॥ यस्तु चोरयते तैलं नरो मोहसमन्वितः । सोऽपि राजन् मृतो जन्तुस्तैलपायी प्रजायते ॥ ११० ॥ अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः । अर्थार्थी यदि वा वैरी स मृतो जायते खरः ॥ १११ ॥ खरो जीवति वर्षे द्वे ततः शस्त्रेण बध्यते । स मृतो मृगयोनौ तु नित्योद्विग्नोऽभि-जायते ॥ ११२ ॥ मृगो बध्यति शस्त्रेण गते सम्वत्सरे तु सः । हतो मृगस्ततो मीनः सोऽपि जालेन बध्यते ॥ ११३ ॥ मासे चतुर्थे सम्प्राप्ते श्वापदः संप्रजायते । श्वापदो दशवर्षाणि द्वीपी वर्षाणि पञ्च च ॥ ११४ ॥ ततस्तु निधनं प्राप्तः कालपर्य्यायचोदितः । अधर्म्मस्य चयं कृत्वा ततो जायति मानुषः ॥ ११५ ॥ स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं गतः । बहुक्लेशान् समासाद्य संसारांश्चैकविंशतिम् ॥ ११६ ॥ ततः पश्चान्महाराज क्रमियोनौ प्रजायते । क्रमिर्विंशतिवर्षाणि भूत्वा जायति मानुषः ॥ ११७ ॥

भोजनं चोरयित्वा तु मक्षिका जायते नरः। मक्षिकासङ्घवशगो बहून् मासान् भवत्युत ॥ ११८ ॥ ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते। धान्यं हृत्वा तु पुरुषो लोमशः संप्रजायते ॥ ११९ ॥ तथा पिन्याकसंमिश्रमशनं चोरयेन्नरः। स जायते वस्तुसमो दारुणो मूषिको महान् ॥ १२० ॥ दशन् वै मानुषं नित्यं पापात्मा संप्रजायते। घृतं हृत्वा तु दुर्बुद्धिः काकमुद्गुः प्रजायते ॥ १२१ ॥ मत्स्यमांसमथो हृत्वा काको जायति दुर्मतिः। लवणं चोरयित्वा तु चीरीकाकः प्रजायते ॥ १२२ ॥ विश्वासेन तु निक्षिप्तं यो वै निह्नोति मानवः। स गतायुर्नरस्तादृक् मत्स्ययोनौ प्रजायते ॥ १२३ ॥ मत्स्ययोनिमनुप्राप्य मृतो जायति मानवः। मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते ॥ १२४ ॥ पापानि तु नरः कृत्वा तिर्य्यक् जायेत भारत। न चात्मनः प्रमाणन्ते धर्मं जानन्ति किञ्चन ॥ १२५ ॥ ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा। सुखदुःखसमायुक्ता व्याधितास्ते भवन्त्युत ॥ १२६ ॥ असंवासाः प्रजायन्ते म्लेच्छा अपि न संशयः। नराः पापसमाचारा लोभमोहसमन्विताः ॥ १२७ ॥ वर्ज्जयन्ति च पापानि जन्मप्रभृति ये नराः। अरोगा रूपवन्तश्च धनिनश्च भवन्त्युत ॥ १२८ ॥ स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः। एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः ॥ १२९॥ परस्वहरणे दोषाः सर्व एव प्रकीर्त्तिताः। एतद्वै लेशमात्रेण कथितं ते मयानघ ॥ १३० ॥ अपरस्मिन् कथायोगे भूयः श्रोष्यसि भारत। एतन्मया महाराज ब्रह्मणो वदतः पुरा ॥ १३१ ॥ सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि यथातथम्। मयापि तच्च कार्त्स्न्येन यथावदनुवर्णितम् ॥ १३२ ॥ एतच्छ्रुत्वा महाराज धर्मे कुरु मनः सदा ॥ १३३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे संसारचक्रकथने एकादशाधिकशततोऽध्यायः ॥ १११ ॥

युधिष्ठिर उवाच । अधर्मस्य गतिर्ब्रह्मन् कथिता मे त्वया-
नघ । धर्मस्य तु गतिं श्रोतुमिच्छामि वदतां वर ॥ १ ॥ कृत्वा
पापानि कर्माणि कथं यान्ति शुभां गतिम् । कर्मणा च कृतेनेह
केन यान्ति शुभां गतिम् ॥ २ ॥

बृहस्पतिरुवाच । कृत्वा पापानि कर्माणि अधर्मवशमागतः ।
मनसा विपरीतेन निरयं प्रतिपद्यते ॥ ३ ॥ मोहादधर्मं यः कृत्वा
पुनः समनुतप्यते । मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतम् ॥ ४ ॥
यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हते । तथा तथा शरीरेषु
तेनाधर्म्मेण मुच्यते ॥ ५ ॥ यदि व्याहरते राजन् विप्राणां धर्म-
वादिनाम् । ततोऽधर्मकृतात् क्षिप्रमपवादात् प्रमुच्यते ॥ ६ ॥
यथा यथा नरः सम्यगधर्ममनुभाषते । समाहितेन मनसा विमु-
च्येत तथा तथा । भुजङ्ग इव निर्मोकात् पूर्वमुक्ताज्जरान्वितात्
॥ ७ ॥ दत्त्वा विप्रस्य दानानि विविधानि समाहितः । मनः-
समाधिसंयुक्तः सुगतिं प्रतिपद्यते ॥ ८ ॥ प्रदानानि तु वक्ष्यामि
यानि दत्त्वा युधिष्ठिर । नरः कृत्वाप्यकार्य्याणि ततो धर्मेण
युज्यते ॥ ९ ॥ सर्वेषामेव दानानामन्नं श्रेष्ठमुदाहृतम् । पूर्वमन्नं
प्रदातव्यमृजुना धर्ममिच्छता ॥ १० ॥ प्राणा ह्यन्नं मनुष्याणां
तस्माज्जन्तुश्च जायते । अन्ने प्रतिष्ठिता लोकास्तस्मादन्नं प्रशस्यते
॥ ११ ॥ अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः । अन्नस्य हि
प्रदानेन रन्तिदेवो दिवं गतः ॥ १२ ॥ न्यायलब्धं प्रदातव्यं द्विजा-
तिभ्योऽन्नमुत्तमम् । स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना ॥ १३ ॥
यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं दश । हृष्टेन मनसा दत्तं
न स तिर्य्यग्गतिर्भवेत् ॥ १४ ॥ ब्राह्मणानां सहस्राणि दश भोज्यं
नरर्षभ । नरोऽधर्मात् प्रमुच्येत योगेष्वभिरतः सदा ॥ १५ ॥
भैक्षेणान्नं समाहृत्य विप्रो वेदपुरस्कृतः । स्वाध्यायनिरते विप्रे
दत्त्वेह सुखमेधते ॥ १६ ॥ अहिंसन् ब्राह्मणस्वानि न्यायेन परि-

पाल्य च। क्षत्रियस्तरसा प्राप्तमन्नं यो वै प्रयच्छति ॥ १७ ॥
द्विजेभ्यो वेदवृद्धेभ्यः प्रयतः सुसमाहितः। तेनापोहति धर्मात्मन्
दुष्कृतं कर्म पाण्डव ॥ १८ ॥ षड्भागपरिशुद्धञ्च कृषिभागमुपा-
र्ज्जितम्। वैश्यो ददद्द्विजातिभ्यः पापेभ्यः परिमुच्यते ॥ १९ ॥
अवाप्य प्राणसन्देहं कार्कश्येन समार्ज्जितम्। अन्नं दत्त्वा द्विजा-
तिभ्यः शूद्रः पापात् प्रमुच्यते ॥ २० ॥ औरसेन बलेनान्नमर्ज्ज-
यित्वाविहिंसकः। यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि सेवते ॥२१॥
न्यायेनैवाप्तमन्नन्तु नरो हर्षसमन्वितः। द्विजेभ्यो वेदवृद्धेभ्यो
दत्त्वा पापात् प्रमुच्यते ॥ २२ ॥ एतां पन्थानमाश्रित्य सर्वपापैः
प्रमुच्यते। अन्नमूर्जस्करं लोके दत्त्वोर्ज्जस्वी भवेन्नरः ॥ २३ ॥
दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः। ते हि प्राणस्य
दातारस्तेभ्यो धर्मः सनातनः ॥ २४ ॥ सर्वावस्थं मनुष्येण न्याये-
नान्नमुपार्ज्जितम्। कार्य्यं पात्रगतं नित्यमन्नं हि परमा गतिः
॥ २५ ॥ अन्नस्य हि प्रदानेन नरो रौद्रं न सेवते। तस्मादन्नं
प्रदातव्यमन्यायपरिवर्ज्जितम् ॥ २६ ॥ यतेद्ब्राह्मणपूर्वं हि भोक्तु-
मन्नं गृही सदा। अवन्ध्यं दिवसं कुर्यादन्नदानेन मानवः ॥२७॥
भोजयित्वा दशशतं नरो वेदविदां नृप। न्यायविद्धर्मविदुषामिति-
हासविदां तथा ॥ २८ ॥ न याति नरकं घोरं संसारांश्च न
सेवते। सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखम् ॥ २९ ॥ एवं
खलु समायुक्तो रमते विगतज्वरः। रूपवान् कीर्त्तिमांश्चैव धन-
वांश्चोपपद्यते ॥ ३० ॥ एतत्ते सर्वमाख्यातमन्नदानफलं महत्।
मूलमेतत्तु धर्माणां प्रदानानाञ्च भारत ॥ ३१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि संसारचक्रे अन्न-
दानकथने द्वादशाधिकशततोऽध्यायः ॥ ११२ ॥

---

युधिष्ठिर उवाच। अहिंसा वैदिकं कर्म्म ध्यानमिन्द्रियसंयमः। तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥ १ ॥

वृहस्पतिरुवाच । सर्व्वाण्येतानि धर्म्याणि पृथग्‌द्वाराणि सर्व्वशः । शृणु संकीर्त्त्यमानानि षड़ेव भरतर्षभ ॥ २ ॥ हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम् । अहिंसापाश्रयं धर्मं यः साधयति वै नरः ॥ ३ ॥ त्रीन् दोषान् सर्व्वभूतेषु निधाय पुरुषः सदा । कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥ ४ ॥ अहिंसकानि भूतानि दण्डेन विनिहन्ति यः । आत्मनः सुखमन्विच्छन् स प्रेत्य न सुखी भवेत् ॥ ५ ॥ आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः । न्यस्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ॥ ६ ॥ सर्व्वभूतात्मभूतस्य सर्व्वभूतानि पश्यतः । देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ७ ॥ न तत् परस्य सन्दध्यात् प्रतिकूलं यदात्मनः । एष संक्षेपतो धर्म्मः कामादन्यः प्रवर्त्तते ॥ ८ ॥ प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये । आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ९ ॥ अथापरः प्रक्रमते परेषु तथापरे प्रक्रमन्ते परस्मिन् । तथैव तेषूपमा जीवलोके यथा धर्मो निपुणेनोपदिष्टः ॥ १० ॥

वैशम्पायन उवाच। इत्युक्त्वा तं सुरगुरुर्धर्म्मराजं युधिष्ठिरम्। दिवमाचक्रमे धीमान् पश्यतामेव नः सदा ॥ ११ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मकथने त्रयोदशाधिकशततोऽध्यायः ॥ ११३ ॥

---

वैशम्पायन उवाच । ततो युधिष्ठिरो राजा शरतल्पे पितामहम् । पुनरेव महातेजाः पप्रच्छ वदतां वरः ॥ १ ॥

युधिष्ठिर उवाच। ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते। अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात् ॥ २ ॥ कर्मणा मनुजः कुर्वन् हिंसां पार्थिवसत्तम। वाचा च मनसा चैव कथं दुःखात् प्रमुच्यते ॥ ३ ॥

भीष्म उवाच। चतुर्विधेयं निर्दिष्टा ह्यहिंसा ब्रह्मवादिभिः। एकैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ॥ ४ ॥ यथा सर्वश्चतुष्पाद्वै त्रिभिः पादैर्न तिष्ठति। तथैवेयं महीपाल कारणैः प्रोच्यते त्रिभिः ॥ ५ ॥ यथा नागपदेऽन्यानि पदानि पदगामिनाम्। सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ ६ ॥ एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा। कर्मणा लिप्यते जन्तुर्वाचा च मनसापि च ॥ ७ ॥ पूर्वन्तु मनसा त्यक्त्वा तथा वाचाथ कर्मणा। न भक्षयति यो मांसं त्रिविधं स विमुच्यते ॥ ८ ॥ त्रिकारणं तु निर्दिष्टं श्रूयते ब्रह्मवादिभिः। मनोवाचि तथास्वादे दोषा ह्येषु प्रतिष्ठिताः ॥ ९ ॥ न भक्षयन्त्यतो मांसं तपोयुक्ता मनीषिणः। दोषांस्तु भक्षणे राजन् मांसस्येह निबोध मे ॥ १० ॥ पुत्रमांसोपमं राजन् खादते योऽविचक्षणः। मांसं मोहसमाविष्टः पुरुषः सोऽधमः स्मृतः ॥ ११ ॥ पितृमातृसमायोगे पुत्रत्वं जायते यथा। हिंसां कृत्वावशः पापो भूयिष्ठं जायते तथा ॥ १२ ॥ रसञ्च प्रतिजिह्वाया ज्ञानं प्रज्ञायते यथा। तथा शास्त्रेषु नियतं रागो ह्यास्वादिताद्भवेत् ॥ १३ ॥ संस्कृतासंस्कृताः पक्वा लवणालवणास्तथा। प्रजायन्ते यथा भावास्तथा चित्तं निरुध्यते ॥ १४ ॥ भेरीमृदङ्गशब्दांश्च तन्त्रीशब्दांश्च पुष्कलान्। निषेविष्यन्ति वै मूढा मांसभक्षाः कथं नराः ॥ १५ ॥ अचिन्तितमनिर्दिष्टमसङ्कल्पितमेव च। रसं गृध्याभिभूता ये प्रशंसन्ति फलार्थिनः ॥ १६ ॥ प्रशंसा ह्येव मांसस्य दोषकर्मफलान्विता। जीवितं हि परित्यज्य बहवः साधवो जनाः। स्वमांसैः परमांसानि परिपाल्य दिवं

णताः ॥ १७ ॥ एवमेषा महाराज चतुर्भिः कारणैर्वृता । अहिंसा
तव निर्द्दिष्टा सर्व्वधर्म्मानुसंहिता ॥ १८ ॥

इत्यनुशासनपर्व्वणि अनुशासनिकेपर्व्वणि दानधर्म्मे मांस-
वर्ज्जनकथने चतुर्द्दशाधिकशततोऽध्यायः ॥ ११४ ॥

---

युधिष्ठिर उवाच । अहिंसा परमो धर्म इत्युक्तं बहुशस्त्वया ।
श्राद्धेषु च भवानाह पितॄनामिषकाङ्क्षिणः ॥ १ ॥ मांसैर्बहुविधैः
प्रोक्तस्त्वया श्राद्धविधिः पुरा । अहत्वा च कुतो मांसमेवमेत-
द्विरुध्यते ॥ २ ॥ जातो नः संशयो धर्म्मे मांसस्य परिवर्ज्जने ।
दोषो भक्षयतः कः स्यात् कश्चाभक्षयतो गुणः ॥ ३ ॥ हत्वा भक्ष-
यतो वापि परेणापि हतस्य वा । हन्याद्वा यः परस्यार्थे क्रीत्वा
वा भक्षयेन्नरः ॥ ४ ॥ एतदिच्छामि तत्त्वेन कथ्यमानं त्वयानघ ।
निश्चयेन चिकीर्षामि धर्म्ममेतं सनातनम् ॥ ५ ॥ कथमायुरवाप्नोति
कथं भवति सत्त्ववान् । कथमव्यङ्गतामेति लक्षण्यो जायते
कथम् ॥ ६ ॥

भीष्म उवाच । मांसस्याभक्षणाद्राजन् योऽधर्म्मः कुरुनन्दन ।
तन्मे शृणु यथातत्त्वं यथास्य विधिरुत्तमः ॥ ७ ॥ रूपमव्यङ्गता-
मायुर्बुद्धिं सत्त्वं बलं स्मृतिम् । प्राप्तुकामैर्नरैर्हिंसा वर्ज्जिता वै
महात्मभिः ॥ ८ ॥ ऋषीणामत्र संवादो बहुशः कुरुनन्दन ।
बभूव तेषान्तु मतं यत्तच्छृणु युधिष्ठिर ॥ ९ ॥ यो यजेताश्व-
मेधेन मासि मासि यतव्रतः । वर्ज्जयेन्मधुमांसञ्च सममेतद्युधि-
ष्ठिर ॥ १० ॥ सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः । अमांस-
भक्षणं राजन् प्रशंसन्ति मनीषिणः ॥ ११ ॥ न भक्षयति यो मांसं
न च हन्यान्न घातयेत् । तन्मित्रं सर्व्वभूतानां मनुः स्वायम्भुवो-
ऽब्रवीत् ॥ १२ ॥ अधृष्यः सर्व्वभूतानां विश्वास्यः सर्व्वजन्तुषु ।

साधूनां सम्मतो नित्यं भवेन्मांसं विवर्ज्जयन् ॥ १३ ॥ स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति। नारदः प्राह धर्मात्मा नियतं सोऽवसीदति ॥ १४ ॥ ददाति यजते चापि तपस्वी च भवत्यपि। मधुमांसनिवृत्तेत्यति प्राह चैवं बृहस्पतिः ॥ १५ ॥ मासि मास्यश्वमेधेन यो यजेत शतं समाः। न खादति च यो मांसं सममेतन्मतं मम ॥ १६ ॥ सदा यजति सत्रेण सदा दानं प्रयच्छति। सदा तपस्वी भवति मधुमांसविवर्ज्जनात् ॥ १७ ॥ सर्वे वेदा न तत् कुर्य्युः सर्वे यज्ञाश्च भारत। यो भक्षयित्वा मांसानि पश्चादपि निवर्त्तते ॥ १८ ॥ दुष्करं हि रसज्ञाने मांसस्य परिवर्ज्जनम्। चर्त्तुं व्रतमिदं श्रेष्ठं सर्वप्राण्यभयप्रदम् ॥ १९ ॥ सर्वभूतेषु यो विद्वान् ददात्यभयदक्षिणाम्। दाता भवति लोके स प्राणानां नात्र संशयः ॥ २० ॥ एतं वै परमं धर्मं प्रशंसन्ति मनीषिणः। प्राणा यथात्मनोऽभीष्टा भूतानामपि वै तथा ॥ २१ ॥ आत्मौपम्येन मन्तव्यं बुद्धिमद्भिः कृतात्मभिः। मृत्युतो भयमस्तीति विदुषां भूतिमिच्छताम् ॥ २२ ॥ किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम्। अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥ २३ ॥ तस्माद्विद्धि महाराज मांसस्य परिवर्ज्जनम्। धर्मस्यायतनं श्रेष्ठं स्वर्गस्य च सुखस्य च ॥ २४ ॥ अहिंसा परमो धर्मस्तथाहिंसा परन्तपः। अहिंसा परमं सत्यं यतो धर्मः प्रवर्त्तते ॥ २५ ॥ न हि मांसं तृणात् काष्ठादुपलाद्वापि जायते। हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥ २६ ॥ स्वाहास्वधामृतभुजो देवाः सत्यार्ज्जवप्रियाः। क्रव्यादान् राक्षसान् विद्धि जिह्वारसपरायणान् ॥ २७ ॥ कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च। रात्रावहनि सन्ध्यासु चत्वरेषु सभासु च ॥ २८ ॥ उद्यतेषु च शस्त्रेषु मृगव्यालभयेषु च। अमांसभक्षणे राजन् भयमन्यैर्न गच्छति ॥ २९ ॥ शरण्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु। अनुद्वेगकरो लोके न चाप्यु-

द्विजतै सदा ॥ ३० ॥ यदि चेत् खादको न स्यान्न तदा घातको भवेत् । घातकः खादकार्थाय यद्घातयति वै नरः ॥ ३१ ॥ अभक्ष्यमेतदिति वै इति हिंसा निवर्त्तते । खादकार्थमतो हिंसा मृगादीनां प्रवर्त्तते ॥ ३२ ॥ यस्माद्ग्रसति चैवायुर्हिंसकानां महाद्युते । तस्माद्विवर्ज्जयेन्मांसं य इच्छेद्भूतिमात्मनः ॥ ३३ ॥ त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः । उद्वेजनीया भूतानां यथा व्यालमृगास्तथा ॥ ३४ ॥ लोभाद्वा बुद्धिमोहाद्वा बलवीर्य्यार्थमेव च । संसर्गाद्वाथ पापानां अधर्म्मे रुचिता नृणाम् ॥ ३५ ॥ स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति । उद्विग्नवासी वसति यत्र तत्राभिजायते ॥ ३६ ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् । मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः ॥ ३७ ॥ इदन्तु खलु कौन्तेय श्रुतमासीत् पुरा मया । मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ॥ ३८ ॥ यो वै खादति मांसानि प्राणिनां जीवितैषिणाम् । हतानां वा मृतानां वा यथा हन्ता तथैव सः ॥ ३९ ॥ धनेन क्रयिको हन्ति खादकश्चोपभोगतः । घातको बधबन्धाभ्यामित्येषु त्रिविधो बधः ॥ ४० ॥ अखादयन्ननुमोदंश्च भावदोषेण मानवः । योऽनुमोदति हन्यन्तं सोऽपि दोषेण लिप्यते ॥ ४१ ॥ अधृष्यः सर्वभूतानामायुष्मान्नीरुजः सुखी । भवत्यभक्षयन्मांसं दयावान् प्राणिनामिह ॥ ४२ ॥ हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः । मांसस्याभक्षणे धर्म्मो विशिष्ट इति नः श्रुतिः ॥ ४३ ॥ अप्रोक्षितं वृथा मांसं विधिहीनं न भक्षयेत् । भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ॥ ४४ ॥ प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया । अल्पदोषमिदं ज्ञेयं विपरीते तु लिप्यते ॥ ४५ ॥ खादकस्य कृते जन्तुन् यो हन्यात् पुरुषाधमः । महादोषतरस्तत्र घातको न तु खादकः ॥ ४६ ॥ इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधोऽधमः । हन्याज्जन्तुं मांसगृध्नुः स वै नरकभाङ्-

नरः ॥ ४७ ॥ भक्षयित्वापि यो मांसं पश्चादपि निवर्त्तते। तस्यापि सुमहान् धर्मो यः पापाद्विनिवर्त्तते ॥ ४८ ॥ आहर्त्ता चानुमन्ता च विशस्ता क्रयविक्रयी। संस्कर्त्ता चोपभोक्ता च खादकाः सर्व एव ते ॥ ४९ ॥ इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम्। पुराणमृषिभिर्जुष्टं वेदेषु परिनिष्ठितम् ॥ ५० ॥ प्रवृत्तिलक्षणो धर्मः प्रजार्थिभिरुदाहृतः। यथोक्तं राजशार्दूल न तु तन्मोक्षकाङ्क्षिणाम् ॥ ५१ ॥ हविर्यत् संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि। वेदोक्तेन मार्गेण पितॄणां प्रक्रियासु च ॥५२॥ अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत्। अस्वर्ग्यमयशस्यञ्च रक्षोवद्भरतर्षभ ॥ ५३ ॥ विधिहीनं नरः पूर्वं मांसं राजन्न भक्षयेत्। अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत् ॥ ५४ ॥ य इच्छेत् पुरुषोऽत्यन्तमात्मानं निरुपद्रवम्। स वर्ज्जयेत मांसानि प्राणिनामिह सर्वशः ॥ ५५ ॥ श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः। येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥ ५६ ॥ ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा। अभक्ष्यमिति मांसं यः प्राह भक्ष्यमिति प्रभो ॥ ५७ ॥ आकाशादवनीं प्राप्तस्ततः स पृथिवीपतिः। एतदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ ५८ ॥ प्रजानां हितकामेन त्वगस्त्येन महात्मना। आरण्याः सर्वदैवत्याः प्रोक्षितास्तपसा मृगाः ॥ ५९ ॥ क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः। प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ ६० ॥ इदन्तु शृणु राजेन्द्र कीर्त्त्यमानं मयानघ। अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ॥ ६१ ॥ यस्तु वर्षशतं पूर्णं तपस्तप्येत् सुदारुणम्। यश्चैव वर्ज्जयेन्मांसं सममेतन्मतं मम ॥ ६२ ॥ कौमुदे तु विशेषेण शुक्लपक्षे नराधिप। वर्ज्जयेन्मधुमांसानि धर्मो ह्यत्र विधीयते ॥ ६३ ॥ चतुरो वार्षिकान् मासान् यो मांसं परिवर्ज्जयेत्। चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम् ॥ ६४ ॥

अथ वा मासमेकं वै सर्वमांसान्यभक्षयन्। अतीत्य सर्वदुःखानि सुखं जीवेन्निरामयः ॥ ६५ ॥ वर्ज्जयन्ति हि मांसानि मासशः पक्षशोऽपि वा। तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥६६॥ मांसन्तु कौमुदं पक्षं वर्ज्जितं पार्थ राजभिः। सर्वभूतात्मभूतस्थै-र्विदितार्थपरावरैः ॥ ६७ ॥ नाभागेनाम्बरीषेण गयेन च महात्मना। आयुनाथानरण्येन दिलीपरघुपूरुभिः ॥ ६८ ॥ कार्त्तवीर्य्यानिरुद्धाभ्यां नहुषेण ययातिना। नृगेण विष्वक्सेनेन तथैव शशविन्दुना ॥ ६९ ॥ युवनाश्वेन च तथा शिविनौशीनरेण च। मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण वा विभो ॥ ७० ॥ सत्यं वदत मासत्यं सत्यं धर्म्मः सनातनः। हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥ ७१ ॥ श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च। रैवतेन रन्तिदेवेन वसुना सृञ्जयेन च ॥ ७२ ॥ दुष्मन्तेन करूषेण रामालर्कनलैस्तथा। विरूपाश्वेन निमिना जनकेन च धीमता ॥ ७३ ॥ ऐलेन पृथुना चैव वीरसेनेन चैव ह। इक्ष्वाकुणा शम्भुना च श्वेतेन सगरेण च ॥ ७४ ॥ अजेन धुन्धुना चैव तथैव च सुबाहुना। हर्य्यश्वेन च राजेन्द्र क्षुपेण भरतेन च ॥ ७५ ॥ एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम्। शारदं कौमुदं मांसं ततस्ते स्वर्गमाप्नुवन् ॥ ७६ ॥ ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियावृताः। उपास्यमाना गन्धर्व्वैः स्त्रीसहस्रसमन्विताः ॥ ७७ ॥ तदेतदुत्तमं धर्म्ममहिंसाधर्म्मलक्षणम्। ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥ ७८ ॥ मधु मांसञ्च ये नित्यं वर्ज्जयन्तीह धार्मिकाः। जन्मप्रभृति मद्यञ्च सर्वे ते मुनयः स्मृताः ॥ ७९ ॥ इमं धर्म्मममांसादं यश्चरेच्छ्रावयीत वा। अपि चेत् सुदुराचारो न जातु निरयं व्रजेत् ॥ ८० ॥ पठेद्वा य इदं राजन् शृणुयाद्वाप्यभीक्ष्णशः। अमांसभक्षणविधिं पवित्रमृषिपूजितम् ॥ ८१ ॥ विमुक्तः सर्वपापेभ्यः सर्वकामैर्म्महीयते। विशिष्टतां

ज्ञातिषु च लभते नात्र संशयः ॥ ८२ ॥ आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात्। मुच्येत्तथातुरो रोगाद्दुःखान्मुच्येत दुःखितः ॥ ८३ ॥ तिर्य्यग्योनिः न गच्छेच्च रूपवांश्च भवेन्नरः। ऋद्धिमान् वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ॥ ८४ ॥ एतत्ते कथितं राजन् मांसस्य परिवर्ज्जने। प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्म्मितम् ॥ ८५ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे मांस-भक्षणकथने पञ्चदशाधिकशततोऽध्यायः ॥ ११५ ॥

---

युधिष्ठिर उवाच। इमे वै मानवा लोके नृशंसा मांसगृद्धिनः। विसृज्य विविधान् भक्ष्यान् महारक्षोगणा इव ॥ १ ॥ अपूपान् विविधाकारान् शाकानि विविधानि च। खाण्डवान् रसयोगान्न तथेच्छन्ति यथामिषम् ॥ २ ॥ तत्र मे बुद्धिरत्रैव विमर्षे परिमुह्यते। न मन्ये रसतः किञ्चिन्मांसतोऽस्तीति किञ्चन ॥ ३ ॥ तदिच्छामि गुणाञ्छ्रोतुं मांसस्याभक्षणे प्रभो। भक्षणे चैव ये दोषास्तांश्चैव भरतर्षभ ॥ ४ ॥ सर्वं तत्त्वेन धर्म्मज्ञ यथावदिह धर्म्मतः। किं वा भक्ष्यमभक्ष्यम्वा सर्वमेतद्वदस्व मे ॥ ५ ॥ यथैतद्यादृशञ्चैव गुणा ये चास्य वर्ज्जने। दोषा भक्षयतो येऽपि तन्मे ब्रूहि पितामह ॥ ६ ॥

भीष्म उवाच। एवमेतन्महाबाहो यथा वदसि भारत। न मांसात् परमं किञ्चिद्रसतो विद्यते भुवि ॥ ७ ॥ क्षतक्षीणाभितप्तानां ग्राम्यधर्म्मरतात्मनाम्। अध्वना कर्षितानाञ्च न मांसाद्विद्यते परम् ॥ ८ ॥ सद्यो वर्द्धयति प्राणान् पुष्टिमग्र्यां दधाति च। न भक्ष्योऽभ्यधिकः कश्चिन्मांसादस्ति परन्तप ॥ ९ ॥ विवर्ज्जिते तु बहवो गुणाः कौरवनन्दन। ये भवन्ति मनुष्याणां तन्मे

निगदतः शृणु ॥ १० ॥ स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति। नास्ति क्षुद्रतरस्तस्मात् स नृशंसतरो नरः ॥ ११ ॥ न हि प्राणात् प्रियतरं लोके किञ्चन विद्यते। तस्माद्दयां नरः कुर्य्याद्यथात्मनि तथा परे ॥ १२ ॥ शुक्राच्च तात संभूतिर्मांसस्येह न संशयः। भक्षणे तु महान् दोषो निवृत्त्या पुण्यमुच्यते ॥ १३ ॥ विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति। यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः। अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते ॥ १४ ॥ क्षत्रियाणाञ्च यो दृष्टो विधिस्तमपि मे शृणु। वीर्य्येणोपार्ज्जितं मांसं यथा भुञ्जन्न दुष्यति ॥ १५ ॥ आरण्याः सर्व्वदैवत्याः सर्व्वशः प्रोक्षिता मृगाः। अगस्त्येन पुरा राजन् मृगया येन पूज्यते ॥१६॥ नात्मानमपरित्यज्य मृगया नाम विद्यते। समतामुपसङ्गम्य भूतं हन्यति हन्ति वा ॥ १७ ॥ अतो राजर्षयः सर्व्वे मृगयां यान्ति भारत। न हि लिप्यन्ति पापेन न चैतत् पातकं विदुः ॥ १८ ॥ न ह्यतः सदृशं किञ्चिदिह लोके परत्र च। यत् सर्व्वेष्विह भूतेषु दया कौरवनन्दन ॥ १९ ॥ न भयं विद्यते जातु नरस्येह दयावतः। दयावतामिमे लोकाः परे चापि तपस्विनाम् ॥ २० ॥ अहिंसालक्षणो धर्म्म इति धर्म्मविदो विदुः। यदहिंसात्मकं कर्म्म तत् कुर्य्यादात्मवान्नरः ॥ २१ ॥ पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते। अभयं सर्वभूतेभ्यो यो ददाति दयापरः ॥ २२ ॥ अभयं सर्वभूतानि ददतीत्यनुशुश्रुम। क्षतञ्च स्खलितञ्चैव पतितं क्लिष्टमाहतम् ॥ २३ ॥ सर्व्वभूतानि रक्षन्ति समेषु विषमेषु च। नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ॥ २४ ॥ मुच्यते भयकालेषु मोक्षयेद्यो भये परान्। प्राणदानात् परं दानं न भूतं न भविष्यति ॥ २५ ॥ न ह्यात्मनः प्रियतरं किञ्चिदस्तीह निश्चितम्। अनिष्टं सर्व्वभूतानां मरणं नाम भारत ॥ २६ ॥ मृत्युकाले हि भूतानां सद्यो जायेत वेपथुः। जातिजन्मजरादुःखैर्नित्यं संसार-

सागरे ॥ २७ ॥ जन्तवः परिवर्त्तन्ते मरणादुद्विजन्ति च । गर्भ-वासेषु पच्यन्ते चाराम्लकटुकैरसैः ॥ २८ ॥ मूत्रश्लेष्मपुरीषाणां परुषैर्भृशदारुणैः । जाताश्चाप्यवशास्तत्र छिद्यमानाः पुनः पुनः ॥ २९ ॥ पाच्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः । कुम्भीपाकेषु पच्यन्ते तां तां योनिमुपागताः ॥ ३० ॥ आक्रम्य मार्य्यमाणाश्च भ्राम्यन्ते वै पुनः पुनः । नात्मनोऽस्ति प्रियतमः पृथिवीमनुसृत्य ह ॥ ३१ ॥ तस्मात् प्राणिषु सर्व्वेषु दयावानात्मवान् भवेत् । सर्व-मांसानि यो राजन् यावज्जीवं न भक्षयेत् ॥ ३२ ॥ स्वर्गे स विपुलं स्थानं प्राप्नुयान्नात्र संशयः । ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ॥ ३३ ॥ भक्ष्यन्ते तेऽपि भूतैस्तैरिति मे नात्र संशयः । मांस भक्षयते यस्माद्भक्षयिष्ये तमप्यहम् ॥ ३४ ॥ एत-न्मांसस्य मांसत्वमनुबुध्यस्व भारत । घातको बध्यते नित्यं ततो बध्यति भक्षिता ॥ ३५ ॥ आक्रोष्टा क्रुश्यते राजन् द्विषन् द्वेष्यत्व-माप्नुयात् । येन येन शरीरेण यद्यत् कर्म्म करोति यः ॥ ३६ ॥ तेन तेन शरीरेण तत्तत् फलमुपाश्नुते । अहिंसा परमो धर्म्म-स्तथाहिंसापरो दमः ॥ ३७ ॥ अहिंसा परमं दानमहिंसा परमं तपः । अहिंसा परमो यज्ञस्त्वहिंसा परमं बलम् ॥ ३८ ॥ अहिंसा परमं मित्रमहिंसा परमं सुखम् । अहिंसा परमं सत्यमहिंसा परमं श्रुतम् ॥ ३९ ॥ सर्वयज्ञेषु वा दानं सर्वतीर्थेषु चाप्लुतम् । सर्वदानफलञ्चापि नैतत्तुल्यमहिंसया ॥ ४० ॥ अहिंस्रस्य तपो-ऽक्षय्यमहिंस्रो यजते सदा । अहिंस्रः सर्वभूतानां यथा माता यथा पिता ॥ ४१ ॥ एतत् फलमहिंसाया भूयश्च कुरुपुङ्गव । न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ॥ ४२ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मे
अहिंसाकथने षोड़शाधिकशततोऽध्यायः ॥ ११६ ॥

युधिष्ठिर उवाच। अकामाश्च सकामाश्च ये हताः स्म महामृधे। कां गतिं प्रतिपद्यन्ते तन्मे ब्रूहि पितामह ॥ १ ॥ दुःखं प्राणपरित्यागः पुरुषाणां महामृधे। जानासि त्वं महाप्राज्ञ प्राणत्यागं सुदुष्करम् ॥ २ ॥ समृद्धो वासमृद्धो वा शुभे वा यदि वाशुभे। कारणं तत्र मे ब्रूहि सर्व्वज्ञो ह्यसि मे मतः ॥ ३ ॥

भीष्म उवाच। समृद्धो वासमृद्धो वा शुभे वा यदि वाशुभे। संसारेऽस्मिन् समायाताः प्राणिनः पृथिवीपते ॥ ४ ॥ निरता येन भावेन तत्र मे शृणु कारणम्। सम्यक् चायमनुप्रश्नस्त्वयोक्तस्तु युधिष्ठिर ॥ ५ ॥ अत्र ते वर्त्तयिष्यामि पुरावृत्तमिदं नृप। द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ॥ ६ ॥ ब्रह्मभूतश्चरन् विप्रः कृष्णद्वैपायनः पुरा। ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥७॥ गतिज्ञः सर्व्वभूतानां भाषाज्ञश्च शरीरिणाम्। सर्व्वज्ञः स तदा दृष्ट्वा कीटं वचनमब्रवीत् ॥ ८ ॥

व्यास उवाच। कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे। क्व धावसि तदाचक्ष्व कुतस्ते भयमागतम् ॥ ९ ॥

कीट उवाच। शकटस्यास्य महतो घोषं श्रुत्वा भयं मम। आगतं वै महाबुद्धे स्वन एष हि दारुणः ॥ १० ॥ श्रूयते न च मां हन्यादिति तस्मादपक्रमे। श्वसताञ्च शृणोम्येवं गोपुत्राणां प्रतोद्यताम् ॥ ११ ॥ वहतां सुमहाभारं सन्निकर्षे स्वनम्प्रभो। नृणाञ्च संवाहयतां श्रूयते विविधः स्वनः ॥ १२ ॥ श्रोतुमस्मद्विधेनैवं न शक्यं कीटयोनिना। तस्मादतिक्रमाम्येष भयादस्मात् सुदारुणात् ॥ १३ ॥ दुःखं हि मृत्युर्भूतानां जीवितञ्च सुदुर्लभम्। अतो भीतः पलायामि गच्छेयं नासुखं सुखात् ॥ १४ ॥

भीष्म उवाच। इत्युक्तः स तु तं प्राह कुतः कीट सुखं तव। मरणं ते सुखं मन्ये तिर्य्यग्योनौ तु वर्त्तसे ॥ १५ ॥ शब्दं स्पर्शं रसं

गन्धं भोगांश्चोच्चावचान् बहून्। नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ॥ १६ ॥

कीट उवाच। सर्वत्र निरतो जीव इतश्चापि सुखं मम। चिन्तयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् ॥ १७ ॥ इहापि विषयः सर्वो यथादेहं प्रवर्त्तितः। मानुषास्तैर्य्यग्जाश्चैव पृथग्भोगा विशेषतः ॥ १८ ॥ अहमासं मनुष्यो वै शूद्रो बहुधनः प्रभो। अब्रह्मण्यो नृशंसश्च कदर्य्यो वृद्धिजीवकः ॥ १९ ॥ वाक्तीक्ष्णो निकृतिप्रज्ञो द्वेष्टा सर्वस्य सर्वशः। मिथः कृतोपविधिना परस्वहरणे रतः ॥ २० ॥ भृत्यातिथिजनश्चापि गृहे पर्य्यषितो मया। मात्सर्य्यात् स्वादुकामेन नृशंसेन बुभुक्षता ॥ २१ ॥ देवार्थं पितृयज्ञार्थमन्नं श्रद्धाकृतं मया। न दत्तमर्थकामेन देयमन्नं पुरा किल ॥ २२ ॥ गुप्तं शरणमाश्रित्य भयेषु शरणागताः। अकस्मात्ते मया त्यक्ता न त्राता अभयैषिणः ॥ २३ ॥ धनं धान्यं प्रियान् दारान् पानं वासस्तथाद्भुतम्। श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् ॥ २४ ॥ ईर्षुः परसुखं दृष्ट्वा अन्यस्य न बुभूषकः। त्रिवर्गहन्ता चान्येषामात्मकामानुवर्त्तकः ॥ २५ ॥ नृशंसगुणभूयिष्ठं पुरा कर्म्म कृतं मया। स्मृत्वा तदनुतप्येऽहं प्रियमिवात्मजम् ॥ २६ ॥ शुभानां नाभिजानामि कृतानां कर्म्मणा फलम्। माता च पूजिता वृद्धा ब्राह्मणश्चार्च्चितो मया ॥ २७ ॥ सकृज्जातिगुणोपेतः सङ्गत्या गृहमागतः। अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात् स्मृतिः ॥ २८ ॥ कर्मणा पुनरेवाहं सुखमागामि लक्षये। तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ॥ २९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने कीटोपाख्याने सप्तदशाधिकशततोऽध्यायः ॥ ११७ ॥

---

व्यास उवाच । शुभेन कर्मणा यद्द तिर्य्यग्योनौ न मुच्यसे ।
ममैव कीट तत्कर्म येन त्वं न प्रमुच्यसे ॥ १ ॥ अहं हि दर्शनादेव
तारयामि तपोबलात् । तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ॥२॥
जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटताम् । अवाप्स्यसि
पुनर्द्धर्मं धर्मस्तु यदि मन्यसे ॥ ३ ॥ कर्मभूमिकृतं देवा भुञ्जते
तिर्य्यगाश्च ये । धर्मोऽपि हि मनुष्येषु कामार्थाश्च तथा गुणाः ॥४॥
वाग्बुद्धिपाणिपादैश्च व्यपेतस्य विपश्चितः । किं हास्यति मनु-
ष्यस्य मन्दस्यापि हि जीवतः ॥ ५ ॥ जीवन् हि कुरुते पूजां
विप्राग्र्यः शशिसूर्य्ययोः । ब्रुवन्नपि कथां पुण्यां तत्र कीटत्वमेष्यसि
॥ ६ ॥ गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे । तत्र तेऽहं
विनेष्यामि ब्रह्मत्वं यत्र वेष्यसि ॥ ७ ॥ स तथेति प्रतिश्रुत्य कीटो
वर्त्मन्यतिष्ठत । शकटी व्रजंश्च सुमहानागतश्च यदृच्छया ॥ ८ ॥
चक्राक्रमेण भिन्नश्च कीटः प्राणान्मुमोच ह । सम्भूतः क्षत्रियकुले
प्रसादादमितौजसः ॥९॥ तमृषिं द्रष्टुमगमत् सर्वास्त्वन्यासु योनिषु ।
श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम् ॥ १० ॥ श्वपाकशूद्र-
वैश्यानां क्षत्रियाणाञ्च योनिषु । स कीट एवमाभाष्य ऋषिणा
सत्यवादिना । प्रतिस्मृत्याथ जग्राह पादौ मूर्द्ध्ना कृताञ्जलिः ॥११॥

कीट उवाच । इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः ।
यदहं प्राप्य कीटत्वमागतो राजपुत्रताम् ॥ १२ ॥ वहन्ति मामति-
बलाः कुञ्जरा हेममालिनः । स्यन्दनेषु च काम्बोजा युक्ताः
परमवाजिनः ॥ १३ ॥ उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति
माम् । सबान्धवः सहामात्यश्चाश्नामि पिशितौदनम् ॥ १४ ॥ गृहेषु
सुनिवातेषु सुखेषु शयनेषु च । वरार्हेषु महाभाग स्वपामि च
सुपूजितः ॥ १५ ॥ सर्वेष्वपररात्रेषु सूतमागधवन्दिनः । स्तुवन्ति
मां यथा देवा महेन्द्रं प्रियवादिनः ॥ १६ ॥ प्रसादात् सत्यसन्धस्य
भवतोऽमिततेजसः । यदहं कीटतां प्राप्य सम्प्राप्तो राजपुत्रताम्

॥ १७ ॥ नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रसाधि माम् । त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया ॥ १९ ॥

व्यास उवाच । अर्च्चितोऽहं त्वया राजन् वाग्भिरद्य यदृच्छया । अद्य ते कीटतां प्राप्य स्मृतिर्ज्जाता जुगुप्सिता ॥ २० ॥ न तु नाशोऽस्ति पापस्य यत्त्वयोपचितः पुरा । शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ॥ २१ ॥ मम ते दर्शनं प्राप्तं तच्चैवं सुकृतं त्वया । तिर्य्यग्योनौ स्म जातेन मम चाभ्यर्च्चनात्तथा ॥ २२ ॥ इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि । गोब्राह्मणकृते प्राणान् हत्वा प्राणं रणाजिरे ॥ २३ ॥ राजपुत्र सुखं प्राप्य क्रतूंश्चैवाप्तदक्षिणान् । अथ मोदिष्यसे स्वर्गे ब्रह्मभूतोऽव्ययः सुखी ॥ २४ ॥ तिर्य्यग्योन्याः शूद्रतामभ्युपैति शूद्रो वैश्यं क्षत्रियत्वञ्च वैश्यः । वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं स्वर्गं पुण्यं ब्राह्मणः साधुवृत्तः ॥ २५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे कीटोपाख्याने अष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥

---

भीष्म उवाच । क्षत्रधर्ममनुप्राप्तः स्मरन्नेव च वीर्य्यवान् । त्यक्त्वा स कीटतां राजंश्चचार विपुलं तपः ॥ १ ॥ तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः । आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ॥ २ ॥

व्यास उवाच । क्षात्रं देवव्रतं कीट भूतानां परिपालनम् । क्षात्रं देवव्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ॥ ३ ॥ पाहि सर्वाः प्रजाः सम्यक् शुभाशुभविदात्मवान् । शुभैः संविभजन् कामैरशुभानाञ्च पावनैः ॥ ४ ॥ आत्मवान् भव सुप्रीतः स्वधर्माचरणे रतः । क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ ५ ॥

भीष्म उवाच। सोऽप्यारण्यमनुप्राप्य पुनरेव युधिष्ठिर। महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पाल्य च ॥ ६ ॥ अचिरेणैव कालेन कीटः पार्थिवसत्तम। प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ॥ ७ ॥ ततस्तं ब्राह्मणं दृष्ट्वा पुनरेव महायशाः। आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ ८ ॥

व्यास उवाच। भो भो ब्रह्मर्षभ श्रीमन् मा व्यथिष्ठाः कथञ्चन। शुभकृच्छुभयोनीषु पापकृत् पापयोनिषु। उपपद्यति धर्म्मज्ञ यथापापफलोपगम् ॥ ९ ॥ तस्मान्मृत्युभयात् कीट मा व्यथिष्ठाः कथञ्चन। धर्म्मलोपभयं ते स्यात् तस्माद्धर्म्मञ्चरोत्तमम् ॥ १० ॥

कीट उवाच। सुखात् सुखतरं प्राप्तो भगवंस्त्वत् कृते ह्यहम्। धर्म्ममूला श्रियः प्राप्य पाप्मा नष्ट इहाद्य मे ॥ ११ ॥

भीष्म उवाच। भगवद्वचनात् कीटो ब्राह्मण्यं प्राप्य दुर्लभम्। अकरोत् पृथिवीं राजन् यज्ञयूपशताङ्किताम् ॥ १२ ॥ ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमः। अवाप च परं कीटः पार्थ ब्रह्मसनातनम्। स्वकर्म्मफलनिर्वृत्तं व्यासस्य वचनात्तदा ॥ १३ ॥ तेऽपि यस्मात् प्रभावेन हताः क्षत्रियपुङ्गवाः। सम्प्राप्तास्ते गतिं पुण्यां तस्मान्मा शोच पुत्रक ॥ १४ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे कीटोपाख्याने एकोनविंशत्यधिकशततोऽध्यायः ॥ ११९ ॥

---

युधिष्ठिर उवाच। विद्यातपोभ्यां दानाच्च किमेतेषां विशिष्यते। पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। मैत्रेयस्य च सम्वादं कृष्णद्वैपायनस्य च ॥ २ ॥ कृष्णद्वैपायनो

राजन्नज्ञातचरितं चरन्। वाराणस्यामुपातिष्ठन् मैत्रेयं स्वैरिणी-
कुले ॥ ३ ॥ तमुपस्थितमासीनं ज्ञात्वा स मुनिसत्तमः। अर्चित्वा
भोजयामास मैत्रेयोऽशनमुत्तमम् ॥ ४ ॥ तदन्नमुत्तमं भुक्त्वा गुण-
वत् सार्वकामिकम्। प्रतिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः
॥ ५ ॥ तमुत्स्मयन्तं सम्प्रेक्ष्य मैत्रेयः कृष्णमब्रवीत्। कारणं
ब्रूहि धर्मात्मन् व्यस्मयिष्ठाः कुतश्च ते। तपस्विनो धृतिमतः प्रमोदः
समुपागतः ॥ ६ ॥ एतत् पृच्छामि ते विद्वन्नभिवाद्य प्रणम्य च।
आत्मनश्च तपोभाग्यं महाभाग्यं तवेह च ॥ ७ ॥ पृथगाचरत-
स्तात पृथगात्मसुखात्मनोः। अल्पान्तरमहं मन्ये विशिष्टमपि
चान्वयात् ॥ ८ ॥

व्यास उवाच। अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः।
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ ९ ॥ त्रीण्येव तु पदा-
न्याहुः पुरुषस्योत्तमं व्रतम्। न द्रुह्येच्चैव दद्याच्च सत्यञ्चैव परं
वदेत् ॥ १० ॥ इति वेदोक्तमृषिभिः पुरस्तात् परिकल्पितम्।
इदानीञ्चैव नः कृत्यं पुरस्ताच्च परिश्रुतम् ॥ ११ ॥ अल्पो हि
तादृशो दायो भवत्युत महाफलः। तृषिताय च ते दत्तं हृद-
येनानसूयता ॥ १२ ॥ तृषितस्तृषिताय त्वं दत्त्वैतदशनं मम।
अजैषीर्महतो लोकान्महायज्ञैरिव प्रभो ॥ १३ ॥ ततो दान-
पवित्रेण प्रीतोऽस्मि तपसैव च। पुण्यस्यैव हि ते सत्त्वं पुण्यस्यैव
च दर्शनम् ॥ १४ ॥ पुण्यस्यैवाभिगन्धस्ते मन्ये कर्मविधानजम्।
अधिकं मार्जनात्तात तथा चैवानुलेपनात् ॥ १५ ॥ शुभं सर्वपवि-
त्रेभ्यो दानमेव परं द्विज। नो चेत् सर्वपवित्रेभ्यो दानमेव परं
भवेत् ॥ १६ ॥ यानीमान्युत्तमानीह वेदोक्तानि प्रशंससि। तेषां
श्रेष्ठतरं दानमिति मे नात्र संशयः ॥ १७ ॥ दानकृद्भिः कृतः
पन्था येन यान्ति मनीषिणः। ते हि प्राणस्य दातारस्तेषु धर्मः
प्रतिष्ठितः ॥ १८ ॥ यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः।

सर्वत्यागो यथा चेह तथा दानमनुत्तमम् ॥ १९ ॥ त्वं हि तात सुखादेव सुखमेष्यसि शोभनम् । सुखात् सुखतरप्राप्तिमाप्नुते मतिमान्नरः ॥ २० ॥ तन्नः प्रत्यक्षमेवेदमुपलब्धमसंशयम् । श्रीमन्तमाप्नुवन्त्यर्था दानं यज्ञस्तथा सुखम् ॥ २१ ॥ सुखादेव परं दुःखं दुःखादप्यपरं सुखम् । दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः ॥ २२ ॥ त्रिविधानीह वृत्तानि नरस्याहुर्मनीषिणः । पुण्यमन्यत् पापमन्यन्न पुण्यं न च पातकम् ॥ २३ ॥ न वृत्तं मन्यते तस्य मन्यते नास्य पातकम् । तथा स्वकर्म्म निर्वृत्तं न पुण्यं न च पातकम् ॥ २४ ॥ यज्ञदानतपःशीला नरा वै पुण्यकर्म्मिणः । येऽभिद्रुह्यन्ति भूतानि ते वै पापकृतो जनाः ॥ २५ ॥ द्रव्याण्याददते चैव दुःखं यान्ति पतन्ति च । अतोऽन्यत् कर्म्म यत् किञ्चिन्न पुण्यं न च पातकम् ॥ २६ ॥ रमस्वैधस्व मोदस्व देहि चैव यजस्व च । न त्वामभिभविष्यन्ति वैद्या न च तपस्विनः ॥ २७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे मैत्रेयभिक्षायां विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

भीष्म उवाच । एवमुक्तः प्रत्युवाच मैत्रेयः कर्म्मपूजकः । अत्यन्तश्रीमति कुले जातः प्राज्ञो बहुश्रुतः ॥ १ ॥

मैत्रेय उवाच । असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् । अनुज्ञातस्तु भवता किञ्चिद्ब्रूयामहं विभो ॥ २ ॥

व्यास उवाच । यद्यदिच्छसि मैत्रेय यावद्यावद्यथा यथा । ब्रूहि तत्त्वं महाप्राज्ञ शुश्रूषे वचनन्तव ॥ ३ ॥

मैत्रेय उवाच । निर्द्दोषं निर्म्मलञ्चैव वचनं दानसंहितम् । विद्यातपोभ्यां हि भवान् भावितात्मा न संशयः ॥ ४ ॥ भवतो

भविताम्मलाभोऽयं सुमहान्मम । भूयो बुद्धानुपश्यामि सुसमिद्धतपा इव ॥ ५ ॥ अपि नो दर्शनादेव भवतोऽभ्युदयो भवेत् । मन्ये भवत्प्रसादोऽयं तद्धि कर्मस्वभावतः ॥ ६ ॥ तपः श्रुतञ्च योनिश्चाप्येतद्ब्राह्मण्यकारणम् । त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ॥ ७ ॥ अस्मिंस्तृप्ते च तृप्यन्ते पितरो दैवतानि च । न हि श्रुतवतः किञ्चिदधिकं ब्राह्मणादृते ॥ ८ ॥ अन्धं स्यात्तम एवेदं न प्रज्ञायेत किञ्चन । चातुर्वर्ण्यं न वर्त्तेत धर्माधर्मावृतानृते ॥ ९ ॥ यथा हि सुकृते क्षेत्रे फलं विन्दति मानवाः ! एवं दत्त्वा श्रुतवति फलं दाता समश्नुते ॥ १० ॥ ब्राह्मणश्चेन्न विद्येत श्रुतवृत्तोपसंहितः । प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनम् ॥ ११ ॥ अदन्नविद्वान् हन्त्यर्थमद्यमानश्च हन्ति तम् । तच्चान्नं पाति यश्चान्नं स हन्ता हन्यतेऽबुधः ॥ १२ ॥ प्रभुर्ह्यन्नमदन् विद्वान् पुनर्जनयतीश्वरः । स चान्नाज्जायते तस्मात् सूक्ष्म एष व्यतिक्रमः ॥ १३ ॥ यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः । न ह्येकचक्रं वर्त्तेत इत्येवमृषयो विदुः ॥ १४ ॥ यत्र वै ब्राह्मणाः सन्ति श्रुतवृत्तोपसंहिताः । तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते ॥ १५ ॥ ये योनिशुद्धाः सततं तपस्याभिरता भृशम् । दानाध्ययनसम्पन्नास्ते वै पूज्यतमाः सदा ॥ १६ ॥ तैर्हि सद्भिः कृतः पन्थास्तेन यातो न मुह्यते । ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः ॥ १७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे मैत्रेयसंवादे एकविंशत्यधिकशतोऽध्यायः ॥ १२१ ॥

---

भीष्म उवाच । एवमुक्तः स भगवान् मैत्रेयं प्रत्यभाषत । दिष्ट्यैवं त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी ॥ १ ॥ लोको

ह्याथ्र्यगुणानेव भूयिष्ठन्तु प्रशंसति। रूपमानवयोमानश्रीमाना-
श्चाप्यसंशयम् ॥ २ ॥ दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः।
यत्ते भृशतरं दानाद्वर्त्तयिष्यामि तच्छृणु ॥ ३ ॥ यानीहागम-
शास्त्राणि याश्च काश्चित् प्रवृत्तयः। तानि वेदं पुरस्कृत्य प्रवृत्तानि
यथाक्रमम् ॥ ४ ॥ अहं दानं प्रशंसामि भवानपि तपःश्रुते। तपः
पवित्रं वेदस्य तपः स्वर्गस्य साधनम् ॥ ५ ॥ तपसा महदाप्नोति
विद्यया चेति नः श्रुतम्। तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम्
॥ ६ ॥ यत् यद्धि किञ्चित् सन्धाय पुरुषस्तप्यते तपः। सर्वमेत-
दवाप्नोति विद्यया चेति नः श्रुतम् ॥ ७ ॥ दुरन्वयं दुष्प्रधर्षं दुरापं
दुरतिक्रमम्। सर्वं वै तपसाभ्येति तपो हि बलवत्तरम् ॥ ८ ॥
सुरापोऽसम्मतादायी भ्रूणहा गुरुतल्पगः। तपसा तरते सर्व-
मेनसश्च प्रमुच्यते ॥ ९ ॥ सर्वविद्यस्तु चक्षुष्मानपि यादृशतादृशम्।
तपस्विनं तथैवाहुस्ताभ्यां कार्यं सदा नमः ॥ १० ॥ सर्वे पूज्याः
श्रुतधनास्तथैव च तपस्विनः। दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह
च श्रियम् ॥ ११ ॥ इमञ्च ब्रह्मलोकञ्च लोकञ्च बलवत्तरम्। अन्न-
दानैः सुकृतिनः प्रतिपद्यन्ति लौकिकाः ॥ १२ ॥ पूजिताः पूजय-
न्त्येतन्मानिता मानयन्ति च। स दाता यत्र यत्रेति सर्वतः सम्प्र-
णूयते ॥ १३ ॥ अकर्त्ता चैव कर्त्ता च लभते यस्य यादृशम्। यदि
चोर्द्ध्वं यद्यधो वा स्वाँल्लोकानभियास्यति ॥ १४ ॥ प्राप्स्यसे त्वन्न-
पानानि यानि वाञ्छसि कानिचित्। मेधाव्यसि कुले जातः
श्रुतवानन्नृशंसवान् ॥ १५ ॥ कौमारचारी व्रतवान् मैत्रेय निरतो
भव। एतद्गृहाण प्रथमं स्वधर्मं गृहमेधिनाम् ॥ १६ ॥ यो भर्त्ता
वासिता तुष्टो भर्त्तृतुष्टा च वासिता। यस्मिन्नेवं कुले सर्वं कल्याण-
न्तत्र वर्त्तते ॥ १७ ॥ अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा।
दानेन तपसा चैव सर्वं पापमपोहति ॥ १८ ॥ स्वस्ति प्राप्नुहि
मैत्रेय गृहान् साधु व्रजाम्यहम्। एतन्मनसि कर्त्तव्यं श्रेय एवं

भविष्यति ॥ १९ ॥ तं प्रणम्याथ मैत्रेयः कृत्वा चाभिप्रदक्षिणम्।
स्वस्ति प्राप्नोतु भगवन्नित्युवाच कृताञ्जलिः ॥ २० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे मैत्रेय-
भिक्षायां द्वाविंशत्यधिकशततोऽध्यायः ॥ १२२ ॥

---

युधिष्ठिर उवाच। सत्स्त्रीणां समुदाचारं सर्वधर्म्मविदाम्वर।
श्रोतुमिच्छाम्यहं त्वत्तस्तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म उवाच। सर्वज्ञां सर्वतत्त्वज्ञां देवलोके मनस्विनीम्।
कैकेयी सुमना नाम शाण्डिलीं पर्य्यपृच्छत ॥ २ ॥ केन वृत्तेन
कल्याणि समाचारेण केन वा। विधूय सर्वपापानि देवलोकं
त्वमागता ॥ ३ ॥ हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा।
सुता ताराधिपस्येव प्रभया दिवमागता ॥ ४ ॥ अरजांसि च
वस्त्राणि धारयन्ती गतक्लमा। विमानस्था शुभे भासि सहस्रगुण-
मोजसा ॥ ५ ॥ न त्वमल्पेन तपसा दानेन नियमेन च। इमं
लोकमनुप्राप्ता त्वं हि तत्त्वं वदस्व मे ॥ ६ ॥ इति पृष्टा सुमनया
मधुरं चारुहासिनी। शाण्डिली निभृतं वाक्यं सुमनामिदमब्र-
वीत् ॥ ७ ॥ नाहं काषायवसना नापि वल्कलधारिणी। न च
मुण्डा न जटिला भूत्वा देवत्वमागता ॥ ८ ॥ अहितानि च
वाक्यानि सर्वाणि परुषाणि च। अप्रमत्ता च भर्त्तारं कदाचित्
नाहमब्रुवम् ॥ ९ ॥ देवतानां पितॄणाञ्च ब्राह्मणानाञ्च पूजने।
अप्रमत्ता सदा युक्ता श्वश्रूश्वशुरवर्त्तिनी ॥ १० ॥ पैशुन्येन प्रव-
र्त्तामि न ममैतन्मनोगतम्। अद्वारि न च तिष्ठामि चिरं न कथ-
यामि च ॥ ११ ॥ असद्वा हसितं किञ्चिदहितं वापि कर्म्मणा।
रहस्यमरहस्यं वा न प्रवर्त्तामि सर्वथा ॥ १२ ॥ कार्य्यार्थे निर्गत-
ञ्चापि भर्त्तारं गृहमागतम्। आसनेनोपसंयोज्य पूजयामि समा-

हिता॥१३॥ यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति। भक्ष्यं वा यदि वा लेह्यं तत् सर्वं वर्ज्जयाम्यहम्॥१४॥ कुटुम्बार्थे समानीतं यत् किञ्चित् कार्य्यमेव तु। प्रातरुत्थाय तत् सर्वं कारयामि करोमि च॥१५॥ प्रवासं यदि मे याति भर्त्ता कार्य्येण केनचित्। मङ्गलैर्बहुभिर्युक्ता भवामि नियता तदा॥१६॥ अञ्जनं रोचनाञ्चैव स्नानं माल्यानुलेपनम्। प्रसाधनञ्च निष्क्रान्ते नाभिनन्दामि भर्त्तरि॥१७॥ नोत्थापयामि भर्त्तारं सुखसुप्तमहं सदा। आन्तरेष्वपि कार्य्येषु तेन तुष्यति मे मनः॥१८॥ नायासयामि भर्त्तारं कुटुम्बार्थेऽपि सर्वदा। गुप्तगुह्या सदा चास्मि सुसंहृष्टनिवेशया॥१९॥ इमं धर्म्मपथं नारी पालयन्ती समाहिता। अरुन्धतीव नारीणा स्वर्गलोके महीयते॥२०॥

भीष्म उवाच। एतदाख्याय सा देवी सुमनायै तपस्विनी। पतिधर्म्मं महाभागा जगामादर्शनं तदा॥२१॥ यश्चेदं पाण्डवाख्यानं पठेत् पर्व्वणि पर्व्वणि। स देवलोकं सम्प्राप्य नन्दने स सुखी भवेत्॥२२॥

इत्यनुशासनपर्वणि अनुशासनिकेपर्वणि दानधर्म्मे सुमनासम्वादे त्रयोविंशत्यधिकशतोऽध्यायः॥१२३॥

---

युधिष्ठिर उवाच। साम्नि चापि प्रदाने च ज्यायः किं भवतो मतम्। प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते॥१॥

भीष्म उवाच। साम्ना प्रसाद्यते कश्चिद्दानेन च तथापरः। पुरुषः प्रकृतिं गत्वा तयोरेकतरं भजेत्॥२॥ गुणांस्तु शृणु मे राजन् सान्त्वस्य भरतर्षभ। दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा॥३॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। गृहीत्वा रक्षसा मुक्तो द्विजाति कानने यथा॥४॥ कश्चिद्वाग्-

बुद्धिसम्पन्नो ब्राह्मणो विजने वने। गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ॥ ५ ॥ स बुद्धिश्रुतिसम्पन्नस्तं दृष्ट्वातीव भीषणम्। सामैवास्मिन् प्रयुयुजे न मुमोह न विव्यथे ॥ ६ ॥ रक्षस्तु वाचा सम्पूज्य प्रश्नं पप्रच्छ तं द्विजम्। मोक्ष्यसे ब्रूहि मे प्रश्नं केनासि हरिणः कृशः ॥ ७ ॥ मुहूर्तमथ सञ्चिन्त्य ब्राह्मणस्तस्य रक्षसः। आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह ॥ ८ ॥

ब्राह्मण उवाच। विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः। विषयानतुलान् भुङ्क्षे तेनासि हरिणः कृशः ॥ ९ ॥ नूनं मित्राणि ते रक्षः साधूपचरितान्यपि। स्वदोषादपरज्यन्ते तेनासि हरिणः कृशः ॥ १० ॥ गुणवान्निर्गुणानन्यान् नूनं पश्यसि सत्कृतान्। प्राज्ञोऽप्राज्ञान् विनीतात्मा तेनासि हरिणः कृशः ॥ ११ ॥ धनैश्वर्याधिकास्तव्धास्त्वद्गुणैः परमा वराः। अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ १२ ॥ अवृत्त्या क्लिश्यमानोऽपि वृत्त्युपायान् विगर्हयन्। माहात्म्याद्व्यथसे नूनं तेनासि हरिणः कृशः ॥ १३ ॥ सम्पीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः। जितं त्वां मन्यते साधो तेनासि हरिणः कृशः ॥ १४ ॥ क्लिश्यमानान् विमार्गेषु कामक्रोधावृतात्मनः। मन्ये त्वं ध्यायसि जनांस्तेनासि हरिणः कृशः ॥ १५ ॥ प्रज्ञासम्भावितो नूनमप्रज्ञैरुपसंहितः। ह्रीयमानोऽसि दुर्वृत्तैस्तेनासि हरिणः कृशः ॥ १६ ॥ नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन्। वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ॥ १७ ॥ प्रकाशार्थगतिर्नूनं रहस्यकुशलः कृती। तज्ज्ञैर्न पूज्यसे नूनं तेनासि हरिणः कृशः ॥ १८ ॥ असत्स्वपि निविष्टेषु ब्रुवतो मुक्तसंशयान्। गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥१९॥ धनबुद्धिश्रुतैर्हीनः केवलं तेजसान्वितः। महत् प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २० ॥ तपः प्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम्। बान्धवा नाभिनन्दन्ति तेनासि हरिणः कृशः ॥ २१ ॥

इष्टभार्य्यस्य ते नूनं प्रतिविम्बो महाधनः । युवा सुललितः कामी तेनासि हरिणः कृशः ॥ २२ ॥ नूनमर्थवतां मध्ये तव वाक्यमनुत्तमम् । न भाति कालेऽभिहितं तेनासि हरिणः कृशः ॥ २३ ॥ दृढ़पूर्वं श्रुतं मूर्खं कुपितं हृदयप्रियम् । अनुनेतुं न शक्नोसि तेनासि हरिणः कृशः ॥ २४ ॥ नूनमासञ्जयित्वा त्वां कृत्ये कस्मिंश्चिदीप्सिते । कश्चिदर्थयते नित्यं तेनासि हरिणः कृशः ॥ २५ ॥ नूनं त्वां सुगुणैर्युक्तं पूजयानं सुहृद्ध्रुवम् । ममार्थ इति जानीते तेनासि हरिणः कृशः ॥ २६ ॥ अन्तर्गतमभिप्रायं नूनं नेच्छसि लज्जया । विवेक्तुं प्राप्तिशैथिल्यात्तेनासि हरिणः कृशः ॥ २७ ॥ नानाबुद्धिरुचो लोके मनुष्यान्नूनमिच्छसि । ग्रहीतुं स्वगुणैः सर्वांस्तेनासि हरिणः कृशः ॥ २८ ॥ अविद्वान् भीरुरल्पार्थो विद्याविक्रमदानजम् । यशः प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २९ ॥ चिराभिलषितं किञ्चित् फलमप्राप्तमेव ते । कृतमन्यैरपकृतं तेनासि हरिणः कृशः ॥ ३० ॥ नूनमात्मकृतं दोषमपश्यन् किञ्चिदात्मनः । अकारणेऽभिशप्तोऽसि तेनासि हरिणः कृशः ॥३१॥ सुहृदां दुःखमार्त्तानां न प्रमोक्ष्यसि चार्त्तिजम् । अलमर्थगुणैर्हीनं तेनासि हरिणः कृशः ॥ ३२ ॥ साधून् गृहस्थान् दृष्ट्वा च तथासाधून् वनेचरान् । मुक्तांश्चावसथे सक्तांस्तेनासि हरिणः कृशः ॥ ३३ ॥ धर्म्यमर्थ्यञ्च काम्यञ्च काले चाभिहितं वचः । न प्रतीयन्ति ते नूनं तेनासि हरिणः कृशः ॥ ३४ ॥ दत्तानकुशलैरर्थान् मनीषी संजिजीविषुः । प्राप्य वर्त्तयसे नूनं तेनासि हरिणः कृशः ॥ ३५ ॥ पापान् प्रवर्द्धतो दृष्ट्वा कल्याणानवसीदतः । ध्रुवं गर्हयसे नित्यं तेनासि हरिणः कृशः ॥ ३६ ॥ परस्परविरुद्धानां प्रियं ननं चिकीर्षसि । सुहृदामुपरोधेन तेनासि हरिणः कृशः ॥ ३७ ॥ श्रोत्रियांश्च विकर्मस्थान् प्राज्ञांश्चाप्यजितेन्द्रियान् । मन्येऽनुध्यायसि जनांस्तेनासि हरिणः कृशः ॥ ३८ ॥ एवं सम्पूजितं

रतो विप्रं तं प्रत्यपूजयत्। सखायमकरोच्चैनं संयोज्यार्थैर्मुमोच ह ॥ ३९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे हरिणकृशकाख्याने चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥

---

युधिष्ठिर उवाच। जन्म मानुष्यमासाद्य कर्मक्षेत्रं सुदुर्लभम्। श्रेयोऽर्थिना दरिद्रेण यत् कर्त्तव्यं पितामह ॥ १ ॥ दानानामुत्तमं यच्च देयं यच्च यथा यथा। मान्यान् पूज्यांश्च गाङ्गेय रहस्यं वक्तुमर्हसि ॥ २ ॥

वैशम्पायन उवाच। एवं पृष्टो नरेन्द्रेण पाण्डवेन यशस्विना। धर्माणां परमं गुह्यं भीष्मः प्रोवाच पार्थिवम् ॥ ३ ॥

भीष्म उवाच। शृणुष्वावहितो राजन् धर्मगुह्यानि भारत। यथा मे भगवान् व्यासः पुरा कथितवांस्तथा ॥ ४ ॥ देवगुह्यमिदं राजन् यमेनाक्लिष्टकर्मणा। नियमस्थेन युक्तेन तपसो महतः फलम् ॥ ५ ॥ येन यः प्रीयते देवः प्रीयन्ते पितरस्तथा। ऋषयः प्रमथाः श्रीश्च चित्रगुप्तो दिशां गजाः ॥ ६ ॥ ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः। महादानफलञ्चैव सर्वयज्ञफलन्तथा ॥ ७ ॥ यश्चैतदेवं जानीयाज्ज्ञात्वा वा कुरुतेऽनघ। सदोषो-ऽदोषवांश्चेह तैर्गुणैः सह युज्यते ॥ ८ ॥ दशसूनासमं चक्रं दश-चक्रसमो ध्वजः। दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ ९ ॥ अर्द्धमेतानि सर्वाणि नृपतिः कथ्यतेऽधिकः। त्रिवर्गसहितं शास्त्रं पवित्रं पुण्यलक्षणम् ॥ १० ॥ धर्मव्याकरणं पुण्यं रहस्यश्रवणं महत्। श्रोतव्यं धर्मसंयुक्तं विहितं त्रिदशैः स्वयम् ॥ ११ ॥ पितृणां यत्र गुह्यानि प्रोच्यन्ते श्राद्धकर्मणि। दैवतानाञ्च सर्वेषां रहस्यं कथ्यतेऽखिलम् ॥ १२ ॥ ऋषिधर्मः स्मृतो यत्र सरहस्यो

महाफलः। महायज्ञफलञ्चैव सर्व्वदानफलं तथा॥ १३ ॥ ये पठन्ति सदा मन्त्रां येषाञ्चैवोपतिष्ठति। श्रुत्वा च स्वयमाचष्टे स्वयं नारायणः प्रभुः॥ १४॥ गवां फलं तीर्थफलं यज्ञानाञ्चैव यत् फलम्। एतत् फलमवाप्नोति यो नरोऽतिथिपूजकः॥१५॥ श्रोतारः श्रद्दधानाश्च येषां शुद्धञ्च मानसम्। तेषां व्यक्तं जिता लोकाः श्रद्दधानेन साधुना॥ १६॥ मुच्यते किल्बिषाच्चैव न स पापेन लिप्यते। धर्म्मञ्च लभते नित्यं प्रेत्य लोकगतो नरः॥ १७॥ कस्यचित्त्वथ कालस्य देवदूतो यदृच्छया। स्थितो ह्यन्तर्हितो भूत्वा अभ्यभाषत वासवम्॥ १८॥ यौ तौ कामगुणोपेतावश्विनौ भिषजां वरौ। आज्ञयाहं तयोः प्राप्तः स नरान् पितृदैवतान् ॥ १९॥ कस्माद्धि मैथुनं श्राद्धे कर्त्तुर्भोक्तुश्च वर्ज्जितम्। किमर्थञ्च त्रयः पिण्डा विभक्ताश्च पृथक् पृथक्॥ २०॥ प्रथमः कस्य दातव्यो मध्यमः क्व च गच्छति। उत्तरश्च स्मृतः कस्य एतदिच्छामि वेदितुम्॥ २१॥ श्रद्दधानेन दूतेन भाषितं धर्म्मसंहितम्। पूर्व्वस्थास्त्रिदशाः सर्व्वे पितरः पूज्य खेचरम्॥ २२॥

पितर ऊचुः। स्वागतन्तेऽस्तु भद्रन्ते श्रूयतां खेचरोत्तम। गूढार्थः परमः प्रश्नो भवता समुदीरितः॥ २३॥ श्राद्धं दत्त्वा च भुक्त्वा च पुरुषो यः स्त्रियं व्रजेत्। पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते॥ २४॥ प्रविभागस्तु पिण्डानां प्रवक्ष्याम्यनुपूर्व्वशः। पिण्डो ह्यधस्ताद्गच्छंस्तु अप आविश्य भावयेत्॥ २५॥ पिण्डन्तु मध्यमं तत्र पत्नी त्वेका समश्नुते। पिण्डस्तृतीयो यस्तेषां तं दद्याज्जातवेदसि॥ २६॥ एष श्राद्धविधिः प्रोक्तो यथाधर्म्मो न लुप्यते। पितरस्तस्य तुष्यन्ति प्रहृष्टमनसः सदा॥ २७॥ प्रजा विवर्द्धते चास्य अक्षय्यञ्चोपतिष्ठति॥ २८॥

देवदूत उवाच। आनुपूर्व्व्येण पिण्डानां प्रविभागः पृथक् पृथक्। पितॄणां त्रिषु सर्व्वेषां निरुक्तं कथितं त्वया॥ २९॥ एकः समु-

हृतः पिण्डो ह्यधस्तात् कस्य गच्छति । कथं प्रीणयते देवं कथं तारयते पितॄन् ॥ ३० ॥ मध्यमन्तु तदा पत्नी भुङ्क्तेऽनुज्ञातमेव हि । किमर्थं पितरस्तस्य कव्यमेव हि भुञ्जते ॥ ३१ ॥ अत्र यस्त्वन्तिमः पिण्डो गच्छते जातवेदसम् । भवते का गतिस्तस्य कं वा समनुगच्छति ॥ ३२ ॥ एतदिच्छाम्यहं श्रोतुं पिण्डेषु त्रिषु या गतिः । फलं वृत्तिञ्च मार्गञ्च यश्चैनं प्रतिपद्यते ॥ ३३ ॥

पितर ऊचुः । सुमहानेष प्रश्नो वै यस्त्वया समुदीरितः । रहस्यमद्भुतञ्चापि तुष्टाः स्म गगणेचर ॥ ३४ ॥ एतदेव प्रशंसन्ति देवाश्च मुनयस्तथा । तेऽप्येवं नाभिजानन्ति पितृकार्य्यविनिश्चयम् ॥ ३५ ॥ वर्ज्जयित्वा महात्मानं चिरजीविनमुत्तमम् । पितृभक्तस्तु यो विप्रो वरलब्धो महायशाः ॥ ३६ ॥ त्रयाणामपि पिण्डानां श्रुत्वा भगवतो गतिम् । देवदूतेन यत् पृष्टः श्राद्धस्य विधिनिश्चयः ॥ ३७ ॥ गतिं त्रयाणां पिण्डानां शृणुष्वावहितो मम । अपो गच्छति यो ह्यत्र शशिनं ह्येष प्रीणयेत् ॥ ३८ ॥ शशी प्रीणयते देवान् पितॄंश्चैव महामते । भुङ्क्ते तु पत्नी यञ्चैषामनुज्ञाता तु मध्यमम् ॥ ३९ ॥ पुत्रकामा च पुत्रन्तु प्रयच्छन्ति पितामहाः । हव्यवाहे तु यः पिण्डो दीयते तन्निबोध मे ॥ ४० ॥ पितरस्तेन तृप्यन्ति प्रीताः कामान् दिशन्ति च । एतत्ते कथितं सर्वं त्रिषु पिण्डेषु या गतिः ॥ ४१ ॥ ऋत्विग्भ्यो यजमानस्य पितृत्वमनुगच्छति । तस्मिन्नहनि मन्यन्ते परिहार्य्यं हि मैथुनम् ॥ ४२ ॥ शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम । ये मया कथिता दोषास्ते तथा स्युर्न चान्यथा ॥ ४३ ॥ तस्मात् स्नातः शुचिः चान्तः श्राद्धं भुञ्जीत वै द्विजः । प्रजा विवर्द्धते चास्य यश्चैवं सम्प्रयच्छति ॥ ४४ ॥ ततो विद्युत्प्रभो नाम ऋषिराह महातपाः । आदित्यतेजसा तस्य तुल्यं रूपं प्रकाशते ॥ ४५ ॥ स च धर्म्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् । तिर्य्यग्योनिगतान् सर्व्वान् मर्त्त्या हिंसन्ति

मोहिताः ॥ ४६ ॥ कीटान् पिपीलिकान् सर्पान् मेषान् सम्टग-पक्षिणः । किल्बिषं सुबहु प्राप्ताः किंखिदेषां प्रतिक्रिया ॥ ४७ ॥ ततो देवगणाः सर्वे ऋषयश्च तपोधनाः । पितरश्च महाभागाः पूजयन्ति स्म तं मुनिम् ॥ ४८ ॥

शक्र उवाच । कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च । एतानि मनसा ध्यात्वा अवगाहेत्ततो जलम् ॥ ४९ ॥ तथा मुच्येत पापेन राहुणा चन्द्रमा यथा । त्र्यहं स्नातः स भवति निरा-हारश्च वर्त्तते ॥ ५० ॥ स्पृशते यो गवां पृष्ठं बालधिञ्च नमस्यति । ततो विद्युत्प्रभो वाक्यमभ्यभाषत वासवम् । अयं सूक्ष्मतरो धर्म-स्तान्निबोध शतक्रतो ॥ ५१ ॥ घृष्टो वटकषायेण अनुलिप्तः प्रिय-ङ्गुना । क्षीरेण षष्टिकान् भुक्त्वा सर्वपापैः प्रमुच्यते ॥ ५२ ॥ श्रूयताञ्चापरं गुह्यं रहस्यमृषिचिन्तितम् । श्रुतं मे भाषमाणस्य स्थाणोः स्थाने वृहस्पतेः ॥ ५३ ॥ रुद्रेण सह देवेश तन्निबोध शचीपते । पर्वतारोहणं कृत्वा एकपादो विभावसुम् ॥ ५४ ॥ निरीक्षेत निराहार ऊर्द्ध्वबाहुः कृताञ्जलिः । तपसा महता युक्त उपवासफलं लभेत् ॥ ५५॥ रश्मिभिस्तापितोऽर्कस्य सर्वपाप-मपोहति । ग्रीष्मकाले तथा शीते एवं पापमपोहति ॥ ५६ ॥ ततः पापात् प्रमुक्तस्य द्युतिर्भवति शाश्वती । तेजसा सूर्य्यवद्दीप्तो भ्राजते सोमवत् पुनः ॥ ५७ ॥ मध्ये त्रिदशवर्गस्य देवराजः शत-क्रतुः । उवाच मधुरं वाक्यं वृहस्पतिमनुत्तमम् ॥ ५८ ॥ धर्म-गुह्यन्तु भगवन् मनुष्याणां सुखावहम् । सरहस्यांश्च यान् दोषां-स्तान् यथावदुदीरय ॥ ५९ ॥

वृहस्पतिरुवाच । अभिमेहन्ति ये सूर्य्यमनिलं द्विषते च ये । हव्यवाहं प्रदीप्तञ्च समिधं ये न जुह्वति ॥ ६० ॥ बालवत्साञ्च ये धेनुं दुह्यन्ति क्षीरकारणात् । तेषां दोषान् प्रवक्ष्यामि तान्नि-बोध शचीपते ॥ ६१ ॥ भानुमाननिलश्चैव हव्यवाहश्च वासव ।

लोकानां मातरश्चैव गावः सृष्टाः स्वयम्भुवा ॥ ६२ ॥ लोकांस्तार-
यितुं यत्र मर्त्त्येष्वेतेषु देवताः । सर्व्वे भवन्तः शृण्वन्तु एकैकं
धर्म्मनिश्चयम् ॥ ६३ ॥ वर्षाणि षड़शीतिन्तु दुर्वृत्ताः कुलपांसनाः ।
स्त्रियः सर्व्वाश्च दुर्वृत्ताः प्रतिमेहन्ति या रविम् ॥ ६४ ॥ अनिल-
द्वेषिणः यत्र च्यवन्ते गर्भतः प्रजाः । हव्यवाहस्य दीप्तस्य समिधं
ये न जुह्वति । अग्निकार्य्येषु वै तेषां हव्यं नाश्नाति पावकः ॥६५॥
क्षीरन्तु बालवत्सानां ये पिबन्तीह मानवाः । न तेषां क्षीरपाः
केचिज्जायन्ते कुलवर्द्धनाः ॥ ६६ ॥ प्रजाहयेण युज्यन्ते कुलवंश-
क्षयेण च । एवमेतत् पुरा दृष्टं कुलवृद्धैर्द्विजातिभिः ॥ ६७ ॥
तस्माद्वर्ज्ज्यानि वर्ज्ज्यानि कार्य्यं कार्य्यञ्च नित्यशः । भूतिकामेन
मर्त्त्येन सत्यमेतद्‌ब्रवीमि ते ॥ ६८ ॥ ततः सर्व्वे महाभागा देवताः
समरुद्गणाः । ऋषयश्च महाभागाः पृच्छन्ति स्म पितॄंस्ततः ॥६९॥
पितरः केन तुष्यन्ति मर्त्त्यानामपि चेतसाम् । अक्षयञ्च कथं दानं
भवेच्चैवौर्द्ध्वदेहिकम् ॥ ७० ॥ आनृण्यं वा कथं मर्त्त्या गच्छेयुः
केन कर्म्मणा । एतदिच्छामहे श्रोतुं परं कौतूहलं हि नः ॥७१॥

पितर ऊचुः । न्यायतो वै महाभागाः संशयः समुदाहृतः ।
श्रूयतां येन तुष्यामो मर्त्त्यानां साधुकर्म्मणाम् ॥ ७२ ॥ नील-
षण्ड़प्रमोक्षेण अमावास्यां तिलोदकैः । वर्षासु दीपकैश्चैव पितॄ-
णामनृणो भवेत् ॥ ७३ ॥ अक्षयं निर्व्यलीकञ्च दानमेतन्महा-
फलम् । अस्माकं परितोषश्च अक्षयः परिकीर्त्त्यते ॥ ७४ ॥ श्रद्-
धानाश्च ये मर्त्त्या आहरिष्यन्ति सन्ततिम् । दुर्गात्ते तारयिष्यन्ति
नरकात् प्रपितामहान् ॥ ७५ ॥ पितॄणां भाषितं श्रुत्वा हृष्ट-
रोमा तपोधनः । वृद्धगार्ग्यो महातेजास्तानेवं वाक्यमब्रवीत् ॥७६॥
के गुणा नीलषण्डस्य प्रमुक्तस्य तपोधनाः । वर्षासु दीपदानेन
तथैव च तिलोदकैः ॥ ७७ ॥

पितर ऊचुः । नीलषण्डस्य लाङ्गूलं तोयमभ्युद्धरेद्यदि ।

षष्टिं वर्षसहस्राणि पितरस्तेन तर्पिताः ॥ ७८ ॥ यस्तु शृङ्गगतं पङ्कं कूलादुद्धृत्य तिष्ठति । पितरस्तेन गच्छन्ति सोमलोकमसंशयम् ॥ ७९ ॥ वर्षासु दीपदानेन शशिवच्छोभते नरः । तमोरूपं न तस्यास्ति दीपकं यः प्रयच्छति ॥ ८० ॥ अमावास्यान्तु ये मर्त्त्याः प्रयच्छन्ति तिलोदकम् । पात्रमौदुम्बरं गृह्य मधुमिश्रं तपोधन ॥ ८१ ॥ कृतं भवति तैः श्राद्धं सरहस्यं यथार्थवत् । हृष्टपुष्टमनास्तेषां प्रजा भवति नित्यदा ॥ ८२ ॥ कुलवंशस्य वृद्धिस्तु पिण्डदस्य फलं भवेत् । श्रद्दधानस्तु यः कुर्य्यात् पितृणामनृणो भवेत् ॥ ८३ ॥ एवमेष समुद्दिष्टः श्राद्धकालक्रमस्तथा । विधिः पात्रं फलञ्चैव यथावदनुकीर्त्तितम् ॥ ८४ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे श्राद्धधर्म्मकथने पञ्चविंशत्यधिकशतोऽध्यायः ॥ १२५ ॥

---

भीष्म उवाच । केन ते भवति प्रीतिः कथं तुष्टिञ्च गच्छसि । इति पृष्टः सुरेन्द्रेण प्रोवाच हरिरीश्वरः ॥ १ ॥

विष्णुरुवाच । ब्राह्मणानां परीवादो मम विद्वेषणं महत् । ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ॥ २ ॥ नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथात्मनः । तेषां तुष्यामि मर्त्त्यानां यश्चक्रे वलिं हरेत् ॥ ३ ॥ वामनं ब्राह्मणं दृष्ट्वा वराहञ्च जलोत्थितम् । उद्धृतां धरणीञ्चैव मूर्द्ध्ना धारयते तु यः ॥ ४ ॥ न तेषामशुभं किञ्चित् कल्मषं नोपपद्यते । अश्वत्थं रोचनाङ्गाञ्च पूजयेद्यो नरः सदा ॥ ५ ॥ पूजितञ्च जगत्तेन सदेवासुरमानुषम् । तेन रूपेण तेषाञ्च पूजां गृह्णामि तत्त्वतः ॥ ६ ॥ पूजा ममैषा नान्यस्य यावल्लोकाः प्रतिष्ठिताः । अन्यथा हि वृथा मर्त्त्याः पूजयन्त्यल्पबुद्धयः । नाहं तत् प्रतिगृह्णामि न सा तुष्टिकरी मम ॥ ७ ॥

इन्द्र उवाच। चक्रं पादौ वराहञ्च ब्राह्मणञ्चापि वामनम्। उद्धृतां धरणीञ्चैव किमर्थं त्वं प्रशंससि॥ ८॥ भवान् सृजति भूतानि संहरसि प्रजाः। प्रकृतिः सर्वभूतानाम्मर्त्त्यानाञ्च सनातनी॥ ९॥

भीष्म उवाच। सम्प्रहस्य ततो विष्णुरिदं वचनमब्रवीत्। चक्रेण निहता दैत्याः पद्भ्यां क्रान्ता वसुन्धराः॥ १०॥ वाराहं रूपमास्थाय हिरण्याक्षो निपातितः। वामनं रूपमास्थाय जितो राजा मया बलिः॥ ११॥ परितुष्टो भवाम्येवं मानुषाणां महात्मनाम्। तन्मां ये पूजयिष्यन्ति नास्ति तेषां पराभवः॥ १२॥ अपि वा ब्राह्मणं दृष्ट्वा ब्रह्मचारिणमागतम्। ब्राह्मणाग्रप्राहुतिं दत्त्वा अमृतं तस्य भोजनम्॥ १३॥ ऐन्द्रीं सन्ध्यामुपासित्वा आदित्याभिमुखः स्थितः। सर्वतीर्थेषु स स्नातो मुच्यते सर्वकिल्विषैः॥ १४॥ एतद्वः कथितं गुह्यमखिलेन तपोधनाः। संशयं पृच्छमानानां किम्भूयः कथयाम्यहम्॥ १५॥

बलदेव उवाच। श्रूयतां परमं गुह्यं मानुषाणां सुखावहम्। अजानन्तो यदबुधाः क्लिश्यन्ते भूतपीड़िताः॥ १६॥ कल्यमुत्थाय यो मर्त्त्यः स्पृशेद्गां वै घृतं दधि। सर्षपञ्च प्रियङ्गुञ्च कल्मषात् प्रतिमुच्यते॥ १७॥ भूतानि चैव सर्वाणि अग्रतः पृष्ठतोऽपि वा। उच्छिष्टञ्चापि शूद्रेषु वर्ज्जयन्ति तपोधनाः॥ १८॥

देवा ऊचुः। प्रगृह्यौडुम्बरं पात्रं तोयपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयात् यद्वा सङ्कल्पयेद्व्रतम्॥ १९॥ देवतास्तस्य तुष्यन्ति कामिकञ्चापि सिद्ध्यति। अन्यथा हि वृथा मर्त्त्या कुर्वते स्वल्पबुद्धयः॥ २०॥ उपवासे बलौ चापि ताम्रपात्रं विशिष्यते। बलिं भिक्षां तथार्घ्यञ्च पितॄणाञ्च तिलोदकम्॥ २१॥ ताम्रपात्रेण दातव्यमन्यथाल्पफलं भवेत्। गुह्यमेतत् समुद्दिष्टं यथा तुष्यन्ति देवताः॥ २२॥

धर्म्म उवाच। राजपौरुषिके विप्रे घाण्टिके परिचारिके। गोरक्षके वाणिजके तथा कारुकुशीलवे ॥ २३ ॥ मित्रध्रुद्युनधीयाने यश्च स्याद्वृषलीपतिः। एतेषु दैवं पैत्र्यं वा न देयं स्यात् कथञ्चन ॥ २४ ॥ पिण्डदास्तस्य हीयन्ते न च प्रीणाति वै पितॄन्। अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ॥ २५ ॥ पितरस्तस्य देवाश्च अग्नयश्च तथैव हि। निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात् ॥ २६ ॥ स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः। तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्च्चितः ॥ २७ ॥

अग्निरुवाच। पादमुद्यम्य यो मर्त्त्यः स्पृशेद्गाञ्च सुदुर्मतिः। ब्राह्मणं वा महाभागं दीप्यमानं तथानलम् ॥ २८ ॥ तस्य दोषान् प्रवक्ष्यामि तच्छृणुध्वं समाहिताः। दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै ॥ २९ ॥ वैमनस्यञ्च देवानां कृतं भवति पुष्कलम्। पावकश्च महातेजा हव्यं न प्रतिगृह्णति ॥ ३० ॥ आजन्मनां शतञ्चैव नरके पच्यते तु सः। निष्कृतिञ्च न तस्यापि अनुमन्यन्ति कर्हिचित् ॥ ३१ ॥ तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन। ब्राह्मणश्च महातेजा दीप्यमानस्तथानलः ॥ ३२ ॥ श्रद्दधानेन मर्त्त्येन आत्मनो हितमिच्छता। एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत् ॥ ३३ ॥

विश्वामित्र उवाच। श्रूयतां परमं गुह्यं रहस्यं धर्मसंहितम्। परमान्नेन यो दद्यात् पितॄणामौपहारिकम् ॥ ३४ ॥ गजच्छायायां पूर्वस्यां कुतपे दक्षिणामुखः। यदा भाद्रपदे मासि भवते बहुले मघा ॥ ३५ ॥ श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः। कृतं तेन महच्छ्राद्धं वर्षाणीह त्रयोदश ॥ ३६ ॥

गाव ऊचुः। बहुले समङ्गे ह्यकुतोभये च क्षेमे च सख्येव हि भूयसी च। यथापुरा ब्रह्मपुरे सवत्सा शतक्रतोर्वज्रधरस्य यज्ञे ॥ ३७ ॥ भूयश्च या विष्णुपदे स्थिता या विभावसोश्चापि पथे

स्थितायाः। देवाश्च सर्वे सह नारदेन प्रकुर्वते सर्वसहेति नाम मन्त्रेणैतेनाभिनन्देत यो वै विमुच्यते पापकृतेन कर्मणा। लोकानवाप्नोति पुरन्दरस्य गवां फलं चन्द्रमसो द्युतिञ्च॥ ३९॥ एतं हि मन्त्रं त्रिदशाभिजुष्टं पठेत यो पर्वसु गोष्ठमध्ये। न तस्य पापं न भयं न शोकः सहस्रनेत्रस्य च याति लोकम्॥ ४०॥

भीष्म उवाच। अथ सप्त महाभागा ऋषयो लोकविश्रुताः। वशिष्ठप्रमुखाः सर्वे ब्रह्माणं पद्मसम्भवम्। प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयः स्थिताः॥ ४१॥ उवाच वचनं तेषां वशिष्ठो ब्रह्मवित्तमः। सर्वप्राणिहितं प्रश्नं ब्रह्मचैत्रे विशेषतः॥ ४२॥ द्रव्यहीनाः कथं मर्त्त्या दरिद्राः साधुवृत्तयः। प्राप्नुवन्तीह यज्ञस्य फलं केन च कर्मणा॥ ४३॥ एतच्छ्रुत्वा वचस्तेषां ब्रह्मा वचनमब्रवीत्॥ ४४॥

ब्रह्मोवाच। अहो प्रश्नो महाभागा गूढ़ार्थः परमः शुभः। सूक्ष्मः श्रेयांश्च मर्त्त्यानां भवद्भिः समुदाहृतः॥ ४५॥ श्रूयतां सर्वमाख्यास्ये निखिलेन तपोधनाः। यथा यज्ञफलं मर्त्त्यो लभते नात्र संशयः॥ ४६॥ पौषमासस्य शुक्ले वै यदा युज्येत रोहिणी। तेन नक्षत्रयोगेन आकाशशयनो भवेत्॥ ४७॥ एकवस्त्रः शुचिः स्नातः श्रद्दधानः समाहितः। सोमस्य रश्मयः पीत्वा महायज्ञफलं लभेत्॥ ४८॥ एतद्वः परमं गुह्यं कथितं द्विजसत्तमाः। यन्मां भवन्तः पृच्छन्ति सूक्ष्मतत्त्वार्थदर्शिनः॥ ४९॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे षड्विंशत्यधिकशततोऽध्यायः॥ १२६॥

---

विभावसुरुवाच। सलिलस्याञ्जलिं पूर्णमक्षतांश्च घृतोत्तरान्। सोमस्योत्तिष्ठमानस्य तज्जलञ्चाक्षतांश्च तान्॥ १॥ स्थितो ह्यभि-

मुखे मन्त्रः पौर्णमास्यां बलिं हरेत्। अग्निकार्य्यं कृतं तेन हुताश्चास्याग्नयस्त्रयः ॥ २ ॥ वनस्पतिन्तु यो हन्यादमावास्यामबुद्धिमान्। अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया ॥ ३ ॥ दन्तकाष्ठन्तु यः खादेदमावास्यामबुद्धिमान्। हिंसितश्चन्द्रमास्तेन पितरश्चोद्विजन्ति च ॥ ४ ॥ हव्यं न तस्य देवाश्च प्रतिगृह्णन्ति पर्व्वसु। कुप्यन्ति पितरस्तस्य कुलवंशोऽस्य हीयते ॥ ५ ॥

श्रीरुवाच। प्रकीर्णं भाजनं यत्र पानभाण्डमथासनम्। योषितश्चैव हन्यन्ते कश्मलोपहते गृहे ॥ ६ ॥ देवताः पितरश्चैव उत्सवे पर्व्वणीषु वा। निराशास्तस्य गच्छन्ति कश्मलोपहताद्गृहात् ॥ ७ ॥

अङ्गिरा उवाच। यस्तु सम्वत्सरं पूर्णं दद्याद्दीपं करञ्जके। सुवर्च्चलामूलहस्तः प्रजास्तस्य विवर्द्धते ॥ ८ ॥

गार्ग्य उवाच। आतिथ्यं सततं कुर्य्याद्दीपं दद्यात् प्रतिश्रये। वर्ज्जयानो दिवास्वापं न च मांसानि भक्षयेत् ॥ ९ ॥ गोब्राह्मणं न हिंस्याच्च पुष्कराणि च कीर्त्तयेत्। एष श्रेष्ठतमो धर्म्मः सरहस्यो महाफलः ॥ १० ॥ अपि क्रतुशतैरिष्ट्वा क्षयं गच्छति तद्धविः। न तु क्षीयन्ति ते धर्माः श्रद्दधानैः प्रयोजिताः ॥ ११ ॥ इदञ्च परमं गुह्यं सरहस्यं निबोधत। श्राद्धकाले च दैवे च तैथिके पर्व्वणीषु च ॥ १२ ॥ रजस्वला च या नारी श्वित्रिकापुत्रिका च या। एताभिश्चक्षुषा दृष्टं हविर्नाश्नन्ति देवताः ॥ १३ ॥ पितरश्च न तुष्यन्ति वर्षाण्यस्य त्रयोदश ॥ १४ ॥ शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान् स्वस्ति वाचयेत्। कीर्त्तयेद्भारतञ्चैव तथा स्यादक्षयं हविः ॥ १५ ॥

धौम्य उवाच। भिन्नभाण्डञ्च खट्वाञ्च कुक्कुटं शुनकं तथा। अप्रशस्तानि सर्व्वाणि यश्च वृक्षो गृहेरुहः ॥ १६ ॥ भिन्नभाण्डे कलिं प्राहुः खट्वायाञ्च धनक्षयः। कुक्कुटे शुनि वा चैव

हविर्नाश्नन्ति देवताः। वृक्षमूले ध्रुवं सत्त्वं तस्माद्वृक्षं न रोपयेत् ॥ १७ ॥

यमदग्निरुवाच। यो यजेदश्वमेधेन वाजपेयशतेन च। अवाक्शिरावलम्बेत सत्रं वा स्फीतमाहरेत् ॥ १८ ॥ न चास्य हृदयं शुद्धं नरकं स ध्रुवं व्रजेत्। तुल्यं यज्ञश्च सत्यञ्च हृदयस्य च शुद्धता ॥ १९ ॥ शुद्धेन मनसा दत्त्वा शक्तुप्रस्थं द्विजातये। ब्रह्मलोकमनुप्राप्तः पर्य्याप्तं तन्निदर्शनम् ॥ २० ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे देवरहस्ये सप्तविंशत्यधिकशतोऽध्यायः ॥ १२७ ॥

---

वायुरुवाच। किञ्चिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम्। सरहस्याश्च ये दोषास्तान् शृणुध्वं समाहिताः ॥ १ ॥ चतुरो वार्षिकान् मासान् यो ददाति तिलोदकम्। भोजनञ्च यथा शक्त्या ब्राह्मणे वेदपारगे ॥ २ ॥ अग्निकार्य्यञ्च कर्त्तव्यं परमान्नेन भोजनम्। दीपकश्चापि कर्त्तव्यः पितॄणां सतिलोदकः ॥ ३ ॥ एतेन विधिना मर्त्त्यः श्रद्दधानः समाहितः। पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् ॥ ४ ॥ इदञ्चैव परं गुह्यमप्रशस्तं निबोधत। अग्नेस्तु वृषलो नेता हविर्मूढाश्च योषितः। मन्यते धर्म्म एवेति स चाधर्म्मेण लिप्यते ॥ ५ ॥ अग्नयस्तस्य कुप्यन्ति शूद्रयोनिं स गच्छति। पितरश्च न तुष्यन्ति सह देवैर्विशेषतः ॥ ६ ॥ प्रायश्चित्तन्तु यत्तत्र ब्रुवतस्तन्निबोध मे। यत् कृत्वा तु नरः सम्यक् सुखी भवति विज्वरः ॥ ७ ॥ गवां मूत्रपुरीषेण पयसा च घृतेन च। अग्निकार्य्यं त्र्यहं कुर्य्यान्निराहारः समाहितः ॥ ८ ॥ ततः सम्वत्सरे पूर्णे प्रतिगृह्णन्ति देवताः। हृष्यन्ति पितरश्चास्य श्राद्ध-

काल उपस्थिते ॥ ९ ॥ एष च्चधर्मो धर्म्मश्च सरहस्यः प्रकीर्त्तितः ।
मर्त्त्यानां स्वर्गकामानां प्रेत्य स्वर्गः सुखावहः ॥ १० ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्म-
कथने अष्टाविंशत्यधिकशतोऽध्यायः ॥ १२८ ॥

---

सोमश्च उवाच । परदारेषु ये शक्ता अकृत्वा दारसंग्रहम् ।
निराशाः पितरस्तेषां श्राद्धकाले भवन्ति ते ॥ १ ॥ परदाररति-
र्यश्च यश्च वन्ध्यामुपासते । ब्रह्मस्वं हरते यश्च समदोषा भवन्ति
ते ॥ २ ॥ असम्भाष्या भवन्त्येते पितॄणां नात्र संशयः । देवताः
पितरश्चैषां नाभिनन्दन्ति तद्धविः ॥ ३ ॥ तस्मात् परस्य वै दारां-
स्त्यजेद्वन्ध्याश्च योषितम् । ब्रह्मस्वं हि न हर्त्तव्यमात्मनोहित-
मिच्छता ॥ ४ ॥ श्रूयताञ्चापरं गुह्यं रहस्यं धर्म्मसंहितम् ।
श्रद्दधानेन कर्त्तव्यं गुरूणां वचनं सदा ॥ ५ ॥ द्वादश्यां पौर्ण-
मास्याञ्च मासि मासि घृताक्षतम् । ब्राह्मणेभ्यः प्रयच्छेत तस्य
पुण्यं निबोधत ॥ ६ ॥ सोमश्च वर्द्धते तेन समुद्रश्च महोदधिः ।
अश्वमेधचतुर्भागं फलं सृजति वासवः ॥ ७ ॥ दानेनैतेन तेजस्वी
वीर्य्यवांश्च भवेन्नरः । प्रीतश्च भगवान् सोम इष्टान् कामान् प्रय-
च्छति ॥ ८ ॥ श्रूयताञ्चापरो धर्म्मः सरहस्यो महाफलः । इमं
कलियुगं प्राप्य मानुषाणां सुखावहः ॥ ९ ॥ कल्यमुत्थाय यो
मर्त्त्यः स्नातः शुक्लेन वाससा । तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः
समाहितः ॥ १० ॥ तिलोदकन्तु यो दद्यात् पितॄणां मधुना सह ।
दीपकं कृशरञ्चैव श्रूयतां तस्य यत् फलम् ॥ ११ ॥ तिलपात्रे फलं
प्राह भगवान् पाकशासनः । गोप्रदानञ्च यः कुर्य्याद्भूमिदानञ्च
शाश्वतम् ॥ १२ ॥ अग्निष्टोमञ्च यो यज्ञं यजेत बहुदक्षिणम् ।
तिलपात्रं सहैतेन समं मन्यन्ति देवताः ॥ १३ ॥ तिलोदकं सदा

श्राद्धे मन्यन्ते पितरोऽक्षयम् । दीपे च कुपरे चैव प्रीयन्तेऽस्य पितामहाः ॥ १४ ॥ स्वर्गे च पितृलोके च पितृदेवाभिपूजितम् । एवमेतन्मयोद्दिष्टमृषिदृष्टं पुरातनम् ॥ १५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे लोमश-
रहस्ये एकोनत्रिंशत्यधिकशततोऽध्यायः ॥ १२९ ॥

---

भीष्म उवाच । ततस्त्वृषिगणाः सर्वे पितरश्च सदेवताः । अरुन्धतीं तपोवृद्धामपृच्छन्त समाहिताः ॥ १ ॥ अरुन्धती तपोवृद्धा समानव्रतचारिणी । समानशीला वीर्य्येण वशिष्ठस्य महात्मनः ॥ २ ॥ त्वत्तो धर्मरहस्यानि श्रोतुमिच्छामहे वयम् । यत्ते गुह्यतमं भद्रे तत् प्रभाषितुमर्हसि ॥ ३ ॥

अरुन्धत्युवाच । तपोवृद्धिर्मया प्राप्ता भवतां स्मरणेन वै । भवताञ्च प्रसादेन धर्मान् वक्ष्यामि शाश्वतान् ॥ ४ ॥ सगुह्यान् सरहस्यांश्च तान् शृणुध्वमशेषतः । श्रद्दधाने प्रयोक्तव्या यस्य शुद्धं तथा मनः ॥ ५॥ अश्रद्दधानो मानी च ब्रह्महा गुरुतल्पगः । असम्भाष्या हि चत्वारो नैषां धर्मं प्रकाशयेत् ॥ ६ ॥ अहन्यहनि यो दद्यात् कपिलां द्वादशाः समाः । मासि मासि च सत्रेण यो यजेत सदा नरः ॥ ७ ॥ गवां शतसहस्रञ्च यो दद्याज्ज्येष्ठपुष्करे । न तद्धर्मफलं तुल्यमतिथिर्यस्य तुष्यति ॥ ८ ॥ श्रूयतां चापरो धर्मो मनुष्याणां सुखावहः । श्रद्दधानेन कर्त्तव्यः सरहस्यो महाफलः ॥ ९ ॥ कल्यमुत्थाय गोमध्ये गृह्य दर्भान् सहोदकान् । तन्निषिञ्चेद्गवां मध्ये मस्तकेन च तज्जलम् ॥ १० ॥ प्रतीच्छेत निराहारस्तस्य धर्मफलं शृणु । श्रूयन्ते यानि तीर्थानि त्रीषु लोकेषु कर्हिचित् ॥ ११ ॥ सिद्धचारणजुष्टानि सेवितानि मनीषिभिः । अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ॥ ११ ॥ साधु

साध्विति चोद्दिष्टं दैवतैः पितृभिस्तथा। भूतैश्चैव सुसन्तुष्टैः पूजिता साप्यरुन्धती ॥ १३ ॥

ब्रह्मोवाच। अहो धर्मो महाभागी सरहस्य उदाहृतः। वरं ददानि ते धन्ये तपस्ते वर्द्धतां सदा ॥ १४ ॥

यम उवाच। रमणीया कथा दिव्या युष्मत्तो या मया श्रुता। श्रूयतां चित्रगुप्तस्य भाषितं मम च प्रियम् ॥ १५ ॥ रहस्यं धर्मसंयुक्तं शक्यं श्रोतुं महर्षिभिः। श्रद्दधानेन मर्त्त्येन आत्मनो हितमिच्छता ॥ १६ ॥ न हि पुण्यं तथा पापं कृतं किञ्चिद्विनश्यति। पर्वकाले च यत् किञ्चिदादित्यञ्चाधितिष्ठति ॥ १७ ॥ प्रेतलोकं गते मर्त्त्ये तत्तत् सर्वं विभावसुः। प्रतिजानाति पुण्यात्मा तच्च तत्रोपयुज्यते ॥ १८ ॥ किञ्चिद्धर्मं प्रवक्ष्यामि चित्रगुप्तमतं शुभम्। पानीयञ्चैव दीपञ्च दातव्यं सततं तथा ॥ १९ ॥ उपानहौ च छत्रञ्च कपिलाञ्च यथातथम्। पुष्करे कपिला देया ब्राह्मणे वेदपारगे ॥ २० ॥ अग्निहोत्रञ्च यत्नेन सर्वशः प्रतिपालयेत्। अयञ्चैवापरो धर्म्मश्चित्रगुप्तेन भाषितः ॥ २१ ॥ फलमस्य पृथक्त्वेन श्रोतुमर्हन्ति सत्तमाः। प्रलयं सर्वभूतैस्तु गन्तव्यं कालपर्य्ययात् ॥ २२ ॥ तत्र दुर्गमनुप्राप्ताः क्षुत्तृष्णापरिपीड़िताः। दह्यमाना विपच्यन्ते न तत्रास्ति पलायनम् ॥ २३ ॥ अन्धकारं तमो घोरं प्रविशन्त्यल्पबुद्धयः। तत्र धर्मं प्रवक्ष्यामि येन दुर्गाणि सन्तरेत् ॥ २४ ॥ अल्पव्ययं महार्थञ्च प्रेत्य चैव सुखोदयम्। पानीयस्य गुणा दिव्याः प्रेत्य लोके विशेषतः ॥ २५ ॥ तत्र पुण्योदका नाम नदी तेषां विधीयते। अक्षयं सलिलं तत्र शीतलं ह्यमृतोपमम् ॥ २६ ॥ स तत्र तोयं पिबति पानीयं यः प्रयच्छति। प्रदीपस्य प्रदानेन श्रूयतां गुणविस्तरः ॥ २७ ॥ तमोऽन्धकारं नियतं दीपदो न प्रपश्यति। प्रभाञ्चास्य प्रयच्छन्ति सोमभास्करपावकाः ॥ २८ ॥ देवताश्चानुमन्यन्ते विमलाः सर्वतो दिशः।

द्योतते च यथादित्यः प्रेतलोकगतो नरः ॥ २९ ॥ तस्माद्दीपः प्रदातव्यः पानीयञ्च विशेषतः। कपिलां ये प्रयच्छन्ति ब्राह्मणे वेदपारगे ॥ ३० ॥ पुष्करे च विशेषेण श्रूयतां तस्य यत् फलम्। गोशतं सवृषं तेन दत्तं भवति शाश्वतम् ॥ ३१ ॥ पापं कर्म्म च यत् किञ्चित् ब्रह्महत्यासमं भवेत्। शोधयेत् कपिला ह्येका प्रदत्तं गोशतं यथा ॥ ३२ ॥ तस्मात्तु कपिला देया कौमुद्यां ज्येष्ठपुष्करे। न तेषां विषमं किञ्चिन्न दुःखं न च कण्टकाः ॥ ३३ ॥ उपानहौ च यो दद्यात् पात्रभूते द्विजोत्तमे। छत्रदाने सुखां छायां लभते परलोकगः ॥ ३४ ॥ न हि दत्तस्य दानस्य नाशोऽस्तीह कदाचन। चित्रगुप्तमतं श्रुत्वा हृष्टरोमा विभावसुः ॥३५॥ उवाच देवताः सर्वाः पितॄंश्चैव महाद्युतिः। श्रुतञ्च चित्रगुप्तस्य धर्म्मगुह्यं महात्मनः ॥ ३६ ॥ श्रद्दधानाश्च ये मर्त्त्या ब्राह्मणेषु महात्मसु। दानमेतत् प्रयच्छन्ति न तेषां विद्यते भयम् ॥ ३७ ॥ कर्म्मदोषास्त्विमे पञ्च येषां नास्तीह निष्कृतिः। असम्भाष्या अनाचारा वर्ज्जनीया नराधमाः ॥ ३८ ॥ ब्रह्महा चैव गोघ्नश्च परदाररतश्च यः। अश्रद्दधानश्च नरः स्त्रियं यश्चोपजीवति ॥ ३९ ॥ प्रेतलोकगता ह्येते नरके पापकर्म्मिणः। पच्यन्ते वै यथा मीनाः पूयशोणितभोजनाः ॥ ४० ॥ असम्भाष्याः पितॄणाञ्च देवानाञ्चैव पञ्च वै। स्नातकानाञ्च विप्राणां येऽपि चान्ये तपोधनाः ॥ ४१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मे चित्रगुप्तरहस्ये त्रिंशदधिकशततोऽध्यायः ॥ १३० ॥

---

भीष्म उवाच। ततः सर्वे महाभागा देवाश्च पितरश्च ह। ऋषयश्च महाभागाः प्रमथान् वाक्यमब्रुवन् ॥ १ ॥ भवन्तो वै महाभागा अपरोक्षनिशाचराः। उच्छिष्टानशुचीन् क्षुद्रान् कथं

हिंसथ मानवान् ॥ २ ॥ के च स्मृताः प्रतीघाता यैन मत्तान्न
हिंसथ ! रक्षोघ्नानि च कानि स्युर्यैर्गृहेषु प्रनश्यथ ॥ ३ ॥ श्रोतु-
मिच्छामि युष्माकं सर्व्वमेतन्निशाचराः ॥ ४ ॥

प्रमथा ऊचुः । मैथुनेन सदोच्छिष्टाः कृते चैवाधरोत्तरे ।
मोहान्मांसानि खादेत वृक्षमूले च यः स्वपेत् ॥ ५ ॥ आमिषं
शीर्षतो यस्य पादतो यश्च संविशेत् । एतदुच्छिष्टकं सर्व्वं बहु-
छिद्राश्च मानवाः ॥ ६ ॥ उदके चाप्यमेध्यानि श्लेष्माणञ्च प्रमुञ्चति ।
एते भक्ष्याश्च वध्याश्च मानुषा नात्र संशयः ॥ ७ ॥ एवं शीलसमा-
चारान् धर्षयामो हि मानवान् । श्रूयताञ्च प्रतीघातान् यैर्न शक्नुम
हिंसितुम् ॥ ८ ॥ गोरोचनासमालम्भो वाचाहस्तश्च यो भवेत् ।
घृताक्षतञ्च यो दद्यान्मस्तके तत्परायणः ॥ ९ ॥ ये च मांसं न
खादन्ति तान्न शक्नुम हिंसितुम् । यस्य चाग्निर्गृहे नित्यं दिवा
रात्रौ च दीप्यते ॥ १० ॥ तरक्षोश्चर्म्मदंष्ट्राश्च तथैव गिरिकच्छपः ।
आज्य धूमो विड़ालश्च छागः कृष्णोऽथ पिङ्गलः ॥ ११ ॥ येषा-
मेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम् । तान्यधृष्याण्यगाराणि
पिशिताशैः सुदारुणैः ॥ १२ ॥ लोकानस्मद्विधा ये च विचरन्ति
यथासुखाः । तस्मादेतानि गेहेषु रक्षोघ्नानि विशाम्पते । एतद्वः
कथितं सर्व्वं यत्र वः संशयो महान् ॥ १३ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे प्रमथ-
रहस्ये एकत्रिंशदधिकशततोऽध्यायः ॥ १३१ ॥

---

भीष्म उवाच । ततः पद्मप्रतीकाशः पद्मोद्भूतः पितामहः ।
उवाच वचनं देवान् वासवञ्च शचीपतिम् ॥ १ ॥ अयं महावलो
नागो रसातलचरो वली । तेजस्वी रेणुको नाम महासत्त्व-
पराक्रमः ॥ २ ॥ अतितेजस्विनः सर्व्वे महावीर्य्या महागजाः ।

धारयन्ति महीं कृत्स्नां सशैलवनकाननाम्॥ ३॥ भवद्भिः समनुज्ञातो रेणुकस्तान्महागजान्। धर्मगुह्यानि सर्वाणि गत्वा पृच्छतु तत्र वै॥ ४॥ पितामहवचः श्रुत्वा ते देवा रेणुकं तदा। प्रेषयामासुरव्यग्रा यत्र ते धरणीधराः॥ ५॥

रेणुक उवाच। अनुज्ञातोऽस्मि देवैश्च पितृभिश्च महाबलाः। धर्मगुह्यानि युष्माकं श्रोतुमिच्छामि तत्त्वतः। कथयध्वं महाभागा यद्वस्तत्त्वं मनीषितम्॥ ६॥

दिग्गजा ऊचुः। कार्त्तिके मासि चाश्लेषा बहुलस्याष्टमी शिवा। तेन नक्षत्रयोगेन यो ददाति गुड़ौदनम्॥ ७॥ इमं मन्त्रं जपन् श्राद्धे यताहारो ह्यकोपनः। बलदेवप्रभृतयो ये नागा बलवत्तराः॥ ८॥ अनन्ता ह्यक्षया नित्यं भोगिनः सुमहाबलाः। तेषां कुलोद्भवा ये च महाभूता भुजङ्गमाः॥ ९॥ ते मे बलिं प्रयच्छन्तु बलतेजोभिवृद्धये। यदा नारायणः श्रीमानुज्जहार वसुन्धराम्॥ १०॥ तद्बलं तस्य देवस्य धरामुद्धरतस्तथा। एवमुक्त्वा बलिन्तत्र वल्मीके तु निवेदयेत्॥ ११॥ गजेन्द्रकुसुमाकीर्णं नीलवस्त्रानुलेपनम्। निर्वपेत्तन्तु वल्मीके अस्तं याते दिवाकरे॥ १२॥ एवं तुष्टास्ततः सर्वे अधस्ताद्भारपीड़िताः। श्रमं तं नावबुध्यामो धारयन्तो वसुन्धराम्॥ १३॥ एवं मन्यामहे सर्वं भारार्त्ता निरपेक्षिणः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा यद्युपोषिताः॥ १४॥ एवं सम्वत्सरं कृत्वा दानं बहुफलं भवेत्। वल्मीके बलिमादाय तन्नो बहुफलं मतम्॥ १५॥ ये च नागा महावीर्य्यास्त्रिषु लोकेषु कृत्स्नशः। कृतातिथ्या भवेयुस्ते शतं वर्षाणि तत्त्वतः॥ १६॥ दिग्गजानाञ्च तच्छ्रुत्वा देवताः पितरस्तथा। ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकम्॥ १७॥

इत्यनुशासनपर्वणि अनुशासनिकेपर्वणि दानधर्मे दिग्गजरहस्ये द्वात्रिंशदधिकशततोऽध्यायः॥ १३२॥

महेश्वर उवाच। सारमुद्धृत्य युष्माभिः साधु धर्म्म उदाहृतः। धर्म्मगुह्यमिदं मत्तः शृणुध्वं सर्वं एव ह ॥ १ ॥ येषां धर्माश्रिता बुद्धिः श्रद्दधानाश्च ये नराः। तेषां स्यादुपदेष्टव्यः सरहस्यो महाफलः ॥ २ ॥ निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम्। एकभक्तं तथाश्नीयाच्छ्रूयतां तस्य यत् फलम् ॥ ३ ॥ इमा गावो महाभागाः पवित्रं परमं स्मृताः। त्रींल्लोकान् धारयन्ति स्म सदेवासुरमानुषान् ॥ ४ ॥ तासु चैव महापुण्यं शुश्रूषा च महाफला। अहन्यहनि धर्म्मेण युज्यते वै गवाह्निके ॥ ५ ॥ मया ह्येता ह्यनुज्ञाताः पूर्वमासन् कृते युगे। ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ॥ ६ ॥ तस्माद्व्रजस्थानगतस्तिष्ठत्युपरि मे वृषः। रमेऽहं सह गोभिश्च तस्मात् पूज्याः सदैव ताः ॥ ७ ॥ महाप्रभावा वरदा वरान् दद्युरुपासिताः। ता गावोऽस्यानुमन्यन्ते सर्वकर्म्मसु यत् फलम्। तस्य तत्र चतुर्भागो यो ददाति गवाह्निकम् ॥ ८ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्व्वणि दानधर्म्मे महादेवरहस्ये त्रयस्त्रिंशदधिकशततोऽध्यायः ॥ १३३ ॥

---

स्कन्द उवाच। ममाप्यनुमतो धर्म्मस्तं शृणुध्वं समाहिताः। नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकान्तु यः ॥ १ ॥ अभिषेकं त्र्यहं कुर्य्यात्तस्य धर्मं निबोधत। शोधयेदशुभं सर्वमाधिपत्यं परत्र च ॥ २ ॥ यावच्च जायते मर्त्त्यस्तावत् शूरो भविष्यति। इदञ्चाप्यपरं गुह्यं सरहस्यं निबोधत ॥ ३ ॥ प्रगृह्योडुम्बरं पात्रं पक्वान्नं मधुना सह। सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् ॥ ४ ॥ तस्य धर्म्मफलं नित्यं श्रद्दधाना निबोधत। साध्या रुद्रास्तथादित्या विश्वेदेवास्तथाश्विनौ ॥ ५ ॥ मरुतो वसवश्चैव

प्रतिगृह्णन्ति तं बलिम् । सोमश्च वर्द्धते तेन समुद्रश्च महोदधिः । एष धर्मो मयोद्दिष्टः सरहस्यः सुखावहः ॥ ६ ॥

विष्णुरुवाच । धर्मगुह्यानि सर्वाणि देवतानां महात्मनाम् । ऋषीणाञ्चैव गुह्यानि यः पठेदाह्निकं सदा ॥ ७ ॥ शृणुयाद्वानसूयश्च श्रद्दधानः समाहितः । नास्य विघ्नः प्रभवति भयञ्चास्य न विद्यते ॥ ८ ॥ ये च धर्माः शुभाः पुण्याः सरहस्या उदाहृताः । तेषां धर्मफलं तस्य यः पठेद्विजितेन्द्रियः ॥ ९ ॥ नास्य पापं प्रभवति न च पापेन लिप्यते । पठित्वा श्रावयित्वापि श्रुत्वा च लभते फलम् ॥ १० ॥ भुञ्जते पितरो देवा हव्यं कव्यमथाक्षयम् । श्रावयंश्चापि विप्रेन्द्रान् पर्वसु प्रयतो नरः ॥ ११ ॥ ऋषीणां देवतानाञ्च पितॄणाञ्चैव नित्यदा । भवत्यभिमतः श्रीमान् धर्मेषु प्रयतः सदा ॥ १२ ॥ कृत्वापि पापकं कर्म महापातकवर्ज्जितम् । रहस्यधर्मं श्रुत्वेमं सर्वपापैः प्रमुच्यते ॥ १३ ॥

भीष्म उवाच । एतद्धर्मरहस्यं वै देवतानां नराधिप । व्यासोद्दिष्टं मया प्रोक्तं सर्वदेवनमस्कृतम् ॥ १४ ॥ पृथिवी रत्नसम्पूर्णा ज्ञानञ्चेदमनुत्तमम् । इदमेव ततः श्राव्यमिति मन्येत धर्मवित् ॥ १५ ॥ नाश्रद्दधानाय न नास्तिकाय न नष्टधर्माय न निर्घृणाय । न हेतुदुष्टाय गुरुद्रुहे च नानात्मभूताय निवेद्यमेतत् ॥ १६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे देवरहस्ये चतुस्त्रिंशदधिकशतोऽध्यायः ॥ १३४ ॥

---

युधिष्ठिर उवाच । के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य ह । तथा वैश्यस्य के भोज्याः के च शूद्रस्य भारत ॥१॥

भीष्म उवाच । ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव

क्षत्रियाः । वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्ज्जिताः ॥ २ ॥
ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य च । वर्ज्जनीयास्तु
वै शूद्राः सर्वभक्ष्या विकर्म्मिणः ॥ ३ ॥ वैश्यास्तु भोज्या विप्राणां
क्षत्रियाणां तथैव च । नित्याग्नयो विविक्ताश्च चातुर्मास्यरताश्च
ये ॥ ४ ॥ शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् । मलं
नृणां स पिवति मलं भुङ्क्ते जनस्य च ॥ ५ ॥ शूद्राणां यस्तथा
भुङ्क्ते स भुङ्क्ते पृथिवीमलम् । पृथिवीमलमश्नन्ति ये द्विजाः
शूद्रभोजिनः ॥ ६ ॥ शूद्रस्य कर्म्मनिष्ठायां विकर्मस्थो हि पच्यते ।
ब्राह्मणः क्षत्रियो वैश्यो विकर्मस्थश्च पच्यते ॥ ७ ॥ स्वाध्याय-
निरता विप्रास्तथा स्वस्त्ययने नृणाम् । रक्षणे क्षत्रियं प्राहुर्वैश्यं
पुष्टार्थमेव च ॥ ८ ॥ करोति कर्म यद्वैश्यस्तद्गत्वा ह्युपजीवति ।
कृषिगोरक्ष्यवाणिज्यमकुत्सा वैश्यकर्म्मणि ॥ ९ ॥ शूद्रकर्म तु यः
कुर्य्यादवहाय स्वकर्म च । स विज्ञेयो यथा शूद्रो न च भोज्यः
कथञ्चन ॥ १० ॥ चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः ।
सांवत्सरो वृथाध्यायी सर्वे ते शूद्रसम्मिताः ॥ ११ ॥ शूद्रकर्मस्वथै-
तेषु यो भुङ्क्ते निरपत्रपः । अभोज्यभोजनं भुक्ता भयं प्राप्नोति
दारुणम् ॥ १२ ॥ कुलं वीर्य्यञ्च तेजश्च तिर्य्यग्योनित्वमेव च । स
प्रयाति यथा श्वा वै निष्क्रियो धर्मवर्ज्जितः ॥ १३ ॥ भुङ्क्ते
चिकित्सकस्यान्नं तदन्नञ्च पुरीषवत् । पुंश्चल्यन्नञ्च मूत्रं स्यात्
कारुकान्नञ्च शोणितम् ॥ १४ ॥ विद्योपजीविनोऽन्नञ्च यो भुङ्क्ते
साधुसम्मतः । तदप्यन्नं यथा शौद्रं तत् साधुः परिवर्ज्जयेत् ॥ १५ ॥
वचनीयस्य यो भुङ्क्ते तमाहुः शोणितं ह्रदम् । पिशुनं भोजनं
भुङ्क्ते ब्रह्महत्यासमं विदुः ॥ १६ ॥ असत्कृतमवज्ञातं न भोक्तव्यं
कदाचन । व्याधिं कुलक्षयञ्चैव क्षिप्रं प्राप्नोति ब्राह्मणः ॥ १७ ॥
नगरीरक्षिणो भुङ्क्ते श्वपचप्रवणो भवेत् । गोघ्ने ब्रह्महने चैव
सुरापे गुरुतल्पगे । भुक्त्वान्नं जायते विप्रो रक्षसां कुलवर्द्धनः ॥१८॥

न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीववर्त्तिनि । जायते शवरावासे मध्यदेशवहिष्कृते ॥१९॥ अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि । किमन्यदद्य कौन्तेय मत्तस्त्वं श्रोतुमिच्छसि ॥ २० ॥

इत्यनुशासनपर्वणि अनुशासनिकेपर्वणि दानधर्मे भोज्याभोज्यान्नकथने पञ्चत्रिंशदधिकशतोऽध्यायः ॥ १३५ ॥

---

युधिष्ठिर उवाच । उक्तास्तु भवता भोज्यास्तथाभोज्यास्तु सर्वशः । अत्र मे प्रश्नसन्देहस्तन्मे वद पितामह ॥ १ ॥ ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे । नानाविधेषु भोज्येषु प्रायश्चित्तानि शंस मे ॥ २ ॥

भीष्म उवाच । हन्त वक्ष्यामि ते राजन् ब्राह्मणानां महात्मनाम् । प्रतिग्रहेषु भोज्ये च मुच्यते येन पाप्मना ॥ ३ ॥ घृतप्रतिग्रहे चैव सावित्रीसमिदाहुतिः । तिलप्रतिग्रहे चैव सममेतद्युधिष्ठिर ॥ ४ ॥ मांसप्रतिग्रहे चैव मधुनो लवणस्य च । आदित्योदयनं स्थित्वा पूतो भवति वै द्विजः ॥ ५ ॥ काञ्चनं प्रतिगृह्याथ जपमानो गुरुश्रुतिम् । कृष्णायसञ्च विवृतं धारयन्मुच्यते द्विजः ॥ ६ ॥ एवं प्रतिगृहीतेऽथ धने वस्त्रे तथा स्त्रियाम् । एवमेव नरश्रेष्ठ सुवर्णस्य प्रतिग्रहे ॥ ७ ॥ अन्नप्रतिग्रहे चैव पायसेक्षुरसे तथा । इक्षुतैलपवित्राणां त्रिसन्ध्येऽप्सु निमज्जनम् ॥ ८ ॥ व्रीहौ पुष्पे फले चैव जले पिष्टमये तथा । यावके दधिदुग्धे च सावित्रीं शतशोऽन्विताम् ॥ ९ ॥ उपानहौ च वस्त्रञ्च प्रतिगृह्यौर्द्धदेहिकम् । जपेच्छतं समायुक्तस्तेन मुच्येत पाप्मना ॥ १० ॥ क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा । त्रीणि रात्राण्युपोषित्वा तेन पापाद्विमुच्यते ॥ ११ ॥ कृष्णपक्षे तु यः श्राद्धं पितॄणामश्नुते द्विजः । अन्नमेतदहोरात्रात् पूतो भवति ब्राह्मणः ॥ १२ ॥ न च सन्ध्यामुपासीत

न च जप्यं प्रवर्त्तयेत्। न सज्जिरेत्तदन्नञ्च ततः पूयेत ब्राह्मणः ॥ १३ ॥ इत्यर्थमपराह्णे तु पितॄणां श्राद्धमुच्यते। यथोक्तानां यदश्नीयुर्ब्राह्मणाः पूर्वकेतिताः ॥ १४ ॥ मृतकस्य तृतीयाह्ने ब्राह्मणो योऽन्नमश्नुते। स त्रिवेलं समुन्मज्य द्वादशाह्ने न शुध्यति ॥ १५ ॥ द्वादशाह्ने व्यतीते तु कृतशौचो विशेषतः। ब्राह्मणेभ्यो हविर्दत्त्वा मुच्यते तेन पाप्मना ॥ १६ ॥ मृतस्य दशरात्रेण प्रायश्चित्तानि दापयेत्। सावित्रीं रैवतीमिष्टिं कुष्माण्डमघमर्षणम् ॥ १७ ॥ मृतकस्य त्रिरात्रे यः समुद्दिष्टे समश्नुते। सप्तत्रिषवणां स्नात्वा पूतो भवति ब्राह्मणः ॥ १८ ॥ सिद्धिमाप्नोति विपुलामापदञ्चैव नाप्नुयात् ॥ १९ ॥ यस्तु शूद्रैः समश्नीयाद्ब्राह्मणोऽप्येकभोजने। अशौचं विधिवत्तस्य शौचमात्रं विधीयते ॥ २० ॥ यस्तु वैश्यैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने। स वै त्रिरात्रं भिक्षित्वा मुच्यते तेन कर्म्मणा ॥ २१ ॥ क्षत्रियैः सह योऽश्नीयाद्ब्राह्मणोऽप्येकभोजने। आप्लुतः सह वासोभिस्तेन मुच्येत पाप्मना ॥ २२ ॥ शूद्रस्य तु कुलं हन्ति वैश्यस्य पशुबान्धवान्। क्षत्रियस्य श्रियं हन्ति ब्राह्मणस्य सुवर्च्चसम् ॥ २३ ॥ प्रायश्चित्तञ्च शान्तिञ्च जुहुयात्तेन मुच्यते। सावित्रीं रैवतीमिष्टिं कुष्माण्डमघमर्षणम् ॥२४॥ अथोच्छिष्टमथान्योऽन्यं सम्प्राशेन्नात्र संशयः। रोचनाविरजारात्रिर्मङ्गलालम्भनानि च ॥ २५ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे प्रायश्चित्तकथने षट्त्रिंशत्यधिकशततोऽध्यायः ॥ १३६ ॥

---

युधिष्ठिर उवाच। दानेन वर्त्ततेत्याह तपसा चैव भारत। तदेतन्मे मनो दुःखं व्यपोह त्वं पितामह। किञ्चित् पृथिव्यामेतन्मे भवान् शंसितुमर्हति ॥ १ ॥

भीष्म उवाच । शृणु यैर्धर्म्मनिरतैस्तपसा भावितात्मभिः । लोका ह्यसंशयं प्राप्ता दानपुण्यरतैर्नृपैः ॥ २ ॥ सत्कृतश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् । उपादिश्य ततो राजन् गतो लोकाननुत्तमान् ॥ ३ ॥ शिविरौशीनरः प्राणान् प्रियस्य तनयस्य च । ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ ४ ॥ प्रतर्द्दनः काशिपतिः प्रदाय तनयं स्वकम् । ब्राह्मणायातुलां कीर्त्तिमिह चामुत्र चाश्नुते ॥ ५ ॥ रन्तिदेवश्च सांकृत्यो वशिष्ठाय महात्मने । अर्घ्यं प्रदाय विधिवल्लेभे लोकाननुत्तमान् ॥ ६ ॥ दिव्यं शतशलाकञ्च यज्ञार्थं काञ्चनं शुभम् । छत्रं देवावृधो दत्त्वा ब्राह्मणायास्थितो दिवम् ॥ ७ ॥ भगवानम्बरीषश्च ब्राह्मणायामितौजसे । प्रदाय सकलं राष्ट्रं सुरलोकमवाप्तवान् ॥ ८ ॥ सावित्रः कुण्डलं दिव्यं यानञ्च जनमेजयः । ब्राह्मणाय च गा दत्त्वा गतो लोकाननुत्तमान् ॥ ९ ॥ वृषादर्भिश्च राजर्षीरत्नानि विविधानि च । रम्यांश्चावसथान्दत्त्वा द्विजेभ्यो दिवमागतः ॥ १० ॥ निमीराष्ट्रञ्च वैदर्भिः कन्यां दत्त्वा महात्मने । अगस्त्याय गतः स्वर्गं सपुत्रपशुबान्धवः ॥ ११ ॥ जामदग्न्यश्च विप्राय भूमिं दत्त्वा महायशाः । रामोऽक्षयांस्तथा लोकान् जगाम मनसोऽधिकान् ॥ १२ ॥ अवर्षति च पर्ज्जन्ये सर्वभूतानि देवराट् । वशिष्ठो जीवयामास येन यातोऽक्षयां गतिम् ॥ १३ ॥ रामो दाशरथिश्चैव हुत्वा यज्ञेषु वै वसु । स गतो ह्यक्षयाँल्लोकान् यस्य लोके महद्यशः ॥ १४ ॥ कक्षसेनश्च राजर्षिर्वशिष्ठाय महात्मने । न्यासं यथावत् संन्यस्य जगाम सुमहायशाः ॥ १५ ॥ करन्धमस्य पौत्रस्तु मरुत्तोऽविक्षितः सुतः । कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम सः ॥ १६ ॥ ब्रह्मदत्तश्च पाञ्चाल्यो राजा धर्मभृताम्वरः । निधिं शङ्खमनुज्ञाय जगाम परमां गतिम् ॥ १७ ॥ राजा मित्रसहश्चैव वशिष्ठाय महात्मने । मदयन्तीं प्रियां भार्य्यां दत्त्वा च त्रिदिवं गतः ॥ १८ ॥

मनोः पुत्रश्च सुद्युम्नो लिखिताय महात्मने। दण्डमुद्धृत्य धर्म्मेण
गतो लोकाननुत्तमान् ॥ १९ ॥ सहस्रचित्तो राजर्षिः प्राणा-
निष्टान्महायशाः। ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान्
॥ २० ॥ सर्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयम्। मौद्गल्याय
गतः स्वर्गं शतद्युम्नो महीपतिः ॥ २१ ॥ भक्ष्यभोज्यस्य च कृतान्
राशयः पर्वतोपमान्। शाण्डिल्याय पुरा दत्त्वा सुमन्युर्दिव-
माश्थितः ॥ २२ ॥ नाम्ना च द्युतिमान्नाम शाल्वराजो महाद्युतिः।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥ २३ ॥ मदिराश्वश्च
राजर्षिर्द्दत्त्वा कन्यां सुमध्यमाम्। हिरण्यहस्ताय गतो लोका-
न्देवैरधिष्ठितान् ॥ २४ ॥ लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां
प्रभुः। ऋष्यशृङ्गाय विपुलैः सर्वैः कामैरयुज्यत ॥ २५ ॥ कौत्साय
दत्त्वा कन्यान्तु हंसीं नाम यशस्विनीम्। गतोऽक्षयानतो लोकान्
राजर्षिश्च भगीरथः ॥ २६ ॥ दत्त्वा शतसहस्रन्तु गवां राजा
भगीरथः। सवत्सानां कोहलाय गतो लोकाननुत्तमान् ॥ २७ ॥
एते चान्ये च बहवो दानेन तपसा च ह। युधिष्ठिर गताः स्वर्गं
निवर्त्तन्ते पुनः पुनः ॥ २८ ॥ तेषां प्रतिष्ठिता कीर्त्तिर्यावत् स्थास्यति
मेदिनी। गृहस्थैर्द्दानतपसा यैर्लोका वै विनिर्ज्जिताः ॥ २९ ॥
शिष्टानां चरितं ह्येतत् कीर्त्तितं मे युधिष्ठिर। दानयज्ञप्रजा-
सर्गैरेते हि दिवमास्थिताः ॥ ३० ॥ दत्त्वा तु सततं तैस्तु कौर-
वाणां धुरन्धर। दानयज्ञक्रियायुक्ता बुद्धिर्धर्म्मोपचायिनी ॥ ३१ ॥
यत्र ते नृपशार्दूल सन्देहो वै भविष्यति। स्वः प्रभाते हि वक्ष्यामि
सन्ध्या हि समुपास्थिता ॥ ३२ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्व्वणि दानधर्म्मे दान-
फलकथने सप्तत्रिंशदधिकशततोऽध्यायः ॥ १३७ ॥

---

युधिष्ठिर उवाच। श्रुतं मे भवतस्तात सत्यव्रतपराक्रम। दानधर्मेण महता ये प्राप्तास्त्रिदिवं नृपाः ॥ १ ॥ इमांस्तु श्रोतुमिच्छामि धर्मान् धर्मभृतांवर। दानं कतिविधं देयं किन्तस्य च फलं लभेत् ॥ २ ॥ कथं केभ्यश्च धर्मज्ञ दानं दातव्यमिष्यते। कैः कारणैः कतिविधं श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥

भीष्म उवाच। शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ। यथा दानं प्रदातव्यं सर्ववर्णेषु भारत ॥ ४ ॥ धर्मादर्थात् भयात् कामात् कारुण्यादिति भारत। दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ॥ ५ ॥ इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्। इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता ॥ ६ ॥ ददाति वा दास्यति वा मह्यं दत्तमनेन वा। इत्यर्थिभ्यो निशम्यैवं सर्वं दातव्यमर्थिने ॥ ७ ॥ नास्याहं न मदीयोऽयं पापं कुर्य्याद्विमानितः। इति दद्याद्भयादेव दृढ़ं मूढ़ाय पण्डितः ॥ ८ ॥ प्रियो मेऽयं प्रियास्याहमिति संप्रेक्ष्य बुद्धिमान्। वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रितः ॥ ९ ॥ दीनश्च याचते चायमल्पेनापि हि तुष्यति। इति दद्याद्दरिद्राय कारुण्यादिति सर्वथा ॥ १० ॥ इति पञ्चविधं दानं पुण्यकीर्त्तिविवर्द्धनम्। यथाशक्त्या प्रदातव्यमेवमाह प्रजापतिः ॥ ११ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मकथने
अष्टत्रिंशदधिकशततोऽध्यायः ॥ १३८ ॥

---

युधिष्ठिर उवाच। पितामह महाप्राज्ञ सर्वशास्त्रविशारद। आगमैर्बहुभिः स्फीतो भवान्नः प्रवरे कुले ॥ १ ॥ त्वत्तो धर्मार्थसंयुक्तमायत्याञ्च सुखोदयम्। आश्चर्यभूतं लोकस्य श्रोतुमिच्छाम्यरिन्दम ॥ २ ॥ अयञ्च कालः सम्प्राप्तो दुर्लभो ज्ञातिबान्धवैः।

शास्ता च न हि नः कश्चित्त्वामृते पुरुषर्षभ ॥ ३ ॥ यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ । वक्तुमर्हसि नः प्रश्नं यत्त्वां पृच्छामि पार्थिव ॥ ४ ॥ अयं नारायणः श्रीमान् सर्वपार्थिवसम्मतः । भवन्तं बहुमानेन प्रश्रयेण च सेवते ॥ ५ ॥ अस्य चैव समक्षं त्वं पार्थिवानाञ्च सर्वशः । भ्रातृणाञ्च प्रियार्थं मे स्नेहाद्भाषितुमर्हसि ॥ ६ ॥

वैशम्पायन उवाच । तस्य तद्वचनं श्रुत्वा स्नेहादागतसम्भ्रमः । भीष्मो भागीरथीपुत्र इदम्वचनमब्रवीत् ॥ ७ ॥

भीष्म उवाच । अहन्ते कथयिष्यामि कथामतिमनोहराम् । अस्य विष्णोः पुरा राजन् प्रभावो यो मया श्रुतः ॥ ८ ॥ यश्च गोवृषभाङ्कस्य प्रभावस्तञ्च मे शृणु । रुद्राण्याः संशयो यश्च दम्पत्योस्तञ्च मे शृणु ॥ ९ ॥ व्रतञ्चचार धर्मात्मा कृष्णो द्वादशवार्षिकम् । दीक्षितञ्चागतौ द्रष्टुमुभौ पर्वतनारदौ ॥ १० ॥ कृष्णद्वैपायनश्चैव धौम्यश्च जपताम्वरः । देवलः काश्यपश्चैव हस्तिकाश्यप एव च ॥ ११ ॥ अपरे चर्षयः सन्तो दीक्षादमसमन्विताः । शिष्यैरनुगताः सिद्धैर्देवकल्पैस्तपोधनैः ॥ १२ ॥ तेषामतिथिसत्कारमर्च्चनीयं कुलोचितम् । देवकीतनयः प्रीतो देवतुल्यमकल्पयत् ॥ १३ ॥ हरितेषु सुवर्णेषु बर्हिष्केषु नवेषु च । उपोपविविशुः प्रीता विष्टरेषु महर्षयः ॥ १४ ॥ कथाश्चक्रुस्ततस्ते तु मधुरा धर्म्मसंहिताः । राजर्षीणां सुराणाञ्च ये वसन्ति तपोधनाः ॥ १५ ॥ ततो नारायणं तेजो व्रतचर्य्येन्धनोत्थितम् । वक्त्रान्निःसृत्य कृष्णस्य वह्निरद्भुतकर्म्मणः ॥ १६ ॥ सोऽग्निर्ददाह तं शैलं सद्रुमं सलताक्षुपम् । सपक्षिमृगसङ्घातं सश्वापदसरीसृपम् ॥ १७ ॥ मृगैश्च विविधाकारैर्हाहाभूतमचेतनम् । शिखरं तस्य शैलस्य मथितं दीनदर्शनम् ॥ १८ ॥ स तु वह्निर्महाज्वालो दग्ध्वा सर्वमशेषतः । विष्णोः समीपमागम्य पादौ शिष्यवदस्पृशत् ॥ १९ ॥

ततो विष्णुर्गिरिं दृष्ट्वा निर्द्दग्धमरिकर्षणः । सौम्यदृष्टिनिपातस्तं पुनः प्रकृतिमानयत् ॥ २० ॥ तथैव स गिरिर्भूयः प्रपुष्पितलता-द्रुमः । सपक्षिगणसङ्घुष्टः सश्वापदसरीसृपः ॥ २१ ॥ तमद्भुत-मचिन्त्यञ्च दृष्ट्वा मुनिगणस्तदा । विस्मितो हृष्टरोमा च बभूवा-स्राविलेक्षणः ॥ २२ ॥ ततो नारायणो दृष्ट्वा तानृषीन् विस्मया-न्वितान् । प्रश्रितं मधुरं स्निग्धं पप्रच्छ वदतां वरः ॥ २३ ॥ किमर्थमृषिपूगस्य त्यक्तसङ्गस्य नित्यशः । निर्म्ममस्यागमवतो विस्मयः समुपागतः ॥ २४ ॥ एतन्मे संशयं सर्वं याथातथ्यमनि-न्दिताः । ऋषयो वक्तुमर्हन्ति निश्चितार्थं तपोधनाः ॥ २५ ॥

ऋषय ऊचुः । भवान् विसृजते लोकान् भवान् संहरते पुनः । भवान् शीतं भवानुष्णं भवानेव च वर्षति ॥ २६ ॥ पृथिव्यां यानि भूतानि स्थावराणि चराणि च । तेषां पिता त्वं माता च प्रभुः प्रभव एव च ॥ २७ ॥ एवं नो विस्मयकरं संशयं मधुसूदन । त्वमेवार्हसि कल्याण वक्तुं वह्नेर्विनिर्गमम् ॥ २८ ॥ ततो विगत-संत्रासा वयमप्यरिकर्षण । यच्छ्रुतं यच्च दृष्टं नस्तत् प्रवक्ष्यामहे हरे ॥ २९ ॥

वासुदेव उवाच । एतद्वै वैष्णवं तेजो मम वक्त्राद्विनिःसृतम् । कृष्णवर्त्मा युगान्ताभो येनायं मथितो गिरिः ॥ ३० ॥ ऋषय-श्चार्त्तिमापन्ना जितक्रोधा जितेन्द्रियाः । भवन्तो व्यथितास्त्वासन् देवकल्पास्तपोधनाः ॥ ३१ ॥ व्रतचर्य्यापरीतस्य तपस्विव्रतसेवया । मम वह्निः समुद्भूतो न वै व्यथितुमर्हथ ॥ ३२॥ व्रतं चर्त्तुमिहायात-स्त्वहं गिरिमिमं शुभम् । पुत्रञ्चात्मसमं वीर्य्ये तपसा लब्धु-मागतः ॥ ३३ ॥ ततो ममात्मा यो देहे सोऽग्निर्भूत्वा विनिःसृतः । गतश्च वरदं द्रष्टुं सर्वलोकपितामहम् ॥ ३४ ॥ तेन चात्मानुशिष्टो मे पुत्रत्वे मुनिसत्तमाः । तेजसोऽर्द्धेन पुत्रस्ते भवितेति वृषध्वजः ॥ ३५ ॥ सोऽयं वह्निरुपागम्य पादमूले ममान्तिकम् । शिष्यवत्

परिचर्य्यार्थं शान्तः प्रकृतिमागतः ॥ ३६ ॥ एतदेव रहस्यं वः पद्मनाभस्य धीमतः । मया प्रोक्तं समासेन न भीः कार्य्या तपोधनाः ॥ ३७ ॥ सर्व्वत्र गतिरव्यग्रा भवतां दीर्घदर्शिनाम् । तपस्विव्रतसंदीप्ता ज्ञानविज्ञानशोभिताः ॥ ३८ ॥ यच्छ्रुतं यच्च वो दृष्टं दिवि वा यदि वा भुवि । आश्चर्यं परमं किञ्चित्तद्भवन्तो ब्रुवन्तु मे ॥ ३९ ॥ तस्यामृतनिकाशस्य वाङ्मधोरस्ति मे स्पृहा । भवद्भिः कथितस्येह तपोवननिवासिभिः ॥ ४० ॥ यद्यप्यहमदृष्टं वो दिव्यमद्भुतदर्शनम् । दिवि वा भुवि वा किञ्चित् पश्याम्यमरदर्शनाः ॥ ४१ ॥ प्रकृतिः सा मम परा न क्वचित् परिहन्यते । न चात्मगतमैश्वर्य्यमाश्चर्यं प्रतिभाति मे ॥ ४२ ॥ श्रद्धेयः कथितो ह्यर्थः सज्जनश्रवणं गतः । चिरं तिष्ठति मेदिन्यां शैले लेख्यमिवार्पितम् ॥ ४३ ॥ तदहं सज्जनमुखान्निःसृतं तत् समागमे । कथयिष्याम्यहमहो बुद्धिदीपकरं नृणाम् ॥ ४४ ॥ ततो मुनिगणाः सर्व्वे विस्मिताः कृष्णसन्निधौ । नेत्रैः पद्मदलप्रख्यैरपश्यन्त जनार्द्दनम् ॥ ४५ ॥ वर्द्धयन्तस्तथैवान्ये पूजयन्तस्तथा परे । वाग्भिर्ऋग्भूषितार्थाभिः स्तुवन्तो मधुसूदनम् ॥ ४६ ॥ ततो मुनिगणाः सर्व्वे नारदं देवदर्शनम् । तदा नियोजयामासुर्व्वचने वाक्यकोविदम् ॥ ४७ ॥

मुनय ऊचुः । यदाश्चर्य्यमचिन्त्यञ्च गिरौ हिमवति प्रभो । अनुभूतं मुनिगणैस्तीर्थयात्रापरैर्मुने ॥ ४८ ॥ तद्भवानृषिसङ्घस्य हितार्थं सर्व्वमादितः । यथा दृष्टं हृषीकेशे सर्व्वमाख्यातुमर्हसि ॥ ४९ ॥ एवमुक्तः स मुनिभिर्नारदो भगवन्मुनिः । कथयामास देवर्षिः पूर्व्ववृत्तामिमां कथाम् ॥ ५० ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे ऋषिवासुदेवसंवादे एकोनचत्वारिंशदधिकशततोऽध्यायः ॥ १३९ ॥

---

भीष्म उवाच। ततो नारायणसुहृन्नारदो भगवानृषिः।
शङ्करस्योमया सार्द्धं सम्वादं प्रत्यभाषत ॥ १ ॥

नारद उवाच। तपश्चचार धर्मात्मा वृषभाङ्कः सुरेश्वरः।
पुण्ये गिरौ हिमवति सिद्धचारणसेविते ॥ २ ॥ नानौषधियुते
रम्ये नानापुष्पसमाकुले। अप्सरोगणसङ्कीर्णे भूतसङ्घनिषेविते
॥ ३ ॥ तत्र देवो मुदा युक्तो भूतसङ्घशतैर्वृतः। नानारूपैर्वि-
रूपैश्च दिव्यैरद्भुतदर्शनैः ॥ ४ ॥ सिंहव्याघ्रगजप्रख्यैः सर्वजाति-
समन्वितैः। क्रोष्टुकद्वीपिवदनैर्ऋक्षर्षभमुखैस्तथा ॥ ५ ॥ उलूक-
वदनैर्भीमैर्वृकश्येनमुखैस्तथा। नानावर्णैर्मृगमुखैः सर्वजातिसम-
न्वितैः ॥ ६ ॥ किन्नरैर्यक्षगन्धर्वैः रक्षोभूतगणैस्तथा। दिव्यपुष्प-
समाकीर्णं दिव्यज्वालासमाकुलम् ॥ ७ ॥ दिव्यचन्दनसंयुक्तं दिव्य-
धूपेन धूपितम्। तत् सदो वृषभाङ्कस्य दिव्यवादित्रनादितम् ॥८॥
मृदङ्गपणवोद्घुष्टं शङ्खभेरीनिनादितम्। नृत्यद्भिर्भूतसङ्घैश्च बर्हि-
णैश्च समन्वितम् ॥ ९ ॥ प्रनृत्याप्सरसं दिव्यं देवर्षिगणसेवितम्।
दृष्टिकान्तमनिर्देश्यं दिव्यमद्भुतदर्शनम् ॥ १० ॥ स गिरिस्तपसा
तस्य गिरीशस्य व्यरोचत। स्वाध्यायपरमैर्विप्रैर्ब्रह्मघोषनिना-
दितः। षट्पदैरुपगीतश्च माधवाप्रतिमो गिरिः ॥ ११ ॥ तन्म-
होत्सवसङ्काशं भीमरूपधरं ततः। दृष्ट्वा मुनिगणस्यासीत् परा
प्रीतिर्ज्जनार्द्दन ॥ १२ ॥ मुनयश्च महाभागाः सिद्धाश्चैवोर्द्धरेतसः।
मरुतो वसवः साध्या विश्वेदेवाः सवासवाः ॥ १३ ॥ यक्षा नागाः
पिशाचाश्च लोकपाला हुताशनाः। वाताः सर्वे महद्भूतास्तत्रै-
वासन् समाहिताः ॥ १४॥ ऋतवः सर्वपुष्पैश्च व्यकिरन्त महाद्भुतैः।
ओषध्यो ज्वलमानाश्च द्योतयन्ति स्म तद्वनम् ॥ १५ ॥ विहगाश्च
मुदायुक्ताः प्रानृत्यन् व्यनदंश्च ह। गिरिपृष्ठेषु रम्येषु व्याहरन्तो
जनप्रियाः ॥ १६ ॥ तत्र देवो गिरितटे दिव्यधातुविभूषिते।
पर्य्यङ्क इव विभ्राजन्नुपविष्टो महामनाः ॥ १७ ॥ व्याघ्रचर्माम्बर-

धैरः सिंहचर्मोत्तरच्छदः। व्यालयज्ञोपवीती च लोहिताङ्गद-
भूषणः ॥ १८ ॥ हरिश्मश्रुर्जटी भीमो भयकर्त्ता सुरद्विषाम्।
अभयः सर्व्वभूतानां भक्तानां वृषभध्वजः ॥ १९ ॥ दृष्ट्वा महर्षयः
सर्व्वे शिरोभिरवनीं गताः। विमुक्ताः सर्व्वपापेभ्यः क्षान्ता विगत-
कल्मषाः ॥ २० ॥ तस्य भूतपतेः स्थानं भीमरूपधरं बभौ।
अप्रधृष्यतरञ्चैव महोरगसमाकुलम् ॥ २१ ॥ क्षणेनैवाभवत् सर्व्व-
मद्भुतं मधुसूदन। तत् सदो वृषभाङ्कस्य भीमरूपधरं बभौ ॥२२॥
तमभ्ययाच्छैलसुता भूतस्त्रीगणसंवृता। हरतुल्याम्बरधरा समान-
व्रतचारिणी ॥ २३ ॥ बिभ्रती कलसं रौक्मं सर्व्वतीर्थजलोद्भवम्।
गिरिव्रजाभिः सर्व्वाभिः पृष्ठतोऽनुगता शुभा ॥ २४ ॥ पुष्पवृष्ट्या-
भिवर्षन्ती गन्धैर्बहुविधैस्तथा। सेवन्ती हिमवत्पार्श्वं हरपार्श्व-
मुपागमत् ॥ २५ ॥ ततः स्मयन्ती पाणिभ्यां नर्म्मार्थं चारुदर्शना।
हरनेत्रे शुभे देवी सहसा सा समावृणोत् ॥ २६ ॥ संवृताभ्यान्तु
नेत्राभ्यां तमोभूतमचेतनम्। निर्होमं निर्व्वषट्कारं जगद्वै सह-
साभवत् ॥ २७ ॥ जनश्च विमनाः सर्व्वो भयत्राससमन्वितः।
निमीलिते भूतपतौ नष्टसूर्य्य इवाभवत् ॥ २८ ॥ ततो वितिमिरो
लोकः क्षणेन समपद्यत। ज्वाला च महती दीप्ता ललाटात्तस्य
निःसृता ॥ २९ ॥ तृतीयञ्चास्य सम्भूतं नेत्रमादित्यसन्निभम्।
युगान्तसदृशं दीप्तं येनासौ मथितो गिरिः ॥ ३० ॥ ततो गिरि-
सुता दृष्ट्वा दीप्ताग्निसदृशेक्षणम्। हरं प्रणम्य शिरसा ददर्शा-
यतलोचना ॥ ३१ ॥ दह्यमाने वने तस्मिन् सशालसरलद्रुमे।
सचन्दनवने रम्ये दिव्यौषधिविदीपिते ॥ ३२ ॥ मृगयूथैर्द्रुतै-
र्भीतैर्हरपार्श्वमुपागतैः। शरणञ्चाप्यविन्दद्भिस्तत् सदः संकुलं
बभौ ॥ ३३ ॥ ततो नभस्पृशज्ज्वालो विद्युल्लोलाग्निरुल्वनः। द्वाद-
शादित्यसङ्काशो युगान्ताग्निरिवापरः ॥ ३४ ॥ क्षणेन तेन निर्दग्धो
हिमवानभवन्नगः। स धातुशिखराभोगो दीप्तदग्धवनौषधिः

॥ ३५ ॥ तं दृष्ट्वा मथितं शैलं शैलराजसुता ततः। भगवन्तं प्रपन्ना वै साञ्जलिप्रग्रहा स्थिता ॥ ३६ ॥ उमां शर्वस्तदा दृष्ट्वा स्त्रीभावगतमार्द्दवाम्। पितुर्द्दैन्यमनीच्छन्तीं प्रीत्यापश्यत्तदा गिरिम् ॥ ३७ ॥ क्षणेन हिमवान् सर्वः प्रकृतिस्थः सुदर्शनः। प्रहृष्टविहगश्चैव सुपुष्पितवनद्रुमः ॥ ३८ ॥ प्रकृतिस्थं गिरिं दृष्ट्वा प्रीता देवं महेश्वरम्। उवाच सर्वलोकानां पतिं पतिमनिन्दिता ॥ ३९ ॥

उमोवाच। भगवन् सर्वभूतेश शूलपाणे महाव्रत। संशयो मे महान् जातस्तन्मे व्याख्यातुमर्हसि ॥ ४० ॥ किमर्थन्ते ललाटे वै तृतीयं नेत्रमुत्थितम्। किमर्थञ्च गिरिर्द्दग्धः सपक्षगणकाननः ॥ ४१ ॥ किमर्थञ्च पुनर्द्देव प्रकृतिस्थस्त्वया कृतः। तथैव द्रुमसञ्छन्नः कृतोऽयं ते पिता मम ॥ ४२ ॥

महेश्वर उवाच। नेत्रे मे संवृते देवि त्वया बाल्यादनिन्दिते। नष्टालोकस्तथा लोकः क्षणेन समपद्यत ॥ ४३ ॥ नष्टादित्ये तथा लोके तमोभूते नगात्मजे। तृतीयं लोचनं दीप्तं सृष्टं मे रक्षता प्रजाः ॥ ४४ ॥ तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः। त्वत्प्रियार्थञ्च मे देवि प्रकृतिस्थः पुनः कृतः ॥ ४५ ॥

उमोवाच। भगवन् केन ते वक्त्रं चन्द्रवत् प्रियदर्शनम्। पूर्वं तथैव श्रीकान्तमुत्तरं पश्चिमं तथा ॥ ४६ ॥ दक्षिणञ्च मुखं रौद्रं केनोर्द्धं कपिला जटाः। केन कण्ठश्च ते नीलो वर्हिवर्हनिभः कृतः ॥ ४७ ॥ हस्ते देव पिनाकस्ते सततं केन तिष्ठति। जटिलो ब्रह्मचारी च किमर्थमसि नित्यदा ॥ ४८ ॥ एतन्मे संशयं सर्वं वक्तुमर्हसि वै प्रभो। सधर्म्मचारिणी चाहं भक्ता चेति वृषध्वज ॥ ४९ ॥

नारद उवाच। एवमुक्तः स भगवाञ्छैलपुत्र्या पिनाकधृक्। तस्या धृत्या च बुद्ध्या च प्रीतिमानभवत् प्रभुः ॥ ५० ॥ ततस्ता-

मब्रवीद्देवः सुभगे श्रूयतामिति। हेतुभिर्य्यैर्म्ममैतानि रूपाणि रुचिरानने ॥ ५१ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे उमा-
महेश्वरसम्वादे चत्वारिंशदधिकशततमोऽध्यायः ॥१४०॥

---

श्रीभगवानुवाच। तिलोत्तमा नाम पुरा ब्रह्मणा योषिदुत्तमा। तिलं तिलं समुद्धृत्य रत्नानां निर्म्मिता शुभा ॥ १ ॥ साभ्यगच्छत मां देवि रूपेणाप्रतिमा भुवि। प्रदक्षिणं लोभयन्ती मां शुभे रुचिरानना ॥ २ ॥ यतो यतः सा सुदती मामुपाधावदन्तिके। ततस्ततो मुखञ्चारु मम देवि विनिर्गतम् ॥ ३ ॥ तां दिदृक्षुरहं योगाच्चतुर्मूर्त्तित्वमागमः। चतुर्मुखश्च संवृत्तो दर्शयन् योगमुत्तमम् ॥ ४ ॥ पूर्व्वेण वदनेनाहमिन्द्रत्वमनुशास्मि ह। उत्तरेण त्वया सार्द्धं रमाम्यहमनिन्दिते ॥ ५ ॥ पश्चिमं मे मुखं सौम्यं सर्व्वप्राणिसुखावहम्। दक्षिणं भीमसङ्काशं रौद्रं संहरति प्रजाः ॥ ६ ॥ जटिलो ब्रह्मचारी च लोकानां हितकाम्यया। देवकार्य्यार्थसिद्ध्यर्थं पिनाकं मे करे स्थितम् ॥ ७ ॥ इन्द्रेण च पुरा वज्रं क्षिप्तं श्रीकाङ्क्षिणा मम। दग्ध्वा कण्ठन्तु तद्यातं तेन श्रीकण्ठता मम ॥ ८ ॥

उमोवाच। वाहनेष्वत्र सर्व्वेषु श्रीमत्स्वन्येषु सत्तम। कथञ्च वृषभो देव वाहनत्वमुपागतः ॥ ९ ॥

महेश्वर उवाच। सुरभीमसृजद्ब्रह्मा देवधेनुं पयोमुचम्। सा सृष्टा बहुधा जाता क्षरमाणा पयोऽमृतम् ॥ १० ॥ तस्या वत्समुखोत्सृष्टः फेनो मद्गात्रमागतः। ततो दग्धा मया गावो नानावर्णत्वमागताः ॥ ११ ॥ ततोऽहं लोकगुरुणा शमं नीतोऽर्थवेदिना। वृषञ्चैनं ध्वजार्थं मे ददौ वाहनमेव च ॥ १२ ॥

उमोवाच । निवासा बहुरूपास्ते दिवि सर्वगुणान्विताः । तांश्च सन्त्यज्य भगवन् श्मशाने रमसे कथम् ॥ १३ ॥ केशास्थि-कलिले भीमे कपालघटसङ्कुले । गृध्रगोमायुबहुले चिताग्निशत-सङ्कुले ॥ १४ ॥ अशुचौ मांसकलिले वसाशोणितकर्द्दमे । विकी-र्णान्त्रास्थिनिचये शिवानादनिनादिते ॥ १५ ॥

महेश्वर उवाच । मेध्यान्वेषी महीं कृत्स्नां विचराम्यनिशं सदा । न च मेध्यतरं किञ्चित् श्मशानादिह लक्ष्यते ॥ १६ ॥ तेन मे सर्ववासानां श्मशाने रमते मनः । न्यग्रोधशाखासंछन्ने निर्भुग्नस्रग्विभूषिते ॥ १७ ॥ तत्र चैव रमन्तीमे भूतसङ्घाः शुचि-स्मिते । न च भूतगणैर्देवि विनाहं वस्तुमुत्सहे ॥ १८ ॥ एष वासो हि मे मेध्यः स्वर्गीयश्च मतः शुभे । पुण्यः परमकश्चैव मेध्य-कामैरुपास्यते ॥ १९ ॥

उमोवाच । भगवन् सर्वभूतेश सर्वधर्मभृतांवर । पिनाक-पाणे वरद संशयो मे महानयम् ॥ २० ॥ अयं मुनिगणः सर्व-स्तपस्तेप इति प्रभो । तपोविषकरो लोके भ्रमते विविधाकृतिः ॥ २१ ॥ अस्य चैवर्षिसङ्घस्य मम च प्रियकाम्यया । एतन्ममेह सन्देहं वक्तुमर्हस्यरिन्दम ॥ २२ ॥ धर्मः किं लक्षणः प्रोक्तः कथं वा चरितुं नरैः । शक्यो धर्ममविन्दद्भिर्धर्मज्ञ वद मे प्रभो ॥ २३ ॥

नारद उवाच । ततो मुनिगणः सर्वस्तां देवीं प्रत्यपूजयत् । वाग्भिर्ऋग्भूषिताभिश्च स्तवैश्चार्थविशारदैः ॥ २४ ॥

महेश्वर उवाच । अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् । शमो दानं यथाशक्ति गार्हस्थो धर्म उत्तमः ॥ २५ ॥ परदारे-ष्वसंसक्तो न्यासस्त्रीपरिरक्षणम् । अदत्तादानविरमो मधुमांसस्य वर्ज्जनम् ॥ २६ ॥ एष पञ्चविधो धर्मो बहुशाखः सुखोदयः । देहिभिर्धर्मपरमैश्चर्त्तव्यो देहसम्भवः ॥ २७ ॥

उमोवाच। भगवन् संशयः पृष्टस्तन्मे संशितुमर्हसि। चातु-
र्व्वर्ण्यस्य यो धर्म्मः स्वे स्वे धर्मे सुखावहः ॥ २८ ॥ ब्राह्मणे कीदृशो
धर्म्मः चत्रिये कीदृशो भवेत्। वैश्ये किं लक्षणो धर्म्मः शूद्रे किं
लक्षणो भवेत् ॥ २९ ॥

भगवानुवाच। न्यायतस्ते महाभागे सर्व्वशः समुदीरितः।
भूमिदेवा महाभागाः सदा लोके द्विजातयः ॥ ३० ॥ उपवासः
सदा धर्मो ब्राह्मणस्य न संशयः। स हि धर्मार्थसम्पन्नो ब्रह्म-
भूयाय कल्पते ॥ ३१ ॥ तस्य धर्म्मक्रिया देवि ब्रह्मचर्य्या च
न्यायतः। व्रतोपनयने चैव द्विजो येनोपपद्यते ॥ ३२ ॥ गुरु-
दैवतपूजार्थं स्वाध्यायाभ्यसनात्मकः। देहिभिर्धर्म्मपरमैश्चर्त्तव्यो
धर्म्मसम्भवः ॥ ३३ ॥

उमोवाच। भगवन् संशयो मेऽस्ति तन्मे व्याख्यातुमर्हसि।
चातुर्व्वर्ण्यस्य धर्मं वै नैपुण्येन प्रकीर्त्तय ॥ ३४ ॥

महेश्वर उवाच। रहस्यश्रवणं धर्मो वेदव्रतनिषेवणम्।
अग्निकार्य्यं तथा धर्मो गुरुकार्य्यप्रसाधनम् ॥ ३५ ॥ भैक्षचर्य्या
परो धर्मो नित्ययज्ञोपवीतिता। नित्यस्वाध्यायिता धर्मो ब्रह्म-
चर्य्याश्रयस्तथा ॥ ३६ ॥ गुरुणा चाभ्यनुज्ञातः समावर्त्तेत वै द्विजः।
विन्देतानन्तरं भार्य्यामनुरूपां यथाविधि ॥ ३७ ॥ शूद्रान्नवर्ज्जनं
धर्म्मस्तथा सत्पथसेवनम्। धर्मो नित्योपवासित्वं ब्रह्मचर्य्यं तथैव
च ॥ ३८ ॥ आहिताग्निरधीयानो जुह्वानः संयतेन्द्रियः। विघ-
साशी यताहारो गृहस्थः सत्यवाक् शुचिः ॥ ३९ ॥ अतिथिव्रता
धर्मो धर्म्मस्त्रेताग्निधारणम्। इष्टीश्च पशुबन्धांश्च विधिपूर्व्वान्
समाचरेत् ॥ ४० ॥ यज्ञश्च परमो धर्म्मस्तथाहिंसाच देहिषु।
अपूर्व्वभोजनं धर्मो विघसाशित्वमेव च ॥ ४१ ॥ भुक्ते परिजने
पश्चाद्भोजनं धर्म्म उच्यते। ब्राह्मणस्य गृहस्थस्य श्रोत्रियस्य विशे-
षतः ॥ ४२ ॥ दम्पत्योः समशीलत्वं धर्म्मः स्याद्गृहमेधिनः। गृह्या-

काश्चैव देवानां नित्यं पुष्पबलिक्रिया ॥ ४३ ॥ नित्योपलेपनं धर्म्म-स्तथा नित्योपवासिता। सुसंसृष्टोपलिप्ते च साज्यधूमो भवेद्गृहे ॥ ४४ ॥ एष द्विजजने धर्मो गार्हस्थो लोकधारणः। द्विजातीनां सतां नित्यं सदैवैष प्रवर्त्तते ॥ ४५ ॥ यस्तु क्षत्रगतो देवि त्वया धर्म्म उदीरितः। तमहं ते प्रवक्ष्यामि तन्मे शृणु समाहिता ॥४६॥ क्षत्रियस्य स्मृतो धर्म्मः प्रजापालनमादितः। निर्द्दिष्टफलभोक्ता हि राजा धर्म्मेण युज्यते ॥ ४७ ॥ प्रजाः पालयते यो हि धर्म्मेण मनुजाधिपः। तस्य धर्म्मार्ज्जिता लोकाः प्रजापालनसञ्चिताः ॥४८॥ तस्य राज्ञः परो धर्मो दमः स्वाध्याय एव च। अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ॥ ४९ ॥ यज्ञोपवीतधरणं यज्ञो धर्म्म-क्रियास्तथा। भृत्यानां भरणं धर्म्मः कृते कर्म्मण्यमोघता ॥ ५० ॥ सम्यग्दण्डे स्थितिर्धर्मो धर्मो वेदक्रतुक्रिया। व्यवहारस्थिति-र्धर्मः सत्यवाक्यरतिस्तथा ॥ ५१ ॥ आर्त्तहस्तप्रदो राजा प्रेत्य चेह महीयते। गोब्राह्मणार्थे विक्रान्तः संग्रामे निधनं गतः ॥ ५२ ॥ अश्वमेधजितांल्लोकानाप्नोति त्रिदिवालये ॥ ५३ ॥ वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा। अग्निहोत्रपरिस्पन्दो दानाध्ययन-मेव च ॥ ५४ ॥ वाणिज्यं सत्पथास्थानमातिथ्यं प्रशमो दमः। विप्राणां स्वागतं त्यागो वैश्यधर्मः सनातनः ॥ ५५ ॥ तिलान् गन्धान् रसांश्चैव विक्रीणीयान्न चैव हि। वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः ॥ ५६ ॥ सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति यथार्हतः। शूद्रधर्मः परो नित्यं शुश्रूषा च द्विजातिषु ॥ ५७ ॥ स शूद्रः संशिततपाः सत्यवादी जितेन्द्रियः। शुश्रूषुरतिथिं प्राप्तं तपः सञ्चिनुते महत् ॥ ५८ ॥ नित्यं स हि शुभाचारो देवता-द्विजपूजकः। शूद्रो धर्मफलैरिष्टैः संप्रयुज्येत बुद्धिमान् ॥ ५९ ॥ एतत्ते सर्वमाख्यातं चातुर्वर्ण्यस्य शोभने। एकैकस्येह शुभगे किमन्यच्छ्रोतुमिच्छसि ॥ ६० ॥

उमोवाच । उक्तास्त्वया पृथग्धर्म्मश्चातुर्वर्ण्यहितः शुभः । सर्व्वव्यापी तु यो धर्म्मो भगवंस्तद्ब्रवीहि मे ॥ ६१ ॥

महेश्वर उवाच । ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना । लोकांस्तारयितुं कृत्स्नान्मर्त्त्येषु क्षितिदेवताः ॥ ६२ ॥ तेषामपि प्रवक्ष्यामि धर्म्मकर्म्मफलोदयम् । ब्राह्मणेषु हि यो धर्म्मः स धर्म्मः परमो मतः ॥ ६३ ॥ इमे ते लोकधर्म्मार्थं त्रयः सृष्टाः स्वयम्भुवा । पृथिव्यां सर्ज्जने नित्यं सृष्टास्तानपि मे शृणु ॥ ६४ ॥ वेदोक्तः परमो धर्म्मः स्मृतिशास्त्रगतोऽपरः । शिष्टाचीर्णोऽपरः प्रोक्तस्त्रयो धर्म्माः सनातनाः ॥ ६५ ॥ त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः । त्रिकर्म्मा त्रिपरिक्रान्तो मैत्र एष स्मृतो द्विजः ॥ ६६ ॥ षड़िमानि तु कर्म्माणि प्रोवाच भुवनेश्वर । वृत्त्यर्थं ब्राह्मणानां वै शृणु धर्म्मान् सनातनान् ॥ ६७ ॥ यजनं याजनञ्चैव तथा दानप्रतिग्रहौ । अध्यापनञ्चाध्ययनं षट्कर्म्मा धर्म्मभाग्द्विजः ॥ ६८ ॥ नित्यस्वाध्यायिता धर्म्मो धर्म्मो यज्ञः सनातनः । दानं प्रशस्यते चास्य यथाशक्ति यथाविधि ॥ ६९ ॥ शमस्तु परमो धर्म्मः प्रवृत्तः सत्सु नित्यशः । गृहस्थानां विशुद्धानां धर्म्मस्य निचयो महान् ॥ ७० ॥ पञ्चयज्ञविशुद्धात्मा सत्यवागनसूयकः । दाता ब्राह्मणसत्कर्त्ता सुसंमृष्टनिवेशनः ॥ ७१ ॥ अमानी च सदा जिह्मः स्निग्धवाणीप्रदस्तथा । अतिथ्यभ्यागतरतिः शेषान्नकृतभोजनः ॥ ७२ ॥ पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा । दीपं प्रतिश्रयञ्चैव यो ददाति स धार्म्मिकः ॥ ७३ ॥ प्रातरुत्थाय चाचम्य भोजनेनोपमन्त्र्य च । सत्कृत्यानुव्रजेद्यश्च तस्य धर्म्मः सनातनः ॥ ७४ ॥ सर्व्वातिथ्यं त्रिवर्गस्य यथाशक्ति निशानिशम् । शूद्रधर्म्मः समाख्यातस्त्रिवर्गपरिचारणम् ॥ ७५ ॥ प्रवृत्तिलक्षणो धर्म्मो गृहस्थस्य विधीयते । तमहं वर्त्तयिष्यामि सर्व्वभूतहितं शुभम् ॥ ७६ ॥ दातव्यमसकृच्छक्त्या यष्टव्यमसकृत्तथा । पुष्टि-

कर्मविधानञ्च कर्त्तव्यं भूतिमिच्छता ॥ ७७ ॥ धर्म्मार्थं समाहार्य्यो धर्मलब्धं त्रिधा धनम्। कर्त्तव्यं धर्मपरमं मानवेन प्रयत्नतः ॥ ७८ ॥ एकेनांशेन धर्मार्थश्चर्त्तव्यो भूतिमिच्छता। एकेनांशेन कामार्थ एकमंशं विवर्द्धयेत् ॥ ७९ ॥ निवृत्तिलक्षणस्त्वन्यो धर्म्मो मोक्षाय तिष्ठति। तस्य वृत्तिं प्रवक्ष्यामि शृणु मे देवि तत्त्वतः ॥ ८० ॥ सर्वभूतदया धर्म्मो न चैकग्रामवासिता। आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणाम् ॥ ८१ ॥ न कुट्यां नोदके सङ्गो न वाससि न चासने। न त्रिदण्डेन शयने नाग्नौ न शरणालये ॥ ८२ ॥ अध्यात्मगतिचित्तो यस्तन्मनास्तत्परायणः। युक्तो योगं प्रति सदा प्रतिसंख्यानमेव च ॥ ८३ ॥ वृक्षमूलपरो नित्यं शून्यागारनिवेशनः। नदीपुलिनशायी च नदीतीररतिश्च यः ॥ ८४ ॥ विमुक्तः सर्वसङ्गेषु स्नेहबन्धेषु च द्विजः। आत्मन्येवात्मनो भावं समासज्जेत वै द्विजः ॥ ८५ ॥ स्थाणुभूतो निराहारो मोक्षदृष्टेन कर्मणा। परिव्रजति यो युक्तस्तस्य धर्मः सनातनः ॥ ८६ ॥ न चैकत्र निरासक्तो न चैकग्रामगोचरः। मुक्तो ह्यटति निर्मुक्तो न चैकपुलिने शयः ॥ ८७ ॥ एष मोक्षविदां धर्म्मो वेदोक्तः सत्पथः सताम्। यो मार्गमनुयातीमं पदं तस्य न विद्यते ॥ ८८ ॥ चतुर्विधा भिक्षवस्तु कुटीचकबहूदकौ। हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ॥ ८९ ॥ अतः परतरं नास्ति नाचरन्नतियोगतः। अदुःखमसुखं सौम्यमजरामरमव्ययम् ॥ ९० ॥

उमोवाच। गार्हस्थ्यो मोक्षधर्मश्च सज्जनाचरितस्तथा। भाषितो जीवलोकस्य मार्गः श्रेयस्करो महान् ॥ ९१ ॥ ऋषिधर्मन्तु धर्मज्ञ श्रोतुमिच्छाम्यतः परम्। स्पृहा भवति मे नित्यं तपोवननिवासिषु ॥ ९२ ॥ आज्यधूमो भवेद्गन्धो रुणद्धीव तपोवनम्। तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ॥ ९३ ॥ एतन्मे संशयं देव मुनिधर्मज्ञतं विभो। सर्वधर्मार्थतत्त्वज्ञ देवदेव

वदस्व मे ॥ ९४ ॥ निखिलेन मया पृष्टं महादेव यथा-
तथम् ॥ ९५ ॥

श्रीभगवानुवाच । हन्त तेऽहं प्रवक्ष्यामि मुनिधर्म्ममनुत्तमम् ।
यं ज्ञात्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे ॥ ९६ ॥ फेनपाना-
मृषीणां यो धर्मो धर्म्मविदां सताम् । तन्मे शृणु महाभागे
धर्म्मज्ञे धर्ममादितः ॥ ९७ ॥ उञ्छन्ति सततं ये ते ब्राह्मं फेनोत्-
करं शुभम् । अमृतं ब्रह्मणापीतमध्वरप्रसृतं दिवि ॥ ९८ ॥ एष
तेषां विशुद्धानां फेनपानां तपोधने । धर्मचर्य्याकृतो मार्गो बालि-
खिल्यगणे शृणु ॥ ९९ ॥ बालिखिल्यास्तपःसिद्धा मुनयः सूर्य्य-
मण्डले । उञ्छे तिष्ठन्ति धर्मज्ञाः शाकुनीं वृत्तिमास्थिताः ॥१००॥
मृगनिर्मोकवसनाश्चीरवल्कलवाससः । निर्द्वन्द्वाः सत्पथं प्राप्ता
बालिखिल्यास्तपोधनाः ॥ १०१ ॥ अङ्गुष्ठपर्वमात्रा ये भूत्वा स्वे स्वे
व्यवस्थिताः । तपश्चरणमीहन्ते तेषां धर्म्मफलं महत् ॥ १०२ ॥
ते सुरैः समतां यान्ति सुरकार्य्यार्थसिद्धये । द्योतयन्ति दिशः
सर्वास्तपसा दग्धकिल्बिषाः ॥ १०३ ॥ ये त्वन्ये शुद्धमनसो दया-
धर्मपरायणाः । सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये॥१०४॥
पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि । सम्प्रक्षालाश्मकुट्टाश्च
दन्तोलूखलिकाश्च ये ॥ १०५ ॥ सोमपानाञ्च देवानामुष्मपाणां
तथैव च । उञ्छन्ति ये समीपस्थाः सदारा नियतेन्द्रियाः ॥ १०६ ॥
तेषामग्निपरिस्पन्दः पितृणाञ्चार्चनं तथा । यज्ञानाञ्चैव पञ्चानां
यजनं धर्म उच्यते ॥ १०७ ॥ एष चक्रचरैर्द्देवि देवलोकचरैर्द्विजैः ।
ऋषिधर्म्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ॥ १०८ ॥ सर्व्वेष्वे-
वर्षिधर्मेषु ज्ञेयोऽत्मा संजितेन्द्रियैः । कामक्रोधौ ततः पश्चाज्जेत-
व्याविति मे मतिः ॥ १०९ ॥ अग्निहोत्रपरिस्पन्दो धर्मचर्य्या सना-
तनम् । सोमयज्ञाभ्यनुज्ञातं पञ्चमी यज्ञदक्षिणा ॥ ११० ॥ नित्यं
यज्ञक्रिया धर्मः पितृदेवार्चने रतिः । सर्व्वातिथ्यञ्च कर्त्तव्यमन्ने-

नोञ्छार्जितेन वै ॥ १११ ॥ निवृत्तिरुपभोगेषु गोरसानां यमे रतिः । स्थण्डिले शयने योगः शाकपर्णनिषेवणम् ॥ ११२ ॥ फलमूलाशनं वायुरापः शैवलभक्षणम् । ऋषीणां नियमा ह्येते यैर्जयन्त्यजिताङ्गतिम् ॥ ११३ ॥ विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने । अतीतपात्रसञ्चारे काले विगतभैक्षुके ॥ ११४ ॥ अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः । सत्यधर्मरतः शान्तो मुनिर्धर्मेण युज्यते ॥ ११५ ॥ न स्तब्धो न च मानी स्यान्नाप्रसन्नो न विस्मितः । मित्रामित्रसमो मैत्रो यः स धर्मविदुत्तमः ॥ ११६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे उमामहेश्वरसंवादे एकचत्वारिंशदधिकशतोऽध्यायः ॥ १४१ ॥

---

उमोवाच । देशेषु रमणीयेषु नदीनां निर्झरेषु च । स्रवन्तीनां निकुञ्जेषु पर्वतेषु वनेषु च ॥ १ ॥ देशेषु च पवित्रेषु फलवत्सु समाहिताः । मूलवत्सु च मेध्येषु वसन्ति नियतव्रताः ॥२॥ तेषामपि विधिं पुण्यं श्रोतुमिच्छामि शङ्कर । वानप्रस्थेषु देवेश स्वशरीरोपजीविषु ॥ ३ ॥

महेश्वर उवाच । वानप्रस्थेषु यो धर्मस्तन्मे शृणु समाहिता । श्रुत्वा चैकमना देवि धर्मबुद्धिपरा भव ॥ ४ ॥ संसिद्धैर्नियमैः सद्भिर्वनवासमुपागतैः । वानप्रस्थैरिदं कर्म कर्त्तव्यं शृणु यादृशम् ॥५॥ त्रिकालमभिषेकश्च पितृदेवार्चनं तथा । अग्निहोत्रपरिस्पन्द इष्टिहोमविधिस्तथा ॥ ६ ॥ नीवारग्रहणञ्चैव फलमूलनिषेवणम् । इङ्गुदैरण्डतैलानां स्नेहार्थञ्च निषेवणम् ॥ ७ ॥ योगचर्य्याकृतैः सिद्धैः कामक्रोधविवर्ज्जितैः । वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ॥ ८ ॥ युक्तैर्योगविधैः सद्भिर्ग्रीष्मे पञ्चतपैस्तथा । मण्डकयोगनियतैर्यथान्यायं निषेविभिः ॥ ९ ॥ वीरासनगतैर्नित्यं

स्थण्डिले शयनैस्तथा। शीततोयाग्नियोगश्च वर्त्तव्यो धर्मबुद्धिभिः ॥ १० ॥ अब्भक्षैर्वायुभक्षैश्च शैवलोत्तरभोजनैः। अश्मकुट्टैस्तथा दान्तैः सम्प्रक्षालैस्तथापरैः ॥ ११ ॥ चीरवल्कलसम्वीतैर्मृगचर्मनिवासिभिः। कार्य्या यात्रा यथाकालं यथाधर्मं यथाविधि ॥१२॥ वननित्यैर्वनचरैर्वनस्थैर्वनगोचरैः। वनं गुरुमिवासाद्य वस्तव्यं वनवासिभिः ॥ १३ ॥ तेषां होमक्रिया धर्मः पञ्चयज्ञनिषेवणम्। भागञ्च पञ्चयज्ञस्य वेदोक्तस्यानुपालनम् ॥ १४ ॥ अष्टमी यज्ञपरता चातुर्मास्यनिषेवणम्। पौर्णमासादयो यज्ञा नित्ययज्ञस्तथैव च ॥ १५ ॥ विमुक्ता दारसंयोगैर्विमुक्ताः सर्वसङ्करैः। विमुक्ताः सर्वपापैश्च चरन्ति मुनयो वने ॥ १६ ॥ स्रुग्भाण्डपरया नित्यं त्रेताग्निशरणाः सदा। सन्तः सत्पथनित्या ये ते यान्ति परमां गतिम् ॥ १७ ॥ ब्रह्मलोकं महापुण्यं सोमलोकञ्च शाश्वतम्। गच्छन्ति मुनयः सिद्धाः सत्यधर्मव्यपाश्रयाः ॥ १८ ॥ एष धर्मो मया देवि वानप्रस्थाश्रितः शुभे। विस्तरेणाथ सम्पन्नो यथास्थूलमुदाहृतः ॥ १९ ॥

उमोवाच। भगवन् सर्वभूतेश सर्वभूतनमस्कृत। यो धर्मो मुनिसङ्घस्य सिद्धिवादेषु तं वद ॥ २० ॥ सिद्धिवादेषु संसिद्धास्तथा वननिवासिनः। स्वैरिणो दारसंयुक्तास्तेषां धर्मः कथं स्मृतः ॥२१॥

महादेव उवाच। स्वैरिणस्तापसा देवि सर्वे दारविहारिणः। तेषां मौण्ड्यं कषायश्च वासे रात्रिश्च कारणम् ॥ २२ ॥ त्रिकालमभिषेकश्च होत्रन्त्वृषिकृतं महत्। समाधिः सत्पथस्थानं यथोद्दिष्टं निषेवणम् ॥ २३ ॥ ये च ते पूर्वकथिता धर्मास्ते वनवासिनाम्। यदि सेवन्ति धर्मांस्तानाप्नुवन्ति तपःफलम् ॥ २४ ॥ ये च दम्पतिधर्माणः स्वदारनियतेन्द्रियाः। चरन्ति विधिदृष्टन्तदृतुकालाभिगामिनः ॥ २५ ॥ तेषामृषिकृतो धर्मो धर्मिणामुपपद्यते। न कामकारात् कामोऽन्यः संसेव्यो धर्मदर्शिभिः ॥२६॥

सर्वभूतेषु यः सम्यक् ददात्यभयदक्षिणाम्। हिंसादोषविमुक्तात्मा स वै धर्मेण युज्यते॥ २७॥ सर्वभूतानुकम्पी यः सर्वभूतार्जवव्रतः। सर्वभूतात्मभूतश्च स वै धर्मेण युज्यते॥ २८॥ सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम्। उभे एते समे स्यातामार्जवं वा विशिष्यते॥ २९॥ आर्जवं धर्ममित्याहुरधर्मो जिह्म उच्यते। आर्जवेनेह संयुक्तो नरो धर्मेण युज्यते॥ ३०॥ आर्जवे तु रतो नित्यं वसत्यमरसन्निधौ। तस्मादार्जवयुक्तः स्याद्य इच्छेद्धर्ममात्मनः॥ ३१॥ क्षान्तो दान्तो जितक्रोधो धर्मभूतो विहिंसकः। धर्मे रतमना नित्यं नरो धर्मेण युज्यते॥ ३२॥ व्यपेततन्द्री धर्मात्मा शक्त्या सत्पथमाश्रितः। चारित्रपरमो बुद्धो ब्रह्मभूयाय कल्पते॥ ३३॥

उमोवाच। आश्रमाभिरता देव तापसा ये तपोधनाः। दीप्तिमन्तः कया चैव चर्य्ययाथ भवन्ति ते॥ ३४॥ राजानो राजपुत्राश्च निर्द्धना ये महाधनाः। कर्मणा केन भगवन् प्राप्नुवन्ति महाफलम्॥ ३५॥ नित्यं स्थानमुपागम्य दिव्यचन्दनभूषिताः। केन वा कर्मणा देव भवन्ति वनगोचराः॥ ३६॥ एतन्मे संशयं देव तपश्चर्य्याश्रितं शुभम्। शंस सर्वमशेषेण त्र्यक्ष त्रिपुरनाशन॥३७॥

देव उवाच। उपवासव्रतैर्दान्ता अहिंस्राः सत्यवादिनः। संसिद्धाः प्रेत्य गन्धर्वैः सह मोदन्त्यनामयाः॥ ३८॥ मण्डूकयोगशयनो यथान्यायं यथाविधि। दीक्षां चरति धर्मात्मा स नागैः सह मोदते॥ ३९॥ शस्यं मृगगणोत्सृष्टं यो मृगैः सह सेवते। दीक्षितो वै समायुक्तः स गच्छत्यमरावतीम्॥ ४०॥ शैवालं शीर्णपत्रं वा तद्व्रतं यो निषेवते। शीतयोगवहो नित्यं स गच्छेत् परमां गतिम्॥ ४१॥ वायुभक्षोऽम्बुभक्षो वा फलमूलाशिनोऽपि वा। यक्षेष्वैश्वर्य्यमाधाय मोदतेऽप्सरसां गणैः॥ ४२॥ अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्मणा। चीर्त्वा द्वादशवर्षाणि राजा भवति पार्थिवः॥ ४३॥ आहारनियमं कृत्वा मुनिर्द्वादश-

वार्षिकम् । मरुं संसाध्य यत्नेन राजा भवति पार्थिवः ॥ ४४ ॥
स्थण्डिले शुद्धमाकाशं परिगृह्य समन्ततः । प्रविश्य च मुदायुक्तो
दीक्षां द्वादशवार्षिकीम् ॥ ४५ ॥ देहं चानशने त्यक्त्वा स स्वर्गे
सुखमेधते । स्थण्डिलस्य फलान्याहुर्यानानि शयनानि च ॥ ४६ ॥
गृहाणि च महार्हाणि चन्द्रशुभ्राणि भामिनि । आत्मानमुप-
जीवन् यो नियतो नियताशनः ॥ ४७ ॥ देहं वा शयने त्यक्त्वा स
स्वर्गं समुपाश्नुते । आत्मानमुपजीवन् यो दीक्षां द्वादशवार्षिकीम्
॥ ४८ ॥ त्यक्त्वा महार्णवे देहं वारुणं लोकमश्नुते । आत्मान-
मुपजीवन् यो दीक्षां द्वादशवार्षिकीम् ॥ ४९ ॥ अश्मना चरणौ
भित्त्वा गुह्यकेषु स मोदते । साधयित्वात्मनात्मानं निर्द्वन्द्वो नि-
ष्परिग्रहः ॥ ५० ॥ चीर्त्वा द्वादशवर्षाणि दीक्षामेतां मनोगताम् ।
स्वर्गलोकमवाप्नोति देवैश्च सह मोदते ॥ ५१ ॥ आत्मानमुपजीवन्
यो दीक्षां द्वादशवार्षिकीम् । हुत्वाग्नौ देहमुत्सृज्य ब्रह्मलोके
महीयते ॥ ५२ ॥ यस्तु देवि यथान्यायं दीक्षितो नियतो द्विजः ।
आत्मन्यात्मानमाधाय निर्म्ममो धर्म्मलालसः ॥ ५३ ॥ चीर्त्वा
द्वादशवर्षाणि दीक्षामेतां मनोगताम् । अरणीसहितं स्कन्धे बद्ध्वा
गच्छत्यनावृतः ॥ ५४॥ वीराध्वानगतो नित्यं वीरासनगतिस्तथा ।
वीरस्थायी च सततं स वीरगतिमाप्नुयात् ॥ ५५॥ स शक्रलोकगो
नित्यं सर्वकामपुरस्कृतः । दिव्यपुष्पसमाकीर्णो दिव्यचन्दनभूषितः
॥ ५६ ॥ सुखं वसति धर्मात्मा दिवि देवगणैः सह । वीरलोक-
गतो वीरो वीरयोगवहः सदा ॥ ५७ ॥ सत्त्वस्थः सर्वमुत्सृज्य
दीक्षितो नियतः शुचिः । वीराध्वानं प्रपद्येद्यस्तस्य लोकाः सना-
तनाः ॥ ५८ ॥ कामगेन विमानेन स वै चरति छन्दतः । शक्रलोक-
गतः श्रीमान् मोदते च निरामयः ॥ ५९ ॥

इत्यनुशासनपर्वणि अनुशासनिकेपर्वणि दानधर्मे उमा-
महेश्वरसंवादे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

उमोवाच। भगवन् भगनेत्रघ्न पूष्णो दन्तविनाशन। दक्ष-क्रतुहर त्र्यक्ष संशयो मे महानयम् ॥ १ ॥ चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयम्भुवा। केन कर्मविपाकेन वैश्यो गच्छति शूद्रताम् ॥ २ ॥ वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत्। प्रति-लोमः कथं देव शक्यो धर्मो निवर्त्तितुम् ॥ ३ ॥ केन वा कर्मणा विप्रः शूद्रयोनौ प्रजायते। क्षत्रियः शूद्रतामेति केन वा कर्मणा विभो ॥ ४ ॥ एतन्मे संशयं देव वद भूतपतेऽनघ। त्रयो वर्णाः प्रकृत्येह कथं ब्राह्मण्यमाप्नुयुः ॥ ५ ॥

देव उवाच। ब्राह्मण्यं देवि दुष्प्राप्यं निसर्गाद्ब्राह्मणः शुभे। क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः ॥ ६ ॥ कर्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति वै द्विजः। ज्येष्ठं वर्णमनुप्राप्य तस्मा-द्रक्षेत वै द्विजः ॥ ७ ॥ स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति। क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयं स गच्छति ॥ ८ ॥ यस्तु ब्रह्मत्व-मुत्सृज्य क्षात्रं धर्मं निषेवते। ब्राह्मण्यात् स परिभ्रष्टः क्षत्रयोनौ प्रवर्त्तते ॥ ९॥ वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः। ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा ॥ १० ॥ स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्। स्वधर्मात् प्रच्युतो विप्रस्ततः शूद्रत्व-माप्नुते ॥ ११ ॥ तत्रासौ निरयं प्राप्तो वर्णभ्रष्टो वहिष्कृतः। ब्रह्म-लोकात् परिभ्रष्टः शूद्रः समुपजायते ॥ १२ ॥ क्षत्रियो वा महा-भागी वैश्यो वा धर्मचारिणि। स्वानि कर्माण्यपाहाय शूद्रकर्म निषेवते ॥ १३ ॥ स्वस्थानात् स परिभ्रष्टो वर्णसङ्करतां गतः। ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः ॥ १४ ॥ यस्तु शुद्धः स्वधर्मेण ज्ञानविज्ञानवान् शुचिः। धर्मज्ञो धर्मनिरतः स धर्म-फलमश्नुते ॥ १५ ॥ इदं चैवापरं देवि ब्रह्मणा समुदाहृतम्। अध्यात्मं नैष्ठिकं सद्भिर्धर्मकामैर्निषेव्यते ॥ १६ ॥ उग्रान्नं गर्हितं देवि गणान्नं श्राद्धसूतकम्। दुष्टान्नं नैव भोक्तव्यं शूद्रान्नं नैव

कर्हिचित् ॥ १७ ॥ शूद्रान्नं गर्हितं देवि सदा देवैर्महात्मभिः ।
पितामहमुखोत्सृष्टं प्रमाणमिति मे मतिः ॥ १८ ॥ शूद्रान्नेनाव-
शेषेण जठरे यो म्रियेद्दिजः । आहिताग्निस्तथा यज्वा स शूद्र-
गतिभाग्भवेत् ॥ १९ ॥ तेन शूद्रान्नशेषेण ब्रह्मस्थानादपाकृतः ।
ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा ॥ २० ॥ यस्यान्नेनाव-
शेषेण जठरे म्रियते द्विजः । तां तां योनिं व्रजेद्विप्रो यस्यान्न-
मुपजीवति ॥ २१ ॥ ब्राह्मणत्वं शुभं प्राप्य दुर्लभं योऽवमन्यते ।
अभोज्यान्नानि चाश्नाति स द्विजत्वात् पतते वै ॥ २२ ॥ सुरापो
ब्रह्महा क्षुद्रश्चौरो भग्नव्रतोऽशुचिः । स्वाध्यायवर्ज्जितः पापो लुब्धो
नैकृतिकः शठः ॥ २३ ॥ अव्रती वृषलीभर्त्ता कुण्डाशी सोम-
विक्रयी । निहीनसेवी विप्रो हि पतते ब्रह्मयोनितः ॥ २४ ॥
गुरुतल्पी गुरुद्वेषी गुरुकुत्सारतिश्च यः । ब्रह्मविच्चापि पतति
ब्राह्मणो ब्रह्मयोनितः ॥ २५ ॥ एभिस्तु कर्मभिर्देवि शुभैराच-
रितैस्तथा । शूद्रो ब्राह्मणतां याति वैश्यः क्षत्रियतां व्रजेत् ॥२६॥
शूद्रकर्माणि सर्वाणि यथान्यायं यथाविधि । शुश्रूषां परिचर्य्याञ्च
ज्येष्ठे वर्णे प्रयत्नतः ॥ २७ ॥ कुर्य्यादविमनाः शूद्रः सततं सत्पथे
स्थितः । देवद्विजातिसत्कर्त्ता सर्वातिथ्यकृतव्रतः ॥ २८ ॥ ऋतु-
कालाभिगामी च नियतो नियताशनः । चोक्षश्चोक्षजनान्वेषी
शेषान्नकृतभोजनः ॥ २९ ॥ वृथामांसं न भुञ्जीत शूद्रो वैश्यत्व-
मृच्छति । ऋतवागनहंवादी निर्द्वन्द्वः शमकोविदः ॥ ३० ॥ यजते
चैव यज्ञैश्च स्वाध्यायपरमः शुचिः । दान्तो ब्राह्मणसत्कर्त्ता सर्व-
वर्णबुभूषकः ॥ ३१ ॥ गृहस्थव्रतमातिष्ठन् द्विकालकृतभोजनः ।
शेषाशी नियताहारो निष्कामो निरहंवदः ॥ ३२ ॥ अग्निहोत्र-
मुपासंश्च जुह्वानोऽथ यथाविधि । सर्वातिथ्यमुपातिष्ठन् शेषान्न-
कृतभोजनः ॥ ३३ ॥ त्रेताग्निमन्त्रविहितो वैश्यो भवति वै द्विजः ।
स वैश्यः क्षत्रियकुले शुचिर्महति जायते ॥ ३४ ॥ स वैश्यः क्षत्रियो

जातो जन्मप्रभृतिसंस्कृतः । उपनीतो व्रतपरो द्विजो भवति सत्कृतः ॥ ३५ ॥ ददाति यजते यज्ञैः समृद्धैराप्तदक्षिणैः । अधीत्य स्वर्गमन्विच्छंस्त्रेताग्निशरणः सदा ॥ ३६ ॥ आर्त्तहस्तप्रदो नित्यं प्रजा धर्मेण पालयन् । सत्यः सत्यानि कुरुते नित्यं यः सुखदर्शनः ॥ ३७ ॥ धर्मदण्डेन निर्दण्डो धर्मकार्य्यानुशासकः । यन्त्रितः कार्य्यकरणैः षड्भागकृतलक्षणः ॥ ३८ ॥ ग्राम्यधर्मान्न सेवेत स्वच्छन्देनार्थकोविदः । ऋतुकाले तु धर्मात्मा पत्नीमुपशयेत् सदा ॥ ३९ ॥ सदोपवासी नियतः स्वाध्यायनिरतः शुचिः । वह्निष्कान्तरिते नित्यं शयानोऽग्निगृहे सदा ॥ ४० ॥ सर्वातिथ्यं त्रिवर्गस्य कुर्वाणः सुमनाः सदा । शूद्राणाञ्चान्नकामानां नित्यं सिद्धमिति ब्रुवन् ॥ ४१ ॥ अर्थाद्वा यदि वा कामान्न किञ्चिदुपलक्षयेत् । पितृदेवातिथिकृते साधनं कुरुते च यः ॥ ४२ ॥ स्ववेश्मनि यथान्यायमुपास्ते भैक्ष्यमेव च । त्रिकालमग्निहोत्रञ्च जुह्वानो वै यथाविधि ॥ ४३ ॥ गोब्राह्मणहितार्थाय रणे चाभिमुखो हतः । त्रेताग्निमन्त्रपूतं वा समाविश्य द्विजो भवेत् ॥ ४४ ॥ ज्ञानविज्ञानसम्पन्नः संस्कृतो वेदपारगः । विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्म्मणा ॥ ४५ ॥ एतैः कर्म्मफलैर्द्देवि न्यूनजातिकुलोद्भवः । शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ॥ ४६ ॥ ब्राह्मणो वाप्यसद्वृत्तः सर्वसङ्करभोजनः । ब्राह्मण्यं समनुत्सृज्य शूद्रो भवति तादृशः ॥ ४७ ॥ कर्म्मभिः शुचिभिर्द्देवि शुद्धात्मा विजितेन्द्रियः । शूद्रोऽपि द्विजवत् सेव्य इति ब्रह्मानुशासनम् ॥ ४८ ॥ स्वभावं कर्म्म च शुभं यत्र शूद्रेऽपि तिष्ठति । विशिष्टः स द्विजातेर्वै विज्ञेय इति मे मतिः ॥ ४९ ॥ न योनिर्नापि संस्कारो न श्रुतं न च सन्ततिः । कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥५०॥ सर्वोऽयं ब्राह्मणो लोके वृत्तेन च विधीयते । वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ॥ ५१ ॥ ब्रह्मस्वभावः कल्याणि समः सर्वत्र मे मतिः ।

निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति स द्विजः ॥ ५२ ॥ एते योनि-फला देवि स्थानभागनिदर्शकाः । स्वयञ्च वरदेनोक्ता ब्रह्मणा सृजता प्रजाः ॥ ५३ ॥ ब्राह्मणोऽपि महत् क्षेत्रं लोके चरति पादवत् । यस्तत्र वीजं वपति सा कृषिः प्रेत्य भाविनि ॥ ५४ ॥ विघसाशिना सदा भाव्यं सत्पथालम्बिना तथा । ब्राह्मं मार्ग-मनुक्रम्य वर्त्तितव्यं बुभूषता ॥ ५५ ॥ संहिताध्यायिना भाव्यं गृहे वै गृहमेधिना । नित्यं स्वाध्याययुक्तेन न चाध्ययनजीविना ॥५६॥ एवम्भूतो हि यो विप्रः सततं सत्पथे स्थितः । आहिताग्निरधी-यानो ब्रह्मभूयाय कल्पते ॥ ५७ ॥ ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मना । योनिप्रतिग्रहादानैः कर्म्मभिश्च शुचिस्मिते ॥ ५८ ॥ एतत्ते गुह्यमाख्यातं यथा शूद्रो भवेद्द्विजः । ब्राह्मणो वा च्युतो धर्माद्यथा शूद्रत्वमाप्नुते ॥ ५९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे उमा-महेश्वरसम्वादे त्रिचत्वारिंशदधिकशतोऽध्यायः ॥ १४३ ॥

---

उमोवाच । भगवन् सर्वभूतेश सुरासुरनमस्कृत । धर्माधर्मौ नृणां देव ब्रूहि मे संशयं विभो ॥ १ ॥ कर्मणा मनसा वाचा त्रिविधं हि नरः सदा । बध्यते बन्धनैः पाशैर्मुच्यतेऽप्यथ वा पुनः ॥ २ ॥ केन शीलेन वै देव कर्मणा कीदृशेन वा । समाचारै-र्गुणैर्वाक्यैः स्वर्गं यान्तीह मानवाः ॥ ३ ॥

देवदेव उवाच । देवि धर्मार्थतत्त्वज्ञ धर्मनित्ये दमे रते । सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्द्धनः ॥ ४ ॥ सत्यधर्मरताः सन्तः सर्वलिङ्गविवर्ज्जिताः । धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ ५ ॥ नाधर्म्मेण न धर्म्मेण बध्यन्ते छिन्नसंशयाः । प्रलयोत्पत्ति-तत्त्वज्ञाः सर्वज्ञाः सर्वदर्शिनः । वीतरागा विमुच्यन्ते पुरुषाः

कर्मबन्धनैः ॥ ६ ॥ कर्मणा मनसा वाचा ये न हिंसन्ति किञ्चन। ये न सज्जन्ति कस्मिंश्चित्ते न बध्यन्ति कर्मभिः ॥ ७ ॥ प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः। तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ॥ ८॥ सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु। त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ॥ ९ ॥ परस्वे निर्ममा नित्यं परदारविवर्ज्जकाः। धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ १० ॥ मातृवत् स्वसृवच्चैव नित्यं दुहितृवच्च ये। परदारेषु वर्त्तन्ते ते नराः स्वर्गगामिनः ॥ ११ ॥ स्तैन्यान्निवृत्ताः सततं सन्तुष्टाः स्वधनेन च। स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः ॥ १२ ॥ परदारेषु ये नित्यं चारित्रावृतलोचनाः। यतेन्द्रियाः शीलपरास्ते नराः स्वर्गगामिनः ॥ १३ ॥ एष देवकृतो मार्गः सेवितव्यः सदा बुधः। अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः ॥ १४॥ स्वदारनिरता ये च ऋतुकालाभिगामिनः। अग्राम्यसुखभोक्तारस्ते नराः स्वर्गगामिनः ॥ १५ ॥ दानधर्मतपोयुक्ताः शीलशौचदयात्मकः। वृत्त्यर्थं धर्महेतोर्वा सेवितव्यः सदा बुधैः ॥ १६ ॥ स्वर्गवासमभीप्सद्भिर्न सेव्यस्त्वत उत्तरः ॥ १७ ॥

उमोवाच। वाचा तु बध्यते येन मुच्यतेऽप्यथ वा पुनः। तानि कर्माणि मे देव वद भूतपतेऽनघ ॥ १८ ॥

महेश्वर उवाच। आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा। ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ॥ १९ ॥ वृत्त्यर्थं धर्महेतोर्वा कामकारात्तथैव च। अनृतं ये न भाषन्ति ते नराः स्वर्गगामिनः ॥ २० ॥ श्लक्ष्णां वाणीं निराबाधां मधुरां दोषवर्ज्जिताम्। स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥ २१ ॥ परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा। अपैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः ॥ २२ ॥ पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम्। ऋतं मैत्रन्तु भाषन्ते ते नराः स्वर्गगामिनः ॥ २३ ॥

ये वर्ज्जयन्ति परुषं परद्रोहञ्च मानवाः। सर्व्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः ॥ २४ ॥ असत्प्रलापाद्विरता विरुद्धपरिवर्ज्जकाः। सौम्यप्रलापिनो ये च ते नराः स्वर्गगामिनः ॥ २५ ॥ न कोपाद्व्याहरन्ते ये वाचं हृदयदारिणीम्। शान्तं वदन्ति क्रुद्धापि ते नराः स्वर्गगामिनः ॥ २६ ॥ एष वाणीकृतो देवि धर्म्मः सेव्यः सदा नरैः। शुभः सत्यगुणो नित्यं वर्ज्जनीयं मृषा बुधैः ॥२७॥

उमोवाच। मनसा बध्यते येन कर्म्मणा पुरुषः सदा। तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक् ॥ २८ ॥

महेश्वर उवाच। मानसेनेह धर्म्मेण संयुक्ताः पुरुषाः सदा। स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्त्तयतः शृणु ॥ २९ ॥ दुष्प्रणीतेन मनसा दुष्प्रणीतान्तराकृतिः। मनो बध्यति येनेह शृणु वाक्यं शुभानने ॥ ३० ॥ अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा। मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ३१ ॥ ग्रामे गृहे वा यद्द्रव्यं पारक्यं विजनेस्थितम्। नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः ॥ ३२ ॥ तथैव परदारान् ये कामवृत्तान् रहोगतान्। मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ३३ ॥ शत्रुं मित्रञ्च ये नित्यं तुल्येन मनसा नराः। भजन्ति मैत्राः सङ्गम्य ते नराः स्वर्गगामिनः ॥ ३४ ॥ श्रुतवन्तो दयावन्तः शुचयः सत्यसङ्गराः। स्वैरर्थैः परिसन्तुष्टास्ते नराः स्वर्गगामिनः ॥३५॥ अवैरा ये त्वनायासा मैत्रीचित्तगताः सदा। सर्व्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ॥ ३६ ॥ श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः। धर्म्माधर्म्मविदो नित्यं ते नराः स्वर्गगामिनः ॥ ३७ ॥ शुभानामशुभानाञ्च कर्म्मणां फलसञ्चये। विपाकज्ञाश्च ये देवि ते नराः स्वर्गगामिनः ॥ ३८ ॥ न्यायोपेता गुणोपेता देवद्विजपराः सदा। समुत्थानमनुप्राप्तास्ते नराः स्वर्गगामिनः ॥ ३९ ॥ शुभैः कर्म्मफलैर्देवि मयैते परिकीर्त्तिताः। स्वर्गमार्गपरा भूयः किं श्रोतुमिहेच्छसि ॥४०॥

उमोवाच। महान्मे संशयः कश्चिन्मर्त्त्यान् प्रति महेश्वर। तस्मात्त्वं नैपुणेनाद्य मम व्याख्यातुमर्हसि ॥ ४१ ॥ केनायुर्लभते दीर्घं कर्मणा पुरुषः प्रभो। तपसा वापि देवेश केनायुर्लभते महत् ॥ ४२ ॥ क्षीणायुः केन भवति कर्मणा भुवि मानवः। विपाकं कर्मणा देव वक्तुमर्हस्यनिन्दित ॥ ४३ ॥ अपरे च महाभागा मन्दभाग्यास्तथापरे। अकुलीनास्तथा चान्ये कुलीनाश्च तथापरे ॥ ४४ ॥ दुर्दर्शाः केचिदाभान्ति नराः काष्ठमया इव। प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः ॥ ४५ ॥ दुष्प्रज्ञाः केचिदाभान्ति केचिदाभान्ति पण्डिताः। महाप्रज्ञास्तथैवान्ये ज्ञानविज्ञानभाविनः ॥ ४६ ॥ अल्पाबाधास्तथा केचिन्महाबाधास्तथापरे। दृश्यन्ते पुरुषा देव तन्मे संशितुमर्हसि ॥ ४७ ॥

देवदेव उवाच। हन्त तेऽहं प्रवक्ष्यामि देवि कर्मफलोदयम्। मर्त्त्यलोके नरः सर्वो येन स्वं फलमश्नुते ॥ ४८ ॥ प्राणातिपाते यो रौद्रो दण्डहस्तोद्यतः सदा। नित्यमुद्यतशस्त्रश्च हन्ति भूतगणान्नरः ॥ ४९ ॥ निर्द्दयः सर्वभूतानां नित्यमुद्वेगकारकः। अपि कीटपिपीलानामशरण्यः सुनिर्घृणः ॥ ५० ॥ एवम्भूतो नरो देवि निरयं प्रतिपद्यते। विपरीतस्तु धर्मात्मा रूपवानभिजायते ॥५१॥ निरयं याति हिंसात्मा याति स्वर्गमहिंसकः। यातनां निरये रौद्रीं स कृच्छ्रां लभते नरः ॥ ५२ ॥ यः कश्चिन्निरयात्तस्मात् समुत्तरति कर्हिचित्। मानुष्यं लभते चापि हीनायुस्तत्र जायते ॥ ५३ ॥ पापेन कर्मणा देवि बद्धो हिंसारतिर्नरः। अप्रियः सर्वभूतानां हीनायुरुपजायते ॥ ५४ ॥ यस्तु शुक्लाभिजातीयः प्राणिघातविवर्ज्जकः। निक्षिप्तशस्त्रो निर्द्दण्डो न हिंसति कदाचन ॥ ५५ ॥ न घातयति नो हन्ति घ्नन्तं नैवानुमोदते। सर्वभूतेषु सस्नेहो यथात्मनि तथा परे ॥ ५६ ॥ ईदृशः पुरुषोत्कर्षो देवि देवत्वमश्नुते। उपपन्नान् सुखान् भोगानुपाश्नाति मुदायुतः ॥५७॥

अथ चेन्मानुषे लोके कदाचिदुपपद्यते। तत्र दीर्घायुरुत्पन्नः स नरः सुखमेधते॥ ५८॥ एष दीर्घायुषां मार्गः सुवृत्तानां सुकर्म्मिणाम्। प्राणिहिंसाविमोक्षेण ब्रह्मणा समुदीरितः॥ ५९॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे उमा-महेश्वरसंवादे चतुश्चत्वारिंशदधिकशततोऽध्यायः॥ १४४॥

---

उमोवाच। किं शीलः किं समाचारः पुरुषः कैश्च कर्म्मभिः। स्वर्गं समभिपद्येत सम्प्रदानेन केन वा॥ १॥

महेश्वर उवाच। दाता ब्राह्मणसत्कर्त्ता दीनान्धकृपणादिषु। भक्ष्यभोज्यान्नपानानां वाससाञ्च प्रदायकः॥ २॥ प्रतिश्रयान् सभाः कूपान् प्रपाः पुष्करिणीस्तथा। नैत्यकानि च सर्व्वाणि किमिच्छकमतीव च॥ ३॥ आसनं शयनं यानं धनं रत्नं गृहन्तथा। सस्यजातानि सर्व्वाणि गाः क्षेत्राण्यथ योषितः॥ ४॥ सुप्रतीतमना नित्यं यः प्रयच्छति मानवः। एवम्भूतो नरो देवि देवलोकेऽभिजायते॥ ५॥ तत्रोष्य सुचिरं कालं भुक्त्वा भोगाननुत्तमान्। सहाप्सरोभिर्मुदितो रमते नन्दनादिषु॥ ६॥ तस्मात् स्वर्गाच्युतो लोकान्मानुषेषूपजायते। महाभोगे कुले देवि धनधान्यसमन्विते॥ ७॥ तत्र कामगुणैः सर्व्वैः समुपेतो मुदायुतः। महाभोगो महाकोषो धनी भवति मानवः॥ ८॥ एते देवि महाभागाः प्राणिनो दानशीलिनः। ब्रह्मणा वै पुरा प्रोक्ताः सर्व्वस्य प्रियदर्शनाः॥ ९॥ अपरे मानवा देवि प्रदानकृपणा द्विजैः। याचिता न प्रयच्छन्ति विद्यमानेऽप्यबुद्धयः॥ १०॥ दीनान्धकृपणान् दृष्ट्वा भिक्षुकानतिथीनपि। याच्यमाना निवर्त्तन्ते जिह्वालोभसमन्विताः॥ ११॥ न धनानि न वासांसि न भोगान्न च काञ्चनम्। न गावो नान्नविकृतिं प्रयच्छन्ति कदाचन॥ १२॥

अप्रव्रज्याश्च ये लुब्धा नास्तिका दानवर्जिताः। एवम्भूता नरा देवि निरयं यान्त्यबुद्धयः ॥ १३ ॥ ते वै मनुष्यतां यान्ति यदा कालस्य पर्य्यये। धनरिक्ते कुले जन्म लभन्ते स्वल्पबुद्धयः ॥ १४ ॥ क्षुत्पिपासापरीताश्च सर्वलोकवहिष्कृताः। निराशाः सर्वभोगेभ्यो जीवन्त्यधमजीविकाम् ॥ १५ ॥ अल्पभोगे कुले जाताः स्वल्पभोगरताः नराः। अनेन कर्म्मणा देवि भवन्त्यधनिनो नराः ॥ १६ ॥ अपरे स्तम्भिनो नित्यं मानिनो धनतो नराः। आसनार्हस्य ये पीठं न प्रयच्छन्त्यचेतसः ॥ १७ ॥ मार्गार्हस्य च ये मार्गं न ददत्यल्पमेधसः। पाद्यार्हस्य च ये पाद्यं न ददत्यल्पबुद्धयः ॥ १८ ॥ अर्घ्यार्हान्न च सत्कारैरर्चयन्ति यथाविधि। अर्घ्यमाचमनीयं वा न यच्छन्त्यबुधा नराः ॥ १९ ॥ गुरुञ्चाभिगतं प्रेम्णा गुरुवन्न बुभूषते। अभिमानप्रवृत्तेन लोभेन समवस्थिताः ॥ २० ॥ मान्यांश्चाप्यवमन्यन्ते वृद्धान् परिभवन्ति च। एवम्विधा नरा देवि सर्वे निरयगामिनः ॥ २१ ॥ ते वै यदि नरास्तस्मान्निरयादुत्तरन्ति वै। वर्षपूगैस्ततो जन्म लभन्ते कुत्सिते कुले ॥ २२ ॥ श्वपाकपुल्कशादीनां कुत्सितानामचेतसाम्। कुलेषु तेषु जायन्ते गुरुवृद्धापचायिनः ॥ २३ ॥ न स्तम्भी न च मानी यो देवताद्विजपूजकः। लोकपूज्यो नमस्कर्त्ता प्रश्रितो मधुरं वचः ॥ २४ ॥ सर्ववर्णप्रियकारः सर्वभूतहितः सदा। अद्वेषी सुमुखः श्लक्ष्णः स्निग्धवाणीप्रदः सदा ॥ २५ ॥ स्वागतेनैव सर्वेषां भूतानामविहिंसकः। यथार्हसत्क्रियापूर्वमर्चयन्नवतिष्ठते ॥ २६ ॥ मार्गार्हाय ददन्मार्गं गुरुं गुरुवदर्चयन्। अतिथिप्रग्रहरतस्तथाभ्यागतपूजकः ॥ २७ ॥ एवम्भूतो नरो देवि स्वर्गतिं प्रतिपद्यते। ततो मानुषतां प्राप्य विशिष्टकुलजो भवेत् ॥ २८ ॥ तत्रासौ विपुलैर्भोगैः सर्वरत्नसमन्वितैः। यथार्हदाता चार्हेषु धर्म्मचर्य्यापरो भवेत् ॥ २९ ॥ सम्मतः सर्वभूतानां सर्वभूतनमस्कृतः। स्वकर्म्मफलमाप्नोति स्वय-

मैव नरः सदा ॥ ३० ॥ उदात्तकुलजातीय उदात्ताभिजनः सदा । एष धर्मो मया प्रोक्तो विधात्रा स्वयमीरितः ॥ ३१ ॥ यस्तु रौद्रसमाचारः सर्वसत्त्वभयङ्करः । हस्ताभ्यां यदि वा पद्भ्यां रज्ज्वा दण्डेन वा पुनः ॥ ३२ ॥ लोष्टैस्तम्भैरुपायैर्वा जन्तून् बाधति शोभने । हिंसार्थं निकृतिप्रज्ञः प्रोद्वेजयति चैव हि ॥ ३३ ॥ उपक्रामति जन्तूंश्च उद्वेगजननः सदा । एवं शीलसमाचारो निरयं प्रतिपद्यते ॥ ३४ ॥ स वै मनुष्यतां गच्छेद्यदि कालस्य पर्य्ययात् । बह्वाबाधपरिक्लिष्टे जायते सोऽधमे कुले ॥ ३५ ॥ लोकद्वेष्योऽधमः पुंसां स्वयं कर्म्मफलैः कृतैः । एष देवि मनुष्येषु बोद्धव्यो ज्ञातिबन्धुषु ॥ ३६ ॥ अपरः सर्वभूतानि दयावाननुपश्यति । मैत्रदृष्टिः पितृसमो निर्वैरो नियतेन्द्रियः ॥ ३७ ॥ नोद्वेजयति भूतानि न विहेलयते तथा । हस्तपादैः सुनियतैर्विश्वास्यः सर्वजन्तुषु ॥३८॥ न रज्ज्वा न च दण्डेन न लोष्टैर्नायुधेन च । उद्वेजयति भूतानि श्लक्ष्णकर्मा दयापरः ॥ ३९ ॥ एवं शीलसमाचारः स्वर्गे समुपजायते । तत्रासौ भवने दिव्ये मुदा वसति देववत् ॥ ४० ॥ स चेत् कर्म्मक्षयान्मर्त्यो मनुष्येषूपजायते । अल्पबाधो निरातङ्कः स जातः सुखमेधते ॥ ४१ ॥ सुखभागी निरायासो निरुद्वेगः सदा नरः । एष देवि सतां मार्गो बाधा यत्र न विद्यते ॥ ४२ ॥

उमोवाच । इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः । ज्ञानविज्ञानसम्पन्नाः प्रजावन्तोऽथ कोविदाः ॥४३॥ दुष्प्रज्ञाश्चापरे देव ज्ञानविज्ञानवर्ज्जिताः । केन कर्म्मविशेषेण प्रज्ञावान् पुरुषो भवेत् ॥ ४४ ॥ अल्पप्रज्ञो विरूपाक्ष कथं भवति मानवः । एतन्मे संशयं छिन्धि सर्वधर्म्मभृतांवर ॥ ४५॥ जात्यन्धाश्चापरे देव रोगार्त्ताश्चापरे तथा । नराः क्लीवाश्च दृश्यन्ते कारणं ब्रूहि तत्र वै ॥४६॥

महेश्वर उवाच । ब्राह्मणान् वेदविदुषः शिष्टान् धर्म्मविदस्तथा । परिपृच्छन्त्यहरहः कुशलाकुशलन्तथा ॥ ४७ ॥ वर्ज्जय-

न्यशुभं कर्म सेवमानाः शुभं सदा। लभन्ते स्वर्गतिं नित्यमिह-तथा सुखम् ॥ ४८ ॥ स चेन्मानुषतां याति मेधावी तत्र जायते। शुभं प्रज्ञानुगश्चास्य कल्याणमुपजायते ॥ ४९ ॥ परदारेषु ये मूढाश्चक्षुर्दुष्टं प्रयुञ्जते। तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति हि ॥ ५० ॥ मनसा च प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियम्। रोगार्त्तास्ते भवन्तीह नरा दुष्कृतकारिणः ॥ ५१ ॥ ये तु मूढा दुराचारा वियोनौ मैथुने रताः। पुरुषेषु च दुष्प्रज्ञाः क्लीबत्वमुपयान्ति ते ॥ ५२ ॥ पशूंश्च ये घातयन्ति ये चेह गुरुतल्पगाः। प्रकीर्णमैथुना ये च क्लीवा जायन्ति ते जनाः ॥ ५३ ॥

उमोवाच। सावद्यं किन्तु वै कर्म निरवद्यं तथैव च। श्रेयः कुर्वन्नवाप्नोति मानवो देवसत्तम ॥ ५४ ॥

महेश्वर उवाच। श्रेयांसं मार्गमन्विच्छन् सदा यः पृच्छति द्विजान्। धर्मान्वेषी गुणाकाङ्क्षी स स्वर्गं समुपाश्नुते ॥ ५५ ॥ यदि मानुषतां देवि कदाचित् परिगच्छति। मेधावी धारणा-युक्तः प्राज्ञस्तत्राभिजायते ॥ ५६ ॥ एष देवि सतां धर्मो मन्तव्यो भूतिकारकः। नृणां हितार्थाय मया तव वै समुदाहृतः ॥५७॥

उमोवाच। अपरे स्वल्पविज्ञाना धर्मविद्वेषिणो नराः। ब्राह्म-णान् वेदविदुषो नेच्छन्ति परिसर्पितुम् ॥ ५८ ॥ व्रतवन्तो नराः केचित् श्रद्धाधर्मपरायणाः। अव्रता भ्रष्टनियमास्तथान्ये राक्षसो-पमाः ॥ ५९ ॥ यज्वानश्च तथैवान्ये निर्होमाश्च तथापरे। केन कर्मविपाकेन भवन्तीह वदस्व मे ॥ ६० ॥

महेश्वर उवाच। आगमाल्लोककर्माणां मर्य्यादाः पूर्व-निर्मिताः। प्रामाण्येनानुवर्त्तन्ते दृश्यन्ते च दृढव्रताः ॥ ६१ ॥ अधर्मं धर्ममित्याहुर्ये च मोहवशंगताः। अव्रता नष्टमर्य्यादास्ते प्रोक्ता ब्रह्मराक्षसाः ॥६२॥ ते चेत् कालकृतोद्योगात् सम्भवन्तीह मानुषाः। निर्होमा निर्वषट्कारास्ते भवन्ति नराधमाः ॥६३ ॥

एष देवि मया सर्वः संशयच्छेदनाय वै। कुशलाकुशलो नृणां
व्याख्यातो धर्म्मसागरः ॥ ६४ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधम उमा-
महेश्वरसम्वादे पञ्चचत्वारिंशदधिकशततोऽध्याय. ॥१४५॥

---

नारद उवाच। एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः।
अनुकूलां प्रियां भार्य्यां पार्श्वस्थां समभाषत ॥ १ ॥

महादेव उवाच। परावरज्ञे धर्म्मज्ञे तपोवननिवासिनि।
साध्वि सुभ्रु सुकेशान्ते हिमवत्पर्वतात्मजे ॥ २ ॥ दक्षे दमशमो-
पेते निर्म्ममे धर्मचारिणि। पृच्छामि त्वां वरारोहे पृष्टा वद
ममेप्सितम् ॥ ३ ॥ सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती।
मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च ॥ ४ ॥ वरुणस्य तथा
गौरी सूर्य्यस्य च सुवर्चला। रोहिणी शशिनः साध्वी स्वाहा चैव
विभावसोः ॥ ५ ॥ अदितिः कश्यपस्याथ सर्वास्ताः पतिदेवताः।
पृष्टाश्चोपासिताश्चैव तास्त्वया देवि नित्यशः ॥ ६ ॥ तेन त्वां परि-
पृच्छामि धर्मज्ञे धर्मवादिनि। स्त्रीधर्मं श्रोतुमिच्छामि त्वयो-
दाहृतमादितः ॥ ७ ॥ सह धर्मचरी मे त्वं समशीला समव्रता।
समानसारवीर्य्या च तपस्तीव्रं कृतञ्च ते ॥ ८ ॥ त्वया ह्युक्तो
विशेषेण गुणवान् स भविष्यति। लोके चैव तथा देवि प्रमाणत्व-
मुपैष्यति ॥ ९ ॥ स्त्रियश्चैव विशेषेण स्त्रीजनस्य गतिः परा।
गौर्य्यां गच्छति सुश्रोणि लोकेष्वेषा गतिः सदा ॥ १० ॥ मम चार्द्धं
शरीरस्य तव चार्द्धेन निर्म्मितम्। सुरकार्य्यकरी च त्वं लोक-
सन्तानकारिणि ॥ ११ ॥ तव सर्वः सुविदितः स्त्रीधर्मः शाश्वतः
शुभे। तस्मादशेषं तं ब्रूहि स्त्रधर्मं विस्तरेण मे ॥ १२ ॥

उमोवाच। भगवन् सर्वभूतेश भूतभव्यभवोद्भव। त्वत् प्रसादा-

दियं देव वाक् चैव प्रतिभाति मे ॥ १३ ॥ इमास्तु नद्यो देवेश सर्वतीर्थोदकैर्युताः । उपस्पर्शनहेतोस्त्वामुपयान्ति समीपतः ॥१४॥ एताभिः सह सम्मन्त्र्य प्रवक्ष्याम्यनुपूर्वशः । प्रभवन् योऽनहं वादी स वै पुरुष उच्यते ॥ १५ ॥ स्त्री च भूतेश सततं स्त्रियमेवानुधावति । मया सम्मानिताश्चैव भविष्यन्ति सरिद्वराः ॥ १६ ॥ एषा सरस्वती पुण्या नदीनामुत्तमा नदी । प्रथमा सर्वसरितां नदी सागरगामिनी ॥ १७ ॥ विपाशा च वितस्ता च चन्द्रभागा इरावती । शतद्रुर्देविका सिन्धुः कौशिकी गोमती तथा ॥ १८ ॥ तथा देवनदी चेयं सर्वतीर्थाभिसंवृता । गगनाद्गाङ्गता देवी गङ्गा सर्वसरिद्वरा ॥ १९ ॥ इत्युक्त्वा देवदेवस्य पत्नी धर्मभृतांवरा । स्मितपूर्वमथाभाष्य सर्वास्ताः सरितस्तथा ॥ २० ॥ अपृच्छद्देवमहिषी स्त्रीधर्मं धर्मवत्सला । स्त्रीधर्मकुशलास्ता वै गङ्गाद्याः सरितांवराः ॥ २१ ॥

उमोवाच । अयं भगवता प्रोक्तः प्रश्नः स्त्रीधर्मसंश्रितः । तन्तु सम्मन्त्र्य युष्माभिर्वक्तुमिच्छामि शङ्करम् ॥ २२ ॥ न चैकसाध्यं पश्यामि विज्ञानं भुवि किञ्चन । दिवि वा सागरगमास्तेन वो मानयाम्यहम् ॥ २३ ॥ एवं सर्वाः सरिच्छ्रेष्ठाः पृष्टाः पुण्यतमाः शिवाः । ततो देवनदी गङ्गा नियुक्ता प्रतिपूज्य च ॥ २४ ॥ बह्वीभिर्बुद्धिभिः स्फीता स्त्रीधर्मज्ञा शुचिस्मिता । शैलराजसुता देवी पुण्या पापभयापहा ॥ २५ ॥ बुद्ध्या विनयसम्पन्ना सर्वधर्मविशारदा । सस्मितं बहुबुद्ध्याढ्या गङ्गा वचनमब्रवीत् ॥ २६ ॥ धन्यास्म्यनुगृहीतास्मि देवि धर्मपरायणे । या त्वं सर्वजगन्मान्या नदीं मानयसेऽनघे ॥ २७ ॥ प्रभवन् पृच्छते यो हि सम्मानयति वा पुनः । नूनं मन्ये स धर्मात्मा पण्डिताख्यां स गच्छति ॥२८॥ ज्ञानविज्ञानसम्पन्नानूहापोहविशारदान् । प्रवक्तॄन् पृच्छते योऽन्यान् स वै नापदमृच्छति ॥ २९ ॥ अन्यथा बहुबुद्ध्याढ्यो वाक्यं

वदति संसदि। अन्यथैव ह्यहं वादी दुर्बलं वदते वचः ॥ ३० ॥ दिव्यज्ञाने दिवि श्रेष्ठे दिव्यैः पुण्यैः सहोत्थिते। त्वमेवार्हसि नो देवि स्त्रीधर्माननुभाषितुम् ॥ ३१ ॥ ततः साराधिता देवी गङ्गया बहुभिर्गुणैः। प्राह सर्वमशेषेण स्त्रीधर्मं सुरसुन्दरी ॥ ३२ ॥

उमोवाच। स्त्रीधर्मो मां प्रति यथा प्रतिभाति यथाविधि। तमहं कीर्त्तयिष्यामि तथैव प्रथितो भव ॥ ३३ ॥ स्त्रीधर्म्मः पूर्व एवायं विवाहे बन्धुभिः कृतः। सहधर्म्मचरी भर्त्तुर्भवत्यग्निसमीपतः ॥ ३४ ॥ सुस्वभावा सुवचना सुवृत्ता सुखदर्शना। पुत्रवक्त्रमिवाभीक्ष्णं भर्त्तुर्वदनमीक्षती ॥ ३५ ॥ या साध्वी नियताचारा सा भवेद्धर्म्मचारिणी। श्रुत्वा दम्पतिधर्मं वै सहधर्म्मकृतं शुभम् ॥ ३६ ॥ या भवेद्धर्म्मपरमा नारी भर्तृसमव्रता। देववत् सततं साध्वी भर्त्तारमनुपश्यति ॥ ३७ ॥ शुश्रूषां परिचर्य्याञ्च देवतुल्यं प्रकुर्वती। वश्या भावेन सुमनाः सुव्रता सुखदर्शना ॥ ३८ ॥ अनन्यचित्ता सुमुखी सा नारी धर्म्मचारिणी। परुषाण्यपि चोक्ता या दृष्टा क्रुद्धेन चक्षुषा ॥ ३९॥ सुप्रसन्नमुखी भर्त्तुर्या नारी सा पतिव्रता। न चन्द्रसूर्य्यौ न तरुं पुन्नाम्नो या निरीक्षते ॥४०॥ भर्त्तृपूज्या वरारोहा सा भवेद्धर्म्मचारिणी। दरिद्रं व्याधितं दीनमध्वना परिकर्षितम् ॥ ४१ ॥ पतिं पुत्रमिवोपास्ते सा नारी धर्म्मचारिणी। या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ॥ ४२ ॥ पतिव्रता पतिप्राणा सा नारी धर्म्मभागिनी। शुश्रूषां परिचर्य्याञ्च करोत्यविमनाः सदा ॥ ४३ ॥ सुप्रीता च विनीता च सा नारी धर्म्मभागिनी। विभर्त्त्यन्नप्रदानेन कुटुम्बं चैव नित्यदा ॥ ४४ ॥ न कामेषु न भोगेषु नैश्वर्य्ये न सुखे तथा। स्पृहा यस्या यथा पत्यौ सा नारी धर्म्मभागिनी ॥ ४५ ॥ कल्योत्थानरता नित्यं गृहशुश्रूषणे रता। सुसंमृष्टक्षया चैव गोशकृत् कृतलेपना ॥४६॥ अग्निकार्य्यपरा नित्यं सदा पुष्पबलिप्रदा। देवातिथिभृत्यानां

निवाप्य पतिना सह ॥ ४७ ॥ शेषान्नमपि भुञ्जाना यथान्यायं यथाविधि। तुष्टपुष्टजना नित्यं नारी धर्मेण युज्यते ॥ ४८ ॥ श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता। मातापितृपरा नित्यं या नारी सा तपोधना ॥ ४९ ॥ ब्राह्मणान् दुर्बलानाथान् दीनान्धकृपणांस्तथा। विभर्त्त्यन्नेन या नारी सा पतिव्रतभागिनी ॥ ५० ॥ व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया। पतिचित्ता पतिहिता सा पतिव्रतभागिनी ॥ ५१ ॥ पुण्यमेतत्तपश्चैव स्वर्गश्चैष सनातनः। या नारी भर्त्तृपरमा भवेद्भर्त्तृव्रता सती ॥ ५२ ॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः। पत्या गतिः समा नास्ति दैवतं वा यथा पतिः ॥ ५३ ॥ पतिप्रसादः स्वर्गो वा तुल्यो नार्य्या न वा भवेत्। अहं स्वर्गं न हीच्छेयं त्वय्यप्रीते महेश्वर ॥ ५४ ॥ यद्यकार्य्यमधर्मं वा यदि वा प्राणनाशनम्। पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथञ्चन ॥ ५५ ॥ आपन्नो रिपुसंस्थो वा ब्रह्मशापार्द्दितोऽपि वा। आपद्धर्माननुप्रेक्ष्य तत्कार्य्यमविशङ्कया ॥ ५६ ॥ एष देव मया प्रोक्तः स्त्रीधर्मो वचनात्तव। या त्वेवं भाविनी नारी सा पतिव्रतभागिनी ॥ ५७ ॥

नारद उवाच। इत्युक्तः स तु देवेशः प्रतिपूज्य गिरेः सुताम्। लोकान् विसर्ज्जयामास सर्वैरनुचरैः सह ॥ ५८ ॥ ततो ययुर्भूतगणाः सरितश्च यथागतम्। गन्धर्वाप्सरसश्चैव प्रणम्य शिरसा भवम् ॥ ५९ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे उमामहेश्वरसंवादे षट्चत्वारिंशदधिकशततोऽध्यायः ॥ १४६ ॥

---

ऋषय ऊचुः। पिनाकिन् भगनेत्रघ्न सर्वलोकनमस्कृत। माहात्म्यं वासुदेवस्य श्रोतुमिच्छामि शङ्कर ॥ १ ॥

महेश्वर उवाच । पितामहादपि वरः शाश्वतः पुरुषो हरिः । कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य्य इवोदितः ॥ २ ॥ दश-बाहुर्महातेजा देवतारिनिसूदनः । श्रीवत्साङ्को हृषीकेशः सर्व-दैवतपूजितः ॥ ३ ॥ ब्रह्मा तस्योदरभवस्तथा चाहं शिरोभवः । शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः ॥ ४ ॥ ऋषयो देह-सम्भूतास्तथा लोकाश्च शाश्वताः । पितामहगृहं साक्षात् सर्व-देवगृहञ्च सः ॥ ५ ॥ सोऽस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभु-वनेश्वरः । संहर्त्ता चैव भूतानां स्थावरस्य चरस्य च ॥ ६ ॥ स हि देववरः साक्षात् देवनाथः परन्तपः । सर्वज्ञः सर्वसंश्लिष्टः सर्वगः सर्वतोमुखः ॥ ७ ॥ परमात्मा हृषीकेशः सर्वव्यापी महे-श्वरः । न तस्मात् परमं भूतं त्रिषु लोकेषु किञ्चन ॥ ८ ॥ सना-तनो वै मधुहा गोविन्द इति विश्रुतः । स सर्वान् पार्थिवान् सङ्ख्ये घातयिष्यति मानदः ॥ ९ ॥ सुरकार्य्यार्थमुत्पन्नो मानुषं वपुरास्थितः । न हि देवगणाः शक्तास्त्रिविक्रमविनाकृताः ॥ १० ॥ भुवने देवकार्य्याणि कर्त्तुं नायकवर्ज्जिताः । नायकः सर्वभूतानां सर्वदेवनमस्कृतः ॥ ११ ॥ एतस्य देवनाथस्य देवकार्य्यरतस्य च । ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च ॥ १२॥ ब्रह्मा वसति गर्भस्थः शरीरे सुखसंस्थितः । शर्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः ॥ १३ ॥ सर्वाः सुखं संश्रिताश्च शरीरे तस्य देवताः । स देवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः ॥ १४ ॥ शार्ङ्गचक्रायुधः खड्गी सर्वनागरिपुध्वजः । उत्तमेन च शीलेन शौचेन च दमेन च ॥ १५ ॥ पराक्रमेण वीर्य्येण वपुषा दर्शनेन च । आरोहेण प्रमाणेन धैर्य्येणार्ज्जवसम्पदा ॥ १६ ॥ अहमंस्येन रूपेण बलेन च समन्वितः । अस्त्रैः समुदितः सर्वैर्द्दिव्यैरद्भुतदर्शनैः ॥ १७ ॥ योग-मायः सहस्राक्षो निरवद्यो महामनाः । वीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ॥ १८ ॥ क्षमावांश्चानहंवादी ब्रह्मण्यो ब्रह्म-

नायकः। भयहर्त्ता भयार्त्तानां मित्राणां नन्दिवर्द्धनः॥१९॥ शरण्यः सर्व्वभूतानां दीनानां पालने रतः। श्रुतवानर्थसम्पन्नः सर्व्वभूतनमस्कृतः॥२०॥ समाश्रितानां बहुकृत् शत्रूणामपि धर्म्मवित्। नीतिज्ञो नीतिसम्पन्नो ब्रह्मवादी जितेन्द्रियः॥२१॥ भवार्थमिह देवानां बुद्ध्या परमया युतः। प्राजापत्ये शुभे मार्गे मानवे धर्म्मसंहिते॥२२॥ समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः। अङ्गो नाम मनोः पुत्र अन्तर्द्धामा ततः परम्॥२३॥ अन्तर्धाम्नो हविर्धामा प्रजापतिरनिन्दितः। प्राचीनवर्हिर्भविता यविर्द्धाम्नः सुतो महान्॥२४॥ तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः। प्रचेतसस्तथा दक्षो भवितेह प्रजापतिः॥२५॥ दाक्षायण्यास्तथापत्यो मनुरादित्यतस्तथा। मनोश्च वंशज इला सुद्युम्नश्च भविष्यति॥२६॥ बुधात् पुरूरवाश्चापि तस्मादायुर्भविष्यति। नहुषो भविता तस्माद्ययातिस्तस्य चात्मजः॥२७॥ यदुस्तस्मान्महासत्त्वः क्रोष्टा तस्माद्भविष्यति। क्रोष्टुश्चैव महान् पुत्रो वृजिनीवान् भविष्यति॥२८॥ वृजिनीवतश्च भविता उषङ्गुरपराजितः। उषङ्गोर्भविता पुत्रस्ततश्चित्ररथस्तथा॥२९॥ तस्य त्ववरजः पुत्रः शूरो नाम भविष्यति। तेषां विख्यातवीर्य्याणां चारित्रगुणशालिनाम्॥३०॥ यज्वनां सुविशुद्धानां वंशे ब्राह्मणसम्मते। स शूरः क्षत्रियश्रेष्ठो महावीर्य्यो महायशाः॥३१॥ स्ववंशविस्तरकरं जनयिष्यति मानदः। वसुदेव इति ख्यातं पुत्रमानकदुन्दुभिम्॥३२॥ तस्य पुत्रश्चतुर्बाहुर्वासुदेवो भविष्यति। दाता ब्राह्मणसत्कर्त्ता ब्रह्मभूतो द्विजप्रियः॥३३॥ राज्ञो मागधसंरुद्धान्मोचयिष्यति यादवः। जरासन्धञ्च राजानं निर्ज्जित्य गिरिगह्वरे॥३४॥ सर्व्वपार्थिवरत्नाढ्यो भविष्यति स वीर्य्यवान्। पृथिव्यामप्रतिहतो वीर्य्येण च भविष्यति॥३५॥ विक्रमेण च सम्पन्नः सर्व्वपार्थिवपार्थिवः। शूरसेनेषु संभूतो

द्वारकायां वसन् प्रभुः ॥ ३६ ॥ पालयिष्यति गां देवीं विजित्य
नयवित् सदा । तं भवन्तः समासाद्य वाङ्माल्यैरर्हसैर्वरैः ॥ ३७ ॥
अर्च्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् । यो हि मां द्रष्टु-
मिच्छेत ब्रह्माणञ्च पितामहम् ॥ ३८ ॥ द्रष्टव्यस्तेन भगवान् वासु-
देवः प्रतापवान् । दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा
॥ ३९ ॥ पितामहो वा देवेश इति वित्त तपोधनाः । स यस्य
पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ॥ ४० ॥ तस्य देवगणः प्रीतो
ब्रह्मपूर्वो भविष्यति । यश्च तं मानवो लोके संश्रयिष्यति केशवम्
॥ ४१ ॥ तस्य कीर्त्तिर्ज्जयश्चैव स्वर्गश्चैव भविष्यति । धर्म्माणां देशिकः
साक्षात् स भविष्यति धर्म्मभाक् ॥ ४२ ॥ धर्म्मविद्भिः सदैवेशो
नमस्कार्य्यः सदोद्यतैः । धर्म्म एव परो हि स्यात् तस्मिन्नभ्यर्च्चिते
विभौ ॥ ४३ ॥ स हि देवो महातेजाः प्रजाहितचिकीर्षया ।
धर्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज्ज ह ॥ ४४ ॥ ताः सृष्टास्तेन
विधिना पर्व्वते गन्धमादने । सनत्कुमारप्रमुखास्तिष्ठन्ति तपसा-
न्विताः ॥ ४५ ॥ तस्मात् स वाग्मी धर्म्मज्ञो नमस्यो द्विजपुङ्गवाः ।
दिविश्रेष्ठो हि भगवान् हरिर्नारायणः प्रभुः ॥ ४६ ॥ वन्दितो हि
स वन्देत मानितो मानयीत च । अर्हितश्चार्हयेन्नित्यं पूजितः प्रति-
पूजयेत् ॥ ४७ ॥ दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ।
अर्च्चितश्चार्च्चयेन्नित्यं स देवो द्विजसत्तमाः ॥ ४८ ॥ एतत्तस्यानव-
द्यस्य विष्णोर्व्वै परमं व्रतम् । आदिदेवस्य महतः सज्जनाचरितं
सदा ॥ ४९ ॥ भुवनेऽभ्यर्च्चितो नित्यं देवैरपि सनातनः । अभये-
नानुरूपेण युज्यन्ते तमनुव्रताः ॥ ५० ॥ कर्म्मणा मनसा वाचा स
नमस्यो द्विजैः सदा । यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ॥५१॥
एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः । तं दृष्ट्वा सर्व्वशो
देवा दृष्टाः स्युः सुरसत्तमाः ॥ ५२ ॥ महावराहं तं देवं सर्व्व-
लोकपितामहम् । अहञ्चैव नमस्यामि नित्यमेव जगत्पतिम् ॥५३॥

तत्र वह्निवयं दृष्टं भविष्यति न संशयः। समस्ता हि वयं देवा-स्तस्य देहे वसामहे॥ ५४॥ तस्य चैवाग्रजो भ्राता सिताद्रि-निचयप्रभः। हली बल इति ख्यातो भविष्यति धराधरः॥ ५५॥ त्रिशिरास्तस्य देवस्य शातकुम्भमयो द्रुमः। ध्वजस्तृणेन्द्रो देवस्य भविष्यति रथाश्रितः॥ ५६॥ शिरो नागैर्महाभोगैः परिकीर्णं महात्मभिः। भविष्यति महाबाहोः सर्वलोकेश्वरस्य ह। चिन्तितानि समेष्यन्ति शस्त्राण्यस्त्राणि चैव ह॥ ५७॥ अनन्तश्च स एवोक्तो भगवान् हरिरव्ययः। समादिष्टश्च विबुधैर्द्दर्शय त्वमिति प्रभो॥ ५८॥ सुपर्णो यस्य वीर्य्येण कश्यपस्यात्मजो बली। अन्तं नैवाशकद्द्रष्टुं देवस्य परमात्मनः॥ ५९॥ अन्तर्वसति भोगेन परिरभ्य वसुन्धराम्। स च शेषो विचरते परया वै मुदा युतः॥ ६०॥ स एव विष्णुः सोऽनन्तो भगवान् वसुधाधरः। यो रामः स हृषीकेशो योऽच्युतः स धराधरः॥ ६१॥ तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्यपराक्रमौ। द्रष्टव्यौ माननीयौ च चक्रलाङ्गलधारिणौ॥६२॥ एष वोऽनुग्रहः प्रोक्तो मया पुण्यस्तपोधनाः। यद्भवन्तो यदुश्रेष्ठं पूजयेयुः प्रयत्नतः॥ ६३॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे पुरुषोत्तममाहात्म्ये सप्तचत्वारिंशदधिकशततोऽध्यायः॥ १४७॥

---

नारद उवाच। अथ व्योम्नि महाञ्छब्दः सविद्युत्स्तनयित्नुमान्। मेघैश्च गगनं नीलैः संरुद्धमभवद्घनैः॥ १॥ प्रावृषीव च पर्ज्जन्यो ववृषे निर्म्मलं पयः। तमश्चैवाभवद्घोरं दिशश्च न चकाशिरे॥ २॥ ततो देवगिरौ तस्मिन् रम्ये पुण्ये सनातने। न स्म भूतसङ्घं वा ददृशुर्मुनयस्तदा॥ ३॥ व्यभ्रञ्च गगनं सद्यः क्षणेन समपद्यत। तीर्थयात्रां ततो विप्रा जग्मुश्चान्ये यथागतम्॥ ४॥

तदद्भुतमचिन्त्यञ्च दृष्ट्वा ते विस्मिताभवन् । शङ्करस्योमया सार्द्धं
सम्वादं तत्कथाश्रवम् ॥ ५ ॥ स भवान् पुरुषव्याघ्र ब्रह्मभूतः
सनातनः । यदर्थमनुशिष्टाः स्मो गिरिपृष्ठे महात्मना ॥ ६ ॥
द्वितीयं त्वद्भुतमिदं त्वत्तेजः कृतमद्य वै । दृष्ट्वा हि विस्मिताः
कृष्ण सा च नः स्मृतिरागता ॥ ७ ॥ एतत्ते देवदेवस्य माहात्म्यं
कथितं विभो । कपर्द्दिनो गिरीशस्य महाबाहो जनार्द्दन ॥ ८ ॥
इत्युक्तः स तदा कृष्णस्तपोवननिवासिभिः । मानयामास तान्
सर्वानृषीन् देवकीनन्दनः ॥ ९ ॥ अथर्षयः संप्रहृष्टाः पुनस्ते कृष्ण-
मब्रुवन् । पुनः पुनर्द्दर्शयास्मान् सदैव मधुसूदन ॥ १० ॥ न हि
नः सा रतिः स्वर्गे या च त्वद्दर्शने विभो । तदृतञ्च महाबाहो
यदाह भगवान् भवः ॥ ११ ॥ एतत्ते सर्वमाख्यातं रहस्यमरि-
कर्षण । त्वमेव ह्यर्थतत्त्वज्ञः पृष्टोऽस्मान् पृच्छसे यदा ॥ १२ ॥
तदस्माभिरिदं गुह्यं त्वत्प्रियार्थमुदाहृतम् । न च तेऽविदितं
किञ्चित्त्रिषु लोकेषु विद्यते ॥ १३ ॥ जन्म चैव प्रसूतिश्च यच्चान्यत्
कारणं विभो । वयन्तु बहुचापल्यादशक्ता गुह्यधारणे ॥ १४ ॥
ततः स्थिते त्वयि विभो लघुत्वात् प्रलपामहे । न हि किञ्चि-
त्तदाश्चर्य्यं यन्न वेत्ति भवानिह ॥ १५ ॥ दिवि वा भुवि वा देव
सर्वं हि विदितं तव । साधयाम वयं कृष्ण बुद्धिं पुष्टिमवाप्नुहि
॥ १६ ॥ पुत्रस्ते सदृशस्तात विशिष्टो वा भविष्यति । महाप्रभाव-
संयुक्तो दीप्तिकीर्त्तिकरः प्रभुः ॥ १७ ॥

भीष्म उवाच । ततः प्रणम्य देवेशं यादवं पुरुषर्षभम् ।
प्रदक्षिणमुपावृत्य प्रजग्मुस्ते महर्षयः ॥ १८ ॥ सोऽयं नारायणः
श्रीमान् दीप्त्या परमया युतः । व्रतं यथावत्तत्तीर्त्वा द्वारकां
पुनरागमत् ॥ १९ ॥ पूर्णे च दशमे मासि पुत्रोऽस्य परमाद्भुतः ।
रुक्मिण्यां सम्मतो यज्ञे शूरो वंशधरः प्रभो ॥ २० ॥ स कामः
सर्वभूतानां सर्वभावगतो नृप । सुराणामसुराणाञ्च चरत्यन्तर्गतः

सदा ॥ २१ ॥ सोऽयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः। संश्रितः पाण्डवान् प्रेम्णा भवन्तश्चैनमाश्रिताः ॥ २२ ॥ कीर्त्तिर्लक्ष्मीर्धृतिश्चैव स्वर्गमार्गस्तथैव च। यत्रैष संश्रितस्तत्र देवो विष्णुस्त्रिविक्रमः ॥ २३ ॥ सेन्द्रा देवास्त्रयस्त्रिंशदेष नात्र विचारणा। आदिदेवो महादेवः सर्वभूतप्रतिश्रयः ॥ २४ ॥ अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः। अयं जातो महातेजाः सुराणामर्थसिद्धये ॥ २५ ॥ सुदुस्तरार्थतत्त्वस्य वक्ता कर्त्ता च माधवः। तव पार्थ जयः कृत्स्नस्तव कीर्त्तिस्तथातुला ॥ २६ ॥ तवेयं पृथिवी कृत्स्ना नारायणसमाश्रयात्। अयं नाथस्तवाचिन्त्यो यस्य नारायणो गतिः ॥ २७ ॥ स भवांस्त्वमुपाध्वर्य्यू रणाग्नौ हुतवान्नृपान्। कृष्णस्रुवेण महता युगान्ताग्निसमेन वै ॥ २८ ॥ दुर्य्योधनस्तु शोच्योऽसौ सपुत्रभ्रातृबान्धवः। कृतवान् योऽबुधः कोपाद्धरिगाण्डीविविग्रहम् ॥ २९ ॥ दैतेया दानवेन्द्राश्च महाकाया महाबलाः। चक्राग्नौ क्षयमापन्ना दावाग्नौ शलभा इव ॥ ३० ॥ प्रतियोद्धुं न शक्यो हि मानुषैरिह संयुगे। विहीनैः पुरुषव्याघ्र सत्त्वशक्तिबलादिभिः ॥ ३१ ॥ जयो योगी युगान्ताग्निः सव्यसाची रणाग्रगः। तेजसा हतवान् सर्वं सुयोधनबलं नृप ॥३२॥ यत्तु गोवृषभाङ्केण मुनिभिः समुदाहृतम्। पुराणं हिमवत्पृष्ठे तन्मे निगदतः शृणु ॥ ३३ ॥ यावदस्य भवेत्तुष्टिस्तेजोवीर्य्यपराक्रमैः। प्रभावः सन्नतिर्जन्म कृष्णे तन्निगुणं विभो ॥ ३४ ॥ कः शक्नोत्यन्यथा कर्त्तुं तद्यदि स्यात्तथा शृणु। यत्र कृष्णो हि भगवांस्तत्र पुष्टिरनुत्तमा ॥ ३५ ॥ वयन्त्विहाल्पमतयः परतन्त्राः सुविक्लवाः। ज्ञानपूर्वं प्रपन्नाः स्मो मृत्योः पन्थानमव्ययम् ॥ ३६॥ भवांश्चाप्यार्ज्जवपरः पूर्वं कृत्वा प्रतिश्रयम्। राजवृत्तं न लभते प्रतिज्ञापालने रतः ॥ ३७ ॥ तथैवात्मवधं लोके राजंस्त्वं बहु मन्यसे। न हि प्रतिज्ञा या दत्ता तां प्रहातुमरिन्दम ॥ ३८ ॥

कालेनायं जनः सर्व्वो निहतो रणमूर्द्धनि । वयञ्च कालेन हताः कालो हि परमेश्वरः ॥ ३९ ॥ न हि कालेन कालज्ञः स्पृष्टः शोचितुमर्हसि । कालो लोहितरक्ताक्ष कृष्णो दण्डधरो हरिः ॥ ४० ॥ तस्मात् कुन्तीसुत ज्ञातीन्नेह शोचितुमर्हसि । व्यपेतमन्युर्नित्यं त्वं भव कौरवनन्दन ॥ ४१ ॥ माधवस्यास्य माहात्म्यं श्रुतं यत् कथितं मया । तदेव तावत् पर्य्याप्तं सज्जनस्य निदर्शनम् ॥ ४२ ॥ व्यासस्य वचनं श्रुत्वा नारदस्य च धीमतः । स्वयञ्चैव महाराज कृष्णस्यार्हतमस्य वै ॥ ४३ ॥ प्रभावश्चर्षिपूगस्य कथितः सुमहान् मया । महेश्वरस्य सम्वादं शैलपुत्र्याश्च भारत ॥ ४४ ॥ धारयिष्यति यश्चैनं महापुरुषसम्भवम् । शृणुयात् कथयेद्राजन् स वै श्रेयो लभेत् परम् ॥ ४५ ॥ भवितारश्च तस्याथ सर्व्वे कामा यथेप्सिताः । प्रेत्य स्वर्गञ्च लभते नरो नास्त्यत्र संशयः ॥४६॥ न्याय्यः श्रेयोऽभिकामेन प्रतिपत्तुं जनार्द्दनः । एष एवाक्षयो विप्रैः स्तुतो राजन् जनार्द्दनः ॥ ४७ ॥ महेश्वरमुखोत्सृष्टा ये च धर्म्मगुणाः स्मृताः । ते त्वया मनसा धार्य्याः कुरुराज दिवानिशम् ॥ ४८ ॥ एवं ते वर्त्तमानस्य सम्यग्दण्डधरस्य च । प्रजापालनदक्षस्य स्वर्गलोको भविष्यति ॥ ४९ ॥ धर्म्मेणापि सदा राजन् प्रजा रक्षितुमर्हसि । यस्तस्य विपुलो दण्डः सम्यग्धर्मः स कीर्त्त्यते ॥ ५० ॥ य एष कथितो राजन् मया सज्जनसन्निधौ । शङ्करस्योमया सार्द्धं सम्वादो धर्मसंहितः ॥ ५१ ॥ श्रुत्वा वा श्रोतुकामो वाप्यर्च्चयेद्वृषभध्वजम् । विशुद्धेनेह भावेन य इच्छेद्भूतिमात्मनः ॥ ५२ ॥ एष तस्यानवद्यस्य नारदस्य महात्मनः । सन्देशो देवपूजार्थं तन्तथा कुरु पाण्डव ॥ ५३ ॥ एतदत्यद्भुतं वृत्तं पुण्ये हिमवति प्रभो । वासुदेवस्य कौन्तेय स्थाणोश्चैव स्वभावजम् ॥ ५४ ॥ दशवर्षसहस्राणि वदर्य्यामेष शाश्वतः । तपश्चचार विपुलं सह गाण्डीवधन्वना ॥५५॥ त्रियुगौ पुण्डरीकाक्षौ वासुदेव-

धनञ्जयौ। विदितौ नारदादेतौ मम व्यासाच्च पार्थिव ॥५६॥ बाल एव महाबाहुश्चकार कदनं महत्। कंसस्य पुण्डरीकाक्षो ज्ञातित्राणार्थकारणात् ॥ ५७ ॥ कर्मणामस्य कौन्तेय नान्तं संख्यातुमुत्सहे। शाश्वतस्य पुराणस्य पुरुषस्य युधिष्ठिर ॥५८॥ ध्रुवं श्रेयः परं तात भविष्यति तवोत्तमम्। यस्य ते पुरुषव्याघ्रः सखा चायं जनार्द्दनः ॥ ५९ ॥ दुर्य्योधनन्तु शोचामि प्रेत्य लोकेऽपि दुर्मतिम्। यत्कृते पृथिवी सर्वा विनष्टा सहयद्विपा ॥६०॥ दुर्य्योधनापराधेन कर्णस्य शकुनेस्तथा। दुःशासनचतुर्थानां कुरवो निधनं गताः ॥६१॥

वैशम्पायन उवाच। एवं सम्भाषमाणे तु गाङ्गेये पुरुषर्षभे। तूष्णीं बभूव कौरव्यो मध्ये तेषां महात्मनाम् ॥ ६२ ॥ तच्छ्रुत्वा विस्मयं जग्मुर्धृतराष्ट्रादयो नृपाः। सम्पूज्य मनसा कृष्णं सर्वे प्राञ्जलयोऽभवन् ॥ ६३ ॥ ऋषयश्चापि ते सर्वे नारदप्रमुखास्तदा। प्रतिगृह्याभ्यनन्दन्त तद्वाक्यं प्रतिपूज्य च ॥ ६४ ॥ इत्येतदखिलं सर्वैः पाण्डवो भ्रातृभिः सह। श्रुतवान् सुमहाश्चर्य्यं पुण्यं भीष्मानुशासनम् ॥ ६५ ॥ युधिष्ठिरस्तु गाङ्गेयं विश्रान्तं भूरिदक्षिणम्। पुनरेव महाबुद्धिं पर्य्यपृच्छन्महीपतिः ॥ ६६ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे उमामहेश्वरसम्वादे अष्टचत्वारिंशदधिकशतोऽध्यायः ॥ १४८॥

---

वैशम्पायन उवाच। श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः। युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥

युधिष्ठिर उवाच। किमेकं दैवतं लोके किम्वाप्येकं परायणम्। कं स्तुवन्तः कमर्च्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥ को धर्मः सर्वधर्माणां भवतः परमो मतः। किं जपन् मुच्यते जन्तुर्ज्जन्मसंसारबन्धनात् ॥ ३ ॥

भीष्म उवाच । जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् । स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥ तमेवाभ्यर्चयन्नित्यं भक्त्या पुरुषमव्ययम् । ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ॥५॥ अनादिनिधनं विष्णुं सर्व्वलोकमहेश्वरम् । लोकाध्यक्षं स्तुवन्नित्यं सर्व्वदुःखातिगो भवेत् ॥ ६॥ ब्रह्मण्यं सर्व्वधर्म्मज्ञं लोकानां कीर्त्तिवर्द्धनम् । लोकनाथं महद्भूतं सर्व्वभूतभवोद्भवम् ॥ ७ ॥ एष मे सर्व्वधर्म्माणां धर्म्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा ॥ ८ ॥ परमं यो महत्तेजः परमं यो महत्तपः । परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥ पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलम् । दैवतं दैवतानाञ्च भूतानां योऽव्ययः पिता ॥ १० ॥ यतः सर्व्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥ तस्य लोकप्रधानस्य जगन्नाथस्य भूपते । विष्णोर्नाम सहस्रं मे शृणु पापभयापहम् ॥ १२ ॥ यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥ ओँ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः । भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १४ ॥ पूतात्मा परमात्मा च मुक्तानां परमा गतिः । अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ १५ ॥ योगो योगविदां नेता प्रधानपुरुषेश्वरः । नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ १६ ॥ सर्व्वः शर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः । सम्भवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः ॥१७॥ स्वयम्भुः शम्भुरादित्यः पुष्कराक्षो महास्वनः । अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८ ॥ अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः । विश्वकर्म्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ १९ ॥ अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्द्दनः । प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥ २० ॥ ईशानः प्राणदः प्राणो ज्येष्ठः

श्रेष्ठः प्रजापतिः। हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥२१॥ ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः। अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २२ ॥ सुरेशः शरणं शर्म्म विश्वरेताः प्रजाभवः। अहः सम्वत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥२३॥ अजः सर्वेश्वरः सिद्धिः सिद्धः सर्वादिरच्युतः। वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ २४ ॥ वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः। अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ २५ ॥ रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः। अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ २६ ॥ सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्द्दनः। वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ २७ ॥ लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः। चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥ भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः। अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥२९॥ उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्ज्जितः। अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥ ३०॥ वेद्यो वैद्यः सदा योगी वीरहा माधवो मधुः। अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ ३१ ॥ महाबुद्धिर्म्महावीर्य्यो महाशक्तिर्म्महाद्युतिः। अनिर्द्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ ३२ ॥ महेष्वासो महीभर्त्ता श्रीनिवासः सतां गतिः। अनिरुद्धः सुरानन्दो गोविन्दो गोविदांपतिः ॥ ३३ ॥ मरीचिर्द्दमनो हंसः सुपर्णो भुजगोत्तमः। हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४ ॥ अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः। अजो दुर्म्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ ३५ ॥ गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः। निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥ अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः। सहस्रमूर्द्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ ३७ ॥ आवर्त्तनो निवृत्तात्मा संवृतः सं-

प्रतर्द्दनः । अहः सम्वर्त्तको वह्निरनिलो धरणीधरः ॥ ३८ ॥
सुप्रसादः प्रसन्नात्मा विश्वधृक् विश्वभुग्विभुः । सत्कर्त्ता सत्कृतः
साधुर्ज्जह्नुर्नारायणो नरः ॥ ३९ ॥ असंख्येयोऽप्रमेयात्मा विशिष्टः
शिष्टकृच्छुचिः । सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥४०॥
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः । वर्द्धनो वर्द्धमानश्च विविक्तः
श्रुतिसागरः ॥ ४१ ॥ सुभुजो दुर्द्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो वृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४२ ॥ ओजस्तेजो
द्युतिधरः प्रकाशात्मा प्रतापवान् । ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशु-
र्भास्करद्युतिः ॥ ४३ ॥ अमृतांशूद्भवो भानुः शशविन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्म्मः पराक्रमः ॥ ४४ ॥ भूतभव्यभव-
न्नाथः पवनः पावनोऽनलः । कामहा कामकृत् कान्तः कामः
कामप्रदः प्रभुः ॥ ४५ ॥ युगादिकृद्युगावर्त्तो नैकमायो महा-
शनः । अदृश्योऽव्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४६ ॥ इष्टो
विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः । क्रोधहा क्रोधकृत् कर्त्ता
विश्वबाहुर्महीधरः ॥ ४७ ॥ अच्युतः प्रथितः प्राणः प्राणदो
वासवानुजः । अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥
स्कन्दः स्कन्दधरो धूर्य्यो वरदो वायुवाहनः । वासुदेवो वृहद्भानु-
रादिदेवः पुरन्दरः ॥ ४९ ॥ अशोकस्तारणस्तारः शूरः शौरि-
र्ज्जनेश्वरः । अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः ॥ ५० ॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् । महर्द्धिरिद्धो वृद्धात्मा
महाक्षो गरुड़ध्वजः ॥ ५१ ॥ अतुलः शरभो भीमः समयज्ञो
हविर्हरिः । सर्व्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥५२ ॥
विक्षरो रोहितो मार्गो हेतुर्द्दामोदरः सहः । महीधरो महा-
भागो वेगवानमिताशनः ॥ ५३ ॥ उद्भवः क्षोभणो देवः श्रीगर्भः
परमेश्वरः । करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः ॥ ५४ ॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः । परार्द्धिः परम-

सृष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ५५ ॥ रामो विरामो विरजो मार्गो नेयो नयोऽनयः। वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५६ ॥ वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः। हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७ ॥ ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः। उग्रः सम्वत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ५८ ॥ विस्तारः स्थावरः स्थाणुः प्रमाणं वीजमव्ययम्। अर्थोऽनर्थो महाकोषो महाभोगी महाधनः ॥ ५९ ॥ अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः। नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ६० ॥ यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः। सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥ सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत्। मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२ ॥ स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत्। वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६३ ॥ धर्मगुप् धर्मकृद्धर्मी सदसत् क्षरमक्षरम्। अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६४ ॥ गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः। आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६५ ॥ उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः। शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ६६ ॥ सोमपोऽमृतपः सोमः पुरुजित् पुरुषोत्तमः। विजयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥ ६७ ॥ जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः। अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ६८ ॥ अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः। आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ६९ ॥ महर्षिः कपिलाचार्य्यः कृतज्ञो मेदिनीपतिः। त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ७० ॥ महावराहो गोविन्दः सुषेणः कनकाङ्गदी। गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७१ ॥ वेधाः स्वाङ्गो जितः कृष्णो दृढः सङ्कर्षणो-

ऽच्युतः । वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७२ ॥
भगवान् भगहा नन्दी वनमाली हलायुधः । आदित्यो ज्योति-
रादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३ ॥ सुधन्वा खण्डपरशुर्दारुणो
द्रविणप्रदः । दिवस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ७४ ॥
त्रिसामा सामगः साम निर्व्वाणं भेषजं भिषक् । संन्यासकृच्छमः
शान्तो निष्ठा शान्तिपरायणः ॥ ७५ ॥ शुभाङ्गः शान्तिदः स्रष्टा
कुमुदः कुवलेशयः । गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः
अनिवर्त्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः । श्रीवत्सवक्षाः
श्रीवासः श्रीपतिः श्रीमताम्वरः ॥ ७७ ॥ श्रीदः श्रीशः श्रीनिवासः
श्रीनिधिः श्रीविभावनः । श्रीधरः श्रीकरः श्रेयः श्रीमाल्लोक-
त्रयाश्रयः ॥ ७८ ॥ स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्त्तिश्छिन्नसंशयः ॥ ७९ ॥ उदीर्णः
सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः । भूशयो भूषणो भूतिर्विशोकः
शोकनाशनः ॥ ८० ॥ अर्च्चिष्मानर्च्चितः कुम्भो विशुद्धात्मा विशो-
धनः । अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥ काल-
नेमिनिहा वीरः शौरिः शूरजनेश्वरः । त्रिलोकात्मा त्रिलोकेशः
केशवः केशहा हरिः ॥ ८२ ॥ कामदेवः कामपालः कामी कान्तः
कृतागमः । अनिर्द्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ८३ ॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः । ब्रह्मविद्ब्राह्मणो
ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८४ ॥ महाक्रमो महाकर्मा महा-
तेजा महोरगः । महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥८५॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः । पूर्णः पूरयिता
पुण्यः पुण्यकीर्त्तिरनामयः ॥ ८६ ॥ मनोजवस्तीर्थकरो वसुरेता
वसुप्रदः । वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८७ ॥ सद्गतिः
सत्कृतिः सत्ता सद्भूतिः सत्परायणः । शूरसेनो यदुश्रेष्ठः सन्नि-
वासः सुयामुनः ॥ ८८ ॥ भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।

दर्पहा दर्पदो दृप्तो दुर्द्धरोऽथापराजितः॥ ८९॥ विश्वमूर्त्ति-र्महामूर्त्तिर्दीप्तमूर्त्तिरमूर्त्तिमान्। अनेकमूर्त्तिरव्यक्तः शतमूर्त्तिः शताननः॥ ९०॥ एको नैकः सवः कः किं यत्तत्पदमनुत्तमम्। लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः॥ ९१॥ सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी। विरहा विषमः शून्यो घृताशी-रचलश्चलः॥ ९२॥ अमानी मानदो मान्यो लोकस्वामी त्रिलोक-धृक्। सुमेधा मेधजो धन्यः सत्यमेधा धराधरः॥ ९३॥ तेजो वृषो द्युतिधरः सर्वशस्त्रभृताम्बरः। प्रग्रहो निग्रहो व्यग्रोऽनेक-शृङ्गो गदाग्रजः॥ ९४॥ चतुर्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः। चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्॥ ९५॥ समावर्त्तो निवृ-त्तात्मा दुर्जयो दुरतिक्रमः। दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा॥ ९६॥ शुभाङ्गो लोकशारङ्गः सुतन्तुस्तन्तुवर्द्धनः। इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥ ९७॥ उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः। अर्को वाजसनः शृङ्गी जयन्तः सर्व-विजयी॥ ९८॥ सुवर्णविन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः। महा-ह्रदो महागर्त्तो महाभूतो महानिधिः॥ ९९॥ कुमुदः कुन्दरः कुन्दः पर्ज्जन्यः पवनोऽनिलः। अमृताशोऽमृतवपुः सर्वज्ञः सर्वतो मुखः॥ १००॥ सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः। न्यग्रो-धोडुम्बरोऽश्वत्थश्चानूरान्ध्रनिसूदनः॥ १०१॥ सहस्रार्च्चिः सप्त-जिह्वः सप्तैधाः सप्तवाहनः। अमूर्त्तिरनघोऽचिन्त्यो भयकृद्भय-नाशनः॥ १०२॥ अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान्। अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः॥ १०३॥ भारभृत् कथितो योगी योगीशः सर्वकामदः। आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः॥ १०४॥ धनुर्द्धरो धनुर्वेदो दण्डो दमयिता दमः। अपराजितः सर्वसहो नियन्ता नियमो यमः॥ १०५॥ सत्त्ववान् सात्त्विकः सत्यः सत्यधर्म्मपरायणः। अभिप्रायः प्रिया-

श्रीऽर्हः प्रियकृत् प्रीतिवर्द्धनः ॥१०६॥ विहायसगतिर्ज्योतिः सुरुचि-र्हुतभुग्विभुः । रविर्विरोचनः सूर्य्यः सविता रविलोचनः ॥ १०७ ॥ अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः । अनिर्विण्णः सदा-मर्षी लोकाधिष्ठानमद्भुतः ॥ १०८ ॥ सनात् सनातनतमः कपिलः कपिरव्ययः । स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ १०९ ॥ अरौद्रः कुण्डली चक्री विक्रम्यूर्ज्जितशासनः । शब्दा-तिगः शब्दसहः शिशिरः शर्व्वरीकरः ॥ ११०॥ अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणाम्वरः । विदुत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः ॥ १११ ॥ उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः । वीरहा रक्षणः शान्तो जीवनः पर्य्यवस्थितः ॥ ११२ ॥ अनन्तरूपोऽनन्त-श्रीर्ज्जितमन्युर्भयापहः । चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥११३॥ अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः । जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४ ॥ आधारनिलयो धाता पुष्पहासः प्रजागरः । ऊर्द्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११५ ॥ प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः । तत्त्वं तत्त्व-विदेकात्मा जन्ममृत्युर्ज्जरातिगः ॥ ११६ ॥ भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः । यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११७ ॥ यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः । यज्ञान्तकृद्यज्ञ-गुह्यमन्नमन्नाद एव च ॥ ११८ ॥ आत्मयोनिः स्वयं जातो वैखानः सामगायनः । देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ ११९ ॥ शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः । रथाङ्गपाणिरक्षोभ्यः सर्व्वप्रहरणायुधः ॥१२०॥ ओं नमः । इतीदं कीर्त्तनीयस्य केशवस्य महात्मनः । नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्त्तितम् ॥ १२१ ॥ य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत् । नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः ॥ १२२ ॥ वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् । वैश्यो धनसमृद्धः स्यात् शूद्रः सुख-

मवाप्नुयात् ॥ १२३ ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्। कामानवाप्नुयात् कामी प्रजार्थी चाप्नुयात् प्रजाः ॥१२४॥ भक्तिमान् य सदोत्थाय शुचिस्तद्गतमानसः। सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्त्तयेत् ॥ १२५ ॥ यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च। अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥१२६॥ न भयं क्वचिदाप्नोति वीर्य्यं तेजश्च विन्दति। भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२७ ॥ रोगार्त्तो मुच्यते रोगात् बद्धो मुच्येत बन्धनात्। भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १२८ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्। स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥ वासुदेवाश्रयो मर्त्त्यो वासुदेवपरायणः। सर्वपापविशुद्धात्मा याति ब्रह्मसनातनम् ॥१३०॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित्। जन्ममृत्युजराव्याधिभयं नाप्युपजायते ॥ १३१ ॥ इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः। युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्त्तिभिः ॥ १३२ ॥ न क्रोधो न च मात्सर्य्यं न लोभो नाशुभामतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥ द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः। वासुदेवस्य वीर्य्येण विधृतानि महात्मनः ॥ १३४ ॥ ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्। जगद्वशे वर्त्ततीदं कृष्णस्य सचराचरम् ॥ १३५ ॥ इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३६॥ सर्वागमानामाचारः प्रथमः परिकल्पते। आचारः प्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३७ ॥ ऋषयः पितरो देवा महाभूतानि धातवः। जङ्गमाजङ्गमञ्चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥ योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म्म च। वेदाः शास्त्राणि विज्ञानमेतत् सर्वं जनार्द्दनात् ॥ १३९ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः। त्रींल्लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्व-

भुगव्ययः ॥ १४० ॥ इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्त्तितम् । पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥ विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् । भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे विष्णोर्द्दिव्यसहस्रनामकथने जनपञ्चाशदधिकशततोऽध्यायः ॥ १४९ ॥

---

युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद । किं जप्यं जपतो नित्यं भवेद्धर्म्मफलं महत् ॥ १ ॥ प्रस्थाने वा प्रवेशे वा प्रवृत्ते वापि कर्म्मणि । दैवे वा श्राद्धकाले वा किं जप्यं कर्म्मसाधनम् ॥ २ ॥ शान्तिकं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनम् । जप्यं यद्ब्रह्मसमितं तद्भवान् वक्तुमर्हति ॥ ३ ॥

भीष्म उवाच । व्यासप्रोक्तमिमं मन्त्रं शृणुष्वैकमना नृप । सावित्र्या विहितं दिव्यं सद्यः पापविमोचनम् ॥ ४ ॥ शृणु मन्त्रविधिं कृत्स्नं प्रोच्यमानं मयानघ । यं श्रुत्वा पाण्डवश्रेष्ठ सर्व्वपापैः प्रमुच्यते ॥ ५ ॥ रात्रावहनि धर्म्मज्ञ जपन् पापैर्न लिप्यते । तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ६ ॥ आयुष्मान् भवते चैव यं श्रुत्वा पार्थिवात्मज । पुरुषस्तु सुसिद्धार्थः प्रेत्य चेह च मोदते ॥ ७ ॥ सेवितं सततं राजन् पुरा राजर्षिसत्तमैः । क्षत्रधर्म्मपरैर्न्नित्यं सत्यव्रतपरायणैः ॥ ८ ॥ इदमाह्निकमव्यग्रं कुर्व्वद्भिर्नियतैः सदा । नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा ॥ ९ ॥ नमो वशिष्ठाय महाव्रताय पराशरं वेदनिधिं प्रणम्य । नमोऽस्त्वनन्ताय महोरगाय नमोऽस्तु सिद्धेभ्य इहाक्षयेभ्यः ॥ १० ॥ नमोऽस्त्वृषिभ्यः परमं परेषां देवेषु देवं वरदं वराणाम् । सहस्रशीर्षाय नमः शिवाय सहस्रनामाय जनार्द्दनाय ॥ ११ ॥ अजैक-

पादहिर्बुध्न्यः पिनाकी चापराजितः। ऋतश्च पितृरूपश्च त्र्यम्बकश्च महेश्वरः ॥ १२ ॥ वृषाकपिश्च शम्भुश्च हवनोऽथेश्वरस्तथा। एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः। शतमेतत् समाम्नातं शतरुद्रे महात्मनाम् ॥ १३ ॥ अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः। तथा धाताऽर्यमा चैव जयन्तो भास्करस्तथा ॥ १४ ॥ त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते। इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः ॥ १५ ॥ धरो ध्रुवश्च सोमश्च सावित्रोऽथानिलोऽनलः। प्रत्युषश्च प्रभावश्च वासवोऽष्टौ प्रकीर्त्तिताः ॥ १६ ॥ नासत्यश्चापि दस्रश्च स्मृतौ द्वावश्विनावपि। मार्त्तण्डस्यात्मजावेतौ संज्ञानासाविनिर्गतौ ॥ १७ ॥ अतः परं प्रवक्ष्यामि लोकानां कर्म्मसाक्षिणः। अपि यज्ञस्य वेत्तारो दत्तस्य सुकृतस्य च ॥ १८ ॥ अदृश्याः सर्वभूतेषु पश्यन्ति त्रिदशेश्वराः। शुभाशुभानि सर्वाणि मृत्युः कालश्च सर्वशः ॥ १९ ॥ विश्वेदेवाः पितृगणा मूर्त्तिमन्तस्तपोधनाः। मुनयश्चैव सिद्धाश्च तपोमोक्षपरायणाः ॥ २० ॥ शुचिस्मिताः कीर्त्तयतां प्रयच्छन्ति शुभं नृणाम्। प्रजापतिकृतानेतान् लोकान् दिव्येन तेजसा ॥ २१ ॥ वसन्ति सर्वलोकेषु प्रयताः सर्वकर्म्मसु। प्राणानामीश्वरानेतान् कीर्त्तयन् प्रयतो नरः ॥२२॥ धर्मार्थकामैर्विपुलैर्युज्यते सह नित्यशः। लोकांश्च लभते पुण्यान् विश्वेश्वरकृतान् शुभान् ॥ २३ ॥ एते देवास्त्रयस्त्रिंशत् सर्वभूतगणेश्वराः। नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः ॥ २४॥ ईश्वराः सर्वलोकानां गणेश्वरविनायकाः। सौम्या रौद्रगणाश्चैव योगभूतगणास्तथा ॥ २५ ॥ ज्योतींषि सरितो व्योम सुपर्णः पतगेश्वरः। पृथिव्यां तपसा सिद्धाः स्थावराश्च चराश्च ह ॥२६॥ हिमवान् गिरयः सर्वे चत्वारश्च महार्णवाः। भवस्यानुचराश्चैव हरतुल्यपराक्रमाः ॥ २७ ॥ विष्णुर्देवोऽथ जिष्णुश्च स्कन्दश्चाम्बिकया सह। कीर्त्तयन् प्रयतः सर्वान् सर्वपापैः प्रमुच्यते ॥ २८ ॥

अत ऊर्द्धं प्रवच्यामि मानवानृषिसत्तमान्। यवक्रीतश्च रैभ्यश्च अर्वावसुपरावसू ॥ २९ ॥ औशीजश्चैव काचीवान् बलश्चाङ्गिरसः सुतः। ऋषिर्मेधातिथिः पुत्रः कण्वो बर्हिषदस्तथा ॥ ३० ॥ ब्रह्मतेजोमयाः सर्वे कीर्त्तिता लोकभावनाः। लभन्ते हि शुभं सर्वे रुद्रानलवसुप्रभाः ॥ ३१ ॥ भुवि कृत्वा शुभं कर्म्म मोदन्ते दिवि दैवतैः। महेन्द्रगुरवः सप्त प्राचीं वै दिशमाश्रिताः ॥ ३२ ॥ प्रयतः कीर्त्तयन्नेतान् शक्रलोके महीयते ॥ ३३ ॥ उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्य्यवान्। दृढ़व्यश्चोर्द्धबाहुश्च तृणसोमोऽङ्गिरास्तथा ॥ ३४ ॥ मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान्। धर्म्मराजर्त्विजः सप्त दक्षिणां दिशमाश्रिताः ॥ ३५ ॥ दृढ़ेयुश्च ऋतेयुश्च परिव्याधश्च कीर्त्तिमान्। एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ ३६ ॥ अत्रेः पुत्रश्च धर्म्मात्मा ऋषिः सारस्वतस्तथा। वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः ॥ ३७ ॥ अत्रिर्वशिष्ठो भगवान् कश्यपश्च महानृषिः। गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ ३८ ॥ ऋचीकतनयश्चोग्रो जमदग्निः प्रतापवान्। धनेश्वरस्य गुरवः सप्तैते उत्तराश्रिताः ॥ ३९ ॥ अपरे मुनयः सप्त दिक्षु सर्वास्वधिष्ठिताः। कीर्त्तिस्वस्तिकरा नृणां कीर्त्तिता लोकभावनाः ॥ ४० ॥ धर्म्मः कामश्च कालश्च वसुर्वासुकिरेव च। अनन्तः कपिलश्चैव सप्तैते धरणीधराः ॥ ४१ ॥ रामो व्यासस्तथा द्रौणिरश्वत्थामा च लोमशः। इत्येते मुनयो दिव्या एकैकः सप्त सप्तधा ॥ ४२ ॥ शान्तिस्वस्तिकरा लोके दिशांपालाः प्रकीर्त्तिताः। यस्यां यस्यां दिशि ह्येते तन्मुखः शरणं व्रजेत् ॥ ४३ ॥ स्रष्टारः सर्वभूतानां कीर्त्तिता लोकपावनाः। सम्वर्त्तो मेरुसावर्णो मार्कण्डेयश्च धार्मिकः ॥ ४४ ॥ साङ्ख्ययोगी नारदश्च दुर्वासाश्च महानृषिः। अत्यन्ततपसो दान्तास्त्रिषु लोकेषु विश्रुताः ॥ ४५ ॥ अपरे रुद्रसङ्काशाः कीर्त्तिता ब्रह्मलौकिकाः। अपुत्रो लभते पुत्रं

दरिद्रो लभते धनम्॥ ४६॥ तथा धर्मार्थकामेषु सिद्धिञ्च लभते नरः। पृथुं वैण्यं नृपवरं पृथ्वी यस्याभवत् सुता॥ ४७॥ प्रजापतिं सार्वभौमं कीर्त्तयेद्वसुधाधिपम्। आदित्यवंशप्रभवं महेन्द्रसमविक्रमम्॥ ४८॥ पुरूरवसमैलञ्च त्रिषु लोकेषु विश्रुतम्। बुधस्य दयितं पुत्रं कीर्त्तयेद्वसुधाधिपम्॥ ४९॥ त्रिलोकविश्रुतं वीरं भरतञ्च प्रकीर्त्तयेत्। गवामयेन यज्ञेन येनेष्टं वै कृते युगे॥ ५०॥ रन्तिदेवं महादेवं कीर्त्तयेत् परमद्युतिम्। विश्वजित्तपसोपेतं लक्षण्यं लोकमङ्गलम्॥ ५१॥ तथा श्वेतञ्च राजर्षिं कीर्त्तयेत् परमद्युतिम्। स्थाणुः प्रसादितो येन यस्यार्थे ह्यन्धको हतः॥ ५२॥ महादेवप्रसादेन येन गङ्गावतारिता। भगीरथञ्च राजर्षिं कीर्त्तयेत् परमद्युतिम्॥ ५३॥ सगरस्यात्मजा येन प्लावितास्तारितास्तथा। हुताशनसमानेतान्महारूपान्महौजसः॥ ५४॥ उग्रकायान्महासत्त्वान् कीर्त्तयेत् कीर्त्तिवर्द्धनान्। देवानृषिगणांश्चैव नृपांश्च जगदीश्वरान्॥ ५५॥ साङ्ख्यं योगञ्च परमं हव्यं कव्यं तथैव च। कीर्त्तितं परमं ब्रह्म सर्वश्रुतिपरायणम्॥ ५६॥ मङ्गल्यं सर्वभूतानां पवित्रं बहुकीर्त्तितम्। व्याधिप्रशमनं श्रेष्ठं पौष्टिकं सर्वकर्म्मणाम्॥ ५७॥ प्रयतः कीर्त्तयेच्चैतान् कल्यं सायञ्च भारत। एते वै पान्ति वर्षन्ति भान्ति वान्ति सृजन्ति च॥ ५८॥ एते विनायकाः श्रेष्ठा दक्षाः शान्ता जितेन्द्रियाः। नराणामशुभं सर्वं व्यपोहन्ति प्रकीर्त्तिताः॥ ५९॥ साक्षिभूता महात्मानः पापस्य सुकृतस्य च। एतान् वै कल्यमुत्थाय कीर्त्तयन् शुभमश्नुते॥ ६०॥ नाग्निचौरभयं तस्य न मार्गप्रतिरोधनम्। एतान् कीर्त्तयतां नित्यं दुःस्वप्नो नश्यते नृणाम्॥ ६१॥ मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान् व्रजेत्। दीक्षाकालेषु सर्वेषु यः पठेन्नियतो द्विजः॥ ६२॥ न्यायवानात्मनिरतः क्षान्तो दान्तोऽनसूयकः। रोगार्त्तो व्याधियुक्तो वा पठन् पापात्

प्रमुच्यते ॥ ६३ ॥ वास्तुमध्ये तु पठतः कुलस्वस्त्ययनं भवेत् । क्षेत्रमध्ये तु पठतः सर्व्वंशस्यं प्ररोहति ॥ ६४ ॥ गच्छतः क्षेम-मध्वानं ग्रामान्तरगतः पठन् । आत्मनश्च सुतानाञ्च दाराणाञ्च धनस्य च ॥ ६५ ॥ बीजानामोषधीनाञ्च रक्षामेतां प्रयोजयेत् । एतान् संग्रामकाले तु जपतः क्षत्रियस्य ह ॥ ६६ ॥ गच्छन्ति रिपवो नाशं क्षेमञ्च परिवर्त्तते । एतान् दैवे च पित्र्ये च पठतः पुरुषस्य हि ॥ ६७ ॥ भुञ्जते पितरो हव्यं कव्यञ्च त्रिदिवौकसः । न व्याधिश्वापदभयं न द्विपान्न च तस्करात् ॥ ६८ ॥ कश्मलं लघुतां याति पाप्मना च प्रमुच्यते । यानपात्रे च याने च प्रवासे राजवेश्मनि ॥ ६९ ॥ परां सिद्धिमवाप्नोति सावित्रीं ह्युत्तमां पठन् । नाग्निर्दहति काष्ठानि सावित्री यत्र पठ्यते ॥ ७० ॥ न तत्र बालो म्रियते न च तिष्ठन्ति पन्नगाः । न च राजभयं तेषां न पिशाचान्न राक्षसात् ॥ ७१ ॥ नाग्न्यम्बुपवनाद्व्यालाद्भयं तस्यो-पजायते । चतुर्णामपि वर्णानामाश्रमस्य विशेषतः ॥ ७२ ॥ करोति सततं शान्तिं सावित्रीमुत्तमां पठन् । न तेषां विद्यते दुःखं गच्छन्ति परमां गतिम् ॥ ७३ ॥ ये शृण्वन्ति महद्ब्रह्म सावित्रीगुणकीर्त्तनम् । गवां मध्ये तु पठतो गावोऽस्य बहुवत्सलाः ॥ ७४ ॥ प्रस्थाने वा प्रवेशे वा सर्व्वावस्थां गतः पठेत् । जपतां जुह्वताञ्चैव नित्यञ्च प्रयतात्मनाम् ॥ ७५ ॥ ऋषीणां परमं जप्यं गुह्यमेतन्नराधिप । याथातथ्येन सङ्गम्य इतिहासं पुरातनम् ॥ ७६ ॥ पराशरमतं दिव्यं शक्राय कथितं पुरा । तदेतत्ते समाख्यातं तथ्यं ब्रह्मसनातनम् ॥ ७७ ॥ हृदयं सर्व्वभूतानां श्रुति-रेषा सनातनी । सोमादित्यान्वयाः सर्व्वे राघवाः कुरवस्तथा ॥ ७८ ॥ पठन्ति शुचयो नित्यं सावित्रीं परमां गतिम् । अभ्यासे नित्यं देवानां सप्तर्षीणां ध्रुवस्य च । मोक्षणं सर्व्वकृच्छ्राणां मोचय-त्यशुभात् सदा ॥ ७९ ॥ वृद्धैः काश्यपगोतमप्रभृतिभिर्भृग्वङ्गिरो-

त्र्यादिभिः शुक्रागस्त्यबृहस्पतिप्रभृतिभिर्ब्रह्मर्षिभिः सेवितम्। भारद्वाजमतं ऋचीकतनयैः प्राप्तं वशिष्ठात् पुनः सावित्रीमधिगम्य शक्रवसुभिः कृत्स्ना जिता दानवाः॥ ८०॥ यो गोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषेऽथ बहुश्रुताय। दिव्याञ्च भारतकथां कथयेच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव ॥ ८१॥ धर्मो विवर्द्धति भृगोः परिकीर्त्तनेन वीर्य्यं विवर्द्धति वशिष्ठ नमो नतेन। संग्रामजिद्भवति चैव रघुं नमस्यन् स्यादश्विनौ च परिकीर्त्तयतो न रोगः॥ ८२॥ एषा ते कथिता राजन् सावित्रीब्रह्म शाश्वती। विवक्षुरसि यच्चान्यत्तत्ते वक्ष्यामि भारत॥ ८३॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे सावित्रीव्रतकथने पञ्चाशदधिकशतोऽध्यायः॥ १५०॥

---

युधिष्ठिर उवाच। के पूज्याः के नमस्कार्य्याः कथं वर्त्तेत केषु च। किमाचारः कीदृशेषु पितामह न रिष्यते॥ १॥

भीष्म उवाच। ब्राह्मणानां परिभवः सादयेदपि देवताः। ब्राह्मणानां नमस्कृत्य युधिष्ठिर न रिष्यते॥ २॥ ते पूज्यास्ते नमस्कार्य्या वर्त्तेथास्तेषु पुत्रवत्। ते हि लोकानिमान् सर्वान् धारयन्ति मनीषिणः॥ ३॥ ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः। धनत्यागाभिरामाश्च वाक् संयमरताश्च ये॥ ४॥ रमणीयाश्च भूतानां निधानञ्च धृतव्रताः। प्रणेतारश्च लोकानां शास्त्राणाञ्च यशस्विनः॥ ५॥ तपो येषां धनं नित्यं वाक् चैव विपुलं बलम्। प्रभवश्चैव धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः॥ ६॥ धर्मकामाः स्थिता धर्मे सुकृते धर्मसेतवः। यान् समाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः॥ ७॥ पन्थानः सर्वनेतारो यज्ञ-

वाहाः सनातनाः । पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ॥ ८ ॥
धुरि ये नावसीदन्ति विषमे सद्गवा इव । पितृदेवातिथिमुखा
हव्यकव्याग्रभोजिनः ॥ ९ ॥ भोजनादेव लोकांस्त्रींस्त्रायन्ते महतो
भयात् । दीपः सर्व्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ॥ १० ॥ सर्व्व-
शिक्षाश्रुतिधना निपुणा सूक्ष्मदर्शिनः । गतिज्ञाः सर्व्वलोकाना-
मध्यात्मगतिचिन्तकाः ॥ ११ ॥ आदिमध्यावसानानां ज्ञातारश्छिन्न-
संशयाः । परावरविशेषज्ञा गन्तारः परमां गतिम् ॥ १२ ॥
विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः । मानार्हा मानिता
नित्यं ज्ञानविद्भिर्म्महात्मभिः ॥ १३ ॥ चन्दने मलपङ्के च भोजनेऽ-
भोजने समाः । समं येषां दुकूलञ्च तथाक्षौमाजिनानि च ॥ १४ ॥
तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि । शोषयेयुश्च गात्राणि
स्वाध्याये संयतेन्द्रियाः ॥ १५ ॥ अदैवं दैवतं कुर्य्युर्द्दैवतं वाप्य-
दैवतम् । लोकानन्यान् सृजेयुस्ते लोकपालांश्च कोपिताः ॥ १६ ॥
अपेयः सागरो येषामपि शापान्महात्मनाम् । येषां कोपाग्नि-
रद्यापि दण्डके नोपशाम्यति ॥ १७ ॥ देवानामपि ये देवाः कारणं
कारणस्य च । प्रमाणस्य प्रमाणञ्च कस्तानभिभवेद्बुधः ॥ १८ ॥
येषां वृद्धश्च बालश्च सर्व्वः सम्मानमर्हति । तपोविद्याविशेषात्तु
मानयन्ति परस्परम् ॥ १९ ॥ अविद्वान् ब्राह्मणो देवः पात्रं वै
पावनं महत् । विद्वान् भूतस्ततो देवः पूर्णसागरसन्निभः ॥ २० ॥
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च
यथाग्निर्द्दैवतं महत् ॥ २१ ॥ श्मशाने ह्यपि तेजस्वी पावको नैव
दुष्यते । हविर्यज्ञे च विधिवत् गृह एव विशोभते ॥ २२ ॥ एवं
यद्यप्यनिष्टेषु वर्त्तते सर्व्वकर्म्मसु । सर्व्वथा ब्राह्मणो मान्यो दैवतं
विद्धि तत् परम् ॥ २३ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे ब्राह्मण-
प्रशंसायां एकपञ्चाशदधिकशततोऽध्यायः ॥ १५१ ॥

युधिष्ठिर उवाच। कान्तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा नराधिप। कं वा कर्मोदयं मत्वा तानर्चसि महामते॥ १॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। पवनस्य च सम्वादमर्जुनस्य च भारत॥ २॥ सहस्रभुजभृत् श्रीमान् कार्त्तवीर्य्योऽभवत् प्रभुः। अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः॥ ३॥ स तु रत्नाकरवतीं सद्वीपां सागराम्बराम्। शशास पृथिवीं सर्वां हैहयः सत्यविक्रमः॥ ४॥ स्ववित्तं येन दत्तन्तु दत्तात्रेयाय कारणे। क्षत्रधर्म्मं पुरस्कृत्य विनयं श्रुतमेव च॥ ५॥ आराधयामास च तं कृतवीर्य्यात्मजो मुनिम्। न्यमन्त्रयत सन्तुष्टो द्विजश्चैनं वरैस्त्रिभिः॥ ६॥ स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत्। सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा॥ ७॥ मम बाहुसहस्रन्तु पश्यन्तां सैनिका रणे। विक्रमेण महीं कृत्स्नां जयेयं संशितव्रतः॥ ८॥ ताञ्च धर्म्मेण संप्राप्य पालयेयमतन्द्रितः। चतुर्थन्तु वरं याचे त्वामहं द्विजसत्तम॥ ९॥ तं ममानुग्रहकृते दातुमर्हस्यनिन्दित। अनुशासन्तु मां सन्तो मिथ्योद्वृत्तं त्वदाश्रयम्॥ १०॥ इत्युक्तः स द्विजः प्राह तथास्त्विति नराधिपम्। एवं समभवंस्तस्य वरास्ते दीप्ततेजसः॥ ११॥ ततः स रथमास्थाय ज्वलनार्कसमद्युतिम्। अब्रवीत् वीर्य्यसम्मोहात् को न्वस्ति सदृशो मम॥ १२॥ धैर्य्ये वीर्य्ये यशःशौर्य्ये विक्रमेणौजसापि वा। तद्वाक्यान्तेऽन्तरिक्षे वै वाग्ववाचाशरीरिणी॥१३॥ न त्वं मूढ़ विजानीषे ब्राह्मणं क्षत्रियाद्वरम्। सहितो ब्राह्मणेनेह क्षत्रियः शास्ति वै प्रजाः॥ १४॥

अर्जुन उवाच। कुर्य्यां भूतानि तुष्टोऽहं क्रुद्धो नाशन्तथा नये। कर्म्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः॥ १५॥ पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः। त्वयोक्तौ हेतुयुक्तौ तौ विशेषस्तत्र दृश्यते॥ १६॥ ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं

ब्राह्मणाश्रितम् । श्रिता ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान् भुवि ॥ १७ ॥ क्षत्रियेष्वाश्रितो धर्म्मः प्रजानां परिपालनम् । क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ॥ १८ ॥ सर्व्वभूतप्रधानांस्तान् भैक्ष्यवृत्तीनहं सदा । आत्मसम्भावितान् विप्रान् स्थापयाम्यात्मनो वशे ॥ १९ ॥ कथितं ह्यनया सत्यं गायत्र्या कन्यया दिवि । विजेष्याम्यवशान् सर्व्वान् ब्राह्मणांश्चर्म्मवाससः ॥२०॥ न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन । देवो वा मानुषो वापि तस्माज्ज्येष्ठो द्विजादहम् ॥ २१ ॥ अथ ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् । न हि मे संयुगे कश्चित् सोढुमुत्सहते बलम् ॥ २२ ॥ अर्ज्जुनस्य वचः श्रुत्वा वित्रस्ताभून्निशाचरी । अथैनमन्तरीक्षस्थस्ततो वायुरभाषत ॥ २३ ॥ त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु । एतेषां कुर्व्वतः पापं राष्ट्रक्षोभो भविष्यति ॥२४॥ अथ वा त्वां महीपालं शमयिष्यन्ति वै द्विजाः । निरसिष्यन्ति ते राष्ट्राद्धतोत्साहं महाबलाः ॥ २५ ॥ तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः । वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् ॥ २६ ॥

अर्ज्जुन उवाच । अहो त्वयाद्य विप्रेषु भक्तिरागः प्रदर्शितः । यादृशं पृथिवी भूतं तादृशं ब्रूहि वै द्विजम् ॥ २७ ॥ वायोर्वा सदृशं किञ्चिद्ब्रूहि त्वं ब्राह्मणोत्तमम् । अपां वै सदृशं वह्निः सूर्य्यस्य नभसोऽपि वा ॥ २८ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे पवनार्ज्जुनसम्वादे द्विपञ्चाशदधिकशततोऽध्यायः ॥ १५२ ॥

---

वायुरुवाच । शृणु मूढ़ गुणान् कांश्चिद्ब्राह्मणानां महात्मनाम् । ये त्वया कीर्त्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः ॥ १ ॥

त्यक्त्वा महीत्वं भूमिस्तु स्पर्द्धयाङ्गनृपस्य ह । नाशं जगाम तां विप्रो व्यष्टम्भयत कश्यपः ॥ २ ॥ अजेया ब्राह्मणा राजन् दिवि चेह च नित्यदा । अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा ॥३॥ स ताः पिबन् क्षीरमिव नातृप्यत महामनाः । अपूरयन् महौघेन महीं सर्वाञ्च पार्थिव ॥ ४ ॥ तस्मिन्नहञ्च क्रुद्धे वै जगत्त्यक्त्वा ततो गतः । व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात् ॥ ५ ॥ अथ शप्तश्च भगवान् गौतमेन पुरन्दरः । अहल्यां कामयानो वै धर्मार्थञ्च न हिंसितः ॥ ६ ॥ यथा समुद्रो नृपते पूर्णो मृष्टेन वारिणा । ब्राह्मणैरभिशप्तः सन् बभूव लवणोदकः ॥ ७ ॥ सुवर्णवर्णो निर्धूमः सङ्गतोर्द्धशिखः कविः । क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्ज्जितः ॥ ८ ॥ मरुतश्चूर्णितान् पश्य ये ह्यासन्त महोदधिम् । सुवर्णधारिणा नित्यमवशप्तान् द्विजातिना ॥ ९ ॥ समो न त्वं द्विजातिभ्यः श्रेयो विद्धि नराधिप । गर्भस्थान् ब्राह्मणान् सम्यङ्नमस्यति किल प्रभुः ॥ १० ॥ दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम् । तालजङ्घं महाक्षत्रमौर्व्वेणैकेन नाशितम् ॥ ११ ॥ त्वया च विपुलं राज्यं बलं धर्मं श्रुतं तथा । दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् ॥ १२ ॥ अग्निं त्वं यजसे नित्यं कस्माद्ब्राह्मणमर्जुन । स हि सर्वस्य लोकस्य हव्यवाट् किं न वेत्सि तम् ॥ १३ ॥ अथ वा ब्राह्मणश्रेष्ठमनुभूतानुपालकम् । कर्त्तारं जीवलोकस्य कस्माज्जानन् विमुह्यसे ॥ १४ ॥ तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभुरव्ययः । येनेदं निखिलं विश्वं जनितं स्थावरं चरम् ॥१५॥ अण्डजातन्तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः । अण्डाद्भिन्नाद्बभुः शैला दिशोऽम्भः पृथिवी दिवम् ॥ १६ ॥ द्रष्टव्यं नैतदेवं हि कथं जायेदजो हि सः । स्मृतमाकाशमण्डन्तु तस्माज्जातः पितामहः ॥ १७ ॥ तिष्ठेत् कथमिति ब्रूहि न किञ्चिद्धि तदा भवेत् । अहङ्कार इति प्रोक्तः सर्वतेजोगतः प्रभुः ॥ १८ ॥ तस्याण्डा-

दुत्थितो ब्रह्मा स राजन् लोकभावनः । इत्युक्तः स तदा तूष्णी-
मभूद्वायुस्ततोऽब्रवीत् ॥ १९ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे पव-
नार्जुनसंवादे त्रिपञ्चाशदधिकशततोऽध्यायः ॥ १५३ ॥

---

वायुरुवाच । इमां भूमिं द्विजातिभ्यो दित्सुर्वै दक्षिणां पुरा ।
अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ ॥ १ ॥ धारणीं
सर्व्वभूतानामयं प्राप्य वरो नृपः । कथमिच्छति मां दातुं द्विजेभ्यो
ब्रह्मणः सुताम् ॥ २ ॥ साहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः
पदम् । अयं सराष्ट्रो नृपतिर्माभूदिति ततोऽगमत् ॥ ३ ॥ ततस्तां
कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा । प्रविवेश महीं सद्यो मुक्त्वा-
त्मानं समाहितः ॥ ४ ॥ ऋद्धा सा सर्व्वतो यज्ञे तृणौषधिसम-
न्विता । धर्म्मोत्तरा नष्टभया भूमिरासीत्ततो नृप ॥ ५ ॥ एवं
वर्षसहस्राणि दिव्यानि सततं नृप । त्रिंशतः काश्यपी राजन्
भूमिरासीदतन्द्रिता ॥ ६ ॥ अथागम्य महाराज नमस्कृत्य च
कश्यपम् । पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः ॥ ७ ॥
एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत् । अन्यं प्रब्रूहि वा
त्वञ्च कश्यपात् क्षत्रियं वरम् ॥ ८ ॥ तूष्णीं बभूव नृपतिः पवन-
स्त्वब्रवीत् पुनः । शृणु राजन्नुतथ्यस्य जातस्याङ्गिरसे कुले ॥९॥
भद्रा सोमस्य दुहिता रूपेण परमा मता । यस्यास्तुल्यं पतिं
सोम उतथ्यं समपश्यत ॥ १० ॥ सा च तीव्रं तपस्तेपे महाभागा
यशस्विनी । उतथ्यार्थे तु चार्व्वङ्गी परं नियममास्थिता ॥ ११ ॥
तत आहूय सोतथ्यं ददावत्रिर्यशस्विनीम् । भार्य्यार्थे स तु
जग्राह विधिवत् भूरिदक्षिणः ॥ १२ ॥ तान्त्वकामयत श्रीमान्
वरुणः पूर्व्वमेव ह । स चागम्य वनप्रस्थं यमुनायां जहार ताम्

॥ १३ ॥ जलेश्वरस्तु हृत्वा तामनयत् स्वपुरं प्रति। परमाद्भुतसङ्काशं षट्सहस्रशतं ह्रदम् ॥ १४ ॥ न हि रम्यतरं किञ्चित्तस्मादन्यत् पुरोत्तमम्। प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम् ॥ १५ ॥ तत्र देवस्तया सार्द्धं रेमे राजन् जलेश्वरः। अथाख्यातमुतथ्याय ततः पत्न्यवमर्द्दनम्। तत्श्रुत्वा नारदात् सर्वमुतथ्यो नारदं तदा ॥ १६ ॥ प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः। मद्वाक्यान्मुञ्च मे भार्य्यां कस्मात्तां हृतवानसि ॥ १७ ॥ लोकपालोऽसि लोकानां न लोकस्य विलुम्पकः। सोमेन दत्ता मे भार्य्या त्वया चापहृताद्य वै ॥ १८ ॥ इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः। मुञ्च भार्य्यामुतथ्यस्य कस्मात्त्वं हृतवानसि ॥ १९ ॥ इति श्रुत्वा वचस्तस्य ततस्तं वरुणोऽब्रवीत्। ममैषा सुप्रिया भीरुर्नैनामुत्स्रष्टुमुत्सहे ॥ २० ॥ इत्युक्तो वरुणेनाथ नारदः प्राप्य वै मुनिम्। उतथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव ॥ २१ ॥ गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने। न प्रयच्छति ते भार्य्यां यत्ते कार्य्यं कुरुष्व तत् ॥ २२ ॥ नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः। अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः ॥ २३ ॥ पीयमाने तु सर्वस्मिंस्तोये वै सलिलेश्वरः। सुहृद्भिः क्षोभ्यमाणो वै नैवामुञ्चत तां तदा ॥ २४ ॥ ततः क्रुद्धोऽब्रवीद्भूमिमुतथ्यो ब्राह्मणोत्तमः। दर्शयस्व स्थलं भद्रे षट्सहस्रशतं ह्रदम् ॥ २५ ॥ ततस्तदीरिणं जातं समुद्रश्चावसर्पितः। तस्माद्देशान्नदीञ्चैव प्रोवाचासौ द्विजोत्तमः ॥ २६ ॥ अदृश्या गच्छ भीरु त्वं सरस्वति मरून् प्रति। अपुण्य एष भवतु देशस्त्यक्तस्त्वया शुभे ॥ २७ ॥ तस्मिन् संशोषिते देशे भद्रमादाय वारिपः। अददात् शरणं गत्वा भार्य्यामाङ्गिरसाय वै ॥ २८ ॥ प्रतिगृह्य तु तां भार्य्यामुतथ्यः सुमनाभवत्। मुमोच च जगद्दुःखाद्वरुणञ्चैव हैहय ॥ २९ ॥ ततः स लब्ध्वा तां भार्य्यां वरुणं प्राह धर्म्मवित्।

उतथ्यः सुमहातेजा यत्तत् शृणु नराधिप ॥ ३० ॥ ममैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप । इत्युक्का तामुपादाय स्वमेव भवनं ययौ ॥ ३१ ॥ एष राजन्नीदृशो वै उतथ्यो ब्राह्मणोत्तमः । ब्रवीम्यहं ब्रूहि वा त्वमुतथ्यात् चत्रियं वरम् ॥ ३२ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे पवनार्जुनसंवादे चतुःपञ्चाशदधिकशततोऽध्यायः ॥ १५४ ॥

---

भीष्म उवाच । इत्युक्तः स नृपस्तूष्णीमासीद्वायुस्ततोऽब्रवीत् । शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य च ॥ १ ॥ असुरैर्न्निर्ज्जिता देवा निरुत्साहाश्च ते कृताः । यज्ञाश्चैषां हृताः सर्व्वे पितॄणाञ्च स्वधा तथा ॥ २ ॥ कर्म्मेज्या मानवानाञ्च दानवैर्हैहयर्षभ । भ्रष्टैश्वर्य्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः ॥ ३ ॥ ततः कदाचित् ते राजन् दीप्तमादित्यवर्च्चसम् । ददृशुस्तेजसा युक्तमगस्त्यं विपुलव्रतम् ॥ ४ ॥ अभिवाद्य तु तं देवाः पृष्ट्वा कुशलमेव च । इदमूचुर्म्महात्मानं वाक्यं काले जनाधिप ॥ ५ ॥ दानवैर्युधि भग्नाः स्म तथैश्वर्य्याच्च भ्रंशिताः । तदस्मान्नो भयात्तीव्रात्त्राहि त्वं मुनिपुङ्गव ॥ ६ ॥ इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत् । प्रजज्वाल च तेजस्वी कालाग्निरिव सङ्क्षये ॥ ७ ॥ तेन दीप्तांशुजालेन निर्द्दग्धा दानवास्तदा । अन्तरीक्षान्महाराज निपेतुस्ते सहस्रशः ॥ ८ ॥ दह्यमानास्तु दैत्यास्ते तदागस्त्यस्य तेजसा । उभौ लोकौ परित्यज्य ययुः काष्ठान्तु दक्षिणाम् ॥ ९॥ बलिस्तु यजते यज्ञमश्वमेधं महीं गतः । येऽन्येऽधःस्था महीस्थाश्च तेन दग्धा महासुराः ॥ १० ॥ ततो लोकाः पुनः प्राप्ताः सुरैः शान्तभयैर्न्नृप । अथैनमब्रुवन् देवा भूमिष्ठानसुरान् जहि ॥ ११ ॥ इत्युक्तः प्राह वै देवान्न शक्तोऽस्मि महीगतान् । दग्धुं

तपो हि क्षीयेन्मे न गच्छामीति पार्थिव ॥ १२ ॥ एवं दग्धा भगवता दानवाः स्वेन तेजसा । अगस्त्येन तदा राजन् तपसा भावितात्मना ॥ १३ ॥ ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयानघ । ब्रवीम्यहं ब्रूहि वा त्वमगस्त्यात् क्षत्रियं वरम् ॥ १४ ॥

भीष्म उवाच । इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् । शृणु राजन् वशिष्ठस्य मुख्यं कर्म्म यशस्विनः ॥ १५ ॥ आदित्याः सत्रमासन्त सरो वैखानसं प्रति । वशिष्ठं मनसा गत्वा ज्ञात्वा तत्तस्य गौरवम् ॥ १६ ॥ यजमानांस्तु तान् दृष्ट्वा सर्वान् दीक्षानुकर्षितान् । हन्तुमैच्छन्त शैलाभाः खलिनो नाम दानवाः ॥१७॥ अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः । हताहता वै तत्रैते जीवन्त्याप्लुत्य दानवाः ॥ १८ ॥ ते प्रगृह्य महाघोरान् पर्वतान् परिघान् द्रुमान् । व्यक्षोभयन्त सलिलमुत्थितं शतयोजनम् ॥१९॥ अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव हि । ततस्तैर्बाधिता देवाः शरणं वासवं ययुः ॥ २० ॥ स च तैर्व्यथितः शक्रो वशिष्ठं शरणं ययौ । ततोऽभयं ददौ तेभ्यो वशिष्ठो भगवानृषिः ॥ २१ ॥ तदा तान् दुःखितान् ज्ञात्वा आनृशंस्यपरो मुनिः । अयत्नेनादहत् सर्वान् खलिनः स्वेन तेजसा ॥ २२ ॥ कैलासं प्रस्थिताञ्चैव नदीं गङ्गां महातपाः । आनयत्तत् सरो दिव्यं तया भिन्नञ्च तत् सरः ॥ २३ ॥ सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत् । हताश्च खलिनो यत्र स देशः खलिनोऽभवत् ॥ २४ ॥ एवं सेन्द्रा वशिष्ठेन रक्षितास्त्रिदिवौकसः । ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना ॥ २५ ॥ एतत् कर्म्म वशिष्ठस्य कथितं हि मयानघ । ब्रवीम्यहं ब्रूहि वा त्वं वशिष्ठात् क्षत्रियं वरम् ॥ २६ ॥

इत्यनुशासनपर्व्वणि अनुशासनिकपर्व्वणि दानधर्म्मे पवनार्जुनसंवादे पञ्चपञ्चाशदधिकशतोऽध्यायः ॥ १५५ ॥

---

भीष्म उवाच । इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् । शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः ॥ १ ॥ घोरे तमस्य-युध्यन्त सहिता देवदानवाः । अविध्यत शरैस्तत्र स्वर्भानुः सोम-भास्करौ ॥ २ ॥ अथ ते तमसा ग्रस्ता निहन्यन्त स्म दानवैः । देवा नृपतिशार्दूल सहैव बलिभिस्तदा ॥ ३ ॥ असुरैर्बध्यमानास्ते क्षीणप्राणा दिवौकसः । अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनम् ॥ ४ ॥ अथैनमब्रुवन् देवाः शान्तक्रोधं जितेन्द्रियम् । असुरै-रिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ ॥ ५ ॥ वयं बध्यामहे चापि शत्रुभिस्तमसावृते । नाधिगच्छाम शान्तिञ्च भयात्त्रायस्व नः प्रभो ॥ ६ ॥

ऋषिरुवाच । कथं रक्ष्यामि भवतस्तेऽब्रुवंश्चन्द्रमा भव । तिमिरघ्नश्च सविता दस्युहन्ता च नो भव ॥ ७ ॥ एवमुक्तस्तदात्रि-र्वै तमोनुदभवच्छशी । अभवत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥ ८ ॥ दृष्ट्वा नातिप्रभं सोमं तथा सूर्य्यञ्च पार्थिव । प्रकाश-मकरोदत्रिस्तपसा स्वेन संयुगे ॥ ९ ॥ जगद्वितिमिरञ्चापि प्रकाश-मकरोत्तदा । व्यजयच्छत्रुसङ्घांश्च देवानां स्वेन तेजसा ॥ १० ॥ अत्रिणा दह्यमानांस्तान् दृष्ट्वा देवा महासुरान् । पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिताः ॥ ११ ॥ उद्भासितश्च सविता देवास्त्राता हतासुराः । अत्रिणा त्वथ सामर्थ्यं कृतमुत्तमतेजसा ॥ १२ ॥ द्विजेनाग्निद्वितीयेन जपता चर्म्मवाससा । फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम् ॥ १३ ॥ अस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः । ब्रवीम्यहं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम् ॥ १४ ॥ इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् । शृणु राजन् महत् कर्म्म च्यवनस्य महात्मनः ॥ १५ ॥ अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम् । प्रोवाच सहितो देवैः सोमपावश्विनौ कुरु ॥ १६ ॥

इन्द्र उवाच । अस्माभिर्वर्ज्जितावेतौ भवेतां सोमपौ कथम् ।

दैवैर्न शंसितावेतौ तस्मान्नैवं वदस्व नः ॥ १७ ॥ अश्विभ्यां सह नेच्छामः सोमं पातुं महाव्रत। यदन्यद्वक्ष्यसे विप्र तत् करिष्याम ते वचः ॥ १८ ॥

च्यवन उवाच। पिबेतामश्विनौ सोमं भवद्भिः सहितावुभौ। उभावेतावपि सुरौ सूर्य्यपुत्रौ सुरेश्वर ॥ १९ ॥ क्रियतां मद्वचो देवा यथा वै समुदाहृतम्। एतद्वः कुर्वतां श्रेयो भवेन्नैतदकुर्वताम् ॥ २० ॥

इन्द्र उवाच। अश्विभ्यां सह सोमं वै न पास्यामि द्विजोत्तम। पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ॥ २१ ॥

च्यवन उवाच। न चेत् करिष्यसि वचो मयोक्तं बलसूदन। मया प्रमथितः सद्यः सोमं पास्यसि वै मखे ॥ २२ ॥

वायुरुवाच। ततः कर्म्म समारब्धं हिताय सहसाश्विनोः। च्यवनेन ततो मन्त्रैरभिभूताः सुराभवन् ॥ २३ ॥ तत्तु कर्म्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः। उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ॥ २४ ॥ तथा वज्रेण भगवानमर्षाकुललोचनः। तमापतन्तं दृष्ट्वैव च्यवनस्तपसान्वितः ॥ २५ ॥ अद्भिः सिक्त्वास्तम्भयत्तं सवज्रं सहपर्वतम्। अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव हि ॥ २६ ॥ मदं नामाहुतिमयं व्यादितास्यं महामुनिः। तस्य दन्तसहस्रन्तु बभूव शतयोजनम् ॥ २७ ॥ द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः। हनुस्तस्याविशद्भूमावेका चास्याविशद्दिवम् ॥ २८॥ जिह्वामूले स्थितास्तस्य सर्व्वे देवाः सवासवाः। तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ॥ २९ ॥ ते संमन्त्र्य ततो देवा मदस्यास्यसमीपगाः। अब्रुवन् सहिताः शक्रं प्रणमास्मै द्विजातये ॥ ३० ॥ अश्विभ्यां सह सोमञ्च पिबामो विगतज्वराः। ततः स प्रणतः शक्रश्चकार च्यवनस्य तत् ॥ ३१ ॥ च्यवनः कृतवानेतावश्विनौ सोमपायिनौ। ततः प्रत्याहरत् कर्म्म मदञ्च

व्यभजन्मुनिः ॥ ३२ ॥ अक्षेषु मृगयायाञ्च पाने स्त्रीषु च वीर्य्यवान्। एतैर्द्दोषैर्नरा राजन् क्षयं यान्ति न संशयः ॥ ३३ ॥ तस्मादेतान्नरो नित्यं दूरतः परिवर्ज्जयेत्। एतत्ते च्यवनस्यापि कर्म्म राजन् प्रकीर्त्तितम् ॥ ३४ ॥ ब्रवीम्यहं ब्रूहि वा त्वं क्षत्रियं ब्राह्मणाद्वरम् ॥ ३५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे पवनार्जुनसम्वादे षट्पञ्चाशदधिकशततोऽध्यायः ॥ १५६ ॥

---

भीष्म उवाच। तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत् पुनः। शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म्म जनाधिप ॥ १ ॥ मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः। तदैव च्यवनेनेह हृता तेषां वसुन्धरा ॥ २ ॥ उभौ लोकौ हृतौ मत्वा ते देवा दुःखिता भृशम्। शोकार्त्ताश्च महात्मानो ब्रह्माणं शरणं ययुः ॥ ३ ॥

देवा ऊचुः। मदास्यव्यतिसिक्तानामस्माकं लोकपूजित। च्यवनेन हृता भूमिः कपैश्चैव दिवं प्रभो ॥ ४ ॥

ब्रह्मोवाच। गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः। प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा ॥ ५ ॥ ते ययुः शरणं विप्रानूचुस्ते कान् जयामहे। इत्युक्तास्ते द्विजान् प्राहुर्ज्जयतेह कपानिति ॥ ६ ॥ भूगतान् हि विजेतारो वयमित्यब्रुवन् द्विजाः। ततः कर्म्म समारब्धं ब्राह्मणैः कपनाशनम्। तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः ॥ ७ ॥ भूगतान् ब्राह्मणानाह धनी कपवचो यथा। भवद्भिः सदृशाः सर्व्वे कपाः किमिह वर्त्तते ॥ ८ ॥ सर्व्वे वेदविदः प्राज्ञाः सर्व्वे च क्रतुयाजिनः। सर्व्वे सत्यव्रताश्चैव सर्व्वे तुल्या महर्षिभिः ॥ ९ ॥ श्रीश्चैव रमते तेषु धारयन्ति श्रियञ्च ते। वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते ॥ १० ॥

दीप्तमग्निं जुह्वति च गुरूणां वचने स्थिताः। सर्व्वे च नियतात्मानो बालानां संविभागिनः॥ ११॥ उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलाम्। स्वर्गतिञ्चैव गच्छन्ति तथैव शुभकर्म्मिणः॥ १२॥ अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु। पूर्व्वाह्णेषु न दीव्यन्ति दिवा चैव न शेरते॥ १३॥ एतैश्चान्यैश्च बहुभिर्युक्तान् कथं कपान्। विजेष्यथ निवर्त्तध्वं निवृत्तानां शुभं हि वः॥ १४॥

ब्राह्मणा ऊचुः। कपान् वयं विजेष्यामो ये देवास्ते वयं स्मृताः। तस्मादवध्याः कपास्माकं धनिन्याह यथागतम्॥ १५॥ धनी गत्वा कपानाह न वो विप्राः प्रियङ्कराः। गृहीत्वास्त्राण्यतो विप्रान् कपाः सर्व्वे समाद्रवन्॥ १६॥ समुदग्रध्वजान् दृष्ट्वा कपान् सर्व्वे द्विजातयः। व्यसृजन् ज्वलितानग्नीन् कपानां प्राणनाशनान्॥ १७॥ ब्रह्मसृष्टा हव्यभुजः कपान् हत्वा सनातनाः। नभसीव यथाभ्राणि व्यराजन्त नराधिप॥ १८॥ हत्वा वै दानवान् देवाः सर्व्वे संभूय संयुगे। ते नाभ्यजानन् हि तदा ब्राह्मणैर्निहतान् कपान्॥ १९॥ अथागम्य महातेजा नारदोऽकथयद्विभो। यथा हता महाभागैस्तेजसा ब्राह्मणैः कपाः॥ २०॥ नारदस्य वचः श्रुत्वा प्रीताः सर्व्वे दिवौकसः। प्रशशंसुर्द्विजांश्चापि ब्राह्मणानांश्च यशस्विनः॥ २१॥ तेषां तेजस्तथा वीर्य्यं देवानां ववृधे ततः। अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम्॥ २२॥ इत्युक्तवचनं वायुमर्जुनः प्रत्युवाच ह। प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप॥ २३॥

अर्जुन उवाच। जीवाम्यहं ब्राह्मणार्थं सर्व्वथा सततं प्रभो। ब्रह्मण्यो ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः॥ २४॥ दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं बलम्। लोके च परमा कीर्त्तिर्धर्म्मश्च चरितो महान्॥ २५॥ अहो ब्राह्मणकर्म्माणि मया मारुत तत्त्वतः। त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन च॥ २६॥

वायुरुवाच । ब्राह्मणान् चत्रधर्मेण पालयस्वेन्द्रियाणि च । भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति ॥ २७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे पवनार्जुनसंवादे सप्तपञ्चाशदधिकशततोऽध्यायः ॥ १५७ ॥

---

युधिष्ठिर उवाच । ब्राह्मणानर्च्चसे राजन् सततं शंसितव्रतान् । कन्नु कर्म्मोदयं दृष्ट्वा तानर्च्चसि जनाधिप ॥ १ ॥ कां वा ब्राह्मणपूजायां दृष्ट्वा व्युष्टिं महाव्रत । तानर्च्चसि महाबाहो सर्व्वमेतद्वदस्व मे ॥ २ ॥

भीष्म उवाच । एष ते केशवः सर्व्वमाख्यास्यति महामतिः । व्युष्टिं ब्राह्मणपूजायां दृष्टव्युष्टिर्महाव्रतः ॥ ३ ॥ बलं श्रोत्रे वाङ्मनश्चक्षुषी च ज्ञानं तथा सविशुद्धं ममाद्य । देहन्यासो नातिचिरान्मतो मे न चातितूर्णं सविता प्रयाति ॥ ४ ॥ उक्ता धर्म्मा ये पुराणे महान्तो राजन् विप्राणां चत्रियाणां विशाञ्च । तथा शूद्राणां धर्म्ममुपासते च शेषं कृष्णादुपासते च शेषं कृष्णादुपशिक्षस्व पार्थ ॥ ५ ॥ अहं ह्येनं वेद्मि तत्त्वेन कृष्णं योऽयं हि यच्चास्य बलं पुराणम् । अमेयात्मा केशवः कौरवेन्द्र सोऽयं धर्म्मं रक्षति संशयेषु ॥ ६ ॥ कृष्णः पृथ्वीमसृजत् खं दिवञ्च कृष्णस्य देहान्मेदिनी सम्बभूव । वराहोऽयं भीमबलः पुराणः सपर्व्वतान् व्यसृजद्वै दिशश्च ॥ ७॥ अस्य चाधोऽथान्तरीक्षं दिवञ्च दिशश्चतस्रो विदिशश्चतस्रः । सृष्टिस्तथैवेयमनुप्रसूता स निर्म्ममे विश्वमिदं पुराणम् ॥ ८ ॥ अस्य नाभ्यां पुष्करं संप्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः । येन छिन्नं यत्तमः पार्थ घोरं यत्तत्तिष्ठत्यर्णवं तर्जयानम् ॥ ९ ॥ कृते युगे धर्म्म आसीत् समग्रस्त्रेताकाले ज्ञानमनुप्रपन्नः । बलञ्चासीद्द्वापरे पार्थ कृष्णः कलवधर्म्मः चिति-

मेवाजगाम ॥ १० ॥ स एव पूर्वं निजघान दैत्यान् स पूर्वदेवश्च बभूव सम्राट्। स भूतानां भावनो भूतभव्यः स विश्वस्यास्य जगतश्चाभिगोप्ता ॥ ११ ॥ यदा धर्मो ग्लाति वंशे सुराणां तदा कृष्णो जायते मानुषेषु। धर्मे स्थित्वा स तु वै भावितात्मा परांश्च लोकानपरांश्च पाति ॥ १२ ॥ त्याज्यांस्त्यक्त्वा चासुराणां वधाय कार्य्याकार्य्ये कारणञ्चैव पार्थ। कृतं करिष्यत् क्रियते च देवो राहुं सोमं विद्धि च शक्रमेनम् ॥ १३ ॥ स विश्वकर्मा स हि विश्वरूपः स विश्वभुग्विश्वसृग्विजिच्च। स शूलभृच्छोणितभृत् करालस्तं कर्मभिर्विदितं वै स्तुवन्ति ॥ १४ ॥ तं गन्धर्वाणामप्सरसाञ्च नित्यमुपतिष्ठन्ते विबुधानां शतानि। तं राक्षसाश्चापरिसंवदन्ति रायस्पोषः स विजिगीषुरेकः ॥ १५ ॥ तमध्वरे शंसितारस्तुवन्ति रथान्तरे सामगाश्च स्तुवन्ति। तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति तस्मै हविरध्वर्य्यवः कल्पयन्ति ॥ १६ ॥ तं घोषार्य्ये गोभिरिन्द्राः स्तुवन्ति स चापीशो भारतैकः पशूनाम्। स पौराणीं ब्रह्मगुहां प्रविष्टो महीसत्रं भारताग्रे ददर्श ॥ १७ ॥ स चैव गामुज्जहाराग्र्यकर्मा विक्षोभ्य दैत्यानसुरांश्च सर्वान्। तस्य भक्ष्यान् विविधान् वेदयन्ति तमेवाजौ वाहनं वेदयन्ति ॥ १८ ॥ तन्तस्यारीक्षं पृथिवी दिवञ्च सर्वं वशे तिष्ठति शाश्वतस्य। स कुम्भरेतः ससृजे सुराणां यत्रोत्पन्नमृषिमाहुर्वशिष्ठम् ॥ १९ ॥ स मातरिश्वा विभुरश्ववाजी स रश्मिवान् सविता चादिदेवः। तेनासुरा विजिताः सर्व एव तद्विक्रान्तैर्विजितानीह त्रीणि ॥२० ॥ स देवानां मानुषानां पितॄणां तमेवाहुर्य्यज्ञविदां वितानम्। स एव कालं विभजन्नुदेति तस्योत्तरं दक्षिणञ्चायने द्वे ॥ २१ ॥ तस्यैवोर्द्ध्वं तिर्य्यगधश्चरन्ति गभस्तयो मेदिनीं भासयन्तः। तं ब्राह्मणा वेदविदो जुषन्ति तस्यादित्यो भामुपयुज्य भाति ॥ २२ ॥ स मासि मास्यध्वरकृद्विधत्ते तमध्वरे वेदविदः पठन्ति। स एवोक्त-

चक्रमिदं विनाभि सप्ताश्वयुक्तं वहते वै त्रिधाम ॥ २३ ॥ महा-
तेजाः सर्वगः सर्वसिंहः कृष्णो लोकान् धारयते यथैकः। हंसं
तमोघ्नञ्च तमेव वीर कृष्णं सदा पार्थ कर्त्तारमेहि ॥ २४ ॥ य
एकदा कच्चगतो महात्मा तुष्टो विभुः खाण्डवे धूमकेतुः। स
राक्षसानुरगांश्चावजित्य सर्वत्रगः सर्वमग्नौ जुहोति ॥ २५ ॥ स
एव पार्थाय श्वेतमश्वं प्रायच्छत् स एवाश्वानथ सर्वांश्चकार। स
बन्धुरस्तस्य रथस्त्रिचक्रस्त्रिवृच्छिरास्त्रिशिरश्च त्रिनाभिः॥ २६ ॥ स
विहाय व्यदधात् पद्मनाभिः न निर्ममे गां दिवमन्तरीक्षम्।
सोऽरण्यानि व्यसृजत् पर्वतांश्च हृषीकेशोऽमितदीप्ताग्नितेजाः ॥२७॥
अलङ्घयद्वै सरितो जिघांसन् शक्रं वज्रं प्रहरन्तं निरास। स
महेन्द्रः स्तूयते वै महाध्वरे विप्रैरेको ऋक्सहस्रैः पुराणैः ॥ २८॥
दुर्वासा वै तेन नान्येन शक्यो गृहे राजन् वासयितुं महौजाः।
तमेवाहुर्ऋषिमेकं पुराणं स विश्वकृद्विदधात्यात्मभावात् ॥ २९ ॥
देवांश्च यो वेदयतेऽधिदेवो विधींश्च यश्चाश्रयते पुराणान्। कामे
वेदे लौकिके यत् फलञ्च विष्वक्सेनः सर्वमेतत् प्रतीहि ॥ ३० ॥
ज्योतींषि शुक्लानि हि सर्वलोके त्रयो लोका लोकपालास्त्रयश्च।
त्रयोऽग्नयो व्याहृतयश्च तिस्रः सर्वे देवा देवकीपुत्र एव ॥ ३१ ॥
सम्वत्सरः स ऋतुः सोऽर्द्धमासः सोऽहोरात्रः स कला वै स काष्ठाः।
मात्रा मुहूर्त्ताश्च लवाः क्षणाश्च विष्वक्सेनः सर्वमेतत् प्रतीहि ॥३२॥
चन्द्रादित्यौ ग्रहनक्षत्रताराः सर्वाणि पर्वाण्यथ पौर्णमासम्।
नक्षत्रयोगा ऋतवश्च पार्थ विष्वक्सेनात् सर्वमेतत् प्रसूतम् ॥ ३३ ॥
रुद्रादित्या वसवोऽथाश्विनौ च साध्याश्च विश्वे मरुतां गणाश्च।
प्रजापतिर्देवमाता दितिश्च सर्वे कृष्णादृषयश्चैव सप्त ॥ ३४ ॥ वायु-
र्भूत्वा विक्षिपते च विश्वमग्निर्भूत्वा दहते विश्वरूपः। आपो भूत्वा
मज्जयते च सर्वं ब्रह्मा भूत्वा सृजते सर्वसङ्घान् ॥ ३५ ॥ वेद्यञ्च
यद्वेदयते च वेदां विधिश्च यश्चाश्रयते विधेयम्। धर्मे च वेदे च

बले च सर्वं चराचरं केशवं त्वं प्रतीच्छि ॥ ३६ ॥ ज्योतिर्भूतः परमोऽसौ पुरस्तात् प्रकाशते यत् प्रभया विश्वरूपः। अपः सृष्ट्वा सर्वभूतात्मयोनिः पुराकरोत् सर्वमेवाथ विश्वम् ॥ ३७ ॥ ऋतूनुत्पातान् विविधान्यद्भुतानि मेघान् विद्युत् सर्वमैरावतञ्च। सर्वं कृत्स्नं स्थावरं जङ्गमञ्च विश्वात्मानं विष्णुमेनं प्रतीच्छि ॥ ३८ ॥ विश्वावासं निर्गुणं वासुदेवं सङ्कर्षणं जीवभूतं वदन्ति। ततः प्रद्युम्नमनिरुद्धञ्चतुर्थमाज्ञापयत्यात्मयोनिर्म्महात्मा ॥ ३९ ॥ स पञ्चधा पञ्चजनोपपन्नं सञ्चोदयन् विश्वमिदं सिसृक्षुः। ततश्चकारावनिमारुतौ च खं ज्योतिरापश्च तथैव पार्थ ॥ ४० ॥ स स्थावरं जङ्गमञ्चैवमेतच्चतुर्विधं लोकमिमञ्च कृत्वा। ततो भूमिं व्यदधात् पञ्चवीजां द्यौः पृथिव्यां धास्यति भूरि वारि ॥ ४१ ॥ तेन विश्वं कृतमेतद्धि राजन् स जीवयत्यात्मनैवात्मयोनिः। ततो देवानसुरान्मानवांश्च लोकानृषींश्चापि पितॄन् प्रजाश्च ॥ ४२ ॥ समासेन विधिवत् प्राणिलोकान् सर्वान् सदा भूतपतिः सिसृक्षुः। शुभाशुभं स्थावरं जङ्गमञ्च विष्वक्सेनात् सर्वमेतत् प्रतीच्छि ॥ ४३ ॥ यद्वर्त्तते यच्च भविष्यतीह सर्वं ह्येतत् केशवं त्वं प्रतीच्छि। मृत्युश्चैव प्राणिनामन्तकाले साक्षात् कृष्णः शाश्वतो धर्म्मवाहः। भूतञ्च यच्चेह न विद्म किञ्चिद्विष्वक्सेनः सर्वमेतत् प्रतीच्छि ॥ ४४ ॥ यत् प्रशस्तञ्च लोकेषु पुण्यं यच्च शुभाशुभम्। तत् सर्वं केशवोऽचिन्त्यो विपरीतमतः परम् ॥ ४५ ॥ एतादृशः केशवोऽतश्च भूयो नारायणः परमश्चाव्ययश्च। मध्याद्यन्तस्य जगतस्तस्थुषश्च संवुभूषतां प्रभवश्चाव्ययश्च ॥ ४६ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे भगवन्माहात्म्यकथने अष्टपञ्चाशदधिकशतोऽध्यायः ॥ १५८ ॥

---

युधिष्ठिर उवाच । ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन । वेत्ता त्वमथ चार्थस्य वेद त्वां हि पितामहः ॥ १ ॥

वासुदेव उवाच । शृणुष्वावहितो राजन् द्विजानां भरतर्षभ । यथातत्त्वेन वदतो गुणान् वै कुरुसत्तम ॥ २ ॥ द्वारवत्यां समासीनं पुरा मां कुरुनन्दन । प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः ॥ ३ ॥ किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन । ईश्वरत्वं कुतस्तेषामिहैव च परत्र च ॥ ४ ॥ सदा द्विजातीन् संपूज्य किं फलं तत्र मानद । एतद्ब्रूहि स्फुटं सर्वं सुमहान् संशयोऽत्र मे ॥ ५ ॥ इत्युक्ते वचने तस्मिन् प्रद्युम्नेन तथा त्वहम् । प्रत्यब्रुवं महाराज यत्तच्छृणु समाहितः ॥ ६ ॥ व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे । त्रिवर्गे चापवर्गे च यशः श्रीरोगशान्तिषु ॥ ७ ॥ देवता पितृपूजासु सन्तोष्याश्चैव नो द्विजाः । एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ८ ॥ अस्मिंल्लोके रौक्मिणेय तथामुष्मिंश्च पुत्रक । ब्राह्मणप्रभवं सौम्यं न मेऽत्रास्ति विचारणा ॥ ९ ॥ ब्राह्मणप्रतिपूजायामायुः कीर्त्तिर्यशो बलम् । लोका लोकेश्वराश्चैव सर्व्वे ब्राह्मणपूजकाः ॥ १० ॥ तत् कथं वै नाद्रियेयमीश्वरोऽस्मीति पुत्रक । मा ते मन्युर्म्महाबाहो भवत्वत्र द्विजान् प्रति ॥ ११ ॥ ब्राह्मणा हि महद्भूतमस्मिंल्लोके परत्र च । भस्म कुर्य्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः ॥ १२ ॥ अन्यानपि सृजेयुश्च लोकाँल्लोकेश्वरांस्तथा । कथं तेषु न वर्त्तेरन् सम्यग्ज्ञानात् सुतेजसः ॥ १३ ॥ अवसन्मे गृहे तात ब्राह्मणो हरिपिङ्गलः । चीरवासा विल्वदण्डी दीर्घश्मश्रुः कृशो महान् ॥ १४ ॥ दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि । सर्वान् सञ्चरतो लोकान् ये दिव्या ये च मानुषाः ॥ १५ ॥ इमां गाथां गायमानश्चत्वरेषु सभासु च । दुर्वाससं वासयेत् को ब्राह्मणं सत्कृतं गृहे ॥ १६ ॥ रोषणः सर्व्वभूतानां सूक्ष्मेऽप्यपकृते कृते । परिभाषाश्च मे श्रुत्वा

को नु दद्यात् प्रतिश्रयम् ॥ १७ ॥ यो मां कश्चिद्वासयीत न स मां
कोपयेदिति। यस्मान्नाद्रियते कश्चित्ततोऽहं समवासयम् ॥ १८ ॥
स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा। एकदा स्वल्पकं
भुङ्क्ते न चैवैति पुनर्गृहान् ॥ १९ ॥ अकस्माच्च प्रहसति तथा-
कस्मात् प्ररोदिति। न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा ॥२०॥
अथ स्वावसथं गत्वा स शय्यास्तरणानि च। कन्याश्चालङ्कृता
दग्ध्वा ततो व्यपगतः पुनः ॥ २१ ॥ अथ मामब्रवीद्भूयः स मुनिः
संशितव्रतः। कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ॥ २२ ॥
तदैव तु मया तस्य चित्तज्ञेन गृहे जनः। सर्वाण्यन्नानि पानानि
भक्ष्याश्चोच्चावचास्तथा ॥ २३ ॥ भवन्तु सत्कृतानीह पूर्वमेव
प्रचोदितः। ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम् ॥ २४ ॥
तं भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत्। क्षिप्रमङ्गानि लिम्पस्व
पायसेनेति स स्म ह ॥ २५ ॥ अविमृश्यैव च ततः कृतवानस्मि
तत्तथा। तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम् ॥ २६ ॥
स ददर्श तदाभ्याशे मातरन्ते शुभाननाम्। तामपि स्मयमानः स
पायसेनाभ्यलेपयत् ॥ २७ ॥ मुनिः पायसदिग्धाङ्गीं रथे तूर्ण-
मयोजयत्। तमारुह्य रथञ्चैव निर्ययौ च गृहान्मम ॥ २८ ॥
अग्निवर्णो ज्वलन् धीमान् स द्विजो रथधुर्य्यवत्। प्रतोदेना-
त्तदद्दालां रुक्मिणीं मम पश्यतः ॥ २९ ॥ न च मे स्तोकमप्यासी-
द्दुःखमीर्ष्याकृतं तदा। तथा स राजमार्गेण महता निर्ययौ
बहिः ॥ ३० ॥ तत्दृष्ट्वा महदाश्चर्य्यं दाशार्हा जातमन्यवः।
तत्राजल्पन् मिथः केचित् समाभाष्य परस्परम् ॥ ३१ ॥ ब्राह्मणा
एव जायेरन् नान्यो वर्णः कथञ्चन। को ह्येनं रथमास्थाय जीवे-
दन्यः पुमानिह ॥ ३२ ॥ आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो
द्विजः। ब्रह्माशीविषदग्धस्य नास्ति कश्चित् चिकित्सकः ॥ ३३ ॥
तस्मिन् व्रजति दुर्द्धर्षे प्रास्खलद्रुक्मिणी पथि। तत्रामर्षयत श्रीमां-

स्ततस्तर्थमचोदयत् ॥ ३४ ॥ ततः परमसंक्रुद्धो रथात् प्रस्कन्द्य स द्विजः । पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः ॥ ३५ ॥ तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् । तथैव पयसा दिग्धः प्रसीद भगवन्निति ॥ ३६ ॥ ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह । जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ॥ ३७ ॥ न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत । प्रीतोऽस्मि तव गोविन्द वृणु कामान् यथेप्सितान् ॥ ३८ ॥ प्रसन्नस्य च मे तात पश्य व्युष्टिं यथाविधि । यावद्देवमनुष्याणामन्ने भावो भविष्यति ॥३९॥ यथैवान्ने तथा तेषां त्वयि भावो भविष्यति । यावच्च पुण्या लोकेषु त्वयि कीर्त्तिर्भविष्यति ॥ ४० ॥ त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे । सुप्रियः सर्व्वलोकस्य भविष्यति जनार्द्दन ॥ ४१ ॥ यत्ते भिन्नञ्च दग्धञ्च यच्च किञ्चिद्विनाशितम् । सर्व्वं तथैव द्रष्टासि विशिष्टं वा जनार्द्दन ॥ ४२ ॥ यावदेतत् प्रलिप्तन्ते गात्रेषु मधुसूदन । ततो मृत्युभयं नास्ति यावदिच्छसि चाच्युत ॥ ४३ ॥ न तु पादतले लिप्ते कस्मात्ते पुत्रकाद्य वै । नैतन्मे प्रियमित्येव स मां प्रीतोऽब्रवीत्तदा । इत्युक्तोऽहं शरीरं स्वं ददर्श श्रीसमायुतम् ॥ ४४ ॥ रुक्मिणीञ्चाब्रवीत्प्रीतः सर्व्वस्त्रीणां वरं यशः । कीर्त्तिञ्चानुत्तमां लोके समवाप्स्यसि शोभने ॥ ४५ ॥ न त्वां जरा वा रोगाश्च वैवर्ण्यञ्चापि भाविनि । स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि ॥ ४६ ॥ षोड़शानां सहस्राणां वधूनां केशवस्य ह । वरिष्ठा च सलोक्या च केशवस्य भविष्यसि ॥ ४७ ॥ तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत् । प्रस्थित स महातेजा दुर्व्वासाग्निरिव ज्वलन् ॥ ४८ ॥ एषैव ते बुद्धिरस्तु ब्राह्मणान् प्रति केशव । इत्युक्त्वा स तदा विप्रस्तत्रैवान्तरधीयत ॥ ४९ ॥ तस्मिन्नन्तर्हिते चाहमुपांशुव्रतमाचरम् । यत्किञ्चिद्ब्राह्मणो ब्रूयात् सर्व्वं कुर्य्यामिति प्रभो ॥ ५० ॥ एतद्व्रतमहं कृत्वा मात्रा

ते सह पुत्रक। ततः परमहृष्टात्मा प्राविशं गृहमेव च॥ ५१॥ प्रविष्टे स्वगृहे सर्वमथ पश्यामि तन्नवम्। यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक॥ ५२॥ ततोऽहं विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढ़म्। अपूजयञ्च मनसा रौक्मिणेय सदा द्विजान्॥ ५३॥ इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ। माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा॥ ५४॥ तथा त्वमपि कौन्तेय ब्राह्मणान् सततं प्रभो। पूजयस्व महाभागान् धनैर्गोभिश्च नित्यदा॥ ५५॥ एवं व्युष्टिमहं प्राप्तो ब्राह्मणानां प्रसादजाम्। यच्च मामाह भीष्मस्तु तत् सत्यं भरतर्षभ॥ ५६॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे दुर्वाससो भिक्षायां एकोनषष्ट्यधिकशततोऽध्यायः॥ १५९॥

---

युधिष्ठिर उवाच। दुर्वासः प्रसादात्ते यत्तदा मधुसूदन। अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि॥ १॥ महाभाग्यञ्च यत्तस्य नामानि च महात्मनः। तत्त्वतो ज्ञातुमिच्छामि सर्वं मतिमतांवर॥ २॥

वासुदेव उवाच। हन्त ते कीर्त्तयिष्यामि नमस्कृत्वा कपर्द्दिने। यदवाप्तं मया राजन् श्रेयो यच्चावर्ज्जितं यशः॥ ३॥ प्रयतः प्रातरुत्थाय यदधीये विशाम्पते। प्राञ्जलिः शतरुद्रीयं तन्मे निगदतः शृणु॥ ४॥ प्रजापतिस्तत् ससृजे तपसोऽन्ते महातपाः। शङ्करस्त्वसृजत्तात प्रजाः स्थावरजङ्गमाः॥ ५॥ नास्ति किञ्चित् परं भूतं महादेवाद्विशाम्पते। इह त्रिष्वपि लोकेषु भूतानां प्रवरो हि सः॥ ६॥ न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः। न हि भूतं समं तेन त्रिषु लोकेषु विद्यते॥ ७॥ गन्धेनापि हि

संग्रामे तस्य क्रुद्धस्य शत्रवः। विसंज्ञा हतभूयिष्ठा वेपन्ते च पतन्ति च॥ ८॥ घोरञ्च निनदं तस्य पर्ज्जन्यनिनदोपमम्। श्रुत्वा विशीर्य्येद्धृदयं देवानामपि संयुगे॥ ९॥ यांश्च घोरेण रूपेण पश्येत् क्रुद्धः पिनाकधृक्। न सुरा नासुरा लोके न गन्धर्वा न पन्नगाः॥ १०॥ कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः। प्रजापतेस्तु दक्षस्य यजतो वितते क्रतौ॥ ११॥ विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा। धनुषा वाणमुत्सृज्य सघोषं विननाद च॥ १२॥ ते न शर्म्म कुतः शान्तिं विषादं लेभिरे सुराः। विद्धे च सहसा यज्ञे कुपिते च महेश्वरे॥ १३॥ तेन ज्यातलघोषेण सर्व्वे लोकाः समाकुलाः। बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः॥ १४॥ आपश्चुक्षुभिरे चैव चकम्पे च वसुन्धरा। व्यद्रवन् गिरयश्चापि द्यौः पफाल च सर्वशः॥ १५॥ अन्धेन तमसा लोकाः प्रावृता न चकाशिरे। प्रनष्टा ज्योतिषां भाश्च सह सूर्य्येण भारत॥ १६॥ भृशं भीतास्ततः शान्तिं चक्रुः स्वस्त्ययनानि च। ऋषयः सर्वभूतानामात्मनश्च हितैषिणः॥ १७॥ ततः सोऽभ्यद्रवद्देवान् रुद्रो रौद्रपराक्रमः। भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत्॥ १८॥ पूषाणञ्चाभिदुद्राव पादेन च रुषान्वितः। पुरोडाशं भक्षयतो दशनांश्च व्यशातयत्॥ १९॥ ततः प्रणेमुर्द्देवास्ते वेपमानास्तु शङ्करम्। पुनश्च सन्दधे रुद्रो दीप्तं सुनिशितं शरम्॥ २०॥ रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः। ततः प्रसादयामासुः सर्व्वे ते विबुधोत्तमाः॥ २१॥ जेपुश्च शतरुद्रीयं देवाः कृताञ्जलिं तदा। संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः॥ २२॥ रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन्। भयेन त्रिदशा राजन् शरणञ्च प्रपेदिरे॥ २३॥ तेन चैव हि तुष्टेन स यज्ञः सन्धितोऽभवत्। यद्यच्चापहृतं तत्र तत्तथैव स जीवयत्॥ २४॥ असुराणां पुराण्यासंस्त्रीणि वीर्य्यवतां दिवि।

आयसं राजतञ्चैव सौवर्णमपि चापरम् ॥ २५ ॥ नाशकत्तानि मघवा भेत्तुं सर्व्वायुधैरपि। अथ सर्वे महारुद्रं जग्मुः शरणार्दिताः ॥ २६ ॥ तत ऊचुर्म्महात्मानो देवाः सर्वे समागताः। रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्म्मसु ॥ २७ ॥ जहि दैत्यान् सह पुरैर्लोकांस्त्रायस्व मानद। स तथोक्तस्तथेत्युक्त्वा कृत्वा विष्णुं शरोत्तमम् ॥ २८ ॥ शल्यमग्निं तथा कृत्वा पुङ्खं वैवस्वतं यमम्। वेदान् कृत्वा धनुः सर्वान् ज्याञ्च सावित्रीमुत्तमाम् ॥ २९॥ ब्रह्माणं सारथिं कृत्वा विनियुज्य च सर्वशः। त्रिपर्वणा त्रिशल्येन काले तानि बिभेद सः ॥ ३० ॥ शरेणादित्यवर्णेन कालाग्निसमतेजसा। तेऽसुराः सपुरास्तत्र दग्धा रुद्रेण भारत ॥ ३१ ॥ तञ्चैवाङ्कागतं दृष्ट्वा बालं पञ्चशिखं पुनः। उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्तदा ॥ ३२ ॥ असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः। सवज्रं स्तम्भयामास तं बाहुं परिघोपमम् ॥ ३३ ॥ न संबुबुधिरे चैनं देवास्ते भुवनेश्वरम्। सप्रजापतयः सर्वे तस्मिन् मुमुहुरीश्वरे ॥ ३४ ॥ ततो ध्यात्वा तु भगवान् ब्रह्मा तममितौजसम्। अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम् ॥ ३५ ॥ ततः प्रसादयामासुरुमां रुद्रञ्च ते सुराः। बभूव स तदा बाहुर्बलहन्तुर्यथा पुरा ॥ ३६ ॥ स चापि ब्राह्मणो भूत्वा दुर्वासा नाम वीर्य्यवान्। द्वारवत्यां मम गृहे चिरं कालमुपावसत् ॥ ३७ ॥ विप्रकारान् प्रयुङ्क्ते स सुबहून्मम वेश्मनि। तानुदारतया चाहं चक्षमे चातिदुःसहान् ॥ ३८ ॥ स वै रुद्रः स च शिवः सोऽग्निः सर्वः स सर्वजित्। स वै चेन्द्रश्च वायुश्च सोऽश्विनौ स च विद्युतः ॥ ३९ ॥ स चन्द्रमाः स चेशानः स सूर्य्यो वरुणश्च सः। स कालः सोऽन्तको मृत्युः स तमो रात्र्यहानि च ॥ ४० ॥ मासार्द्धमासऋतवः सन्ध्ये संवत्सरश्च सः। स धाता स विधाता च विश्वकर्मा स सर्ववित् ॥ ४१ ॥ नक्षत्राणि ग्रहाश्चैव दिशोऽथ विदिशस्तथा। विश्व-

मूर्त्तिरमेयात्मा भगवानमरद्युतिः ॥ ४२ ॥ एकधा च द्विधा चैव बहुधा च स एव हि । शतधा सहस्रधा चैव तथा शतसहस्रशः ॥ ४३ ॥ ईदृशः स महादेवो भूयः स भगवानजः । न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ॥ ४४ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे ईश्वर-प्रशंसायां षष्ट्यधिकशतोऽध्यायः ॥ १६० ॥

---

वासुदेव उवाच । युधिष्ठिर महाबाहो महाभाग्यं महात्मनः । रुद्रस्य बहुरूपस्य बहुनाम्नो निबोध मे ॥ १ ॥ वदन्त्यग्निं महादेवं तथा स्थाणुं महेश्वरम् । एकाक्षं त्र्यम्बकञ्चैव विश्वरूपं शिवं तथा ॥ २ ॥ द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः । घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥ ३ ॥ उग्रा घोरा तनुर्या सा सोऽग्निर्विद्युत् स भास्करः । शिवा सौम्या च या तस्य धर्म्मस्त्वापोऽथ चन्द्रमाः ॥ ४ ॥ आत्मनोऽर्द्धन्तु तस्याग्निः सोमोऽर्द्धं पुनरुच्यते । ब्रह्मचर्य्यञ्चरत्येका शिवा यस्य तनुस्तथा ॥ ५ ॥ यास्य घोरतमा मूर्त्तिर्ज्जगत् संहरते तदा । ईश्वरत्वान्महत्वाच्च महेश्वर इति स्मृतः ॥ ६ ॥ यन्निर्द्दहति यत्तीक्ष्णो यदुग्रो यत् प्रतापवान् । मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ ७ ॥ देवानां सुमहान् यच्च यच्चास्य विषयो महान् । यच्च विश्वं महत् पाति महादेवस्ततः स्मृतः ॥ ८ ॥ धूम्ररूपञ्च यत्तस्य धूर्ज्जटीत्यत उच्यते । स मेधयति यन्नित्यं सर्व्वान् वै सर्व्वकर्म्मभिः ॥ ९ ॥ मनुष्याञ्छिवमन्विच्छंस्तस्मादेव शिवः स्मृतः । दहत्यूर्द्ध्वं स्थितो यच्च प्राणान्नृणां स्थिरश्च यत् ॥ १० ॥ स्थिरलिङ्गश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः । यदस्य बहुधा रूपं भूतं भव्यं भवत्तथा ॥ ११ ॥ स्थावरं जङ्गमञ्चैव बहुरूपस्ततः स्मृतः ।

विश्वे देवाश्च यत्तस्मिन् विश्वरूपस्ततः स्मृतः ॥ १२॥ सहस्राक्षो-ऽयुताक्षो वा सर्वतोऽक्षिमयोऽपि च। चक्षुषः प्रभवत्तेजो नास्त्यन्तो यस्य चक्षुषाम् ॥ १३ ॥ सर्वथा यत् पशून् पाति तैश्च यद्रमते सह। तेषामधिपतिर्यच्च तस्मात् पशुपतिः स्मृतः ॥ १४ ॥ नित्यञ्च ब्रह्म-चर्य्येण लिङ्गमस्य यदा स्थितम्। महयन्त्यस्य लोकाश्च प्रियं ह्येतन्महात्मनः ॥ १५ ॥ विग्रहं पूजयेद्यो वै लिङ्गं वापि महा-त्मनः। लिङ्गपूजयिता नित्यं महतीं श्रियमश्नुते ॥ १६ ॥ ऋषय-श्चापि देवाश्च गन्धर्वाप्सरसस्तथा। लिङ्गमेवार्च्चयन्ति स्म यत्तदूर्द्ध्वं समास्थितम् ॥ १७ ॥ पूज्यमाने सदा तस्मिन् मोदते स महेश्वरः। सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः ॥ १८ ॥ एष एव श्मशानेषु देवो वसति निर्द्दहन्। यजन्ते ये जनास्तत्र वीरस्थान-निषेविणः ॥ १९ ॥ विषयस्थः शरीरेषु स मृत्युः प्राणिनामिह। स च वायुः शरीरेषु प्राणापानः शरीरिणाम् ॥ २० ॥ तस्य रूपाणि घोराणि दीप्तानि च बहूनि च। लोके यान्यस्य पूज्यन्ते विप्रास्तानि विदुर्बुधाः ॥ २१ ॥ नामधेयानि देवेषु बहून्यस्य यथार्थवत्। निरुच्यन्ते बहुत्वाच्च कर्म्मभिश्चरितैस्तथा ॥ २२ ॥ वेदे चास्य विदुर्विप्राः शतरुद्रियमुत्तमम्। व्यासेनोक्तञ्च यच्चापि अवस्थाने महात्मनः ॥ २३ ॥ प्रदाता सर्वलोकानां विश्वं वाप्यु-च्यते महत्। ज्येष्ठभूतं वदन्त्येवं ब्राह्मणा ऋषयोऽपरे ॥ २४ ॥ प्रथमो ह्येष देवानां मुखादग्निमजीजनत्। ग्रहैर्बहुविधैः प्राणान् संरुद्धानुत्सृजत्यपि ॥ २५ ॥ विमुञ्चति न पुण्यात्मा शरण्यः शर-णागतान्। आयुरारोग्यमैश्वर्य्यं वित्तं कामांश्च पुष्कलान् ॥ २६ ॥ स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः। शक्रादिषु च देवेषु तस्यैश्वर्य्यमिहोच्यते ॥ २७ ॥ स एव व्यापृतो नित्यं त्रैलोक्यस्य शुभाशुभे। ऐश्वर्य्याच्चैव कामानामीश्वरः पुनरुच्यते ॥ २८ ॥ महेश्वरश्च लोकानां महतामीश्वरश्च सः। बहुभिर्विविधैरूपै-

विश्वं व्याप्तमिदं जगत् । तस्य देवस्य तद्वक्त्रं समुद्रे वड़वा-
मुखम् ॥ २९ ॥

इत्यनुशासनपर्वणि अनुशासनिकपर्वणि दानधर्मे ईश्वर-
प्रशंसायां एकषष्ट्यधिकशततोऽध्यायः ॥ १६१ ॥

---

वैशम्पायन उवाच । इत्युक्तवति वाक्यन्तु कृष्णे देवकिनन्दने ।
भीष्मं शान्तनवं भूयः पर्य्यपृच्छद्युधिष्ठिरः ॥ १ ॥ निर्णयो वा
महाबुद्धे सर्वधर्म्मविदाम्वर । प्रत्यक्षमागमो वेति किन्तयोः कारणं
भवेत् ॥ २ ॥

भीष्म उवाच । नास्त्यत्र संशयः कश्चिदिति मे वर्त्तते मतिः ।
शृणु वक्ष्यामि ते प्राज्ञ सम्यक् त्वमनुपृच्छसि । संशयः सुगमस्तत्र
निर्णयस्तत्र दुर्गमः ॥ ३ ॥ दृष्टं श्रुतमचिन्त्यं हि यत्र संशयदर्श-
नम् । प्रत्यक्षं कारणं दृष्ट्वा हैतुकाः प्राज्ञमानिनः ॥ ४ ॥ नास्ती-
त्येवं व्यवस्यन्ति सत्यं संशयमेव च । तदयुक्तं व्यवस्यन्ति बालाः
पण्डितमानिनः ॥ ५ ॥ अथ चेन्मन्यसे चैकं कारणं किं भवेदिति ।
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च ॥ ६ ॥ प्राणयात्रामने-
कान्न जल्पमानेन भारत । तत्परेणैव नान्येन शक्यं ह्येतस्य
दर्शनम् ॥ ७ ॥ हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम् । ज्योतिः
सर्वस्य लोकस्य विपुलं प्रतिपद्यते ॥ ८ ॥ न त्वेव गमनं राजन्
हेतूनां गमनं तथा । अग्राह्यमनिबद्धञ्च वाचा सम्परिवर्ज्जयेत् ॥ ९ ॥

युधिष्ठिर उवाच । प्रत्यक्षं लोकतः सिद्धिर्लोकश्चागमपूर्वकः ।
शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह ॥ १० ॥

भीष्म उवाच । धर्म्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था च तैरपि कृता कालेन परिभिद्यते ॥ ११ ॥ अधर्म्मो धर्म्म-
रूपेण तृणैः कूप इव वृतः । ततस्तैर्भिद्यते वृत्तं शृणु चैव युधि-

ष्ठिर ॥ १२ ॥ अवृत्ता ये तु भिन्दन्ति श्रुतित्यागपरायणाः। धर्म्मविद्वेषिणो मन्दा इत्युक्तास्तेषु संशयः ॥ १३ ॥ अतृप्यन्तस्तु साधूनां य एवागमबुद्धयः। परमित्येव सन्तुष्टास्तानुपास्व च पृच्छ च ॥ १४ ॥ कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ। धर्म्म इत्येव संबुद्धस्तानुपास्व च पृच्छ च ॥ १५ ॥ न तेषां भिद्यते वृत्तं यज्ञः स्वाध्यायकर्म्म च। आचारः कारणञ्चैव धर्म्मश्चैकस्त्रयं पुनः ॥ १६ ॥

युधिष्ठिर उवाच। पुनरेव हि मे बुद्धिः संशये परिमुह्यति। अपारे मार्गमाणस्य परं तीरमपश्यतः ॥ १७ ॥ वेदः प्रत्यक्षमाचारः प्रमाणन्तु त्रयं यदि। पृथक् त्वं लभ्यते चैषां धर्म्मश्चैकस्त्रयं कथम् ॥ १८ ॥

भीष्म उवाच। धर्म्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः। यद्येवं मन्यसे राजंस्त्रिधा धर्म्मविचारणा ॥ १९ ॥ एक एवेति जानीहि त्रिधा धर्म्मस्य दर्शनम्। पृथक्त्वेन च मे बुद्धिस्त्रयाणामपि वै तथा ॥ २० ॥ उक्तो मार्गस्त्रयाणान्तु तत्तथैव समाचर। जिज्ञासा न तु कर्त्तव्या धर्म्मस्य परितर्कणात् ॥ २१ ॥ सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः। अन्धो जड़ इवाशङ्को यद्ब्रवीमि तदाचर ॥ २२॥ अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम्। अजातशत्रो सेवस्व धर्म्म एष सनातनः ॥ २३ ॥ ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता। तमन्वेहि महाबाहो धर्म्मस्यैते हि देशिकाः ॥ २४ ॥ प्रमाणमप्रमाणं वै यः कुर्य्यादबुधो जनः। न स प्रमाणतामर्हेद्विषादजननो हि सः ॥ २५ ॥ ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च। एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान् ॥ २६ ॥

युधिष्ठिर उवाच। ये च धर्म्ममसूयन्त ये चैनं प्रत्युपासते। ब्रवीतु मे भवानेतत् क्व ते गच्छन्ति तादृशाः ॥ २७ ॥

भीष्म उवाच । रजसा तमसा चैव समवस्तीर्णचेतसः । नरकं प्रतिपद्यन्ते धर्म्मविद्वेषिणो जनाः ॥ २८ ॥ ये तु धर्म्मं महाराज सततं पर्य्युपासते । सत्यार्जवपराः सन्तस्ते वै स्वर्गभुजो नराः ॥ २९ ॥ धर्म्म एव गतिस्तेषामाचार्य्योपासनाद्भवेत् । देवलोकं प्रपद्यन्ते ये धर्म्मं पर्य्युपासते ॥ ३० ॥ मनुष्या यदि वा देवाः शरीरमुपताप्य वै । धर्म्मिणः सुखमेधन्ते लोभद्वेषविवर्ज्जिताः ॥३१॥ प्रथमं ब्रह्मणः पुत्रं धर्म्ममाहुर्मनीषिणः । धर्म्मिणः पर्य्युपासन्ते फलं पक्कमिवाशयम् ॥ ३२ ॥

युधिष्ठिर उवाच । असतां कीदृशं रूपं साधवः किञ्च कुर्वते । ब्रवीतु मे भवानेतत् सन्तोऽसन्तश्च कीदृशाः ॥ ३३ ॥

भीष्म उवाच । दुराचाराश्च दुर्द्धर्षा दुर्मुखाश्चाप्यसाधवः । साधवः शीलसम्पन्नाः शिष्टाचारस्य लक्षणम् ॥ ३४ ॥ राजमार्गे गवांमध्ये धान्यमध्ये च धर्म्मिणः । नोपसेवन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ॥ ३५ ॥ पञ्चानामशनं दत्त्वा शेषमश्नन्ति साधवः । न जल्पन्ति च भुञ्जाना न निद्रान्त्यार्द्रपाणयः ॥ ३६ ॥ चित्रभानुमनड्वाहं देवं गोष्ठं चतुष्पथम् । ब्राह्मणं धार्म्मिकं वृद्धं ये कुर्वन्ति प्रदक्षिणम् ॥ ३७ ॥ वृद्धानां भारतप्तानां स्त्रीणाञ्चक्रधरस्य च । ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ये ॥ ३८ ॥ अतिथीनाञ्च सर्व्वेषां प्रेष्याणां स्वजनस्य च । तथा शरणकामाणां गोप्ता स्यात् स्वागतप्रदः ॥ ३९ ॥ सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् । नान्तरा भोजनं दृष्टमुपवासविधिर्हि सः ॥ ४० ॥ होमकाले यथा वह्निः कालमेव प्रतीक्षते । ऋतुकाले तथा नारी ऋतुमेव प्रतीक्षते ॥ ४१ ॥ नान्यदा गच्छते यस्तु ब्रह्मचर्य्यन्तु तत् स्मृतम् । अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः ॥ ४२ ॥ तस्माद्गोब्राह्मणां नित्यमर्च्चयेत यथाविधि । यजुषा संस्कृतं मांसमुपभुञ्जन्न दुष्यति ॥ ४३ ॥ पृष्ठमांसं वृथामांसं पुत्रमांसञ्च तत्समम् । स्वदेशे पर-

दे दे वाध्यतिथिं नोपवासयेत् ॥ ४४ ॥ कर्म्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत्। गुरुभ्य आसनं देयमभिवाद्याभिपूज्य च ॥ ४५ ॥ गुरूनभ्यर्च्च वर्द्धन्ते आयुषा यशसा श्रिया। वृद्धान्नातिवदेज्जात न च संप्रेषयेदिति ॥ ४६ ॥ नासीन स्यात् स्थितेष्वेवमायुरस्य न रिष्यते। न नग्नामीक्षते नारीं न नग्नान् पुरुषानपि ॥ ४७ ॥ मैथुनं सततं गुप्तमाहारञ्च समाचरेत्। तीर्थानां गुरवस्तीर्थं चोक्षाणां हृदयं शुचि ॥ ४८ ॥ दर्शनानां परमं ज्ञानं सन्तोषः परमं सुखम्। सायं प्रातश्च वृद्धानां शृणुयात् पुष्कला गिरः ॥ ४९ ॥ श्रुतमाप्नोति हि नरः सततं वृद्धसेवया। स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥ ५० ॥ यच्छेद्वाङ्मनसी नित्य-मिन्द्रियाणि तथैव च। संस्कृतं पायसञ्चैव यावकं कृशरं हविः ॥ ५१ ॥ अष्टकाः पितृदैवत्या ग्रहाणामभिपूजनम्। श्मश्रुकर्म्मणि मङ्गल्यं क्षुतानामभिवन्दनम्। व्याधितानाञ्च सर्वेषामायुषामभि-नन्दनम् ॥ ५२ ॥ न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरम्। त्वङ्कारो वा वधो वेति विद्वत्सु न विशिष्यते ॥ ५३ ॥ अवराणां समानानां शिष्याणाञ्च समाचरेत्। पापमाचक्षते नित्यं हृदयं पापकर्म्मिणः ॥ ५४ ॥ ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने। ज्ञानपूर्वं कृतं कर्म्म छादयन्ते ह्यसाधवः ॥ ५५ ॥ न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः। पापेनापिहितः पापः पाप-मेवाभिजायते ॥ ५६ ॥ यथा वार्द्धुषिको वृद्धिं देहभेदे प्रतीक्षते। धर्म्मेण पिहितं पापं धर्ममेवाभिवर्द्धयेत् ॥ ५७ ॥ यथा लवण-मम्भोभिप्लुतं प्रविलीयते। प्रायश्चित्तहतं पापं तथा सद्यः प्रण-श्यति ॥ ५८ ॥ तस्मात् पापं न गूहेत गूहमानं विवर्द्धते। कृत्वा तु साधुष्वाख्येयं ते तत् प्रशमयन्त्युत ॥ ५९ ॥ आशया सञ्चितं द्रव्यं यत्काले नोपभुज्यते। अन्ये चैतत् प्रपद्यन्ते वियोगे तस्य देहिनः ॥ ६० ॥ मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः। तस्मात्

सर्वाणि भूतानि धर्ममेव समासते ॥ ६१ ॥ एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् । धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ॥६२॥ अर्च्चेद्देवानदम्भेन सेवेतामायया गुरुम् । निधिं निदध्यात् पारत्र्यं यात्रार्थं दानमव्ययम् ॥ ६३ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे धर्मकथने द्विषष्ट्यधिकशततोऽध्यायः ॥ १६२ ॥

---

युधिष्ठिर उवाच । नाभागधेयः प्राप्नोति धनं सुबलवानपि । भागधेयान्वितस्त्वर्थं कृशो बालश्च विन्दति ॥ १ ॥ नालाभकाले लभते प्रयत्नेऽपि कृते सति । लाभकालेऽप्रयत्नेन लभते विपुलं धनम् ॥ २ ॥ कृतयत्नाफलाश्चैव दृश्यन्ते शतशो नराः । अयत्नेनैधमानाश्च दृश्यन्ते बहवो जनाः ॥ ३ ॥ यदि यत्ने भवेन्मर्त्त्यः सद्यः फलमवाप्नुयात् । न विद्वान् विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ॥ ४ ॥ नालभ्यं चोपलभ्येत नृणां भरतसत्तम । प्रयत्नं कृतवन्तोऽपि दृश्यन्ते ह्यफला नराः ॥ ५ ॥ मार्गन्नायशतैरर्थानमार्गश्चापरः सुखी । अकार्य्यमसकृत् कृत्वा दृश्यन्ते ह्यधना नराः ॥ ६ ॥ धनयुक्ताः स्वकर्म्मस्था दृश्यन्ते चापरेऽधनाः । अधीत्य नीतिशास्त्राणि नीतियुक्तो न दृश्यते ॥ ७ ॥ अनभिज्ञश्च साचिव्यं गमितः केन हेतुना । विद्यायुक्तो ह्यविद्यश्च धनवान् दुर्म्मतिस्तथा ॥ ८ ॥ यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात् । न विद्वान् विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ॥ ९ ॥ यथा पिपासां जयते पुरुषः प्राप्य वै जलम् । दृष्टार्थो विद्यया ह्येवं न विद्यां प्रजह्यान्नरः ॥ १० ॥ नाप्राप्तकालो म्रियते विद्धः शरशतैरपि । तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ११ ॥

भीष्म उवाच । ईहमानः समारम्भान् यदि नासादयेद्धनम् ।

उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति ॥ १२ ॥ दानेन भोगी भवति मेधावी वृद्धसेवया। अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ १३ ॥ तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि। सुभाषी प्रियकृच्छान्तः सर्वसत्त्वाविहिंसकः ॥ १४ ॥ यदा प्रमाणं प्रसवः स्वभावश्च सुखासुखे। दंशकीटपिपीलानां स्थिरो भव युधिष्ठिर ॥ १५ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे नीतिकथने त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

---

भीष्म उवाच। कार्य्यते यच्च क्रियते सच्चासच्च कृताकृतम्। तत्राश्वसीत सत् कृत्वा असत् कृत्वा न विश्वसेत् ॥ १ ॥ काल एव सर्वकाले निग्रहानुग्रहौ ददत्। बुद्धिमाविश्य भूतानां धर्मार्थे प्रवर्त्तते ॥ २ ॥ यदा त्वस्य भवेद्बुद्धिर्धर्मार्थस्य प्रदर्शनात्। तदाश्वसीत धर्मात्मा दृढबुद्धिर्न विश्वसेत् ॥ ३ ॥ एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम्। कालयुक्तो ह्युभयविच्छेषं युक्तं समाचरेत् ॥ ४ ॥ यथाप्युपस्थितैश्वर्य्याः प्रजायन्ते न राजसाः। एवमेवात्मनात्मानं पूजयन्तीह धार्मिकाः ॥ ५ ॥ न ह्यधर्मतया धर्मं दद्यात् कालः कथञ्चन। तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ ६ ॥ स्प्रष्टुमप्यसमर्थो हि ज्वलन्तमिव पावकम्। अधर्मः सन्ततो धर्मं कालेन परिरक्षितम् ॥ ७ ॥ कार्य्यावेतौ हि धर्मेण धर्मो हि विजयावहः। त्रयाणामपि लोकानामालोककरणं भवेत् ॥ ८ ॥ न तु कश्चिन्नयेत् प्राज्ञो गृहीत्वैव करे नरम्। उच्यमानस्तु धर्मेण सर्वलोकभयच्छले ॥ ९ ॥ शूद्रोऽहं नाधिकारो मे चातुराश्रम्यसेवने। इति विज्ञानमपरे नात्मन्युपदधत्युत ॥१०॥ विशेषेण च वक्ष्यामि चातुर्वर्ण्यस्य तत्त्वतः। पञ्चभूतशरीराणां

सर्व्वेषां सदृशात्मनाम् ॥ ११ ॥ लोकधर्म्मं च धर्म्मं च विशेषकरणं कृतम् । यथैकत्वं पुनर्यांति प्राणिनस्तत्र विस्तरः ॥ १२ ॥ अध्रुवो हि कथं लोकः स्मृतो धर्म्मः कथं ध्रुवः । यत्र कालो ध्रुवस्तात तत्र धर्म्मः सनातनः ॥ १३ ॥ सर्व्वेषां तुल्यदेहानां सर्व्वेषां सदृशात्मनाम् । कालो धर्म्मेण संयुक्तः शेष एव स्वयं गुरुः ॥ १४ ॥ एवं सति न दोषोऽस्ति भूतानां धर्म्मसेवने । तिर्य्यग्योनावपि सतां लोक एव-मतो गुरुः ॥ १५ ॥

इत्यनुशासनपर्व्वणि आनुशासनिकपर्व्वणि दानधर्म्मे धर्म्म-कथने चतुःषष्ट्यधिकशततोऽध्यायः ॥ १६४ ॥

---

वैशम्पायन उवाच । शरतल्पगतं भीष्मं पाण्डवोऽथ कुरूद्वहः । युधिष्ठिरो हितं प्रेप्सुरपृच्छत् कल्मषापहम् ॥ १ ॥

युधिष्ठिर उवाच । किं श्रेयः पुरुषस्येह किं कुर्व्वन् सुख-मेधते । विपाप्मा तु भवेत् केन किं वा कल्मषनाशनम् ॥ २ ॥

वैशम्पायन उवाच । तत्र शुश्रूषमाणाय नृपः शान्तनवस्तदा । दैववंशं यथान्यायमाचष्ट पुरुषर्षभ ॥ ३ ॥

भीष्म उवाच । अयं दैवतवंशो वै ऋषिवंशसमन्वितः । त्रि-सन्ध्यं पठितः पुत्र कल्मषापहरः परः ॥ ४ ॥ यदह्ना कुरुते पापमिन्द्रियैः पुरुषश्चरन् । बुद्धिपूर्व्वमबुद्धिर्व्वा रात्रौ यच्चापि सन्ध्ययोः ॥ ५ ॥ मुच्यते सर्व्वपापेभ्यः कीर्त्तयन् वै शुचिः सदा । नान्धो न वधिरः काले कुरुते स्वस्तिमान् सदा ॥ ६ ॥ तिर्य्यग्योनिं न गच्छेच्च नरकं सङ्कराणि च । न च दुःखभयं तस्य मरणे न स मुह्यते ॥ ७ ॥ देवासुरगुरुर्द्देवः सर्व्वभूतनमस्कृतः । अचिन्त्यो-ऽथाप्यनिर्द्देश्यः सर्व्वप्राणो ह्ययोनिजः ॥ ८ ॥ पितामहो जगन्नाथः सावित्री ब्रह्मणः सती । वेदभूरथ कर्त्ता च विष्णुर्नारायणः

प्रभुः ॥ ९ ॥ उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा। विशाखो हुतभुग्वायुश्चन्द्रादित्यौ प्रभाकरौ ॥ १० ॥ शक्रः शचीपतिर्देवो यमो धूमोर्णया सह। वरुणः सह गौर्य्या च सहर्द्धा च धनेश्वरः ॥ ११ ॥ सौम्या गौः सुरभिर्देवी विश्रवाश्च महानृषिः। सङ्कल्पः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणाः ॥ १२ ॥ वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा। नारदः पर्वतश्चैव विश्वावसुर्हहा हुहुः ॥ १३ ॥ तुम्बुरुश्चित्रसेनश्च देवदूतश्च विश्रुतः। देवकन्या महाभागा दिव्याश्चाप्सरसाङ्गणाः ॥ १४ ॥ उर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुषा। विश्वाची च घृताची च पञ्चचूड़ा तिलोत्तमा ॥ १५ ॥ आदित्या वसवो रुद्राः साश्विनः पितरोऽपि च। धर्मः श्रुतं तपो दीक्षा व्यवसायः पितामहः ॥१६॥ शर्वर्य्यो दिवसाश्चैव मारीचः कश्यपस्तथा। शुक्रो वृहस्पतिर्भौमो बुधो राहुः शनैश्चरः ॥ १७ ॥ नक्षत्राण्यृतवश्चैव मासाः पक्षाः सवत्सराः। वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा ॥ १८ ॥ शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती। सिन्धुश्च देविका चैव प्रभासं पुष्कराणि च ॥ १९ ॥ गङ्गा महानदी वेणा कावेरी नर्मदा तथा। कुलंपुना विशल्या च करतोयाम्बुवाहिनी ॥ २० ॥ सरयूर्गण्डकी चैव लोहितश्च महानदः। ताम्रारुणा वेत्रवती पर्णाशा गौतमी तथा ॥ २१ ॥ गोदावरी च वेण्वा च कृष्णवेणा तथा द्विजा। दृषद्वती च कावेरी बङ्क्षुर्मन्दाकिनी तथा ॥ २२ ॥ प्रयागञ्च प्रभासञ्च पुण्यं नैमिषमेव च। तच्च विश्वेश्वरस्थानं यत्तद्धि विमलं सरः ॥ २३ ॥ पुण्यतीर्थेषु कलिलं कुरुक्षेत्रं प्रकीर्त्तितम्। सिन्धूत्तमस्तपो दानं जम्बूमार्गमथापि च ॥ २४ ॥ हिरण्वती वितस्ता च तथा प्लक्षवती नदी। वेदस्मृतिर्वेदवती मालवायाश्ववत्यपि ॥२५॥ भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च। ऋषिकुल्यास्तथा मेध्या नदी चित्रवहा तथा ॥ २६॥ चर्मण्वती नदी पुण्या कौशिकी

यमुना तथा । नदी भीमरथी चैव बाहुदा च महानदी ॥ २७ ॥ माहेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती । नन्दा चापरनन्दा च तथा तीर्थमहाह्रदः ॥ २८ ॥ गया च फल्गुतीर्थञ्च धर्मारण्यं सुरैर्वृतम् । तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् ॥ २९ ॥ पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् । हिमवान् पर्वतश्चैव दिव्यौषधिसमन्वितः ॥ ३० ॥ विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः । मेरुर्महेन्द्रो मलयः श्वेतश्च रजतान्वितः ॥ ३१ ॥ शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा । चित्रकूटोऽञ्जनाभश्च पर्वतो गन्धमादनः ॥ ३२ ॥ पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः । दिशश्च बिदिशश्चैव क्षितिः सर्व्वे महीरुहाः ॥ ३३ ॥ विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा । पान्तु नः सततं देवाः कीर्त्तिताकीर्त्तिता मया ॥ ३४ ॥ कीर्त्तयानो नरो ह्येतान् मुच्यते सर्वकिल्बिषैः । स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात् ॥ ३५ ॥ सर्वसङ्करपापेभ्यो देवतास्तवनन्दकः । देवतानन्तरं विप्रांस्तपःसिद्धांस्तपोधिकान् ॥ ३६ ॥ कीर्त्तितान् कीर्त्तयिष्यामि सर्वपापप्रमोचनान् । यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा ॥ ३७ ॥ भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः । बर्ही च गुणसम्पन्नः प्राचीं दिशमुपाश्रिताः ॥ ३८ ॥ भद्रान्दिशं महाभागा उन्मुचुः प्रमुचुस्तथा । मुमुचुश्च महाभागाः स्वस्त्यात्रेयश्च वीर्य्यवान् ॥ ३९ ॥ मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् । दृढ़ायुश्चोर्द्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ॥ ४० ॥ पश्चिमां दिशमाश्रित्य य एधन्ते निबोध तान् । उषङ्गुः सह सोदर्य्यैः परिव्याधश्च वीर्य्यवान् ॥४१॥ ऋषिर्दीर्घतमाश्चैव गौतमः काश्यपस्तथा । एकतश्च द्वितश्चैव त्रितश्चैव महानृषिः ॥ ४२ ॥ अत्रेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः । उत्तरां दिशमास्थाय य एधन्ते निबोध तान् ॥ ४३ ॥ अत्रिर्वशिष्ठः शक्तिश्च पाराशर्य्यश्च वीर्य्यवान् । विश्वामित्रो भर-

द्वाजो जमदग्निस्तथैव च॥ ४४॥ ऋचीकपुत्रो रामश्च ऋषि-
रौद्दालकिस्तथा। श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा॥४५॥
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च। लोमशो नाचिकेतश्च
लोमहर्षण एव च॥ ४६॥ ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवन-
स्तथा। एष वै समवायश्च ऋषिवेदसमन्वित॥ ४७॥ आद्यः
प्रकीर्त्तितो राजन् सर्वपापप्रमोचनः। नृगो ययातिर्नहुषो यदुः
पूरुश्च वीर्य्यवान्॥ ४८॥ सगरो धुन्धुमारोऽथ दिलीपश्च प्रताप-
वान्। कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा॥ ४९॥
दुष्मन्तो भरतश्चैव चक्रवर्त्ती महामनाः। यवनो जनकश्चैव तथा
धृष्टरथो नृपः॥ ५०॥ रघुर्नरवरश्चैव तथा दशरथो नृपः।
रामो राक्षसहा वीरः शशविन्दुर्भगीरथः॥ ५१॥ हरिश्चन्द्रो
मरुत्तश्च तथा दृढ़रथो नृपः। महोदयो ह्यलर्कश्च ऐलश्चैव नरा-
धिपः॥ ५२॥ करन्धमो नरश्रेष्ठः काश्मीरश्च नराधिपः। दक्षो-
ऽम्बरीषः कुकुरो रैवतश्च महायशाः। कुरुः सम्वरणश्चैव मान्धाता
सत्यविक्रमः॥५३॥ मुचकुन्दश्च राजर्षिर्जह्नुर्जाह्नविसेवितः। आदि-
राजः पृथुर्वैण्यो मित्रभानुः प्रियङ्करः॥५४॥ त्रसदस्युस्तथा राजा
श्वेतो राजर्षिसत्तमः। महाभिषश्च विख्यातो निमी राजा तथा-
ष्टकः॥ ५५॥ आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिपः।
प्रतर्द्दनो दिवोदासः सुदासः कोशलेश्वरः॥ ५६॥ ऐलो नलश्च
राजर्षिर्मनुश्चैव प्रजापतिः। हविध्रश्च पृषध्रश्च प्रतीपः शान्तनु-
स्तथा॥ ५७॥ अजः प्राचीनवर्हिश्च तथेक्ष्वाकुर्महायशाः। अन-
रण्यो नरपतिर्जानुजङ्घस्तथैव च। कक्षसेनश्च राजर्षिर्ये चान्ये
नानुकीर्त्तिताः॥ ५८॥ कल्यमुत्थाय यो नित्यं सन्ध्ये द्वेऽस्त-
मयोदये। पठेच्छुचिरनावृत्तः स धर्मफलभाग्भवेत्॥ ५९॥
देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा। पुष्टिमायुर्यशः स्वर्गं
विधास्यन्ति महेश्वराः॥ ६०॥ मा विघ्नं मा च मे पापं मा च

मे परिपन्थिनः । ध्रुवो जयो मे नित्यं स्यात् परत्र च शुभा गतिः ॥ ६१ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्म्मे वंशानुकीर्त्तने पञ्चषष्ट्यधिकशतोऽध्यायः ॥ १६५ ॥

---

जनमेजय उवाच । शरतल्पगते भीष्मे कौरवाणां धुरन्धरे । शयाने वीरशयने पाण्डवैः समुपस्थिते ॥ १ ॥ युधिष्ठिरो महाप्राज्ञो मम पूर्वपितामहः । धर्म्माणामागमं श्रुत्वा विदित्वा सर्वसंशयान् ॥ २ ॥ दानानाञ्च विधिं श्रुत्वा छिन्नधर्म्मार्थसंशयः । यदन्यदकरोद्विप्र तन्मे शंसितुमर्हसि ॥ ३ ॥

वैशम्पायन उवाच । अभूत्मुहूर्त्तं स्तिमितं सर्वं तद्राजमण्डलम् । तूष्णीम्भूते ततस्तस्मिन् पटे चित्रमिवार्पितम् ॥ ४ ॥ मुहूर्त्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः । नृपं शयानं गाङ्गेयमिदमाह वचस्तदा ॥ ५ ॥ राजन् प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः । सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः ॥ ६ ॥ उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता । तमिमं पुरयानाय समनुज्ञातुमर्हसि ॥ ७ ॥ एवमुक्तो भगवता व्यासेन पृथिवीपतिः । युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥ ८ ॥ उवाच चैनं मधुरं नृपं शान्तनवो नृपः । प्रविशस्व पुरीं राजन् व्येतु ते मानसो ज्वरः ॥ ९ ॥ यजस्व विविधैर्यज्ञैर्बह्वन्नैश्चाप्तदक्षिणैः । ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ॥ १० ॥ क्षत्रधर्म्मरतः पार्थ पितॄन्देवांश्च तर्पय । श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ॥११॥ रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिशान्त्वय । सुहृदः फलसत्कारैरर्चयस्व यथार्हतः ॥ १२ ॥ अनु त्वां तात जीवन्तु मित्राणि सुहृदस्तथा । चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥ १३ ॥

आगन्तव्यञ्च भवता समये मम पार्थिव। विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ १४ ॥ तथेत्युक्त्वा तु कौन्तेयः सोऽभिवाद्य पितामहम्। प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ १५ ॥ धृतराष्ट्रं पुरस्कृत्य गान्धारीञ्च पतिव्रताम्। सहितैर्ऋषिभिः सर्वैर्भ्रातृभिः केशवेन च ॥ १६ ॥ पौरजानपदैश्चैव मन्त्रिभिश्चैव पार्थिव। प्रविवेश कुरुश्रेष्ठः पुरं वारणसाह्वयम् ॥ १७ ॥

इत्यनुशासनपर्वणि आनुशासनिकपर्वणि दानधर्मे भीष्मानुज्ञायां षट्षष्ट्यधिकशतोऽध्यायः ॥ १६६ ॥

समाप्तञ्चेदमानुशासनिकं पर्व।

---

## ॥ अथ स्वर्गारोहणिकं पर्व ॥

वैशम्पायन उवाच। ततः कुन्तीसुतो राजा पौरजानपदं जनम्। पूजयित्वा यथान्यायमनुजज्ञे गृहान् प्रति ॥ १ ॥ सान्त्वयामास नारीश्च हतवीरा हतेश्वराः। विपुलैरर्थदानैश्च तदा पाण्डुसुतो नृपः ॥ २ ॥ सोऽभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः। उपस्थाप्य नरश्रेष्ठः सर्वाः सुप्रकृतीस्तदा ॥ ३ ॥ द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च नित्यशः। प्रतिगृह्याशिषो मुख्या-स्तथा धर्मभृताम्वरः ॥ ४ ॥ उषित्वा शर्वरीः श्रीमान् पञ्चाश-न्नगरोत्तमे। समयं कौरवाग्रस्य सस्मार पुरुषर्षभः ॥ ५ ॥ स निर्ययौ गजपुराद्याजकैः परिवारितः। दृष्ट्वा निवृत्तमादित्यं प्रवृत्तञ्चोत्तरायणम् ॥ ६ ॥ घृतं माल्यञ्च गन्धांश्च क्षौमाणि च युधिष्ठिरः। चन्दनागुरुमुख्यानि तथाकालीयकान्यपि ॥ ७ ॥ प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंस्करणाय वै। माल्यानि च महा-र्हाणि रत्नानि विविधानि च ॥ ८ ॥ धृतराष्ट्रं पुरस्कृत्य गान्धा-

रीञ्च यशस्विनीम्। मातरञ्च पृथां धीमान् भ्रातॄंश्च पुरुषर्षभः
॥ ९ ॥ जनार्द्दनेनानुगतो विदुरेण च धीमता। युयुत्सुना च
कौरव्यो युयुधानेन वा विभो ॥ १० ॥ महता राजयोग्येन परि-
वारेण संवृतः। स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन् ॥११॥
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा। आससाद कुरुक्षेत्रे
तथा शान्तनवं नृपः ॥ १२ ॥ उपास्यमानं व्यासेन पाराशर्य्येण
धीमता। नारदेन च राजर्षे देवलेनासितेन च ॥ १३ ॥ हत-
शिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः। रक्षिभिश्च महात्मानं रक्ष्य-
माणं समन्ततः ॥ १४ ॥ शयानं वीरशयने ददर्श नृपतिस्तथा।
ततो रथादवातीर्य्य भ्रातृभिः सह धर्मराट् ॥ १५ ॥ अभिवाद्याथ
कौरव्यं पितामहमरिन्दमम्। द्वैपायनादीन् विप्रांश्च तैश्च प्रत्यभि-
नन्दितः ॥ १६ ॥ ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिश्च सहाच्युतः।
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् ॥ १७ ॥ अब्रवी-
द्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः। भ्रातृभिः सह कौरव्य शयानं
निम्नगासुतम् ॥ १८ ॥ युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते ॥ १९ ॥ प्राप्तोऽस्मि
समये राजन्नग्नीनादाय ते विभो। आचार्य्या ब्राह्मणाश्चैव ऋत्विजो
भ्रातरश्च मे ॥ २० ॥ पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः।
उपस्थितः सहामात्यो वासुदेवश्च वीर्य्यवान् ॥ २१ ॥ हतशिष्टाश्च
राजानः सर्व्वे च कुरुजाङ्गलाः। तान् पश्य कुरुशार्दूल समुन्मील्य
च लोचने ॥ २२ ॥ यच्चेह किञ्चित् कर्त्तव्यं तत्सर्वं प्रापितं मया।
यथोक्तं भवता काले सर्वमेव च तत्कृतम् ॥ २३ ॥

वैशम्पायन उवाच। एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता।
ददर्श भरतान् सर्व्वान् संस्थितान् परिवार्य्य तम् ॥ २४ ॥ ततश्च
बलवान् भीष्मः प्रगृह्य विपुलं भुजम्। उद्यन्मेघस्वरो वाग्मी
काले वचनमब्रवीत् ॥ २५ ॥ दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो

युधिष्ठिर। परिवृत्तो हि भगवान् सहस्रांशुर्दिवाकरः ॥ २६ ॥ अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः। शरेषु निशिताग्रेषु यथावर्षशतं तथा ॥ २७ ॥ माघोऽयं समनुप्राप्तो मासः सौम्यो युधिष्ठिर। त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥ २८ ॥ एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम्। धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् ॥ २९ ॥

भीष्म उवाच। राजन् विदितधर्मोऽसि सुनिर्णीतार्थसंशयः। बहुश्रुता हि ते विप्रा बहवः पर्य्युपासिताः ॥ ३० ॥ वेदशास्त्राणि सूक्ष्माणि धर्मांश्च मनुजेश्वर। वेदांश्च चतुरः सर्वान्निखिलेनानुबुध्यसे ॥ ३१ ॥ न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा। श्रुतं देवरहस्यन्ते कृष्णद्वैपायनादपि ॥ ३२ ॥ यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः। तान् पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥ ३३ ॥ धर्मराजो हि शुद्धात्मा निर्देशे स्थास्यते तव। आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम् ॥ ३४ ॥ तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः। ईर्षाभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ॥ ३५ ॥

वैशम्पायन उवाच। एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम्। वासुदेवं महाबाहुमभ्यभाषत कौरवः ॥ ३६ ॥

भीष्म उवाच। भगवन् देवदेवेश सुरासुरनमस्कृत। त्रिविक्रम नमस्तेऽस्तु शङ्खचक्रगदाधर ॥ ३७ ॥ वासुदेवो हिरण्यात्मा पुरुषः सविता विराट्। जीवभूतोऽनुरूपस्त्वं परमात्मा सनातनः ॥ ३८ ॥ त्वद्भक्तस्त्वद्गतमनाः सदारस्यापरिग्रहः। त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ॥ ३९ ॥ अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम। रक्ष्याश्च ते पाण्डवेया भवान् येषां परायणम् ॥ ४० ॥ उक्तवानस्मि दुर्बुद्धिं मन्दं दुर्य्योधनं पुरा। यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ४१ ॥ वासुदेवेन तीर्थेन

पुत्र संशाम्य पाण्डवैः। सन्धानस्य परः कालस्तवेति च पुनः पुनः ॥ ४२ ॥ न च मे तद्वचो मूढ़ः कृतवान् स तु मन्दधीः। घातयित्वेह पृथिवीं ततः स निधनं गतः ॥ ४३ ॥ त्वान्तु जानाम्यहं देवं पुराणमृषिसत्तमम्। नरेण सहितं देव वदर्य्यां सुचिरोषितम् ॥ ४४ ॥ यथा मे नारदः प्राह व्यासश्च सुमहातपाः। नरनारायणावितौ सम्भूतौ मनुजेष्विति ॥ ४५ ॥ स मां त्वमनुजानीहि कृष्ण मोक्षे कलेवरम्। त्वयाहं समनुज्ञातो गच्छेयं परमां गतिम् ॥ ४६ ॥

वासुदेव उवाच। अनुजानामि भीष्म त्वां वसून् प्राप्नुहि पार्थिव। न तेऽस्ति वृजिनं किञ्चिदिह लोके महाद्युते ॥ ४७ ॥ पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः। येन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ ४८ ॥

वैशम्पायन उवाच। एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत्। धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदांस्तथा ॥ ४९ ॥ प्राणानुत्स्रष्टुमिच्छामि तत्रानुज्ञातुमर्हथ। सत्येषु यतितव्यं वः सत्यं हि परमं बलम् ॥ ५० ॥ आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः। ब्रह्मण्यैर्धर्म्मशीलैश्च तपोनित्यैश्च भारताः ॥ ५१ ॥ इत्युक्ता सुहृदः सर्वान् संपरिष्वज्य चैव हि। पुनरेवाब्रवीद्धीमान् युधिष्ठिरमिदं वचः ॥ ५२ ॥ ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः। आचार्य्या ऋत्विजश्चैव पूजनीया जनाधिप ॥ ५३ ॥

इत्यनुशासनपर्वणि स्वर्गारोहणिकपर्वणि दानधर्मे भीष्मप्रार्थनायां सप्तषष्ट्यधिकशतोऽध्यायः ॥ १६७ ॥

---

वैशम्पायन उवाच। एवमुक्त्वा कुरून् सर्वान् भीष्मः शान्तनवस्तदा। तूष्णीं बभूव कौरव्य स मुहूर्त्तमरिन्दम ॥ १ ॥ धार-

यामास चात्मानं धारणासु यथाक्रमम्। तस्योर्द्धमगमन् प्राणाः सन्निरुद्धा महात्मनः॥ २॥ यद्यन्मुञ्चति गात्राणां स शान्तनुसुतस्तदा। तत्तद्विशल्यमभवद्योगयुक्तस्य वै क्रमात्॥ ३॥ इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम्। सहितैर्ऋषिभिः सर्वैस्तथा व्यासादिभिर्नृप॥ ४॥ क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा। तद्दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः। सहितैर्मुनिभिः सर्वैस्तथा व्यासादिभिर्नृप॥ ५॥ सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै। जगाम भित्त्वा मूर्द्धानं दिवमभ्युत्पपात ह॥ ६॥ देवदुन्दुभिनादश्च पुष्पवर्षैः सहाभवत्। सिद्धा ब्रह्मर्षयश्चैव साधुसाध्विति हर्षिताः॥ ७॥ महोल्केव च भीष्मस्य मूर्द्धदेशाज्जनाधिप। निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत॥ ८॥ एवं स राजशार्दूल नृपः शान्तनवस्तदा। समयुज्यत कालेन भरतानां कुलोद्वहः॥ ९॥ ततस्त्वादाय दारूणि गन्धांश्च विविधान् बहून्। चिताञ्चक्रुर्महात्मानः पाण्डवा विदुरस्तथा॥ १०॥ युयुत्सुश्चापि कौरव्यं प्रेक्षकास्त्वितरेऽभवन्। युधिष्ठिरश्च गाङ्गेयं विदुरश्च महामतिः॥ ११॥ छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम्। धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम्॥ १२॥ चामरव्यजने शुभ्रे भीमसेनार्जुनावुभौ। उष्णीषे पर्य्यगृह्णीतां माद्रीपुत्रावुभावपि॥१३॥ युधिष्ठिरश्च सहितो धृतराष्ट्रश्च पादतः। स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्वहम्। तालवृन्तान्युपादाय पर्य्यवीजन्त सर्वशः॥ १४॥ ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः। यजनं बहुशश्चाग्नौ जगुः सामानि सामगाः॥ १५॥ ततश्चन्दनकाष्ठैश्च तथा कालीयकैरपि। कालागुरुप्रभृतिभिर्गन्धैश्चोच्चावचैरपि॥ १६॥ समवच्छाद्य गाङ्गेयं संप्रज्वाल्य हुताशनम्। अपसव्यमकुर्वन्त धृतराष्ट्रमुखास्त्विताम्॥ १७॥ संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः। जग्मुर्भागीरथीं पुण्यामृषि-

जुष्टां कुरूद्वहाः ॥ १८ ॥ अनुगम्यमाना व्यासेन नारदेनासितेन च । कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ॥ १९ ॥ उद-कञ्चक्रिरे चैव गाङ्गेयस्य महात्मनः । विधिवद्भरतश्रेष्ठ स च सर्वो जनस्तदा ॥ २० ॥ ततो भागीरथी देवी तनयस्योदके कृते । उत्थाय सलिलात्तस्माद्रुदती शोकविह्वला ॥ २१ ॥ परिदेवयती तत्र कौरवानभ्यभाषत । निबोधत यथावृत्तमुच्यमानं मयानघाः ॥ २२ ॥ राजवृत्तेन सम्पन्नः प्रज्ञयाभिजनेन च । सत्कर्त्ता कुरुवृद्धानां पितृभक्तो महाव्रतः ॥ २३ ॥ जामदग्न्येन रामेण यः पुरा न पराजितः । दिव्यैरस्त्रैर्महावीर्य्यैः स हतोऽद्य शिखण्डिना ॥ २४ ॥ अश्मसारमयं नूनं हृदयं मम पार्थिवाः । अपश्यन्त्याः प्रियं पुत्रं यन्न दीर्य्यति मेऽद्य वै ॥ २५ ॥ समेतं पार्थिवं क्षत्रं काशिपुर्य्यां स्वयम्वरे । विजित्यैकरथेनैव कन्यास्तायं जहार ह ॥ २६ ॥ यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन । हतं शिखण्डिना श्रुत्वा न विदीर्य्यति मे मनः ॥ २७ ॥ जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना । पीड़ितो नातियत्नेन स हतो-ऽद्य शिखण्डिना ॥ २८ ॥ एवम्बिधं बहु तदा विलपन्तीं महा-नदीम् । आश्वासयामास तदा साम्ना दामोदरो विभुः ॥ २९ ॥ समाश्वसिहि भद्रे त्वं माशुचः प्रियदर्शने । गतः स परमं लोकं तव पुत्रो न संशयः ॥ ३० ॥ वसुरेष महातेजाः शापदोषेण शोभने । मानुषत्वमनुप्राप्तो नैनं शोचितुमर्हसि ॥ ३१ ॥ स एष क्षत्रधर्मेण युध्यमानो रणाजिरे । धनञ्जयेन निहतो नैष देवि शिखण्डिना ॥ ३२ ॥ भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे । न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ॥ ३३ ॥ स्वच्छन्दतस्तव सुतो गतः स्वर्गं शुभानने । न शक्ता विनिहन्तुं वै रणे तं सर्व-देवताः ॥ ३४ ॥ तस्मान्मा देवि गङ्गे त्वं शोचस्व कुरुनन्दनम् । वसुरेष गतो देवि पुत्रस्ते विज्वरा भव ॥ ३५ ॥

वैशम्पायन उवाच। इत्युक्ता सा तु कृष्णेन व्यासेन च सरिद्वरा। त्यक्त्वा शोकं महाराज प्रकृतिं प्राप जाह्नवी ॥ ३६ ॥ सत्कृत्य ते तां सरितं तदा कृष्णमुखा नृप। अनुज्ञातास्तया सर्वे न्यवर्त्तन्त जनाधिप ॥ ३७ ॥

इत्यनुशासनपर्वणि स्वर्गारोहणिकपर्वणि दानधर्मे भीष्मस्वर्गारोहणे अष्टषष्ठ्यधिकशततोऽध्यायः ॥ १६८ ॥

समाप्तोऽयं स्वर्गारोहणिकं पर्व।

---

समाप्तञ्चेदमनुशासनपर्व।

---

# श्रीमहाभारतम् ।

अश्वमेधपर्व । Aśvamedhaparva (14)



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

वैशम्पायन उवाच । कृतोदकन्तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः ॥ १ ॥ उत्तीर्य्य तु महा-
बाहुर्वाष्पव्याकुललोचनः । पपात तीरे गङ्गाया व्याधविद्ध इव
द्विपः ॥ २ ॥ तं सीदमानं जग्राह भीमः कृष्णेन चोदितः ।
मैवमित्यब्रवीच्चैनं कृष्णः परबलार्द्दनः ॥ ३ ॥ तमार्त्तं पतितं भूमौ
श्वसन्तञ्च पुनः पुनः । ददृशुः पाण्डवा राजन् धर्म्मपुत्रं युधि-
ष्ठिरम् ॥ ४ ॥ तं दृष्ट्वा दीनमनसं गतसत्त्वं नरेश्वरम् । भूयः
शोकसमाविष्टाः पाण्डवाः समुपाविशन् ॥ ५ ॥ राजा तु धृत-
राष्ट्रश्च पुत्रशोकाभिपीड़ितः । वाक्यमाह महाबुद्धिः प्रज्ञाचक्षु-
र्नरेश्वरम् ॥ ६ ॥ उत्तिष्ठ कुरुशार्दूल कुरु कार्य्यमनन्तरम् ।
क्षात्रधर्म्मेण कौन्तेय जितेयमवनी त्वया ॥ ७ ॥ तां भुङ्क्ष्व भ्रातृभिः
सार्द्धं सुहृद्भिश्च जनेश्वर । न शोचितव्यं पश्यामि त्वया धर्म्म-
भृताम्वर ॥ ८ ॥ शोचितव्यं मया चैव गान्धार्य्या च महीपते ।
ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनम् ॥ ९ ॥ अश्रुत्वा हित-
कामस्य विदुरस्य महात्मनः । वाक्यानि सुमहार्थानि परि-

तप्यामि दुर्मतिः ॥ १० ॥ उक्तवान् विदुरो यन्मां धर्मात्मा दिव्य-दर्शनः। दुर्य्योधनापराधेन कुलन्ते विनशिष्यति ॥ ११ ॥ स्वस्ति चेदिच्छसे राजन् कुलस्य कुरु मे वचः। त्यज्यतामेष दुष्टात्मा मन्दो राजा सुयोधनः ॥ १२ ॥ कर्णश्च शकुनिश्चैव नैनं पश्यतु कर्हिचित्। द्यूतसङ्घातमप्येषामप्रवादेन वारय ॥ १३ ॥ अभि-षेचय राजानं धर्मात्मानं युधिष्ठिरम्। स पालयिष्यति वशी धर्मेण पृथिवीमिमाम् ॥ १४ ॥ अथ नेच्छसि राजानं कुन्तीपुत्रं युधिष्ठिरम्। मेधीभूतः स्वयं राज्यं प्रतिगृह्णीष्व पार्थिव ॥ १५ ॥ समं सर्वेषु भूतेषु वर्त्तमानं नराधिप। अनुजीवन्तु सर्वे त्वां ज्ञातयो ज्ञातिवर्द्धन ॥ १६ ॥ एवं ब्रुवति कौन्तेय विदुरे दीर्घ-दर्शिनि। दुर्य्योधनमहं पापमन्ववर्त्तं वृथामतिः ॥ १७ ॥ अश्रुत्वा तस्य धीरस्य वाक्यानि मधुराख्यहम्। फलं प्राप्य महद्दुःखं निमग्नः शोकसागरे ॥ १८ ॥ वृद्धौ हि तेऽस्वपितरौ पश्य तौ दुःखितौ नृप। न शोचितव्यं भवता पश्यामीह जनाधिप ॥ १९ ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि
प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच। एवमुक्तस्तु राज्ञा स धृतराष्ट्रेण धीमता। तूष्णीम्बभूव मेधावी तमुवाचाथ केशवः ॥ १ ॥ अतीव मनसा शोकः क्रियमाणो जनाधिप। सन्तापयति वै तस्य पूर्वप्रेतान् पितामहान् ॥ २ ॥ यजस्व विधिवद्यज्ञैर्विविधैराप्तदक्षिणैः। देवांस्तर्पय सोमेन स्वधया च पितॄनपि ॥ ३ ॥ अतिथीनन्नपानेन कामैरन्यैरकिञ्चनान्। त्वद्विधस्य महाबुद्धेर्नैतदद्योपपद्यते ॥ ४ ॥ विदितं वेदितव्यं ते कर्त्तव्यमपि ते कृतम्। श्रुताश्च राजधर्मास्ते भीष्माद्भागीरथीसुतात्। कृष्णद्वैपायनाच्चैव नारदाद्विदुरात्तथा

॥ ५ ॥ नेमामर्हसि मूढ़ानां वृत्तिं त्वमनुवर्त्तितुम् । पितृपैतामहं वृत्तमास्थाय धुरमुद्वह ॥ ६ ॥ युक्तं हि यशसा क्षत्रं स्वर्गं प्राप्तुमसंशयम् । न हि कश्चिद्धि शूराणां निहतोऽत्र पराङ्मुखः ॥ ७ ॥ त्यज शोकं महाराज भवितव्यं हि तत्तथा । न शक्यास्ते पुनर्द्रष्टुं त्वया येऽस्मिन्रणे हताः ॥ ८ ॥ एतावदुक्त्वा गोविन्दो धर्म्मराजं युधिष्ठिरम् । विरराम महातेजास्तमुवाच युधिष्ठिरः ॥ ९ ॥

युधिष्ठिर उवाच । गोविन्द मयि या प्रीतिस्तव सा विदिता मम । सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे ॥ १० ॥ प्रियन्तु मे स्यात् सुमहत् कृतं चक्रगदाधर । श्रीमान् प्रीतेन मनसा सर्वं यादवनन्दन । यदि मामनुजानीयाद्भवान् गन्तुं तपोवनम् ॥ ११ ॥ न हि शान्तिं प्रपश्यामि घातयित्वा पितामहम् । कर्णञ्च पुरुषव्याघ्रं संग्रामेष्वपलायिनम् ॥ १२ ॥ कर्म्मणा येन मुच्येयमस्मात् क्रूराज्जनार्द्दन । कर्म्मणा तद्विधत्स्वेह येन शुध्यति मे मनः ॥ १३ ॥ तमेवं वादिनं पार्थं व्यासः प्रोवाच धर्म्मवित् । शान्तयन् सुमहातेजा शुभं वचनमर्थवत् ॥ १४ ॥ अकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे । किमाकाशे वयं तात प्रलपाम मुहुर्मुहुः ॥ १५ ॥ विदिताः क्षत्रधर्मास्ते येषां युद्धेन जीविका । यथा प्रवृत्तो नृपतिर्नाधिबन्धेन युज्यते ॥ १६ ॥ मोक्षधर्माश्च निखिला याथातथ्येन ते श्रुताः । असकृच्चापि सन्देहाश्छिन्नास्ते कामजा मया ॥ १७ ॥ अश्रद्दधानो दुर्मेधा लुप्तस्मृतिरसि ध्रुवम् । मैवं भव न ते युक्तमिदमज्ञानमीदृशम् ॥ १८ ॥ प्रायश्चित्तानि सर्वाणि विदितानि च तेऽनघ । राजधर्माश्च ते सर्वे दानधर्माश्च ते श्रुताः ॥ १९ ॥ स कथं सर्वधर्म्मज्ञः सर्वागमविशारदः । परिमुह्यसि भूयस्त्वमज्ञानादिव भारत ॥ २० ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि

द्वितीयोऽध्यायः ॥ २ ॥

व्यास उवाच । युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः । न हि कश्चित् स्वयं मर्त्त्यः स्ववशः कुरुते क्रियाम् ॥ १ ॥ ईश्वरेण च युक्तोऽयं साध्वसाधु च मानद । करोति पुरुषः कर्म्म तत्र का परिदेवना ॥ २ ॥ आत्मानं मन्यसे चाथ पापकर्माणमन्ततः । शृणु तत्र यथा पापमपकृष्येत भारत ॥ ३ ॥ तपोभिः क्रतुभिश्चैव दानेन च युधिष्ठिर । तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्वते ॥ ४ ॥ यज्ञेन तपसा चैव दानेन च नराधिप । पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः ॥ ५ ॥ असुराश्च सुराश्चैव पुण्यहेतोर्मखक्रियाम् । प्रयतन्ते महात्मानस्तस्माद्यज्ञः परायणम् ॥ ६ ॥ यज्ञैरेव महात्मानो बभूवुरधिकाः सुराः । ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन् ॥ ७ ॥ राजसूयाश्वमेधौ च सर्वमेधञ्च भारत । नरमेधञ्च नृपते त्वमाहर युधिष्ठिर ॥ ८ ॥ यजस्व वाजिमेधेन विधिवद्दक्षिणावता । बहुकामान्नवित्तेन रामो दाशरथिर्यथा ॥ ९ ॥ यथा च भरतो राजा दौष्मन्तिः पृथिवीपतिः । शाकुन्तलो महावीर्य्यस्तव पूर्व्वपितामहः ॥ १० ॥

युधिष्ठिर उवाच । असंशयं वाजिमेधः पावयेत् पृथिवीपतिम् । अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ॥ ११ ॥ इमं ज्ञातिबधं कृत्वा सुमहान्तं द्विजोत्तम । दानमल्पं न शक्नोमि दातुं वित्तञ्च नास्ति मे ॥ १२ ॥ न तु बालानिमान् दीनानुत्सहे वसु याचितुम् । तथैवार्द्रव्रणान् कृच्छ्रे वर्त्तमानान्नृपात्मजान् ॥१३॥ स्वयं विनाश्य पृथिवीं यज्ञार्थं द्विजसत्तम । करमाहारयिष्यामि कथं शोकपरायणः ॥ १४ ॥ दुर्य्योधनापराधेन वसुधावसुधाधिपाः । प्रनष्टा योजयित्वास्मानकीर्त्त्या मुनिसत्तम ॥ १५ ॥ दुर्य्योधनेन पृथिवी क्षयिता वित्तकारणात् । कोशश्चापि विशीर्णोऽसौ धार्त्तराष्ट्रस्य दुर्म्मतेः ॥ १६ ॥ पृथिवी दक्षिणा चात्र विधिः प्रथमकल्पितः । विद्वद्भिः परिदृष्टोऽयं शिष्टो विधिविप-

ध्येयः ॥ १७ ॥ न च प्रतिनिधिं कर्त्तुं चिकीर्षामि तपोधन । अत्र मे भगवन् सम्यक् साचिव्यं कर्त्तुमर्हसि ॥ १८ ॥ एवमुक्तस्तु पार्थेन कृष्णो द्वैपायनस्तदा । मुहूर्त्तमनुसञ्चिन्त्य धर्म्मराजानमब्रवीत् ॥१९॥

व्यास उवाच । कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति । विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम् ॥ २० ॥ उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महात्मनः । तदानयस्व कौन्तेय पर्य्याप्तं तद्भविष्यति ॥ २१ ॥

युधिष्ठिर उवाच । कथं यज्ञे मरुत्तस्य द्रविणं तत् समाचितम् । कस्मिंश्च काले स नृपो बभूव वदताम्वर ॥ २२ ॥

व्यास उवाच । यदि शुश्रूषसे पार्थ शृणु कारन्धमं नृपम् । यस्मिन् काले महावीर्य्यः स राजासीन्महाधनः ॥ २३ ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि मरुत्तीये तृतीयोऽध्यायः ॥ ३ ॥

---

युधिष्ठिर उवाच । शुश्रूषे तस्य धर्म्मज्ञ राजर्षेः परिकीर्त्तनम् । द्वैपायन मरुत्तस्य कथां प्रब्रूहि मेऽनघ ॥ १ ॥

व्यास उवाच । आसीत् कृतयुगे तात मनुर्द्दण्डधरः प्रभुः । तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः ॥ २ ॥ प्रसन्धेरभवत् पुत्रः क्षुप इत्यभिविश्रुतः । क्षुपस्य पुत्र इक्ष्वाकुर्महीपालोऽभवत् प्रभुः ॥ ३ ॥ तस्य पुत्रशतं राजन्नासीत् परमधार्मिकम् । तांस्तु सर्वान् महीपालानिक्ष्वाकुरकरोत् प्रभुः ॥ ४ ॥ तेषां ज्येष्ठस्तु विंशोऽभूत् प्रतिमानं धनुष्मताम् । विंशस्य पुत्रः कल्याणो विविंशो नाम भारत ॥ ५ ॥ विविंशस्य सुता राजन् बभूवुर्द्दशपञ्च च । सर्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः ॥ ६ ॥ दानधर्म्मरताः शान्ताः सततं प्रियवादिनः । तेषां ज्येष्ठः खनीनेत्रः सुतान्

सर्वानपीड़यत् ॥ ७ ॥ खनीनेत्रस्तु विक्रान्तो जित्वा राज्यमकण्टकम् । नाशकद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ॥ ८ ॥ तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम् । अभ्यषिञ्चन्त राजेन्द्र मुदिता ह्यभवंस्तदा ॥ ९ ॥ स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनञ्च तत् । नियतो वर्त्तयामास प्रजाहितचिकीर्षया ॥ १० ॥ ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः । प्रजास्तं चान्वरज्यन्त धर्म्मनित्यं मनस्विनम् ॥ ११ ॥ तस्य धर्म्मप्रवृत्तस्य व्यशीर्य्यत् कोशवाहनम् । तं क्षीणकोशं सामन्ताः समन्तात् पर्य्यपीड़यन् ॥ १२ ॥ स पीड्यमानो बहुभिः क्षीणकोशाश्ववाहनः । आर्त्तिमार्च्छत् परां राजा सह भृत्यैः पुरेण च ॥ १३ ॥ न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये । संप्रवृत्तो हि राजा स धर्मनित्यो युधिष्ठिर ॥ १४ ॥ यदा तु परमामार्त्तिं गतोऽसौ सपुरो नृपः । ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलम् ॥ १५ ॥ ततस्तानजयत् सर्वान् प्रातिसीमान्नराधिपान् । एतस्मात् कारणाद्राजन् विश्रुतः स करन्धमः ॥ १६ ॥ तस्य कारन्धमः पुत्रस्त्रेतायुगमुखेऽभवत् । इन्द्रादनवरः श्रीमान् देवैरपि सुदुर्ज्जयः ॥ १७ ॥ तस्य सर्वे महीपाला वर्त्तन्ते स्म वशे तदा । स हि सम्राड़्भूत्तेषां वृत्तेन च बलेन च ॥ १८ ॥ अविक्षिन्नाम धर्मात्मा शौर्य्येणेन्द्रसमोऽभवत् । यज्ञशीलो धर्म्मरतिर्धृतिमान् संयतेन्द्रियः ॥ १९ ॥ तेजसादित्यसदृशः क्षमया पृथिवीसमः । बृहस्पतिसमो बुद्ध्या हिमवानिव सुस्थिरः ॥ २० ॥ कर्म्मणा मनसा वाचा दमेन प्रशमेन च । मनांस्याह्लादयामास प्रजानां स महीपतिः ॥ २१ ॥ य ईजे हयमेधानां शतेन विधिवत् प्रभुः । याजयामास यं विद्वान् स्वयमेवाङ्गिराः प्रभुः ॥ २२ ॥ तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया । मरुत्तो नाम धर्म्मज्ञश्चक्रवर्त्ती महायशाः । नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः ॥ २३ ॥ स यक्ष्यमाणो धर्मात्मा शातकुम्भ-

मयाच्युत । कारयामास शुभ्राणि भाजनानि सहस्रशः ॥ २४ ॥
मेरुं पर्व्वतमासाद्य हिमवत्पार्श्व उत्तरे । काञ्चनः सुमहान्
पादस्तत्र कर्म्म चकार सः ॥ २५॥ ततः कुण्डानि पात्रीश्च पिठरा-
ण्यासनानि च । चक्रुः सुवर्णकर्त्तारो येषां संख्या न विद्यते ॥२६॥
तस्यैव च समीपे तु यज्ञवाटो बभूव ह । ईजे तत्र स धर्मात्मा
विधिवत् पृथिवीपतिः । मरुत्तः सहितैः सर्वैः प्रजापालैर्नरा-
धिपः ॥ २७ ॥

इति अश्वमेधपर्व्वणि आश्वमेधिकपर्व्वणि सम्वर्त्तमरुत्तीये
चतुर्थोऽध्यायः ॥ ४ ॥

---

युधिष्ठिर उवाच । कथं वीर्य्यः समभवत् स राजा वदताम्वर ।
कथञ्च जातरूपेण समयुज्यत स द्विज ॥ १ ॥ क्व च तत् साम्प्रतं
द्रव्यं भगवन्नवतिष्ठते । कथञ्च शक्यमस्माभिस्तदवाप्तुं तपोधन ॥ २ ॥
व्यास उवाच । असुराश्च सुराश्चैव दक्षस्यासन् प्रजापतेः ।
अपत्यं बहुलं तात तेऽस्पर्द्धन्त परस्परम् ॥ ३ ॥ तथैवाङ्गिरसः
पुत्रौ व्रततुल्यौ बभूवतुः । बृहस्पतिर्बृहत्तेजाः सम्वर्त्तश्च तपो-
धनः ॥ ४ ॥ तावतिस्पर्द्धिनौ राजन् पृथगास्तां परस्परम् । बृह-
स्पतिः स सम्वर्त्तं बाधते स्म पुनः पुनः ॥ ५ ॥ स बाध्यमानः सततं
भ्रात्रा ज्येष्ठेन भारत । अर्थानुत्सृज्य दिग्वासा वनवासमरो-
चयत् ॥ ६ ॥ वासवोऽप्यसुरान् सर्वान् विजित्य च निपात्य च ।
इन्द्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितम् ॥ ७ ॥ पुत्रमङ्गिरसो
ज्येष्ठं विप्रश्रेष्ठं बृहस्पतिम् । याज्यस्त्वङ्गिरसः पूर्व्वमासीद्राजा
करन्धमः ॥ ८ ॥ वीर्य्येणाप्रतिमो लोके वृत्तेन च बलेन च । शत-
क्रतुरिवोजस्वी धर्मात्मा संशितव्रतः ॥ ९ ॥ वाहनं यस्य योधाश्च
मित्राणि विविधानि च । शयनानि च मुख्यानि महार्हाणि च

सर्वशः ॥ १० ॥ ध्यानादेवाभवद्राजन् मुखवातेन सर्वशः। स्वगुणैः पार्थिवान् सर्वान् वशे चक्रे नराधिपः ॥ ११ ॥ संजीव्य कालमिष्टश्च सशरीरो दिवङ्गतः। बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित् ॥ १२ ॥ अविक्षिन्नाम शत्रुजित् स्ववशे कृतवान्महीम्। विक्रमेण गुणैश्चैव पितेवासीत् स पार्थिवः ॥ १३ ॥ तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्यवान्। पुत्रस्तमनुरक्ताभूत् पृथिवी सागराम्बरा ॥ १४ ॥ स्पर्द्धते स स्म सततं देवराजेन नित्यदा। वासवोऽपि मरुत्तेन स्पर्द्धते पाण्डुनन्दन ॥ १५ ॥ शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः। यतमानोऽपि वै शक्रो न विशेषयति स्म ह ॥ १६ ॥ सोऽशक्नुवन् विशेषाय समाहूय बृहस्पतिम्। उवाचेदं वचो देवैः सहितो हरिवाहनः ॥ १७ ॥ बृहस्पते मरुत्तस्य मास्मकार्षीः कथञ्चन। दैवं कर्माथ पित्र्यं वा कर्त्तासि मम चेत् प्रियम् ॥ १८ ॥ अहं हि त्रिषु लोकेषु सुराणाञ्च बृहस्पते। इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपतिः ॥ १९ ॥ कथं ह्यमर्त्यं ब्रह्मं स्त्वं याजयित्वा सुराधिपम्। याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया ॥ २० ॥ मां वा वृणीष्व भद्रन्ते मरुत्तं वा महीपतिम्। परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् ॥ २१ ॥ एवमुक्तः स कौरव्य देवराज्ञा बृहस्पतिः। मुहूर्त्तमिव सञ्चिन्त्य देवराजानमब्रवीत् ॥ २२ ॥ त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः। नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ॥ २३ ॥ त्वमाजह्रर्थ देवानामेको वीरश्रियं पराम्। त्वं बिभर्षि भुवं द्याञ्च सदैव बलसूदन ॥ २४ ॥ पौरोहित्यं कथं कृत्वा तव देवगणेश्वर। याजयेयमहं मर्त्त्यं मरुत्तं पाकशासन ॥ २५ ॥ समाश्वसिहि देवेन्द्र नाहं मर्त्त्यस्य कर्हिचित्। ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम ॥ २६ ॥ हिरण्यरेता नोष्णः स्यात् परिवर्त्तेत मेदिनी। भासन्तु न रविः कुर्य्यान्न तु सत्यं चलेन्मयि ॥ २७ ॥

वैशम्पायन उवाच । वृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः । प्रशंस्यैनं त्रिविशाय स्वमेव भवनं तदा ॥ २८ ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि सम्वर्त्तमरुत्तीये पञ्चमोऽध्यायः ॥ ५ ॥

---

व्यास उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । वृहस्पतेश्च संवादं मरुत्तस्य च धीमतः ॥ १ ॥ देवराजस्य समयं कृतमाङ्गिरसेन ह । श्रुत्वा मरुत्तो नृपतिर्यज्ञमाहारयत् परम् ॥२॥ सङ्कल्प्य मनसा यज्ञं करन्धमसुतात्मजः । वृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ॥ ३ ॥ भगवन् यन्मया पूर्वमभिगम्य तपोधन । कृतोऽभिसन्धिर्यज्ञस्य भवतो वचनाद्गुरो ॥ ४ ॥ तमहं यष्टुमिच्छामि सम्भाराः सम्भृताश्च मे । याज्योऽस्मि भवतः साधो तत् प्राप्नुहि विधत्स्व च ॥ ५ ॥

वृहस्पतिरुवाच । न कामये याजयितुं त्वामहं पृथिवीपते । वृतोऽस्मि देवराजेन प्रतिज्ञातञ्च तस्य मे ॥ ६ ॥

मरुत्त उवाच । पित्र्यमस्मि भवत्क्षेत्रं बहु मन्ये च ते भृशम् । तवास्मि याज्यतां प्राप्तो भजमानं भजस्व माम् ॥ ७ ॥

वृहस्पतिरुवाच । अमर्त्त्यं याजयित्वाहं याजयिष्ये कथं नरम् । मरुत्त गच्छ वा मा वा निवृत्तोऽस्म्यद्य याजनात् ॥ ८ ॥ न त्वां याजयितास्म्यद्य वृणु त्वं यमिहेच्छसि । उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ॥ ९ ॥

व्यास उवाच । एवमुक्तस्तु नृपतिर्मरुत्तो व्रीड़ितोऽभवत् । प्रत्यागच्छत् सुसंविग्नो ददर्श पथि नारदम् ॥ १० ॥ देवर्षिणा समागम्य नारदेन स पार्थिवः । विधिवत् प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् ॥ ११ ॥ राजर्षे नातिहृष्टोऽसि कच्चित् क्षेमं तवानघ । क्व गतोऽसि कुतश्चेदमप्रीतिस्थानमागतम् ॥ १२ ॥ श्रोतव्यं

चेत्तथा राजन् ब्रूहि मे पार्थिवर्षभ । व्यपनेष्यामि ते मन्युं सर्वयत्नैर्नराधिप ॥ १३ ॥

वैशम्पायन उवाच । एवमुक्तो मरुत्तस्तु नारदेन महर्षिणा । विप्रलम्भमुपाध्यायात् सर्वमेव न्यवेदयत् ॥ १४ ॥

मरुत्त उवाच । गतोऽस्म्यङ्गिरसः पुत्रं देवाचार्य्यं वृहस्पतिम् । यज्ञार्थमृत्विजं द्रष्टुं स च मां नाभ्यनन्दत ॥ १५ ॥ प्रत्याख्यातश्च तेनाहं जीवितं नाद्य कामये । परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद ॥ १६ ॥

व्यास उवाच । एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच ह । आविक्षितं महाराज वाचा संजीवयन्निव ॥ १७ ॥

नारद उवाच । राजन्नङ्गिरसः पुत्रः सम्वर्त्तो नाम धार्मिकः । चंक्रमीति दिशः सर्वा दिग्वासा मोहयन् प्रजाः ॥ १८ ॥ तं गच्छ यदि याज्यं त्वां न वाञ्छति वृहस्पतिः । प्रसन्नस्त्वां महातेजाः सम्वर्त्तो याजयिष्यति ॥ १९ ॥

मरुत्त उवाच । संजीवितोऽहं भवता वाक्येनानेन नारद । पश्येयं क्व नु सम्वर्त्तं शंस मे वदताम्वर ॥ २० ॥ कथञ्च तस्मै वर्त्तेयं कथं मां न परित्यजेत् । प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे ॥ २१ ॥

नारद उवाच । उन्मत्तवेशं बिभ्रत् स चंक्रमीति यथासुखम् । वाराणस्यां महाराज दर्शनेप्सुर्महेश्वरम् ॥ २२ ॥ तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित् । तं दृष्ट्वा यो निवर्त्तेत स सम्वर्त्तो महीपते ॥ २३ ॥ तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत् स वीर्य्यवान् । तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रजेः ॥ २४ ॥ पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म ह । ब्रूयास्त्वं नारदेनेति सम्वर्त्तः कथितोऽसि मे ॥ २५ ॥ स चेत्त्वामनुयुञ्जीत ममानुगमनेच्छया । शंसेथा वह्निमारूढमामपि त्वमशङ्कया ॥ २६ ॥

व्यास उवाच । स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम् । अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं पुरीम् ॥ २७ ॥ तत्र गत्वा यथोक्तं स पूर्य्या द्वारे महायशाः । कुणपं स्थापयामास नारदस्य वचः स्मरन् ॥ २८ ॥ यौगपद्येन विप्रश्च पुरीद्वारमथाविशत् । ततः स कुणपं दृष्ट्वा सहसा संन्यवर्त्तत ॥ २९ ॥ स तं निवृत्तमालोक्य प्राञ्जलिः पृष्ठतोऽन्वगात् । आविविक्षितो महीपालः सम्वर्त्तमुपशिक्षितुम् ॥ ३० ॥ स च तं विजने दृष्ट्वा पांशुभिः कर्द्दमेन च । श्लेष्मणा चैव राजानं ष्ठीवनैश्च समाकिरत् ॥ ३१ ॥ स तथा बाध्यमानो वै सम्वर्त्तेन महीपतिः । अन्वगादेव तमृषिं प्राञ्जलिः संप्रसादयन् ॥ ३२ ॥ ततो निवर्त्त्य सम्वर्त्तः परिश्रान्त उपाविशत् । शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ॥ ३३ ॥

इति अश्वमेधपर्व्वणि आश्वमेधिकपर्व्वणि सम्वर्त्तमरुत्तीये षष्ठोऽध्यायः ॥ ६ ॥

---

सम्वर्त्त उवाच । कथमस्मि त्वया ज्ञातः केन वा कथितोऽस्मि ते । एतदाचक्ष्व मे तत्त्वमिच्छसे चेन्मम प्रियम् ॥ १ ॥ सत्यं ते ब्रुवतः सर्वे संपत्स्यन्ते मनोरथाः । मिथ्या च ब्रुवतो मूर्द्धा शतधा ते स्फुटिष्यति ॥ २ ॥

मरुत्त उवाच । नारदेन भवान्मह्यमाख्यातो ह्यटता पथि । गुरुपुत्रो ममेति त्वं ततो मे प्रीतिरुत्तमा ॥ ३ ॥

सम्वर्त्त उवाच । सत्यमेतद्भवानाह स मां जानाति सत्रिणम् । कथयस्व तदेतन्मे क्व नु सम्प्रति नारदः ॥ ४ ॥

मरुत्त उवाच । भवन्तं कथयित्वा स मम देवर्षिसत्तमः । ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनम् ॥ ५ ॥

व्यास उवाच । श्रुत्वा तु पार्थिवस्यैतत् सम्वर्त्तः प्रमुदं गतः ।

एतावदहमप्येवं भक्षयामिति सोऽब्रवीत् ॥ ६ ॥ ततो मरुत्तसुसक्तो वाचा निर्भर्त्सयन्निव। रुक्षया ब्राह्मणो राजन् पुनः पुनरथाब्रवीत् ॥ ७ ॥ वातप्रधानेन मया स्वचित्तवशवर्त्तिना। एवं विकृतरूपेण कथं याजितुमिच्छसि ॥ ८ ॥ भ्राता मम समर्थश्च वासवेन च सङ्गतः। वर्त्तते याजने चैव तेन कर्माणि कारय ॥ ९ ॥ गार्हस्थ्यश्चैव याज्याश्च सर्वा गृह्याश्च देवताः। पूर्वजेन ममाक्षिप्तं शरीरं वर्ज्जितन्त्विदम् ॥ १० ॥ नाहन्तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित्। याजयेयं कथञ्चिद्वै स हि पूज्यतमो मम ॥ ११ ॥ स त्वं वृहस्पतिं गच्छ तमनुज्ञाप्य चाव्रज। ततोऽहं याजयिष्ये त्वां यदि यष्टुमिहेच्छसि ॥ १२ ॥

मरुत्त उवाच। वृहस्पतिं गतः पूर्वमहं सम्वर्त्त तत् शृणु। न मां कामयते याज्यमसौ वासवकाम्यया ॥ १३ ॥ अमरं याज्यमासाद्य याजयिष्ये न मानुषम्। शक्रेण प्रतिषिद्धोऽहं मरुत्तं मा स्म याजयीः ॥ १४ ॥ स्पर्द्धते हि मया विप्र सदा हि स तु पार्थिवः। एवमस्त्विति चाप्युक्तो भ्राता ते बलसूदनः ॥ १५ ॥ स मामभिगतं प्रेम्णा याज्यत्वे न बुभूषति। देवराजं समाश्रित्य तद्विद्धि मुनिपुङ्गव ॥ १६ ॥ सोऽहमिच्छामि भवता सर्वस्वेनापि याजितुम्। कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः ॥ १७ ॥ न हि मे वर्त्तते बुद्धिर्गन्तुं ब्रह्मन् वृहस्पतिम्। प्रत्याख्यातो हि तेनास्मि तथानपकृते सति ॥ १८ ॥

सम्वर्त्त उवाच। चिकीर्षामि यथाकामं सर्वमेतत्त्वयि ध्रुवम्। यदि सर्वानभिप्रायान् कर्त्तासि मम पार्थिव ॥ १९ ॥ याज्यमानं मया हि त्वां वृहस्पतिपुरन्दरौ। द्विषेतां समभिक्रुद्धावेतदेकं समर्थये ॥ २० ॥ स्थैर्य्यमत्र कथं मे स्यात् स त्वं निःसंशयं कुरु। कुपितस्त्वां न हीदानीं भस्मीकुर्य्यां सबान्धवम् ॥ २१ ॥

मरुत्त उवाच। यावत्तपेत् सहस्रांशुस्तिष्ठेरंश्चापि पर्वताः।

तावल्लोकान्न लभेयं त्यजेयं सङ्गतं यदि ॥ २२ ॥ मा चापि शुभ-
बुद्धिलं लभेयमिह कर्हिचित् । विषयैः सङ्गतश्चास्तु त्यजेयं सङ्गतं
यदि ॥ २३ ॥

सम्वर्त्त उवाच । आविच्छित शुभा बुद्धिः श्रूयतां तव कर्मसु ।
याजनं हि ममाप्येवं वर्त्तते हृदि पार्थिव ॥ २४ ॥ अभिधास्ये च
ते राजन्नक्षय्यं द्रव्यमुत्तमम् । येन देवान् सगन्धर्वान् शक्रञ्चाभि-
भविष्यसि ॥ २५ ॥ न तु मे वर्त्तते बुद्धिर्धने याज्येषु वा पुनः ।
विप्रियन्तु करिष्यामि भ्रातुश्चेन्द्रस्य चोभयोः ॥ २६ ॥ गमयिष्यामि
शक्रेण समतामपि ते ध्रुवम् । प्रियञ्च ते करिष्यामि तथ्यमेतद्
ब्रवीमि ते ॥ २७ ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि सम्वर्त्तमरुत्तीये
सप्तमोऽध्यायः ॥ ७॥

---

सम्वर्त्त उवाच । गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः ।
तप्यते यत्र भगवांस्तपो नित्यमुमापतिः ॥ १ ॥ वनस्पतीनां मूलेषु
शृङ्गेषु विषमेषु च । गुहासु शैलराजस्य यथाकामं यथासुखम्
॥ २ ॥ उमासहायो भगवान् यत्र नित्यं महेश्वरः । आस्ते शूली
महातेजा नानाभूतगणावृतः ॥ ३ ॥ तत्र रुद्राश्च साध्याश्च विश्वे-
ऽथ वसवस्तथा । यमश्च वरुणश्चैव कुवेरश्च सहानुगः ॥ ४ ॥
भूतानि च पिशाचाश्च नासत्यावपि चाश्विनौ । गन्धर्वाप्सरसश्चैव
यक्षा देवर्षयस्तथा ॥ ५ ॥ आदित्या मरुतश्चैव यातुधानाश्च
सर्वशः । उपासन्ते महात्मानं बहुरूपमुमापतिम् ॥ ६ ॥ रमते
भगवांस्तत्र कुवेरानुचरैः सह । विकृतैर्विकृताकारैः क्रीड़द्भिः
पृथिवीपते ॥ ७ ॥ श्रिया ज्वलन् दृश्यते वै बालादित्यसमद्युतिः ।
न रूपं शक्यते तस्य संस्थानं वा कथञ्चन ॥ ८ ॥ निर्द्देष्टुं प्राणिभिः

कैश्चित् प्राकृतैर्मांसलोचनैः। नोष्णां न शिशिरस्तत्र न वायुर्न च भास्करः॥ ९॥ न जरा क्षुत्पिपासे वा न मृत्युर्न भयं नृप। तस्य शैलस्य पार्श्वेषु सर्वेषु जयताम्वर॥ १०॥ धातवो जातरूपस्य रश्मयः सवितुर्यथा। रक्ष्यन्ते ते कुवेरस्य सहायैरुद्यतायुधैः॥ ११॥ चिकीर्षद्भिः प्रियं राजन् कुवेरस्य महात्मनः। तस्मै भगवते कृत्वा नमः सर्वाय वेधसे॥ १२॥ रुद्राय शितिकण्ठाय सुरूपाय सुवर्चसे। कपर्द्दिने करालाय हर्य्यक्ष्णे वरदाय च॥ १३॥ त्र्यक्ष्णे पूष्णोदन्तभिदे वामनाय शिवाय च। याम्याव्यक्तरूपाय सद्वृत्ते शङ्कराय च॥ १४॥ क्षेम्याय हरिकेशाय स्थानवे पुरुषाय च। हरिनेत्राय मुण्डाय कृशायोत्तरणाय च॥ १५॥ भास्कराय सुतीर्थाय देवदेवाय रंहसे। उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे॥ १६॥ गिरिशाय प्रशान्ताय यताय चीरवाससे। विल्वदण्डाय सिद्धाय सर्वदण्डधराय च॥ १७॥ मृगव्याधाय महते धन्विनेऽथ भवाय च। वराय सोमवक्त्राय सिद्धमन्त्राय चक्षुषे॥ १८॥ हिरण्यवाहवे राजन्नुग्राय पतये दिशाम्। लेलिहानाय गोष्ठाय सिद्धमन्त्राय विष्णवे। पशूनां पतये चैव भूतानां पतये नमः॥ १९॥ वृषाय मातृभक्ताय सेनान्ये मध्यमाय च। स्रुवहस्ताय यतये धन्विने भार्गवाय च॥ २०॥ अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह। तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च॥ २१॥ महाद्युतयेऽनङ्गाय सर्वाय पतये दिशाम्। विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे॥२२॥ कपालमालिने नित्यं सुवर्णमुकुटाय च। महादेवाय कृष्णाय त्र्यम्वकायानघाय च॥ २३॥ क्रोधनाय नृशंसाय मृदवे वाहुशालिने। दण्डिने तप्ततपसे तथैवाक्रूरकर्म्मणे॥ २४॥ सहस्रशिरसे चैव सहस्रचरणाय च। नमः स्वधास्वरूपाय वहुरूपाय दंष्ट्रिणे॥ २५॥ पिनाकिनं महादेवं महायोगिनमव्ययम्।

त्रिशूलहस्तं वरदं त्र्यम्बकं भुवनेश्वरम् ॥ २६ ॥ त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् । प्रभवं सर्व्वभूतानां धारणं धरणीधरम् ॥ २७ ॥ ईशानं शङ्करं सर्व्वं शिवं विश्वेश्वरं भवम् । उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥ २८ ॥ विरूपाक्षं दशभुजं दिव्यगोवृषभध्वजम् । उग्रं स्थाणुं शिवं रौद्रं शर्व्वं गौरीशमीश्वरम् ॥ २९ ॥ शितिकण्ठमजं शुक्रं पृथुं पृथुहरं वरम् । विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३० ॥ प्रणम्य शिरसा देवमनङ्गाङ्गहरं हरम् । शरण्यं शरणं याहि महादेवं चतुर्मुखम् ॥ ३१ ॥ एवं कृत्वा नमस्तस्मै महादेवाय रंहसे । महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि ॥ ३२ ॥ सुवर्णमाहरिष्यन्तस्तत्र गच्छन्तु ते नराः । इत्युक्तः स वचस्तेन चक्रे कारन्धमात्मजः ॥३३॥ ततोऽतिमानुषं सर्व्वं चक्रे यज्ञस्य संविधिम् । सौवर्णानि च भाण्डानि सञ्चक्रुस्तत्र शिल्पिनः ॥ ३४ ॥ वृहस्पतिस्तु तां श्रुत्वा मरुत्तस्य महीपतेः । समृद्धिमतिदेवेभ्यः सन्तापमकरोद्भृशम् ॥ ३५ ॥ स तप्यमानो वैवर्ण्यं कृशत्वं चागमत् परम् । भविष्यति हि मे शत्रुः सम्वर्त्तो वसुमानिति ॥ ३६ ॥ तं श्रुत्वा भृशसन्तप्तं देवराजो वृहस्पतिम् । अभिगम्यामरवृतः प्रोवाचेदं वचस्तदा ॥ ३७ ॥

इति अश्वमेधपर्व्वणि आश्वमेधिकपर्व्वणि सम्वर्त्तमरुत्तीये अष्टमोऽध्यायः ॥ ८ ॥

---

इन्द्र उवाच । कच्चित् सुखं स्वपिषि त्वं वृहस्पते कच्चिन्मनोज्ञाः परिचारकास्ते । कच्चिद्देवानां सुखकामोऽसि विप्र कच्चिद्देवास्त्वां परिपालयन्ति ॥ १ ॥

वृहस्पतिरुवाच । सुखं स्वपे शयने देवराज तथा मनोज्ञाः

परिचारका मे। तथा देवानां सुखकामोऽस्मि नित्यं देवाश्च मां सुभृशं पालयन्ति ॥ २ ॥

इन्द्र उवाच। कुतो दुःखं मानसं देहजं वा पाण्डुर्विवर्णश्च कुतस्त्वमद्य। आचक्ष्व मे ब्राह्मण यावदेतान्निहन्मि सर्वांस्तव दुःखकर्तॄन् ॥ ३ ॥

बृहस्पतिरुवाच। मरुत्तमाहुर्मघवन् यक्ष्यमाणं महायज्ञेनोत्तमदक्षिणेन। तं संवर्त्तो याजयतीति मे श्रुतं तदिच्छामि न स तं याजयेत ॥ ४ ॥

इन्द्र उवाच। सर्वान् कामाननुयातोऽसि विप्र यस्त्वं देवानां मन्त्रवित् सुपुरोधाः। उभौ च ते जरामृत्यू व्यतीतौ किं संवर्त्तस्तव विप्र ॥ ५ ॥

बृहस्पतिरुवाच। देवैः सह त्वमसुरान् प्रणुद्य जिघांससे चाप्युत सानुबन्धान्। यं यं समृद्धं पश्यसि तत्र तत्र दुःखं सपत्नेषु समृद्धिभावः ॥६॥ अतोऽस्मि देवेन्द्र विवर्णरूपः सपत्नो मे वर्द्धते तं निशम्य। सर्वोपायैर्मघवन् सन्नियच्छ संवर्त्तं वा पार्थिवं वा मरुत्तम् ॥ ७ ॥

इन्द्र उवाच। एहि गच्छ प्रहितो जातवेदो बृहस्पतिं परिदातुं मरुत्ते। अयं वै त्वां याजयिता बृहस्पतिस्तथामरश्चैव करिष्यतीति ॥ ८ ॥

अग्निरुवाच। अहं गच्छामि भगवन् दूतोऽद्य बृहस्पतिं परिदातुं मरुत्ते। वाचं सत्यां पुरुहूतस्य कर्त्तुं बृहस्पतेश्चापचितिं चिकीर्षुः ॥ ९ ॥

व्यास उवाच। ततः प्रायाद्धूमकेतुर्महात्मा वनानि सर्वाणि वीरुधश्चावमृद्नन्। कामाद्धिमान्ते परिवर्त्तमानः काष्ठातिगो मातरिश्वेव नर्दन् ॥ १० ॥

मरुत्त उवाच। आश्चर्य्यमद्य पश्यामि रूपिणं वह्निमागतम्। आसनं सलिलं पाद्यं गाश्चोपानय वै मुने ॥ ११ ॥

अग्निरुवाच। आसनं सलिलं पाद्यं प्रतिनन्दामि तेऽनघ। इन्द्रेण तु समादिष्टं विद्धि मां दूतमागतम् ॥ १२ ॥

मरुत्त उवाच। कच्चित् श्रीमान् देवराजः सुखी च कच्चिन्नास्मान् प्रीयते धूमकेतो। कच्चिद्देवा अस्य वशे यथावत् प्रब्रूहि त्वं मम कार्त्स्न्येन देव ॥ १३ ॥

अग्निरुवाच। शक्रो भृशं सुसुखी पार्थिवेन्द्र प्रीतं चेच्छत्यजरां वै त्वया सः। देवाश्च सर्व्वे वशगास्तस्य राजन् सन्देशं त्वं शृणु मे देवराज्ञः ॥ १४ ॥ यदर्थं मां प्राहिणोत्त्वत्सकाशं बृहस्पतिं परिदातुं मरुत्ते। अयं गुरुर्याजयतां नृप त्वां मर्त्त्यं सन्तममरं त्वां करोतु ॥ १५ ॥

मरुत्त उवाच। सम्वर्त्तोऽयं याजयिता द्विजो मां बृहस्पतेरञ्जलिरेष तस्य। न चैवासौ याजयित्वा महेन्द्रं मर्त्त्यं सन्तं याजयन्नद्य शोभेत् ॥ १६ ॥

अग्निरुवाच। ये वै लोका देवलोके महान्तः संप्राप्स्यसे तान् देवराजप्रसादात्। त्वाञ्चेदसौ याजयेद्वै बृहस्पतिर्नूनं स्वर्गं त्वं जयेः कीर्त्तियुक्तः ॥ १७ ॥ तथा लोका मानुषा ये च दिव्याः प्रजापतेश्चापि ये वै महान्तः। ते ते जिता देवराज्यञ्च कृत्स्नं बृहस्पतिर्याजयेच्चेन्नरेन्द्र ॥ १८ ॥

सम्वर्त्त उवाच। मास्मैवं त्वं पुनरागाः कथञ्चिद्बृहस्पतिं परिदातुं मरुत्ते। मा त्वां धक्ष्ये चक्षुषा दारुणेन संक्रुद्धोऽहं पावक त्वं निबोध ॥ १९ ॥

व्यास उवाच। ततो देवानगमद्धूमकेतुर्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवत्। तं वै दृष्ट्वा प्राह शक्रो महात्मा बृहस्पतेः सन्निधौ हव्यवाहम् ॥ २० ॥

इन्द्र उवाच। यत्त्वं गतः प्रहितो जातवेदो बृहस्पतिं परि-

दातुं मत्ते। तत् किं प्राह स नृपो यच्यमानः कच्चिद्वचः प्रतिजग्राह तच्च॥ २१ ॥

अग्निरुवाच। न ते वाचं रोचयते मरुत्तो बृहस्पतेरञ्जलिं प्राहिणोत् सः। सम्वर्त्तो मां याजयितेत्युवाच पुनः पुनः स मया प्रोच्यमानः॥ २२ ॥ उवाचेदं मानुषा ये च दिव्याः प्रजापतेर्ये च लोका महान्तः। तांश्चेल्लभेयं सम्विदन्तेन कृत्वा तथापि नेच्छेयमिति प्रतीतः॥ २३ ॥

इन्द्र उवाच। पुनर्गत्वा पार्थिवं त्वं समेत्य वाक्यं मदीयं प्रापयस्वार्थयुक्तम्। पुनर्यद्युक्तो न करिष्यति वचस्ततो वज्रं संप्रहर्त्तास्मि तस्मै॥ २४ ॥

अग्निरुवाच। गन्धर्वराट् यात्वयं तत्र दूतो बिभेम्यहं वासव तत्र गन्तुम्। संरब्धो मामब्रवीत् तीव्ररोषः सम्वर्त्तो वाक्यञ्चरितब्रह्मचर्य्यः॥ २५ ॥ यद्यागच्छेः पुनरेवं कथञ्चिद्बृहस्पतिं परिदातुं मरुत्ते। दहेयन्त्वाञ्चक्षुषा दारुणेन संक्रुद्ध इत्येतदवेहि शक्र॥ २६ ॥

शक्र उवाच। त्वमेवान्यान्दहसे जातवेदो न हि त्वदन्यो विद्यते भस्मकर्त्ता। त्वत्संस्पर्शात् सर्वलोका बिभेति अश्रद्धेयं वदसे हव्यवाह॥ २७ ॥

अग्निरुवाच। दिवं देवेन्द्र पृथिवीञ्चान्तरीक्षं संवेष्टयेस्त्वं स्वबलेनैव शक्र। एवंविधस्येह सतस्तवासौ कथं वृत्रस्त्रिदिवं प्राग्जहार॥ २८ ॥

इन्द्र उवाच। नगण्डिकाकारयोगं करेणुं न चारिसोमं प्रपिबामि वह्ने। न दुर्बले वै प्रहरामि वज्रं को मे सुखाय प्रहरेत मर्त्त्यः॥ २९ ॥ प्रव्राजयेयं कालकेयान् पृथिव्यामपाकर्षं दानवानन्तरीक्षात्। दिवं प्रह्लादमवसानमानयं को मे सुखाय प्रहरेत मानवः॥ ३० ॥

अग्निरुवाच । यत्र शर्यातिं च्यवनोऽयाजयिष्यत् सहाश्विभ्यां सोममगृह्णादेकः । तत्त्वं क्रुद्धः प्रत्यषेधीः पुरस्ताच्छर्यातियज्ञं स्मर तं महेन्द्र ॥ ३१ ॥ वज्रं गृहीत्वा च पुरन्दर त्वं संप्राहार्षीश्च्यवनस्यातिघोरम् । स ते विप्रः सह वज्रेण बाहुमपागृह्णात्तपसा जातमन्युः ॥ ३२ ॥ ततो रोषात् सर्वतो घोररूपं सपत्नं ते जनयामास भूयः । मदं नामानमसुरं विश्वरूपं यं त्वं दृष्ट्वा चक्षुषी सन्न्यमीलः ॥ ३३ ॥ हनुरेका जगतिस्था तथैका दिवं गता महती दानवस्य । सहस्रं दन्तानां शतयोजनानां सुतीक्ष्णानां घोररूपं बभूव ॥ ३४ ॥ वृत्ता स्थूला रजतस्तम्भवर्णा दंष्ट्राश्चतस्रो द्वे शते योजनानाम् । स त्वां दन्तान् विदशन्नभ्यधावज्जिघांसया शूलमुद्यम्य घोरम् ॥ ३५ ॥ अपश्यस्त्वं तं तदा घोररूपं सर्वे वै त्वां दृष्टवुर्दर्शनीयम् । तस्माद्भीतः प्राञ्जलिस्त्वं महर्षिमागच्छेथाः शरणं दानवघ्न ॥ ३६ ॥ क्षत्राद्बलाद्ब्रह्मबलं गरीयो न ब्राह्मणतः किञ्चिदन्यद्गरीयः । सोऽहं जानन् ब्रह्मतेजो यथावन्न सम्वर्त्तं जेतुमिच्छामि शक्र ॥ ३७ ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि सम्वर्त्तमरुत्तीये नवमोऽध्यायः ॥ ९ ॥

---

इन्द्र उवाच । एवमेतद्ब्रह्मबलं गरीयो न ब्राह्मणात् किञ्चिदन्यद्गरीयः । आविक्षितस्य तु बलं न मृष्ये वज्रमस्मै प्रहरिष्यामि घोरम् ॥ १ ॥ धृतराष्ट्र गच्छ प्रहितो मरुत्तं सम्वर्त्तेन सङ्गतं तं वदस्व । बृहस्पतिं त्वमुपशिक्षस्व राजन् वज्रं वा ते प्रहरिष्यामि घोरम् ॥ २ ॥

व्यास उवाच । ततो गत्वा धृतराष्ट्रो नरेन्द्रं प्रोवाचेदं वचनं वासवस्य ॥ ३ ॥

धृतराष्ट्र उवाच। गन्धर्वं वै धृतराष्ट्रं निबोध त्वामागतं वक्तुकामं नरेन्द्र। ऐन्द्रं वाक्यं शृणु मे राजसिंह यत् प्राह लोकाधिपतिर्महात्मा ॥ ४ ॥ बृहस्पतिं याजकं त्वं वृणीष्व वज्रं वा ते प्रहरिष्यामि घोरम्। वचश्चैतन्न करिष्यसे मे प्राहैतदेतावदचिन्त्यकर्मा ॥ ५ ॥

मरुत्त उवाच। त्वं चैवैतद्वेत्थ पुरन्दरश्च विश्वेदेवा वसवश्चाश्विनौ च। मित्रद्रोहे निष्कृतिर्नास्ति लोके महत् पापं ब्रह्महत्यासमन्तत् ॥ ६ ॥ बृहस्पतिर्याजयतां महेन्द्रं देवश्रेष्ठं वज्रभृतां वरिष्ठम्। सम्वर्त्तो मां याजयिताद्य राजन्न ते वाक्यं तस्य वा रोचयामि ॥ ७ ॥

गन्धर्व उवाच। घोरो नादः श्रूयतां वासवस्य नभस्तले गर्ज्जतो राजसिंह। व्यक्तं वज्रं मोक्ष्यते ते महेन्द्रः क्षेमं राजंश्चिन्त्यतामेष कालः ॥ ८ ॥

व्यास उवाच। इत्येवमुक्तो धृतराष्ट्रेण राजा श्रुत्वा नादं नदतो वासवस्य। ततो नित्यं धर्म्मविदां वरिष्ठं सम्वर्त्तं तं ज्ञापयामास कार्य्यम् ॥ ९ ॥

मरुत्त उवाच। इममश्मानं प्लवमानमाराद्द्वाद्दूरं तेन न दृश्यतेऽद्य। प्रपद्येऽहं शर्म्म विप्रेन्द्र त्वत्तः प्रयच्छ तस्मादभयं विप्रमुख्य ॥ १० ॥ अयमायाति वै वज्री दिशो विद्योतयन् दश। अमानुष्येण घोरेण सदस्यास्त्रासिता हि नः ॥ ११ ॥

सम्वर्त्त उवाच। भयं शक्राद्व्येतु ते राजसिंह प्रणोत्स्येऽहं भयमेतत् सुघोरम्। संस्तम्भिन्या विद्यया क्षिप्रमेव मा भैस्त्वमस्याभिभवात् प्रतीतः ॥ १२॥ अहं संस्तम्भयिष्यामि माभैस्त्वं शक्रतो नृप। सर्व्वेषामेव देवानां क्षयितान्यायुधानि मे ॥ १३ ॥ दिशो वज्रं भजतां वायुरेतु वर्षं भूत्वा वर्षतां काननेषु। आपः प्लवन्त्वन्तरीक्षे वृथा च सौदामिनी दृश्यते मा बिभेस्त्वम् ॥ १४ ॥

वह्निर्दीवस्त्रातु वा सर्व्वतस्ते कामान् सर्व्वान् वर्षतु वासवो वा । वज्रं यथा स्थापयतां वधाय महाघोरं प्लवमानं जलौघैः ॥ १५ ॥

मरुत्त उवाच । घोरश्चायं श्रूयते वै महात्मनो वज्रस्यैव सहितो मारुतेन । आत्मा हि मे प्रव्यथते मुहुर्मुहुर्न मे स्वास्थ्यं जायते चाद्य विप्र ॥ १६ ॥

सम्वर्त्त उवाच । वज्रादुग्राद्व्येतु भयं तवाद्य वातो भूत्वा हन्मि वज्रं नरेन्द्र । भयं त्यक्त्वा वरमन्यं वृणीष्व कन्ते कामं मनसा साधयामि ॥ १७ ॥

मरुत्त उवाच । इन्द्रः साक्षात् सहसाभ्येतु विप्र हविर्यज्ञे प्रतिगृह्णातु चैव । स्वं स्वं धिष्ण्यञ्चैव जुषन्तु देवा हुतं सोमं प्रतिगृह्णन्तु चैव ॥ १८ ॥

सम्वर्त्त उवाच । अयमिन्द्रो हरिभिरायाति राजन् देवैः सर्व्वैस्त्वरितैः स्तूयमानः । मन्त्राहूतो यज्ञमिमं मयाद्य पश्यस्वैनं मन्त्रविस्रस्तकायम् ॥ १९ ॥

वैशम्पायन उवाच । ततो देवैः सहितो देवराजो रथे युक्तान् तान् हरीन् वाजिमुख्यान् । आयाद्यज्ञमथ राज्ञः पिपासुराविक्षितस्याप्रमेयस्य सोमम् ॥ २० ॥ तमायान्तं सहितं देवसङ्घैः प्रत्युद्ययौ सपुरोधा मरुत्तः । चक्रे पूजां देवराजाय चाग्र्यां यथाशास्त्रं विधिवत्प्रीयमाणः ॥ २१ ॥

सम्वर्त्त उवाच । स्वागतन्ते पुरुहूतेह विद्वन् यज्ञोऽप्ययं सन्निहिते त्वयीन्द्र । शुशोभते बलवृत्रघ्न भूयः पिबस्व सोमं सुतमद्य तं मया ॥ २२ ॥

मरुत्त उवाच । शिवेन मां पश्य नमश्च तेऽस्तु प्राप्तो यज्ञः सफलं जीवितं मे । अयं यज्ञं कुरुते मे सुरेन्द्र वृहस्पतेरवरजो विप्रमुख्यः ॥ २३ ॥

इन्द्र उवाच । जानामि ते गुरुमेतं तपोधनं वृहस्पतेरनुजं

तिग्मतेजसम्। यस्याह्वानादागतोऽहं नरेन्द्र प्रीतिर्मेऽद्य त्वयि मन्युः प्रनष्टः॥ २४॥

सम्वर्त्त उवाच। यदि प्रीतस्त्वमसि वै देवराज तस्मात् स्वयं शाधि यज्ञे विधानम्। स्वयं सर्वान् कुरु भागान् सुरेन्द्र जानात्वयं सर्वलोकश्च देव॥ २५॥

व्यास उवाच। एवमुक्तस्त्वाङ्गिरसेन शक्रः समादिदेश स्वयमेव देवान्। सभाः क्रियन्तामावसथाश्च मुख्याः सहस्रशश्चित्रभूताः समृद्धाः॥ २६॥ क्लृप्ताः स्थूलाः कुरुतारोहणानि गन्धर्वाणामप्सरसाञ्च शीघ्रम्। यत्र नृत्येरन्नप्सरसः समस्ताः स्वर्गोपमः क्रियतां यज्ञवाटः॥ २७॥ इत्युक्तास्ते चक्रुराशु प्रतीता दिवौकसः शक्रवाक्यान्नरेन्द्र। ततो वाक्यं प्राह राजानमिन्द्रः प्रीतो राजन् पूज्यमानो मरुत्तम्॥ २८॥ एष त्वयाहमिह राजन् समेत्य ये चाप्यन्ये तव पूर्वे नरेन्द्र। सर्वाश्चान्या देवताः प्रीयमाणाः हविस्तुभ्यं प्रतिगृह्णन्तु राजन्॥ २९॥ आग्नेयं वै लोहितमालभन्तां वैश्वदेवं बहुरूपं हि राजन्। नीलं चोक्षाणं मेध्यमप्यालभन्तां चलच्छिश्नं संप्रदिष्टं द्विजाग्र्याः॥ ३०॥ ततो यज्ञो ववृधे तस्य राजन् यत्र देवाः स्वयमन्नानि जह्रुः। यस्मिन् शक्रो ब्राह्मणैः पूज्यमानः सदस्योऽभूद्धरिमान् देवराजः॥ ३१॥ ततः सम्वर्त्तश्चैत्यगतो महात्मा यथा वह्निः प्रज्वलितो द्वितीयः। हवींष्युच्चैराह्वयन् देवसङ्घान् जुहावाग्नौ मन्त्रवत् सुप्रतीतः॥ ३२॥ ततः पीत्वा बलभित् सोममग्र्यं ये चाप्यन्ये सोमपा देवसङ्घाः। सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन यथाजोषं तर्पिताः प्रीतिमन्तः॥ ३३॥ ततो राजा जातरूपस्य राशीन् पदे पदे कारयामास हृष्टः। द्विजातिभ्यो विसृजन् भूरिवित्तं रराज वित्तेश इवारिहन्ता॥३४॥ ततो वित्तं विविधं सन्निधाय यथोत्साहं कारयित्वा च कोषम्। अनुज्ञातो गुरुणा सन्निवृत्य शशास गामखिलां सागरान्ताम्॥३५॥

एवं गुणः स बभूवेह राजा यस्य क्रतौ तत्सुवर्णं प्रभूतम् । तत् त्वं समादाय नरेन्द्र वित्तं यजस्व देवांस्तर्पयाणो विधानैः ॥ ३६ ॥

वैशम्पायन उवाच । ततो राजा पाण्डवो हृष्टरूपः श्रुत्वा वाक्यं सत्यवत्याः सुतस्य । मनश्चक्रे तेन वित्तेन यष्टुं ततोऽमात्यैर्मन्त्रयामास भूयः ॥ ३७ ॥

इति अश्वमेधपर्व्वणि आश्वमेधिकपर्व्वणि सम्वर्त्तमरुत्तीये दशमोऽध्यायः ॥ १० ॥

---

वैशम्पायन उवाच । इत्युक्ते नृपतौ तस्मिन् व्यासेनाद्भुतकर्म्मणा । वासुदेवो महातेजास्ततो वचनमाददे ॥ १ ॥ तं नृपं दीनमनसं निहतज्ञातिबान्धवम् । उपप्लुतमिवादित्यं सधूममिव पावकम् ॥ २ ॥ निर्विण्णमनसं पार्थं ज्ञात्वा वृष्णिकुलोद्वहः । आश्वासयन् धर्म्मसुतं प्रवक्तुमुपचक्रमे ॥ ३ ॥

वासुदेव उवाच । सर्वं जिह्मं मृत्युपदमार्ज्जवं ब्रह्मणः पदम् । एतावान् ज्ञानविषयः प्रलापः किं करिष्यति ॥ ४ ॥ नैव ते निष्ठितं कर्म्म नैव ते शत्रवो जिताः । कथं शत्रुं शरीरस्थमात्मनो नावबुध्यसे ॥ ५ ॥ अत्र ते वर्त्तयिष्यामि यथाधर्म्मं यथाश्रुतम् । इन्द्रस्य सह वृत्रेण यथा युद्धमवर्त्तत ॥ ६ ॥ वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप । स दृष्ट्वा पृथिवीं व्याप्तां गन्धस्य विषये हृते ॥७॥ धराहरणादुर्गन्धो विषयः समपद्यत । शतक्रतुश्चुकोपाथ गन्धस्य विषये हृते ॥ ८ ॥ वृत्रस्य स ततः क्रुद्धो घोरं वज्रमवासृजत् । स वध्यमानो वज्रेण सुभृशं भूरितेजसा ॥ ९ ॥ विवेश सहसा तोयं जग्राह विषयन्ततः । अप्सु वृत्रगृहीतासु रसे च विषये हृते ॥ १० ॥ शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् । स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ॥ ११ ॥ विवेश सहसा ज्योतिर्जग्राह

विषयन्ततः। व्याप्ते ज्योतिषि वृत्रेण रूपेऽथ विषये हृते ॥ १२ ॥ शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ॥ १३ ॥ विवेश सहसा वायुं जग्राह विषयन्ततः। व्याप्ते वायौ तु वृत्रेण स्पर्शेऽथ विषये हृते ॥ १४ ॥ शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ॥ १५ ॥ आकाशमभिदुद्राव जग्राह विषयन्ततः। आकाशे वृत्रभूतेऽथ शब्दे च विषये हृते ॥ १६ ॥ शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत्। स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ॥ १७ ॥ विवेश सहसा शक्रं जग्राह विषयन्ततः। तस्य वृत्रगृहीतस्य मोहः समभवन्महान् ॥ १८ ॥ रथन्तरेण तं तात वशिष्ठः प्रत्यबोधयत्। ततो वृत्रं शरीरस्थं जघान भरतर्षभ। शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् ॥ १९ ॥ इदं धर्म्मरहस्यं वै शक्रेणोक्तं महर्षिषु। ऋषिभिश्च मम प्रोक्तं तन्निबोध जनाधिप ॥ २० ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि कृष्णधर्म्मसंवादे एकादशोऽध्यायः ॥ ११ ॥

---

वासुदेव उवाच। द्विविधो जायते व्याधिः शारीरो मानसस्तथा। परस्परं तयोर्जन्म निर्द्वन्द्वं नोपपद्यते ॥ १ ॥ शरीरे जायते व्याधिः शारीरः स निगद्यते। मनसो जायते व्याधिर्मानसस्तु निगद्यते ॥ २ ॥ शीतोष्णे चैव वायुश्च गुणा राजन् शरीरजाः। तेषां गुणानां साम्यञ्च तदाहुः स्वस्थलक्षणम् ॥ ३॥ उष्णेन बाध्यते शीतं शीतेनोष्णञ्च बाध्यते। सत्त्वं रजस्तमश्चेति त्रय आत्मगुणाः स्मृताः ॥ ४ ॥ तेषां गुणानां साम्यञ्चेत्तदाहुः स्वस्थलक्षणम्। तेषामन्यतमोत्सेके विधानमुपदिश्यते ॥ ५॥ हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते। कश्चिद्दुःखे वर्त्तमानः सुखस्य

स्मर्त्तुमिच्छति । कश्चित् सुखे वर्त्तमानो दुःखस्य स्मर्त्तुमिच्छति ॥६॥
स त्वं न दुःखी दुःखस्य न सुखी सुसुखस्य च । स्मर्त्तुमिच्छसि
कौन्तेय किमन्यद्दुःखविभ्रमात् ॥ ७ ॥ अथवा ते स्वभावोऽयं येन
पार्थावकृष्यसे । दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम् ॥ ८ ॥
मिषतां पाण्डवेयानां न तस्य स्मर्त्तुमिच्छसि । प्रव्राजनञ्च नगरा-
दजिनैश्च विवासनम् ॥ ९ ॥ महारण्यनिवासश्च न तस्य स्मर्त्तु-
मर्हसि ॥ १० ॥ जटासुरात् परिक्लेशश्चित्रसेनेन चाहवः । सैन्ध-
वाच्च परिक्लेशो न तस्य स्मर्त्तुमर्हसि ॥ ११ ॥ पुनरज्ञातचर्य्यायां
कीचकेन पदा वधः । याज्ञसेन्यास्तदा पार्थ न तस्य स्मर्त्तुमर्हसि
॥ १२ ॥ यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम । मनसैकेन
योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ १३ ॥ तस्मादभ्युपगन्तव्यं युद्धाय
भरतर्षभ । परमव्यक्तरूपस्य पारं युक्त्या स्वकर्म्मभिः ॥ १४ ॥
यत्र नैव शरैः कार्य्यं न भृत्यैर्न च बन्धुभिः । आत्मनैकेन योद्धव्यं
तत्ते युद्धमुपस्थितम् ॥ १५ ॥ तस्मिन्ननिर्ज्जिते युद्धे कामवस्थां
गमिष्यसि । एतज्ज्ञात्वा तु कौन्तेय कृतकृत्यो भविष्यसि ॥ १६ ॥
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् । पितृपैतामहं वृत्तं
शाधि राज्यं यथोचितम् ॥ १७ ॥

इति अश्वमेधपर्व्वणि आश्वमेधिकपर्व्वणि कृष्णधर्म्मसम्वादे
द्वादशोऽध्यायः ॥ १२ ॥

---

वासुदेव उवाच । न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा नवा ॥ १ ॥ बाह्यद्रव्यविमु-
क्तस्य शारीरेषु च गृध्यतः । यो धर्म्मो यत् सुखञ्चैव द्विषतामस्तु
तत्तथा ॥ २ ॥ द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् । ममेति
च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥ ३ ॥ ब्रह्ममृत्यू तु तौ राज-

न्नात्मन्येव व्यवस्थितौ। अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥ ४ ॥ अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत। भित्त्वा शरीरं भूतानामहिंसां प्रतिपद्यते ॥ ५ ॥ लब्ध्वा हि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम्। ममत्वं यस्य नैव स्यात् किं तया स करिष्यति ॥ ६ ॥ अथवा वसतः पार्थ वने वन्येन जीवतः। ममता यस्य द्रव्येषु मृत्योरास्ये स वर्त्तते ॥ ७ ॥ वाह्यान्तराणां शत्रूणां स्वभावं पश्य भारत। यो न पश्यति तद्भूतं मुच्यते स महाभयात् ॥ ८ ॥ कामात्मानं न प्रशंसन्ति लोके नेहाकामा काचिदस्ति प्रवृत्तिः। सर्वे कामा मनसोऽप्यङ्गभूता यान् पण्डितः संहरते विचिन्त्य ॥ ९ ॥ भूयो भूयो जन्मनोऽभ्यासयोगात् योगी योगं सारमार्गं विचिन्त्य। दानञ्च वेदाध्ययनं तपश्च काम्यानि कर्माणि च वैदिकानि ॥ १० ॥ व्रतं यज्ञान्नियमान् ध्यानयोगान् कामेन यो नारभते विदित्वा। यद्यच्चायं कामयते स धर्मो न यो धर्मो नियमस्तस्य मूलम् ॥ ११ ॥ अत्र गाथाः कामगीताः कीर्त्तयन्ति पुराविदः। शृणु संकीर्त्त्यमानास्ता अखिलेन युधिष्ठिर ॥ १२ ॥ नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित्। यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलम् ॥ १३ ॥ तस्य तस्मिन् प्रहरणे पुनः प्रादुर्भवाम्यहम्। यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः ॥ १४ ॥ जङ्गमेष्विव धर्मात्मा पुनः प्रादुर्भवाम्यहम्। यो मां प्रयतते हन्तुं वेदवेदाङ्गसाधनैः ॥ १५ ॥ स्थावरेष्विव धर्मात्मा तस्य प्रादुर्भवाम्यहम्। यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः ॥ १६ ॥ भावो भवामि तस्याहं स च मां नावबुध्यते। यो मां प्रयतते हन्तुं तपसा संशितव्रतः ॥ १७ ॥ ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहम्। यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः ॥ १८ ॥ तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च। अवध्यं सर्वभूतानामहमेकः सनातनः ॥ १९ ॥ तस्मात्त्वमपि तं

कामं यज्ञैर्विविधदक्षिणैः । धर्म्मं कुरु महाराज तत्र ते स भविष्यति ॥ २० ॥ यजस्व वाजिमेधेन विधिवद्दक्षिणावता । अन्यैश्च विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ॥ २१ ॥ मा ते व्यथास्तु निहतान् बन्धून् वीक्ष्य पुनः पुनः । न शक्यास्ते पुनर्द्रष्टुं ये हतास्मिन्नणाजिरे ॥ २२ ॥ स त्वमिष्ट्वा महायज्ञैः समृद्धैराप्तदक्षिणैः । कीर्त्तिं लोके परां प्राप्य गतिमग्र्यां गमिष्यसि ॥ २३ ॥

इति अश्वमेधपर्व्वणि आश्वमेधिकपर्व्वणि कृष्णधर्म्मसम्वादे त्रयोदशोऽध्यायः ॥ १३ ॥

---

वैशम्पायन उवाच । एवं बहुविधैर्वाक्यैर्मुनिभिस्तैस्तपोधनैः । समाश्वास्यत राजर्षिर्हतबन्धुर्युधिष्ठिरः ॥ १ ॥ सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् । द्वैपायनेन कृष्णेन देवस्थानेन वा विभुः ॥ २ ॥ नारदेनाथ भीमेन नकुलेन च पार्थिव । कृष्णया सहदेवेन विजयेन च धीमता ॥ ३ ॥ अन्यैश्च पुरुषव्याघ्रैर्ब्राह्मणैः शास्त्रदृष्टिभिः । व्यजहात् शोकजं दुःखं सन्तापञ्चैव मानसम् ॥ ४ ॥ अर्च्चयामास देवांश्च ब्राह्मणांश्च युधिष्ठिरः । कृत्वाथ प्रेतकार्य्याणि बन्धूनां स पुनर्नृपः ॥ ५ ॥ अन्वशास्ति स्म धर्मात्मा पृथिवीं सागराम्बराम् । प्रशान्तचेताः कौरव्यः स्वराज्यं प्राप्य केवलम् ॥ ६ ॥ व्यासञ्च नारदञ्चैव तांश्चान्यानब्रवीन्नृपः । आश्वासितोऽहं प्राग्वृद्धैर्भवद्भिर्मुनिपुङ्गवैः ॥ ७ ॥ न सूक्ष्ममपि मे किञ्चिद्व्यलीकमिह विद्यते । अर्थश्च सुमहान् प्राप्तो येन यक्ष्यामि देवताः ॥ ८ ॥ पुरस्कृत्याद्य भवतः समानेष्यामहे मखम् । हिमवन्तं त्वया गुप्ता गमिष्यामः पितामह ॥ ९ ॥ तथा विधत्स्व विप्रर्षे त्वय्यायत्तः स मे क्रतुः । बह्वाश्चर्य्यो हि देशः स श्रूयते द्विजसत्तम ॥ १० ॥ तथा भगवता चित्रं कल्याणं बहुभाषितम् । देवर्षिणा नारदेन

देवस्थानेन चव हि ॥ ११ ॥ नाभागधेयः पुरुषः कश्चिदेवम्विधान् गुरून्। लभते व्यसनं प्राप्य सुहृदः साधुसम्मतान् ॥ १२ ॥ एवमुक्तास्तु ते राज्ञा सर्वं एव महर्षयः। अभ्यनुज्ञाप्य राजानं तथोभौ कृष्णफाल्गुनौ ॥ १३ ॥ पश्यतामेव सर्वेषां तत्रैवादर्शनं ययुः। ततो धर्मसुतो राजा तत्रैवोपाविशत् प्रभुः ॥ १४ ॥ एवं नातिमहान् कालः स तेषामभ्यवर्त्तत। कुर्वतां शौचकार्य्याणि भीष्मस्य निधने तदा ॥ १५ ॥ महादानानि विप्रेभ्यो ददतामौर्द्ध-देहिकम्। भीष्मकर्णपुरोगानां कुरूणां कुरुसत्तमः ॥ १६ ॥ सहितो धृतराष्ट्रेण स ददावौर्द्धदेहिकम्। ततो दत्त्वा बहुधनं विप्रेभ्यः पाण्डवर्षभः ॥ १७ ॥ धृतराष्ट्रं पुरस्कृत्य विवेश गजसाह्वयम्। स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम्। अन्वशाद्वै स धर्मात्मा पृथिवीं भ्रातृभिः सह ॥ १८ ॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि कृष्णधर्मसम्वादे चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

जनमेजय उवाच। विजिते पाण्डवेयैस्तु प्रशान्ते द्विजसत्तम। राष्ट्रे किं चक्रतुर्वीरौ वासुदेवधनञ्जयौ ॥ १ ॥

वैशम्पायन उवाच। विजिते पाण्डवै राजन् प्रशान्ते च विशाम्पते। राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनञ्जयौ ॥ २ ॥ विजह्राते मुदा युक्तौ दिवि देवेश्वराविव। तौ वनेषु विचित्रेषु पर्वतानाञ्च सानुषु ॥ ३ ॥ तीर्थेषु चैव पुण्येषु पल्वलेषु नदीषु च। चंक्रम्यमाणौ संहृष्टावश्विनाविव नन्दने ॥ ४ ॥ इन्द्रप्रस्थे महात्मानौ रेमतुः कृष्णपाण्डवौ। प्रविश्य तां सभां रम्यां विजह्राते च भारत ॥ ५ ॥ तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव। कथायोगे कथायोगे कथयामासतुः सदा ॥ ६ ॥ ऋषीणां देवतानाञ्च वंशांस्तावाहतुस्तदा। प्रीयमाणौ महात्मानौ पुराणावृषि-

सप्तमो ॥ ७ ॥ मधुराश्च कथाश्चित्राश्चित्रार्थपदनिश्चयाः । निश्च-यज्ञः स पार्थाय कथयामास केशवः ॥ ८ ॥ पुत्रशोकाभिसन्तप्तं ज्ञातीनाञ्च सहस्रशः । कथाभिः शमयामास पार्थं सौरिर्जना-र्द्दनः ॥ ९ ॥ स तमाश्वास्य विधिवत् विज्ञानज्ञो महातपाः । अपहृत्यात्मनो भारं विशश्रामेव सात्वतः ॥ १० ॥ ततः कथान्ते गोविन्दो गुड़ाकेशमुवाच ह । शान्तयन् श्लक्ष्णया वाचा हेतु-युक्तमिदं वचः ॥ ११ ॥

वासुदेव उवाच । विजितेयं धरा कृत्स्ना सव्यसाचिन् पर-न्तप । त्वद्बाहुबलमाश्रित्य राज्ञा धर्म्मसुतेन ह ॥ १२ ॥ असपत्नां महीं भुङ्क्ते धर्म्मराजो युधिष्ठिरः । भीमसेनप्रभावेन यमयोश्च नरोत्तम ॥ १३ ॥ धर्म्मेण राज्ञा धर्म्मज्ञ प्राप्तं राज्यमकण्टकम् । धर्म्मेण निहतः सङ्ख्ये स च राजा सुयोधनः ॥ १४ ॥ अधर्म्म-रुचयो लुब्धाः सदा चाप्रियवादिनः । धार्त्तराष्ट्रा दुरात्मानः सानुबन्धा निपातिताः ॥ १५ ॥ प्रशान्तामखिलां पार्थ पृथिवीं पृथिवीपतिः । भुङ्क्ते धर्म्मसुतो राजा त्वया गुप्तः कुरूद्वह ॥१६॥ रमे चाहं त्वया सार्द्धमरण्येष्वपि पाण्डव ! किमु यत्र जनोऽयं वै पृथा चामित्रकर्षण ॥ १७ ॥ यत्र धर्म्मसुतो राजा यत्र भीमो महाबलः । यत्र माद्रवती पुत्रौ रतिस्तत्र परा मम ॥ १८ ॥ तथैव स्वर्गकल्पेषु सभोद्देशेषु कौरव । रमणीयेषु पुण्येषु सहितस्य त्वयानघ ॥ १९ ॥ कालो महांस्त्वतीतो मे शूरसूनुमपश्यतः । बलदेवञ्च कौरव्य यथान्यान् वृष्णिपुङ्गवान् ॥ २० ॥ सोऽहं गन्तु-मभीप्सामि पुरीं द्वारवतीं प्रति । रोचतां गमनं मह्यं तवापि पुरुषर्षभ ॥ २१ ॥ उक्तो बहुविधं राजा तत्र तत्र युधिष्ठिरः । सह भीष्मेण यद्युक्तमस्माभिः शोककारिते ॥ २२ ॥ शिष्टो युधि-ष्ठिरोऽस्माभिः शास्ता सन्नपि पण्डितः । तेन तच्च वचः सम्यग्-गृहीतं सुमहात्मना ॥ २३ ॥ धर्म्मपुत्रे हि धर्म्मज्ञे कृतज्ञे सत्य-

वादिनि। तस्य धर्मो मतिश्चाग्र्या स्थितिश्च सततं स्थिरा॥ २४॥
तत्र गत्वा महात्मानं यदि ते रोचतेऽर्जुन। अस्मद्गमनसंयुक्तं वचो
ब्रूहि जनाधिपम्॥ २५॥ न हि तस्याप्रियं कुर्य्यां प्राणत्यागे-
ऽप्युपस्थिते। कुतो गन्तुं महाबाहो पुरीं द्वारवतीं प्रति॥ २६॥
सर्वं त्विदमहं पार्थ त्वत्प्रीतिहितकाम्यया। ब्रवीमि सत्यं कौरव्य
न मिथ्यैतत् कथञ्चन॥ २७॥ प्रयोजनञ्च निर्वृत्तमिहवासे ममा-
र्जुन। धार्त्तराष्ट्रो हतो राजा सबलः सपदानुगः॥ २८॥ पृथिवी
च वशे तात धर्म्मपुत्रस्य धीमतः। स्थिता समुद्रवलया सशैल-
वनकानना॥ २९॥ चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव।
धर्म्मेण राजा धर्म्मज्ञः पातु सर्वां वसुन्धराम्॥ ३०॥ उपास्य-
मानो बहुभिः सिद्धैश्चापि महात्मभिः। स्तूयमानश्च सततं वन्दिभि-
र्भरतर्षभ॥ ३१॥ त्वं मया सह गत्वाद्य राजानं कुरुवर्द्धनम्।
आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति॥ ३२॥ इदं शरीरं
वसु यच्च मे गृहे निवेदितं पार्थ सदा युधिष्ठिरे। प्रियश्च मान्यश्च
हि मे युधिष्ठिरः सदा कुरूणामधिपो महामतिः॥ ३३॥ प्रयो-
जनञ्चापि निवासकारणे न विद्यते मे त्वदृते नृपात्मज। स्थिता
हि पृथ्वी तव पार्थ शासने गुरोः सुवृत्तस्य युधिष्ठिरस्य च॥ ३४॥
इतीदमुक्तः स तदा महात्मना जनार्द्दनेनामितविक्रमोऽर्जुन।
तथेति दुःखादिव वाक्यमैरयज्जनार्द्दनं सम्प्रतिपूज्य पार्थिव॥३५॥

इति अश्वमेधपर्वणि आश्वमेधिकपर्वणि
पञ्चदशोऽध्यायः समाप्तञ्च आश्वमेधिकपर्व॥ १५॥

---

## अथ अनुगीतापर्व।

जनमेजय उवाच। सभायां वसतोस्तत्र निहत्यारीन्महा-
त्मनोः। केशवार्जुनयोः का नु कथा समभवद्द्विज॥ १॥

वैशम्पायन उवाच। कृष्णेन सहितः पार्थः स्वराज्यं प्राप्य केवलम्। तस्यां सभायां दिव्यायां विजहार मुदायुतः ॥ २ ॥ ततः कञ्चित् सभोद्देशं स्वर्गोद्देशसमं नृप। यदृच्छया तौ मुदितौ जग्मतुः स्वजनावृतौ ॥ ३ ॥ ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः। निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् ॥ ४ ॥ विदितं मे महाबाहो संग्रामे समुपस्थिते। माहात्म्यं देवकीमातस्तच्च ते रूपमैश्वरम् ॥ ५ ॥ यत्तद्भगवता प्रोक्तं पुरा केशव सौहृदात्। तत् सर्वं पुरुषव्याघ्र नष्टं मे भ्रष्टचेतसः ॥ ६ ॥ मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः। भवांश्च द्वारकां गन्ता नचिरादिव माधव ॥ ७ ॥

वैशम्पायन उवाच। एवमुक्तस्तु तं कृष्णः फाल्गुनं प्रत्यभाषत। परिष्वज्य महातेजा वचनं वदताम्वरः ॥ ८ ॥

वासुदेव उवाच। श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्। धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥ ९ ॥ अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम्। न च साद्य पुनर्भूयः स्मृतिर्मे संभविष्यति ॥ १० ॥ नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव। न च शक्यं पुनर्वक्तुमशेषेण धनञ्जय ॥ ११ ॥ स हि धर्म्मः सुपर्य्याप्तो ब्रह्मणः पदवेदने। न शक्यं तन्मया भूयस्तथा-वक्तुमशेषतः ॥ १२ ॥ परं हि ब्रह्म कथितं योगयुक्तेन तन्मया। इतिहासन्तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥ १३ ॥ यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि। शृणु धर्म्मभृतांश्रेष्ठ गदितं सर्वमेव मे ॥ १४ ॥ आगच्छद्ब्राह्मणः कश्चित् स्वर्गलोकादरिन्दम। ब्रह्मलोकाच्च दुर्द्धर्षः सोऽस्माभिः पूजितोऽभवत् ॥ १५ ॥ अस्माभिः परिपृष्टश्च यदाह भरतर्षभ। दिव्येन विधिना पार्थ तत् शृणुष्वाविचारयन् ॥ १६ ॥

ब्राह्मण उवाच। मोक्षधर्म्मं समाश्रित्य कृष्ण यन्मामपृ-

च्छया। भूतानामनुकम्पार्थं यन्मोहच्छेदनं विभो ॥ १७ ॥ तत्ते-ऽहं संप्रवक्ष्यामि यथावन्मधुसूदन। शृणुष्वावहितो भूत्वा गदतो मम माधव ॥ १८ ॥ कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्म्मवित्तमः। आससाद द्विजं कञ्चिद्धर्म्माणामागतागमम् ॥ १९ ॥ गतागतेषु बहुशो ज्ञानविज्ञानपारगम्। लोकतत्त्वार्थकुशलं ज्ञातारं सुख-दुःखयोः ॥ २० ॥ जातीमरणतत्त्वज्ञं कोविदं पापपुण्ययोः। द्रष्टारमुच्चनीचानां कर्म्मभिर्देहिनां गतिम् ॥ २१ ॥ चरन्तं मुक्त-वत् सिद्धं प्रशान्तं संयतेन्द्रियम्। दीप्यमानं श्रिया ब्राह्म्या क्रममाणञ्च सर्वशः। अन्तर्द्धानगतिज्ञञ्च श्रुत्वा तत्त्वेन काश्यपः ॥२२॥ तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह। सम्भाषमाणमेकान्ते समासीनञ्च तैः सह ॥ २३ ॥ यदृच्छया च गच्छन्तमसक्तं पवनं यथा। तं समासाद्य मेधावी स तदा द्विजसत्तमः ॥ २४ ॥ चरणौ धर्म्मकामस्य तपस्वी सुसमाहितः। प्रतिपेदे यथान्यायं दृष्ट्वा तन्महदद्भुतम् ॥ २५ ॥ विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजो-त्तमम्। परिचारेण महता गुरुं तं पर्य्यतोषयत् ॥ २६ ॥ उप-पन्नञ्च तत् सर्वं श्रुतचारित्रसंयुतम्। भावेनातोषयच्चैनं गुरुवृत्त्या परन्तप ॥ २७ ॥ तस्मै तुष्टः स शिष्याय प्रसन्नो वाक्यमब्रवीत्। सिद्धिं परामभिप्रेक्ष्य शृणु मत्तो जनार्द्दन ॥ २८ ॥

सिद्ध उवाच। विविधैः कर्म्मभिस्तात पुण्ययोगैश्च केवलैः। गच्छन्तीह गतिं मर्त्त्या देवलोके च संस्थितिम् ॥ २९ ॥ न कश्चित् सुखमत्यन्तं न कश्चित् शाश्वती स्थितिः। स्थानाच्च महतो भ्रंशो दुःखलब्धात् पुनः पुनः ॥ ३० ॥ अशुभा गतयः प्राप्ताः कष्टा मे पापसेवनात्। काममन्युपरीतेन तृष्णया मोहितेन च ॥ ३१ ॥ पुनः पुनश्च मरणं जन्म चैव पुनः पुनः। आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥ ३२ ॥ मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः। सुखानि च विचित्राणि दुःखानि च मयानघ ॥ ३३ ॥

प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह । धननाशश्च सम्प्राप्तो लब्ध्वा दुःखेन तद्धनम् ॥ ३४ ॥ अवमानाः सुकष्टाश्च राजतः स्वजनात्तथा । शारीरा मानसाश्चापि वेदना भृशदारुणाः ॥३५॥ प्राप्ता विमाननाश्चोग्रा वधबन्धाश्च दारुणाः । पतनं निरये चैव यातनाश्च यमक्षये ॥ ३६ ॥ जरा रोगाश्च सततं व्यसनानि च भूरिशः । लोकेऽस्मिन्ननुभूतानि द्वन्द्वजानि भृशं मया ॥ ३७ ॥ ततः कदाचिन्निर्वेदान्निराकाराश्रितेन च । लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मया ॥ ३८ ॥ लोकेऽस्मिन्ननुभूयाहमिमं मार्ग-मनुष्ठितः । ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ॥ ३९ ॥ नाहं पुनरिहागन्ता लोकानालोकयाम्यहम् । आसिद्धेराप्रजा-सर्गादात्मनोऽपि गतिः शुभा ॥ ४० ॥ उपलब्ध्वा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा । इतः परं गमिष्यामि ततः परतरं पुनः ॥ ४१ ॥ ब्रह्मणः पदमव्यक्तं मा तेऽभूदत्र संशयः । नाहं पुनरिहागन्ता मर्त्त्यलोकं परन्तप ॥ ४२ ॥ प्रीतोऽस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते । यदीप्सुरुपपन्नस्त्वं तस्य कालोऽयमागतः ॥ ४३ ॥ अभिजाने च तदहं यदर्थं मामुपागतः । अचिरात्तु गमिष्यामि तेनाहं त्वामचूचुदम् ॥ ४४ ॥ भृशं प्रीतोऽस्मि भवतश्चारित्रेण विच-क्षण । परिपृच्छस्व कल्याणं भाषेयं यत्तवेप्सितम् ॥ ४५ ॥ बहु मन्ये च ते बुद्धिं भृशं संपूजयामि च । येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ॥ ४६ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि
षोड़शोऽध्यायः ॥ १६ ॥

---

वासुदेव उवाच । ततस्तस्योपसंगृह्य पादौ प्रश्नान् सुदु-र्वचान् । पप्रच्छ तांश्च धर्मान् स प्राह धर्म्मभृताम्वरः ॥ १ ॥

काश्यप उवाच। कथं शरीरं च्यवते कथं चैव प्रपद्यते। कथं कष्टाच्च संसारात् संसरन् परिमुच्यते॥ २॥ आत्मा च प्रकृतिं मुक्त्वा तच्छरीरं विमुञ्चति। शरीरतश्च निर्मुक्तः कथमन्यत् प्रपद्यते॥ ३॥ कथं शुभाशुभे चायं कर्म्मणी स्वकृते नरः। उपभुङ्क्ते क्व वा कर्म्म विदेहस्यावतिष्ठते॥ ४॥

ब्राह्मण उवाच। एवं सञ्चोदितः सिद्धः प्रश्नांस्तान् प्रत्यभाषत। आनुपूर्व्व्येण वार्ष्णेय तन्मे निगदतः शृणु॥ ५॥

सिद्ध उवाच। आयुःकीर्त्तिकराणीह यानि कृत्यानि सेवते। शरीरग्रहणेऽन्यस्मिंस्तेषु क्षीणेषु सर्व्वशः॥ ६॥ आयुःक्षयपरीतात्मा विपरीतानि सेवते। बुद्धिर्व्यावर्त्तते चास्य विनाशे प्रत्युपस्थिते॥ ७॥ सत्त्वं बलञ्च कालञ्च विदित्वा चात्मनस्तथा। अतिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान्॥ ८॥ यदायमतिकष्टानि सर्व्वाण्युपनिषेवते। अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन॥ ९॥ दुष्टान्नामिषपानञ्च यदन्योऽन्यविरोधि च। गुरु चाप्यमितं भुङ्क्ते नातिजीर्णेऽपि वा पुनः॥ १०॥ व्यायाममतिमात्रञ्च व्यवायञ्चोपसेवते। सततं कर्म्मलोभाद्वा प्राप्तं वेगं विधारयेत्॥ ११॥ रसाभियुक्तमन्नं वा दिवास्वप्नञ्च सेवते। अपक्वान्नागते काले स्वयं दोषान् प्रकोपयेत्॥ १२॥ स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्। अपि वोद्बन्धनादीनि परीतानि व्यवस्यति॥ १३॥ तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा। जीवितं प्रोच्यमानं यद्यथावदुपधारय॥ १४॥ ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः। शरीरमनुपर्य्येत्य सर्व्वान् प्राणान् रुणद्धि वै॥ १५॥ अत्यर्थबलवानूष्मा शरीरे परिकोपितः। भिनत्ति जीवस्थानानि मर्म्माणि विद्धि तत्त्वतः॥ १६॥ ततः सवेदनः सद्यो जीवः प्रच्यवते क्षरात्। शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्म्मसु॥ १७॥ वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम। जाती-

मरणसंविग्नाः सततं सर्व्वजन्तवः ॥ १८ ॥ दृश्यन्ते संत्यजन्तश्च शरीराणि द्विजर्षभ । गर्भसंक्रमणे चापि मर्म्माणामतिसर्पणे ॥१९॥ तादृशीमेव लभते वेदनां मानवः पुनः । भिन्नसन्धिरथ क्लेदमद्भिः स लभते नरः ॥ २० ॥ यथा पञ्चसु भूतेषु संभूतत्वं नियच्छति । शैत्यात् प्रकुपितः काये तीव्र वायुसमीरितः ॥ २१ ॥ यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः । स गच्छत्यूर्द्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम् ॥ २२ ॥ शरीरञ्च जहात्येवं निरुच्छासश्च दृश्यते । स निरुष्मा निरुच्छासो निःश्रीको हतचेतनः ॥ २३ ॥ ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नरः । स्रोतोभिर्यैर्विजानाति इन्द्रियार्थान् शरीरभृत् ॥ २४ ॥ तैरेव च विजानाति प्राणानाहारसम्भवान् । तत्रैव कुरुते काये यः स जीवः सनातनः ॥ २५ ॥ तथा यद्यद्भवेद्युक्तं सन्निपाते क्वचित् क्वचित् । तत्तन्मर्म्म विजानीहि शास्त्रदृष्टिं हि तत्तथा ॥ २६ ॥ तेषु मर्म्मसु भिन्नेषु ततः स समुदीरयन् । आविश्य हृदयं जन्तोः सत्त्वं चाशु रुणद्धि वै ॥ २७ ॥ ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन । तमसा सम्वृतज्ञानः सम्वृतेष्वेव मर्म्मसु ॥ २८ ॥ स जीवो निरधिष्ठानश्चाव्यते मातरिश्वना । ततः स तं महोच्छासं भृशमुच्छास्य दारुणम् ॥ २९ ॥ निष्क्रामन् कम्पयत्याशु तच्छरीरमचेतनम् । स जीवः प्रच्युतः कायात् कर्म्मभिः स्वैः समावृतः ॥ ३० ॥ अभितः स्वैः शुभैः पुण्यैः वापैर्वाप्युपपद्यते । ब्राह्मणा ज्ञानसम्पन्ना यथावत् श्रुतनिश्चयाः ॥ ३१ ॥ इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः । यथान्धकारे खद्योतं लीयमानं ततस्ततः ॥ ३२ ॥ चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः । पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा ॥ ३३ ॥ च्यवन्तं जायमानञ्च योनिञ्चानुप्रवेशितम् । तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः ॥ ३४ ॥ कर्म्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः । ततः शुभाशुभं कृत्वा लभन्ते

सर्वदेहिनः ॥ ३५॥ इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्मभिः। इहैवाशुभकर्माणः कर्मभिर्निरयं गताः ॥ ३६ ॥ अर्वाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः। तस्मात् सुदुर्लभो मोक्षो रक्ष्यश्चात्मा ततो भृशम् ॥ ३७ ॥ ऊर्द्ध्वन्तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः। कीर्त्त्यमानानि तानीह तत्त्वतः संनिबोध मे ॥ ३८ ॥ तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुध्येथाः कर्मनिश्चयम्। ताराऋूपाणि सर्वाणि यत्रैतच्चन्द्रमण्डलम् ॥ ३९ ॥ यत्र विभ्राजते लोके स्वभासा सूर्य्यमण्डलम्। स्थानान्येतानि जानीहि जनानां पुण्यकर्मणाम् ॥४०॥ कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः। तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमा ॥ ४१ ॥ न च तत्रापि सन्तोषो दृष्ट्वा दीप्ततरां श्रियम्। इत्येता गतयः सर्वाः पृथक् ते समुदीरिताः ॥ ४२ ॥ उपपत्तिन्तु वक्ष्यामि गर्भस्याहमतः परम्। तथा तन्मे निगदतः शृणुष्वावहितो द्विज ॥ ४३ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि
सप्तदशोऽध्यायः ॥ १७ ॥

---

ब्राह्मण उवाच। शुभानामशुभानाञ्च नेह नाशोऽस्ति कर्मणाम्। प्राप्य प्राप्यानुपच्यन्ते क्षेत्रं क्षेत्रं तथा तथा ॥ १ ॥ यथा प्रसूयमानस्तु फली दद्यात् फलं बहु। तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् ॥ २ ॥ पापञ्चापि तथैव स्यात् पापेन मनसा कृतत्। पुरोधाय मनो हीह कर्मण्यात्मा प्रवर्त्तते ॥ ३ ॥ यथा कर्मसमाविष्टः काममन्युसमावृतः। नरो गर्भं प्रविशति तच्चापि शृणु चोत्तरम् ॥ ४ ॥ शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतम्। क्षेत्रं कर्मजमाप्नोति शुभं वा यदि वाशुभम् ॥ ५ ॥ सौक्ष्म्यादव्यक्तभावाच्च न च क्वचन सज्जति। सम्प्राप्य ब्राह्मणः कामं तस्मात्तद्-

ब्रह्म शाश्वतम् ॥ ६ ॥ तद्बीजं सर्व्वभूतानां तेन जीवन्ति जन्तवः । स जीवः सर्व्वगात्राणि गर्भस्याविश्य भागशः ॥ ७ ॥ दधाति चेतसा सद्यः प्राणस्थानेष्ववस्थितः । ततः स्पन्दयतेऽङ्गानि स गर्भ-श्चेतनान्वितः ॥ ८ ॥ यथा लोहस्य निस्यन्दो निषिक्तो बिम्ब-विग्रहम् । उपैति तद्विजानीहि गर्भे जीवप्रवेशनम् ॥ ९ ॥ लोह-पिण्डं यथा वह्निः प्रविश्य ह्यतितापयेत् । तथा त्वमपि जानीहि गर्भे जीवोपपादनम् ॥ १० ॥ यथा च दीपः शरणे दीप्यमानः प्रकाशते । एवमेव शरीराणि प्रकाशयति चेतना ॥ ११ ॥ यद्यच्च कुरुते कर्म्म शुभं वा यदि वाशुभम् । पूर्व्वदेहकृतं सर्व्वमवश्यमुप-भुज्यते ॥ १२ ॥ ततस्तु क्षीयते चैव पुनश्चान्यत् प्रचीयते । याव-त्तन्मोक्षयोगस्थं धर्म्मं नैवावबुध्यते ॥ १३ ॥ तत्र कर्म्म प्रवक्ष्यामि सुखी भवति येन वै । आवर्त्तमानो जातीषु यथान्योऽन्यासु सत्तम ॥ १४ ॥ दानं व्रतं ब्रह्मचर्य्यं यथोक्तं ब्रह्मधारणम् । दमः प्रशान्तता चैव भूतानाञ्चानुकम्पनम् ॥ १५ ॥ संयमश्चानृशंस्यञ्च परस्वादान-वर्ज्जनम् । व्यलीकानामकरणं भूतानां मनसा भुवि ॥ १६ ॥ मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम् । गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ॥ १७ ॥ प्रवर्त्तनं शुभानाञ्च तत् सतां वृत्त-मुच्यते । ततो धर्म्मः प्रभवति यः प्रजाः पाति शाश्वतीः ॥ १८ ॥ एवं सत्सु सदा पश्येत्तत्राप्येषा ध्रुवा स्थितिः । आचारो धर्म्म-माचष्टे यस्मिन् शान्ता व्यवस्थिताः ॥ १९ ॥ तेषु तत् कर्म्म निक्षिप्तं यः स धर्म्मः सनातनः । यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ॥ २० ॥ अतो नियम्यते लोकः प्रच्यवन् धर्म्मवर्त्मसु । यश्च योगी च मुक्तश्च स एतेभ्यो विशिष्यते ॥ २१ ॥ वर्त्तमानस्य धर्म्मेण शुभं यत्र यथा तथा । संसारतारणं ह्यस्य कालेन महता भवेत् ॥२२॥ एवं पूर्व्वकृतं कर्म्म नित्यं जन्तुः प्रवर्त्तते । सर्व्वं तत् कारणं येन विकृतोऽयमिहागतः ॥ २३ ॥ शरीरग्रहणञ्चास्य केन पूर्व्वं प्रक-

त्मितम्। इत्येवं संशयो लोके तच्च वच्याम्यशेषतः॥ २४ ॥ शरीरमात्मनः कृत्वा सर्वलोकपितामहः। त्रैलोक्यमसृजत् ब्रह्मा कृत्स्नं स्थावरजङ्गमम्॥ २५॥ ततः प्रधानमसृजत् प्रकृतिं स शरीरिणाम्। यया सर्वमिदं व्याप्तं यां लोके परमां विदुः॥२६॥ इदं तत् चरमित्युक्तं परन्त्वमृतमचरम्। त्रयाणां मिथुनं सर्वमेकैकस्य पृथक् पृथक्॥ २७॥ असृजत् सर्वभूतानि पूर्वदृष्टः प्रजापतिः। स्थावराणि च भूतानि इत्येषा पौर्विकी श्रुतिः॥२८॥ तस्य कालपरीमाणमकरोत् स पितामहः। भूतेषु परिवृत्तिञ्च पुनरावृत्तिमेव च॥ २९॥ यथात्र कश्चिन्मेधावी दृष्टात्मा पूर्वजन्मनि। यत् प्रवच्यामि तत् सर्वं यथावदुपपद्यते॥ ३०॥ सुखदुःखे यथासम्यगनित्ये यः प्रपश्यति। कायं वा मेध्यसङ्घातं विनाशं कर्मसंहितम्॥ ३१॥ यच्च किञ्चित् सुखं तच्च दुःखसर्वमिति स्मरन्। संसारसागरं घोरं तरिष्यति सुदुस्तरम्॥ ३२॥ जरामरणरोगैश्च समाविष्टः प्रधानवित्। चेतनावत्सु चैतन्यं समं भूतेषु पश्यति॥ ३३॥ निर्विद्यते ततः कृत्स्नं मार्गमाणः परं पदम्। तस्योपदेशं वच्यामि याथातथ्येन सत्तम॥ ३४॥ शाश्वतस्याव्ययस्याथ यदस्य ज्ञानमुत्तमम्। प्रोच्यमानं मया विप्र निबोधेदमशेषयः॥ ३५॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि
अष्टादशोऽध्यायः॥ १८॥

---

ब्राह्मण उवाच। यः स्यादेकायने लीनस्तूष्णीं किञ्चिदचिन्तयन्। पूर्वं पूर्वं परित्यज्य स तीर्णो बन्धनाद्भवेत्॥ १॥ सर्वमित्रः सर्वसहः शमे रक्तो जितेन्द्रियः। व्यपेतभयमन्युश्च आत्मवान्मुच्यते नरः॥ २॥ आत्मवत् सर्वभूतेषु यश्चरेन्नियतः शुचिः।

अमानी निरभीमाणः सर्व्वतो मुक्त एव सः ॥ ३ ॥ जीवितं मरण-
ञ्चोभे सुखदुःखे तथैव च । लाभालाभे प्रियद्वेष्ये यः समः स च
मुच्यते ॥ ४ ॥ न कस्यचित् स्पृहयते नावजानाति कञ्चन । निर्द्वन्द्वो
वीतरागात्मा सर्व्वथा मुक्त एव सः ॥ ५ ॥ अनमित्रश्च निर्व्वन्धु-
रनपत्यश्च यः क्वचित् । त्यक्तधर्म्मार्थकामश्च निराकाङ्क्षी च मुच्यते
॥ ६ ॥ नैव धर्म्मी न चाधर्म्मी पूर्व्वोपचितहायकः । धातुक्षय-
प्रशान्तात्मा निर्द्वन्द्वः स विमुच्यते ॥ ७ ॥ अकर्म्मवान् विकाङ्क्षश्च
पश्येज्जगदशाश्वतम् । अश्वत्थसदृशं मूढ़ं जन्ममृत्युजरायुतम् ॥८॥
वैराग्यबुद्धिः सततमात्मदोषव्यपेक्षकः । आत्मबन्धविनिर्म्मोक्षं स
करोत्यचिरादिव ॥ ९ ॥ अगन्धमरसस्पर्शमशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते ॥ १० ॥ पञ्चभूतगुणैर्हीन-
ममूर्त्तिमदहेतुकम् । अगुणं गुणभोक्तारं यः पश्यति स मुच्यते
॥ ११ ॥ विहाय सर्व्वसङ्कल्पान् बुद्ध्या शारीरमानसान् । शनै-
र्निर्व्वाणमाप्नोति निरिन्धन इवानलः ॥ १२ ॥ सर्व्वसंस्कारनिर्मुक्तो
निर्द्वन्द्वो निष्परिग्रहः । तपसा इन्द्रियग्रामं यश्चरेन्मुक्त एव सः
॥ १३ ॥ विमुक्तः सर्व्वसंस्कारैस्ततो ब्रह्मसनातनम् । परमाप्नोति
संशान्तमचलं नित्यमक्षरम् ॥ १४ ॥ अतः परं प्रवक्ष्यामि योग-
शास्त्रमनुत्तमम् । युञ्जन्तः सिद्धमात्मानं यथा पश्यन्ति योगिनः
॥ १५ ॥ तस्योपदेशं वक्ष्यामि यथावत्त्वं निबोध मे । यैर्द्वारै-
श्चारयन्नित्यं पश्यत्यात्मानमात्मनि ॥ १६ ॥ इन्द्रियाणि तु संहृत्य
मन आत्मनि धारयेत् । तीव्रं तप्त्वा तपः पूर्व्वं मोक्षयोगं समा-
चरेत् ॥ १७ ॥ तपस्वी सततं युक्तो योगशास्त्रमथाचरेत् ।
मनीषी मनसा विप्र पश्यन्नात्मानमात्मनि ॥ १८ ॥ स चेच्छक्नोत्ययं
साधुर्योक्तुमात्मानमात्मनि । तत एकान्तशीलः स पश्यत्यात्मान-
मात्मनि ॥ १९ ॥ संयतः सततं युक्त आत्मवान् विजितेन्द्रियः ।
तथायमात्मनात्मानं संप्रयुक्तः प्रपश्यति ॥ २० ॥ यथा हि पुरुषः

स्वप्ने दृष्ट्वा पश्यत्यसाविति । तथारूपमिवात्मानं साधु युक्तः प्रपश्यति ॥ २१ ॥ इषीकाञ्च यथा मुञ्जात् कश्चिन्निष्कृष्य दर्शयेत् । योगी निष्कृष्य चात्मानं तथा पश्यति देहतः ॥ २२ ॥ मुञ्जं शरीरमित्याहुरिषीकामात्मनि श्रिताम् । एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् ॥ २३ ॥ यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत् । न तस्येहेश्वरः कश्चित्त्रैलोक्यस्यापि यः प्रभुः ॥ २४ ॥ अन्यान्याश्चैव तनवो यथेष्टं प्रतिपद्यते । विनिवृत्य जरामृत्यू न शोचति न हृष्यति ॥ २५ ॥ देवानामपि देवत्वं युक्तः कारयते वशी । ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् ॥२६॥ विनश्यत्सु च भूतेषु न भयं तस्य जायते । क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् ॥ २७ ॥ दुःखशोकमयैर्घोरैः सङ्गस्नेह-समुद्भवैः । न विचाल्यति युक्तात्मा निस्पृहः शान्तमानसः ॥ २८ ॥ नैनं शस्त्राणि बध्यन्ते न मृत्युश्चास्य विद्यते । नातः सुखतरं किञ्चिल्लोके क्वचन दृश्यते ॥ २९ ॥ सम्यग्युक्त्वा स आत्मानमात्मन्येव प्रतिष्ठते । विनिवृत्तजरादुःखसुखं स्वपिति चापि सः ॥३०॥ देहान् यथेष्टमभ्येति हित्वेमां मानुषीं तनुम् । निर्वेदस्तु न कर्त्तव्यो भुञ्जानेन कथञ्चन ॥ ३१ ॥ सम्यग्युक्त्वा यदात्मानमात्मन्येव प्रपश्यति । तदैव न स्पृहयति साक्षादपि शतक्रतोः ॥ ३२ ॥ योगमेकान्तशीलस्तु यथा विन्दति तच्छृणु । दृष्टपूर्वां दिशं चिन्त्य यस्मिन् सन्निवसेत् पुरे ॥ ३३ ॥ पुरस्याभ्यन्तरे तस्य मनः स्थाप्यं न बाह्यतः । पुरस्याभ्यन्तरे तिष्ठन् यस्मिन्नावसथे वसेत् ॥ ३४ ॥ तस्मिन्नावसथे धार्य्यं सबाह्याभ्यन्तरे मनः । प्रचिन्त्यावसथे कृत्स्नं यस्मिन् काले स तिष्ठति ॥ ३५ ॥ तस्मिन् काले मनश्चास्य न कथञ्चन बाह्यतः । संनियम्येन्द्रियग्रामं निर्घोषे निर्जने वने ॥ ३६ ॥ कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत् । दन्तांस्तालु च जिह्वाञ्च गलं ग्रीवां तथैव च ॥ ३७ ॥ हृदयं

चिन्तयेच्चापि तथा हृदयबन्धनम् ॥ ३७ ॥ इत्युक्तः स मया शिष्यो मेधावी मधुसूदन । पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ॥ ३८ ॥ भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते । कथं रसत्वं व्रजति शोणितत्वं कथं पुनः ॥ ३९ ॥ तथा मांसञ्च मेदश्च स्नाय्वस्थीनि च पोषति । कथमेतानि सर्वाणि शरीराणि शरीरिणाम् ॥ ४० ॥ वर्द्धन्ते वर्द्धमानस्य वर्द्धते च कथं बलम् । निरोजसां निर्गमनं मलानाञ्च पृथक् पृथक् ॥ ४१ ॥ कुतो वायं विश्वसिति उच्छ्वसित्यपि वा पुनः । कञ्च देशमधिष्ठाय तिष्ठत्यात्मानमात्मनि ॥ ४२ ॥ जीवः कायं वहति चेच्चेष्टमानः कलेवरम् । किं वर्णं कीदृशञ्चैव निवेशयति वै पुनः ॥ ४३ ॥ याथातथ्येन भगवन् वक्तुमर्हसि मेऽनघ । इति सम्परिपृष्टोऽहं तेन विप्रेण माधव ॥ ४४ ॥ प्रत्यब्रुवं महाबाहो यथाश्रुतमरिन्दम । यथा स्वकोष्ठे प्रक्षिप्य भाण्डं भाण्डमना भवेत् ॥ ४५ ॥ तथा स्वकाये प्रक्षिप्य मनोद्वारैरनिश्चलैः । आत्मानं तत्र मार्गेत प्रमादं परिवर्ज्जयेत् ॥ ४६ ॥ एवं सततमुद्युक्तः प्रीतात्मा न चिरादिव । आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात् प्रधानवित् ॥ ४७ ॥ न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः । मनसैव प्रदीपेन महानात्मा प्रदृश्यते ॥ ४८ ॥ सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः । सर्वतः श्रुतिमाल्लोके सर्वमावृत्य तिष्ठति ॥ ४९ ॥ जीवो निष्क्रान्तमात्मानं शरीरात् संप्रपश्यति । स तमुत्सृज्य देहे स्वं धारयन् ब्रह्म केवलम् ॥ ५० ॥ आत्मानमालोकयति मनसा प्रहसन्निव । तदेवमाश्रयं कृत्वा मोक्षं याति ततो मयि ॥ ५१ ॥ इदं सर्वरहस्यन्ते मया प्रोक्तं द्विजोत्तम । आपृच्छे साधयिष्यामि गच्छ विप्र यथासुखम् ॥ ५२ ॥ इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः । अगच्छत यथाकामं ब्राह्मणः संशितव्रतः ॥ ५३ ॥

वासुदेव उवाच । इत्युक्त्वा स तदा वाक्यं मां पार्थ द्विज-

सत्तमः । मोक्षधर्माश्रितः सम्यक् तत्रैवान्तरधीयत ॥ ५४ ॥ कच्चि-
देतत्त्वया पार्थ श्रुतमेकाग्रचेतसा । तदापि हि रथस्थस्त्वं श्रुत-
वानेतदेव हि ॥ ५५ ॥ नैतत् पार्थ सुविज्ञेयं व्यामिश्रेणेति मे
मतिः । नरेणाकृतसंज्ञेन न विदग्धेनाकृतात्मना ॥ ५६ ॥ सुरहस्य-
मिदं प्रोक्तं देवानां भरतर्षभ । कच्चिन्नेदं श्रुतं पार्थ मनुष्येणेह
कर्हिचित् ॥ ५७ ॥ न ह्येतत् श्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ ।
नैतदद्य सुविज्ञेयं व्यामिश्रेणान्तरात्मना ॥ ५८ ॥ क्रियावद्भिर्हि
कौन्तेय देवलोकः समावृतः । न चैतदिष्टं देवानां मर्त्त्यरूपनिव-
र्त्तनम् ॥ ५९ ॥ परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनम् ।
यत्रामृतत्वं प्राप्नोति त्यक्त्वा देहं सदा सुखी ॥ ६० ॥ इमं धर्मं
समास्थाय येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रा-
स्तेऽपि यान्ति परां गतिम् ॥ ६१ ॥ किं पुनर्ब्राह्मणाः पार्थ
क्षत्रिया वा बहुश्रुताः । स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः
॥ ६२ ॥ हेतुमच्चैतदुद्दिष्टमुपायश्चास्य साधने । सिद्धिं फलञ्च
मोक्षश्च दुःखस्य च विनिर्णयः ॥ ६३ ॥ नातःपरं सुखं त्वन्यत्
किञ्चित् स्याद्भरतर्षभ । बुद्धिमान् श्रद्दधानश्च पराक्रान्तश्च पाण्डव
॥ ६४ ॥ यः परित्यजते मर्त्त्यो लोकसारमसारवत् । एतैरुपायैः
स क्षिप्रं परां गतिमवाप्नुयात् ॥ ६५ ॥ एतावदेव वक्तव्यं नातो
भूयोऽस्ति किञ्चन । षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्त्तते ॥६६॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि
एकोनविंशोऽध्यायः ॥ १९ ॥

---

वासुदेव उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
दम्पत्योः पार्थ सम्वादो योऽभवद्भरतर्षभ ॥ १ ॥ ब्राह्मणी ब्राह्मणं
कञ्चित् ज्ञानविज्ञानपारगम् । दृष्ट्वा विविक्त आसीनं भार्य्या

भर्त्तारमब्रवीत् ॥ २ ॥ कन्नु लोकं गमिष्यामि त्वामहं पति-
माश्रिता । न्यस्तकर्म्माणमासीनं कीनाशमविचक्षणम् ॥ ३ ॥ भार्य्याः
पतिकृतांल्लोकानाप्नुवन्तीति नः श्रुतम् । त्वामहं पतिमासाद्य कां
गमिष्यामि वै गतिम् ॥ ४ ॥ एवमुक्तः स शान्तात्मा तामुवाच
हसन्निव । सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ॥ ५ ॥
ग्राह्यं दृश्यञ्च सत्यं वा यदिदं कर्म्म विद्यते । एतदेव व्यवस्यन्ति
कर्म्म कर्म्मेति कर्म्मिणः ॥ ६ ॥ मोहमेव नियच्छन्ति कर्म्मणा ज्ञान-
वर्ज्जिताः । नैष्कर्म्म्यं न च लोकेऽस्मिन्मुहूर्त्तमपि लभ्यते ॥ ७ ॥
कर्म्मणा मनसा वाचा शुभं वा यदि वाशुभम् । जन्मादि मूर्त्ति-
भेदान्तं कर्म्म भूतेषु वर्त्तते ॥ ८ ॥ रक्षोभिर्वध्यमानेषु दृश्यद्रव्येषु
वर्त्मसु । आत्मस्थमात्मना तेभ्यो दृष्टमायतनं मया ॥ ९ ॥ यत्र
तद्ब्रह्म निर्द्वन्द्वं यत्र सोमः सहाग्निना । व्यवायं कुरुते नित्यं
धीरो भूतानि धारयन् ॥ १० ॥ यत्र ब्रह्मादयो युक्तास्तदक्षर-
मुपासते । विद्वांसः सुव्रता यत्र शान्तात्मनो जितेन्द्रियाः ॥ ११ ॥
घ्राणेन न तदाघ्रेयं नास्वाद्यञ्चैव जिह्वया । स्पर्शनेन तदस्पृश्यं
मनसा त्ववगम्यते ॥ १२ ॥ चक्षुषा त्वविषह्यञ्च यत् किञ्चित् श्रव-
णात् परम् । अगन्धमरसस्पर्शमरूपाशब्दलक्षणम् ॥ १३ ॥ यतः
प्रवर्त्तते तन्त्रं यत्र च प्रतितिष्ठति । प्राणोऽपानः समानश्च व्यान-
श्चोदान एव च ॥ १४ ॥ तत एव प्रवर्त्तन्ते तदेव प्रविशन्ति च ।
समानव्यानयोर्मध्ये प्रानापानौ विचेरतुः ॥ १५ ॥ तस्मिन् सुप्ते
प्रलीयेत समानो व्यान एव च । अपानप्राणयोर्मध्ये उदानो व्याप्य
तिष्ठति ॥ १६ ॥ तस्मात् शयानं पुरुषं प्राणापानौ न मुञ्चतः ।
प्राणानामायतत्वेन तमुदानं प्रचक्षते ॥ १७ ॥ तस्मात्तपो व्यव-
स्यन्ति मद्गतं ब्रह्मवादिनः । तेषामन्योऽन्यभक्षाणां सर्व्वेषां देह-
चारिणाम् ॥ १८ ॥ अग्निर्वैश्वानरो मध्ये सप्तधा दीप्यतेऽन्तरा ।
घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोतञ्च पञ्चमम् ॥ १९ ॥ मनो

बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः । घ्रेयं दृश्यञ्च पेयञ्च स्पृश्यं श्राव्यं तथैव च ॥ २० ॥ मन्तव्यमथ वोद्धव्यं ताः सप्त समिधो मम । घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ॥ २१ ॥ मन्ता वोद्धा च सप्तैते भवन्ति परमर्त्विजः । घ्रेये पेये च दृश्ये च स्पृश्ये श्रव्ये तथैव च ॥ २२ ॥ मन्तव्येष्वथ वोद्धव्ये सुभगे पश्य सर्वदा । हवींष्यग्निषु होतारः सप्तधा सप्त सप्तसु ॥ २३ ॥ सम्यक् प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ २४ ॥ मनो बुद्धिश्च सप्तैता योनिरित्येव शब्दिताः । हविर्भूता गुणाः सर्वे प्रविशन्त्यग्निजं गुणम् ॥ २५ ॥ अन्तर्वास-मुषित्वा च जायन्ते स्वासु योनिषु । तत्रैव च निरुध्यन्ते प्रलये भूतभावने ॥ २६ ॥ ततः सञ्जायते गन्धस्ततः सञ्जायते रसः । ततः सञ्जायते रूपं ततः स्पर्शोऽभिजायते ॥ २७ ॥ ततः सञ्जा-यते शब्दः संशयस्तत्र जायते । ततः सञ्जायते निष्ठा जन्मैतत् सप्तधा विदुः ॥ २८ ॥ अनेनैव प्रकारेण प्रगृहीतं पुरातनैः । पूर्णाहुतिभिरापूर्णास्तेऽभिः पूर्यन्ति तेजसा ॥ २९ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां
विंशोऽध्यायः ॥ २० ॥

---

ब्राह्मण उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । निबोध दशहोतॄणां विधानमथ यादृशम् ॥ १ ॥ श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चरणौ करौ । उपस्थं पायुरिति वा होतॄणि दश भामिनि ॥ २ ॥ शब्दस्पर्शौ रूपरसौ गन्धो वाक्यं क्रिया गतिः । रेतोमूत्रपुरीषाणां त्यागो दश हवींषि च ॥ ३॥ दिशो वायु रविश्चन्द्रः पृथ्वग्नी विष्णुरेव च । इन्द्रः प्रजापति-र्मित्रमग्नयो दश भामिनि ॥ ४ ॥ दशेन्द्रियाणि होतॄणि हवींषि

इव भामिनि । विषया नाम समिधो हूयन्ते तु इयाग्निषु ॥ ५ ॥ चित्तं स्रुवञ्च वित्तञ्च पवित्रं ज्ञानमुत्तमम् । सुविभक्तमिदं सर्वं जगदासीदिति श्रुतम् ॥ ६ ॥ सर्वमेवाथ विज्ञेयं चित्तं ज्ञानमवेक्षते । रेतः शरीरभृत् कार्ये विज्ञाता तु शरीरभृत् ॥ ७ ॥ शरीरभृद्गार्हपत्यस्तस्मादन्यः प्रणीयते । मनश्चाहवनीयस्तु तस्मिन् प्रक्षिप्यते हविः ॥ ८ ॥ ततो वाचस्पतिर्जज्ञे तं मनः पर्य्यवेक्षते । रूपं भवति वैवर्णं समनुद्रवते मनः ॥ ९ ॥

ब्राह्मण्युवाच । कस्माद्वागभवत् पूर्वं कस्मात् पश्चान्मनोभवत् । मनसा चिन्तितं वाक्यं यदा समभिपद्यते ॥ १० ॥ केन विज्ञानयोगेन मतिश्चित्तं समास्थिता । समुन्नीता नाध्यगच्छत् को वै तां प्रतिबाधते ॥ ११ ॥

ब्राह्मण उवाच । तामपानः पतिर्भूत्वा तस्मात् प्रेष्यत्यपानताम् । तां गतिं मनसः प्राहुर्मनस्तस्मादपेक्षते ॥ १२ ॥ प्रश्नन्तु वाङ्मनसोर्मां यस्मात्त्वमनुपृच्छसि । तस्मात्ते वर्त्तयिष्यामि तयोरेव समाह्वयम् ॥ १३ ॥ उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम् । आवयोः श्रेष्ठमाचक्ष्व छिन्धि नौ संशयं विभो ॥ १४ ॥ मन इत्येव भगवांस्तदा प्राह सरस्वती । अहं वै कामधुक् तुभ्यमिति तं प्राह वागथ ॥ १५ ॥

ब्राह्मण उवाच । स्थावरं जङ्गमञ्चैव विद्ध्युभे मनसी मम । स्थावरं मत् सकाशे वै जङ्गमं विषये तव ॥ १६ ॥ यस्तु ते विषयं गच्छेन्मन्त्रो वर्णः स्वरोऽपि वा । तन्मनो जङ्गमं नाम तस्मादसि गरीयसी ॥ १७ ॥ तस्मादपि समाधिस्ते स्वयमभ्येत्य शोभने । तस्मादुच्छ्वासमासाद्य प्रवक्ष्यामि सरस्वती ॥ १८ ॥ प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति । प्रेर्य्यमाणा महाभागे विना प्राणानपानती ॥ १९ ॥ प्रजापतिमुपाधावत् प्रसीद भगवन्निति । ततः प्राणः प्रादुरभूद्वाचमाप्याययन् पुनः । तस्मा-

दुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् ॥ २० ॥ घोषिणी जात-
निर्घोषा नित्यमेव प्रवर्त्तते । तयोरपि च घोषेण निर्घोषैव गरी-
यसी ॥ २१ ॥ गौरिव प्रस्रवत्यर्थान् रसमुत्तमशालिनी । सततं
स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी ॥ २२ ॥ दिव्यादिव्यप्रभावेन
भारती गौः शुचिस्मिते । एतयोरन्तरं पश्य सूक्ष्मयोः स्यन्द-
मानयोः ॥ २३ ॥

ब्राह्मण्युवाच । अनुत्पन्नेषु वाक्येषु चोद्यमाना विवक्षया ।
किन्नु पूर्वं तदा देवी व्याजहार सरस्वती ॥ २४ ॥

ब्राह्मण उवाच । प्राणेन या सम्भवते शरीरे प्राणादपानं
प्रतिपद्यते च । उदानभूता च विसृज्य देहं व्यानेन सर्वं दिव-
माव्रणोति ॥ २५ ॥ ततः समाने प्रतितिष्ठतीह इत्येव पूर्वं प्रज-
जल्प वाणी । तस्मान्मनः स्थावरत्वाद्विशिष्टं तथा देवी जङ्गम-
त्वाद्विशिष्टा ॥ २६ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां
एकविंशोऽध्यायः ॥ २१ ॥

---

ब्राह्मण उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे सप्तहोतॄणां विधानमिह यादृशम् ॥ १ ॥ घ्राणं चक्षुश्च जिह्वा
च त्वक् श्रोत्रञ्चैव पञ्चमम् । मनो बुद्धिश्च सप्तैते होतारः पृथ-
गाश्रिताः ॥ २ ॥ सूक्ष्मेऽवकाशे तिष्ठन्तो न पश्यन्तीतरेतरम् ।
एतान् वै सप्तहोतॄंस्त्वं स्वभावाद्विद्धि शोभने ॥ ३ ॥

ब्राह्मण्युवाच । सूक्ष्मेऽवकाशे सन्तस्ते कथं नान्योऽन्यदर्शिनः ।
कथं स्वभावा भगवन्नेतदाचक्ष्व मे प्रभो ॥ ४ ॥

ब्राह्मण उवाच । गुणाज्ञानमविज्ञानं गुणज्ञानमभिज्ञता ।
परस्परं गुणानेते नाभिजानन्ति कर्हिचित् ॥ ५ ॥ जिह्वा चक्षु-

स्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च। न गन्धानधिगच्छन्ति घ्राणं तानधिगच्छति ॥ ६ ॥ घ्राणं चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च। न रसानधिगच्छन्ति जिह्वा तानधिगच्छति ॥ ७॥ घ्राणं जिह्वा तथा श्रोत्रं वाङ्मनो बुद्धिरेव च। न रूपाण्यधिगच्छन्ति चक्षुस्तान्यधिगच्छति ॥ ८ ॥ घ्राणं जिह्वा ततश्चक्षुः श्रोत्रं बुद्धिर्मनस्तथा। न स्पर्शानधिगच्छन्ति त्वक् च तानधिगच्छति ॥ ९ ॥ घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च। न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति ॥ १० ॥ घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं बुद्धिरेव च। संशयं नाधिगच्छन्ति मनस्तमधिगच्छति ॥ ११ ॥ घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च। न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति ॥ १२ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। इन्द्रियाणाञ्च सम्वादं मनसश्चैव भामिनि ॥१३॥

मन उवाच। न घ्राति मामृते घ्राणं रसं जिह्वा न वेत्ति च। रूपं चक्षुर्न गृह्णाति त्वक् स्पर्शं नावबुध्यते ॥ १४ ॥ न श्रोत्रं बुध्यते शब्दं मया हीनं कथञ्चन। प्रवरं सर्वभूतानामहमस्मि सनातनम् ॥ १५ ॥ आगाराणीव शून्यानि शान्तार्च्चिष इवाग्नयः। इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः ॥ १६ ॥ काष्ठानीवार्द्रशुष्काणि यतमानैरपीन्द्रियैः। गुणार्थान्नाधिगच्छन्ति मामृते सर्वजन्तवः ॥ १७ ॥

इन्द्रियाण्यूचुः। एवमेतद्भवेत् सत्यं यथैतन्मन्यते भवान्। ऋतेऽस्मानस्मदर्थांश्च भोगान् भुङ्क्ते भवान् यदि ॥ १८॥ यद्यस्मासु प्रलीनेषु तर्पणं प्राणधारणम्। भोगान् भुङ्क्ते भवान् सत्यं यथैतन्मन्यते तथा ॥ १९ ॥ अथ वास्मासु लीनेषु तिष्ठत्सु विषयेषु च। यदि सङ्कल्पमात्रेण भुङ्क्ते भोगान् यथार्थवत् ॥ २० ॥ अथ चेन्मन्यसे सिद्धिमस्मदर्थेषु नित्यदा। घ्राणेन रूपमादत्स्व रसानादत्स्व चक्षुषा ॥ २१ ॥ श्रोत्रेण गन्धानादत्स्व स्पर्शानादत्स्व

जिह्वया। त्वचा च शब्दानाहत्य बुद्ध्या स्पर्शमथापि च॥ २२॥
बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम्। भोगानपूर्वानादत्य
नोच्छिष्टं भोक्तुमर्हसि॥ २३॥ यथा हि शिष्यः शास्तारं श्रुत्यर्थ-
मभिधावति। ततः श्रुतिमुपादाय श्रुत्यर्थमुपतिष्ठति॥ २४॥
विषयानेवमस्माभिर्दर्शितानभिमन्यसे। अनागतानतीतांश्च स्वप्ने
जागरणे तथा॥ २५॥ वैमनस्यं गतानाञ्च जन्तूनामल्पचेतसाम्।
अस्मदर्थे कृते कार्य्ये दृश्यते प्राणधारणम्॥ २६॥ बहूनपि हि
सङ्कल्पान्मत्वा स्वप्नानुपास्य च। बुभुक्षया पीड्यमानो विषयानेव
धावति॥ २७॥ आगारमद्वारमिव प्रविश्य सङ्कल्पभोगान् विषयो
निबद्धान्। प्राणक्षये शान्तिमुपैति नित्यं दारुक्षयेऽग्निर्ज्वलितो
यथैव॥ २८॥ काममन्तु नः स्वेषु गुणेषु सङ्गः कामञ्च नान्योऽन्य-
गुणोपलब्धिः। अस्मान् विना नास्ति तवोपलब्धिस्त्वामृते त्वां
न भजेत् प्रहर्षः॥ २९॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां
द्वाविंशोऽध्यायः॥ २२॥

---

ब्राह्मण उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
सुभगे पञ्चहोतॄणां विधानमिह यादृशम्॥ १॥ प्राणापानावुदा-
नश्च समानो व्यान एव च। पञ्चहोतॄंस्तथैतान् वै परं भावं
विदुर्बुधाः॥ २॥

ब्राह्मण्युवाच। स्वभावात् सप्तहोतार इति मे पूर्विका मतिः।
यथा वै पञ्च होतारः परो भावस्तदुच्यताम्॥ ३॥

ब्राह्मण उवाच। प्राणेन संभृतो वायुरपाने जायते ततः।
अपाने संभृतो वायुस्ततो व्यानः प्रवर्त्तते॥ ४॥ व्यानेन संभृतो
वायुस्ततोदानः प्रवर्त्तते। उदाने संभृतो वायुः समानो नाम

जायते ॥ ५ ॥ तेऽपृच्छन्त पुरा सन्तः पूर्व्वजातं पितामहम् । यो नो ज्येष्ठस्तमाचक्ष्व स नः श्रेष्ठो भविष्यति ॥ ६ ॥

ब्रह्मोवाच । यस्मिन् प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । यस्मिन् प्रचीर्णे च पुनश्चरन्ति स वै श्रेष्ठो गच्छत यत्र कामः ॥ ७ ॥

प्राण उवाच । मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ ८ ॥

ब्राह्मण उवाच । प्राणः प्रालीयत ततः पुनश्च प्रचचार ह । समानश्चाप्युदानश्च वचोऽब्रूतां पुनः शुभे ॥ ९ ॥ न त्वं सर्व्वमिदं व्याप्य तिष्ठसीह यथा वयम् । न त्वं श्रेष्ठो हि नः प्राण अपानो हि वशे तव । प्रचचार पुनः प्राणस्तमपानोऽभ्यभाषत ॥ १० ॥

अपान उवाच । मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ ११ ॥

ब्राह्मण उवाच । व्यानश्च तमुदानश्च भाषमाणमथोचतुः । अपान न त्वं श्रेष्ठोऽसि प्राणो हि वशगस्तव ॥ १२ ॥ अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत् । श्रेष्ठोऽहमस्मि सर्व्वेषां श्रूयतां येन हेतुना ॥ १३ ॥ मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठोऽह्यहं पश्यत मां प्रलीनम् ॥ १४ ॥

ब्राह्मण उवाच । प्रालीयत ततो व्यानः पुनश्च प्रचचार ह । प्राणापानावुदानश्च समानश्च तमब्रुवन् ॥ १५ ॥ न त्वं श्रेष्ठोऽसि नो व्यान समानस्तु वशे तव । प्रचचार पुनर्व्यानः समानः पुनरब्रवीत् ॥ १६ ॥ श्रेष्ठोऽहमस्मि सर्व्वेषां श्रूयतां येन हेतुना । मयि प्रलीने प्रलयं व्रजन्ति सर्व्वे प्राणाः प्राणभृतां शरीरे । मयि

प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १७ ॥
समानः प्रचचाराथ उदानस्तमुवाच ह । श्रेष्ठोऽहमस्मि सर्वेषां
श्रूयतां येन हेतुना ॥ १८ ॥ मयि प्रलीने प्रलयं व्रजन्ति सर्वे
प्राणाः प्राणभृतां शरीरे । मयि प्रचीर्णे च पुनश्चरन्ति श्रेष्ठो
ह्यहं पश्यत मां प्रलीनम् ॥ १९ ॥ ततः प्रालीनतोदानः पुनश्च
प्रचचार ह । प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन् । उदान
न त्वं श्रेष्ठोऽसि व्यान एव वशे तव ॥ २० ॥

ब्राह्मण उवाच । ततस्तानब्रवीद्‌ब्रह्मा समवेतान् प्रजापतिः ।
सर्वे श्रेष्ठा न वा श्रेष्ठाः सर्वे चान्योऽन्यधर्मिणः ॥ २१ ॥ सर्वे
स्वविषये श्रेष्ठाः सर्वे चान्योऽन्यधर्मिणः । इति तानब्रवीत् सर्वान्
समवेतान् प्रजापतिः ॥ २२ ॥ एकस्थिरश्चास्थिरश्च विशेषात् पञ्च-
वायवः । एक एव ममैवात्मा बहुधाप्युपचीयते ॥ २३ ॥ पर-
स्परस्य सुहृदो भावयन्तः परस्परम् । स्वस्ति व्रजत भद्रं वो
धारयध्वं परस्परम् ॥ २४ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

ब्राह्मण उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च सम्वादमृषेर्देवमतस्य च ॥ १ ॥

देवमत उवाच । जन्तोः सञ्जायमानस्य किन्नु पूर्वं प्रवर्त्तते ।
प्राणोऽपानः समानो वा व्यानो वोदान एव च ॥ २ ॥

नारद उवाच । येनायं सृज्यते जन्तुस्ततोऽन्यः पूर्वमेति तम् ।
प्राणद्वन्द्वं हि विज्ञेयं तिर्य्यगूर्द्ध्वमधश्च यत् ॥ ३ ॥

देवमत उवाच । केनायं सृज्यते जन्तुः कश्चान्यः पूर्वमेति
तम् । प्राणद्वन्द्वञ्च मे ब्रूहि तिर्य्यगूर्द्ध्वमधश्च यत् ॥ ४ ॥

नारद उवाच । सङ्कल्पाज्जायते हर्षः शब्दादपि च जायते ।
रसात् सञ्जायते चापि रूपादपि च जायते ॥ ५ ॥ शुक्राच्छोणित-
संसृष्टात् पूर्व्वं प्राणः प्रवर्त्तते । प्राणेन विकृते शुक्रे तथापानः
प्रवर्त्तते ॥ ६ ॥ शुक्रात् सञ्जायते चापि रसादपि च जायते ।
एतद्रूपमुदानस्य हर्षो मिथुनमन्तरा ॥ ७ ॥ कामात् सञ्जायते
शुक्रं कामात् सञ्जायते रजः । समानव्यानजनिते सामान्ये शुक्र-
शोणिते । प्राणापानाविदं द्वन्द्वमवाक् चोर्द्धञ्च गच्छतः । व्यानः
समानश्चैवोभौ तिर्य्यक् द्वन्द्वत्वमुच्यते ॥ ८ ॥ अग्निर्वै देवताः सर्व्वा
इति वेदस्य शासनम् । सञ्जायते ब्राह्मणस्य ज्ञानं बुद्धिसमन्वितम्
॥ ९ ॥ तस्य धूमस्तमो रूपं रजो भस्मसु तेजसः । सर्व्वं सञ्जा-
यते तस्य यत्र प्रक्षिप्यते हविः ॥ १० ॥ सत्त्वात् समानो व्यानश्च
इति यज्ञविदो विदुः । प्राणापानावाज्यभागौ तयोर्मध्ये हुता-
शनः ॥ ११ ॥ एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः । निर्द्वन्द्वमिति
यत्त्वेतत्तन्मे निगदतः शृणु ॥ १२ ॥ अहोरात्रमिदं द्वन्द्वं तयोर्मध्ये
हुताशनः । एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १३ ॥ सच्चा-
सच्चैव तद्द्वन्द्वं तयोर्मध्ये हुताशनः । एतद्रूपमुदानस्य परमं ब्राह्मणा
विदुः ॥ १४ ॥ ऊर्द्ध्वं समानो व्यानश्च व्यस्यते कर्म्म तेन तत् ।
तृतीयन्तु समानेन पुनरेव व्यवस्यते ॥ १५ ॥ शान्त्यर्थं व्यानमेकञ्च
शान्तिर्ब्रह्मसनातनम् । एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥१६॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

ब्राह्मण उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चातुर्होत्रविधानस्य विधानमिह यादृशम् ॥ १ ॥ तस्य सर्व्वस्य
विधिवद्विधानमुपदिश्यते । शृणु मे गदतो भद्रे रहस्यमिद-

मद्भुतम् ॥ २ ॥ करणं कर्म्म कर्त्ता च मोक्ष इत्येव भाविनि ।
चत्वार एते होतारो यैरिदं जगदावृतम् ॥ ३ ॥ हेतूनां साधन-
ञ्चैव शृणु सर्व्वमशेषतः । घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रञ्च
पञ्चमम् ॥ ४ ॥ मनो बुद्धिश्च सप्तैते विज्ञेया गुणहेतवः । गन्धो
रसश्च रूपञ्च शब्दः स्पर्शश्च पञ्चमः ॥ ५ ॥ मन्तव्यमथ बोद्धव्यं
सप्तैते कर्म्महेतवः । घ्राता भक्षयिता द्रष्टा वक्ता श्रोता च पञ्चमः
॥ ६ ॥ मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्त्तृहेतवः । स्वगुणं
भक्षयन्त्येते गुणवन्तः शुभाशुभम् ॥ ७ ॥ अहञ्च निर्गुणोऽनन्तः
सप्तैते मोक्षहेतवः । विदुषां बुध्यमानानां स्वं स्वं स्थानं यथा-
विधि ॥ ८ ॥ गुणास्ते देवता भूताः सततं भुञ्जते हविः ।
अदन्नन्नान्यथोऽविद्वान्ममत्वेनोपपद्यते ॥ ९ ॥ आत्मार्थं पाचयन्नन्नं
ममत्वेनोपहन्यते । अभक्ष्यभक्षणञ्चैव मद्यपानञ्च हन्ति तम् ॥ १० ॥
स चान्नं हन्ति तं चान्नं स हत्वा हन्यते पुनः । हन्ता ह्यन्नमिदं
विद्वान् पुनर्जनयतीश्वरः ॥ ११ ॥ न चान्नाज्जायते तस्मिन् सूक्ष्मो
नाम व्यतिक्रमः । मनसा गम्यते यच्च यच्च वाचा निगद्यते ॥ १२ ॥
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते । स्पर्शेन स्पृश्यते यच्च
घ्राणेन घ्रायते च यत् ॥ १३ ॥ मनःषष्ठानि संयम्य हवींष्येतानि
सर्व्वशः । गुणवत् पावको मह्यं दीप्यतेऽन्तः शरीरिणः ॥ १४ ॥
योगयज्ञः प्रवृत्तो मे ज्ञानवह्निप्रदोद्भवः । प्राणस्तोत्रोऽपानशस्त्रः
सर्व्वत्यागसुदक्षिणः ॥ १५ ॥ कर्त्तानुमन्ता ब्रह्मात्मा ततोऽध्वर्य्यु-
र्क्कृतस्तुतिः । ऋतं प्रशास्ता तच्छस्त्रमपवर्गोऽस्य दक्षिणा ॥ १६ ॥
ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः । नारायणाय देवाय
यदविन्दन् पशून् पुरा ॥ १७ ॥ तत्र सामानि गायन्ति तत्र चाहु-
र्निदर्शनम् । देवं नारायणं भीरु सर्व्वात्मानं निबोध तम् ॥ १८ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां
पञ्चविंशोऽध्यायः ॥ २५ ॥

ब्राह्मण उवाच। एकः शास्ता न द्वितीयोऽस्ति शास्ता यो हृच्छयस्तमहमनुब्रवीमि। तेनैवमुक्तः प्रवणादिवोदकं यथा नियुक्तोऽस्मि तथा वहामि॥ १॥ एको गुरुर्नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि। तेनानुशिष्टा गुरुणा सदैव लोकद्विष्टाः पन्नगाः सर्व एव॥ २॥ एको बन्धुर्नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि। तेनानुशिष्टा बान्धवा बन्धुमन्तः सप्तर्षयः पार्थ दिवि प्रभान्ति॥ ३॥ एकः श्रोता नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि। तस्मिन् गुरौ गुरुवासं निरुष्य शक्रो गतः सर्वलोकामरत्वम्॥ ४॥ एको द्वेष्टा नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि। तेनानुशिष्टा गुरुणा सदैव लोके द्विष्टाः पन्नगाः सर्व एव॥ ५॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रजापतौ पन्नगानां देवर्षीणाञ्च संविदम्॥ ६॥ देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिम्। पर्य्यपृच्छन्नुपासीनाः श्रेयो नः प्रोच्यतामिति॥ ७॥ तेषां प्रोवाच भगवान् श्रेयः समनुपृच्छताम्। ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन् दिशः॥ ८॥ तेषां प्रद्रवमाणानामुपदेशार्थमात्मनः। सर्पाणां दंशने भावः प्रवृत्तः पूर्वमेव तु॥ ९॥ असुराणां प्रवृत्तस्तु दम्भभावः स्वभावजः। दानं देवा व्यवसिता दममेव महर्षयः॥ १०॥ एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः। नानाव्यवसिताः सर्वे सर्पदेवर्षिदानवाः॥ ११॥ शृणोत्ययं प्रोच्यमानं गृह्णाति च यथातथम्। पृच्छतस्तदतो भूयो गुरुरन्यो न विद्यते॥ १२॥ तस्य चानुमते कर्म्म ततः पश्चात् प्रवर्त्तते। गुरुर्बोद्धा च श्रोता च द्वेष्टा च हृदि निःसृतः॥ १३॥ पापेन विचरंल्लोके पापचारी भवत्ययम्। शुभेन विचरंल्लोके शुभचारी भवत्युत॥ १४॥ कामचारी तु कामेन य इन्द्रियसुखे रतः। ब्रह्मचारी सदैवैष य इन्द्रियजये रतः॥ १५॥ अपेतव्रतकर्म्मा तु केवलं ब्रह्मणि स्थितः।

ब्रह्मभूतश्चरँल्लोके ब्रह्मचारी भवत्ययम् ॥ १६ ॥ ब्रह्मैव समिध-स्तस्य ब्रह्माग्निर्ब्रह्मसम्भवः। आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ॥ १७ ॥ एतदेवेदृशं सूक्ष्मं ब्रह्मचर्य्यं विदुर्बुधाः। विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिताः ॥ १८ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां षड्विंशोऽध्यायः ॥ २६ ॥

---

ब्राह्मण उवाच। सङ्कल्पदंशमशकं शोकहर्षहिमातपम्। मोहान्धकारतिमिरं लोभव्याधिसरीसृपम् ॥ १ ॥ विषयैकात्ययाध्वानं कामक्रोधविरोधकम्। तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम् ॥ २ ॥

ब्राह्मण्युवाच। क्व तद्वनं महाप्राज्ञ के वृक्षाः सरितश्च काः। गिरयः पर्व्वताश्चैव कियत्यध्वनि तद्वनम् ॥ ३ ॥

ब्राह्मण उवाच। नैतदस्ति पृथग्भावः किञ्चिदन्यत्ततः सुखम्। नैतदस्त्यपृथग्भावः किञ्चिद्दुःखतरं ततः ॥ ४ ॥ तस्माद्ध्रस्वतरं नास्ति न ततोऽस्ति महत्तरम्। नास्ति तस्मात् सूक्ष्मतरं नास्त्यन्यत् तत्समं सुखम् ॥ ५ ॥ न तत्राविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः। न च बिभ्यति केषाञ्चित्तेभ्यो बिभ्यति केचन ॥ ६ ॥ तस्मिन् वने सप्त महाद्रुमाश्च फलानि सप्तातिथयश्च सप्त। सप्ताश्रमाः सप्तसमाधयश्च दीक्षाश्च सप्तैतदरण्यरूपम् ॥ ७ ॥ पञ्चवर्णानि दिव्यानि पुष्पानि च फलानि च। सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ८ ॥ सुवर्णानि द्विवर्णानि पुष्पाणि च फलानि च। सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ९ ॥ सुरभीणि द्विवर्णानि पुष्पाणि च फलानि च। सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ १० ॥ सुरभीण्येकवर्णानि पुष्पाणि च

फलानि च। सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥ ११ ॥ बह्वन्यव्यक्तवर्णानि पुष्पाणि च फलानि च। विसृजन्तौ महावृक्षौ तद्वनं व्याप्य तिष्ठतः ॥ १२ ॥ एको वह्निः सुमना ब्राह्मणोऽत्र पञ्चेन्द्रियाणि समिधश्चात्र सन्ति। तेभ्यो मोक्षाः सप्त फलन्ति दीक्षागुणाः फलान्यतिथयः फलाशाः ॥ १३ ॥ आतिथ्यं प्रतिगृह्णन्ति तत्र तत्र महर्षयः। अर्च्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनम् ॥ १४ ॥ प्रज्ञावृक्षं मोक्षफलं शान्तिच्छायासमन्वितम्। ज्ञानाश्रयं तृप्तितोयमन्तः क्षेत्रज्ञभास्करम् ॥ १५ ॥ येऽधिगच्छन्ति तं सन्तस्तेषां नास्ति भयं पुनः। ऊर्द्ध्वं चाधश्च तिर्य्यक् च तस्य नान्तोऽधिगम्यते ॥ १६ ॥ सप्तस्त्रियस्तत्र वसन्ति सद्यस्त्ववाङ्मुखा भानुमत्यो जनित्र्यः। ऊर्द्ध्वं रसानाददते प्रजाभ्यः सर्वान् यथा सत्यमनित्यता च ॥ १७ ॥ तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोपयन्ति च। सप्त सप्तर्षयः सिद्धा वशिष्ठप्रमुखैः सह ॥ १८ ॥ यशो वर्च्चो भगश्चैव विजयः सिद्धतेजसी। एतमेवानुवर्त्तन्ते सप्त ज्योतींषि भास्करम् ॥ १९ ॥ गिरयः पर्व्वताश्चैव सन्ति तत्र समासतः। नद्यश्च सरितो वारि वहन्त्यो ब्रह्मसम्भवम् ॥ २० ॥ नदीनां सङ्गमश्चैव वैताने समुपह्वरे। स्वात्मतृप्ता यतो यान्ति साक्षादेव पितामहम् ॥ २१ ॥ कृशाशाः सुव्रताशाश्च तपसा दग्धकिल्बिषाः। आत्मन्यात्मानमाविश्य ब्रह्माणं समुपासते ॥ २२ ॥ शममप्यत्र शंसन्ति विद्यारण्यविदो जनाः। तदरण्यमभिप्रेत्य यथाधीरमजायत ॥ २३ ॥ एतद्वैवेदृशं पुण्यमरण्यं ब्राह्मणा विदुः। विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिता ॥ २४ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां सप्तविंशोऽध्यायः ॥ २७ ॥

---

ब्राह्मण उवाच। गन्धान्न जिघ्रामि रसान्न वेद्मि रूपं न पश्यामि न च स्पृशामि। न चापि शब्दान् विविधान् शृणोमि न चापि सङ्कल्पमुपैमि किञ्चित्॥ १॥ अर्थानिष्टान् कामयते स्वभावः सर्वान् द्वेष्यान् प्रद्विषते स्वभावः। कामद्वेषावुद्भवतः स्वभावात् प्राणापानौ जन्तुदेहान्निवेश्य॥ २॥ तेभ्यश्चान्यांस्तेषु नित्यांश्च भावान् भूतात्मानं लक्षयेरन् शरीरे। तस्मिंस्तिष्ठन्नास्मि शक्तः कथञ्चित् कामक्रोधाभ्यां जरया मृत्युना च॥ ३॥ अकामयानस्य च सर्वकामा न विद्विषाणस्य च सर्वदोषान्। न मे स्वभावेषु भवन्ति लेपास्तोयस्य बिन्दोरिव पुष्करेषु॥ ४॥ नित्यस्य चैतस्य भवन्ति नित्या निरीक्ष्यमाणस्य बहुस्वभावः। न सज्जते कर्मसु भोगजालं दिवीव सूर्य्यस्य मयूखजालम्॥ ५॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। अध्वर्य्युयतिसंवादं तन्निबोध यशस्विनि॥ ६॥ प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्म्मण्यथाब्रवीत्। यतिरध्वर्य्युमासीनो हिंसेयमिति कुत्सयन्॥ ७॥ तमध्वर्य्युः प्रत्युवाच नायं छागो विनश्यति। श्रेयसा योक्ष्यते जन्तुर्यदि श्रुतिरियं तथा॥ ८॥ यो ह्यस्य पार्थिवो भागः पृथिवीं स गमिष्यति। यदस्य वारिजं किञ्चिदपस्तत् सम्प्रवेक्ष्यति॥ ९॥ सूर्य्यञ्चक्षुर्दिशः श्रोत्रं प्राणोऽस्य दिवमेव च। आगमे वर्त्तमानस्य न मे दोषोऽस्ति कश्चन॥ १०॥

यतिरुवाच। प्राणैर्वियोगे छागस्य यदि श्रेयः प्रपश्यसि। छागार्थे वर्त्तते यज्ञो भवतः किं प्रयोजनम्॥ ११॥ अत्र त्वां मन्यतां भ्राता पिता माता सखेति च। मन्त्रयस्वैनमुन्नीय परवन्तं विशेषतः॥ १२॥ एवमेवानुमन्येरंस्तान् भवान् द्रष्टुमर्हति। तेषामनुमतं श्रुत्वा शक्या कर्त्तुं विचारणा॥ १३॥ प्राणा अप्यस्य छागस्य प्रापितास्ते स्वयोनिषु। शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः॥ १४॥ इन्धनस्य तु तुल्येन शरीरेण विचेतसा। हिंसा-

निर्व्विष्टुकामानामिन्धनं पशुसङ्गितम् ॥ १५ ॥ अहिंसा सर्व्वधर्म्माणामिति वृद्धानुशासनम् । यदि हिंस्रं भवेत् कर्म्म तत् कार्य्यमिति विद्महे ॥ १६ ॥ अहिंसेति प्रतिज्ञेयं यदि वच्यास्यतः परम् । शक्यं बहुविधं कर्त्तुं भवता कार्य्यदूषणम् ॥ १७ ॥ अहिंसा सर्व्वभूतानां नित्यमस्मासु रोचते । प्रत्यक्षतः साधयामो न परोक्षमुपास्महे ॥ १८ ॥

अध्वर्य्युरुवाच । भूमेर्गन्धगुणान् भुङ्क्ष्व पिबस्यापोमयान्रसान् । ज्योतिषां पश्यसे रूपं स्पृशस्यनिलजान् गुणान् ॥ १९ ॥ शृणोष्याकाशजान् शब्दान् मनसा मन्यसे मतिम् । सर्व्वाण्येतानि भूतानि प्राणा इति च मन्यसे ॥२०॥ प्राणादाने निवृत्तोऽसि हिंसायां वर्त्तते भवान् । नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज ॥ २१ ॥

यतिरुवाच । अक्षरञ्च क्षरञ्चैव द्वैधीभावोऽयमात्मनः । अक्षरं तत्र सद्भावः स्वभावः क्षर उच्यते ॥ २२ ॥ प्राणो जिह्वा मनः सत्त्वं सद्भावो रजसा सह । भावैरेतैर्व्विमुक्तस्य निर्द्वन्द्वस्य निराशिषः ॥ २३ ॥ समस्य सर्व्वभूतेषु निर्म्ममस्य जितात्मनः । समन्तात् परिमुक्तस्य न भयं विद्यते क्वचित् ॥ २४ ॥

अध्वर्य्युरुवाच । सद्भिरेवेह संवासः कार्य्यो मतिमताम्वर । भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम ॥ २५ ॥ भगवन् भगवद्बुद्ध्या प्रतिपन्नो ब्रवीम्यहम् । व्रतं मन्त्रकृतं कर्त्तुर्नापराधोऽस्ति मे द्विज ॥ २६ ॥

ब्राह्मण उवाच । उपपत्त्या यतिस्तूष्णीं वर्त्तमानस्ततः परम् । अध्वर्य्युरपि निर्म्मोहः प्रचचार महामखे ॥ २७ ॥ एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः । विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनार्थदर्शिना ॥ २८ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां अष्टाविंशोऽध्यायः ॥ २८ ॥

ब्राह्मण उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। कार्त्तवीर्य्यस्य संवादं समुद्रस्य च भाविनि ॥ १ ॥ कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रवान्। येन सागरपर्य्यन्ता धनुषा निर्जिता मही ॥ २ ॥ स कदाचित् समुद्रान्ते विचरन् बलदर्पितः। अवाकिरच्छरशतैः समुद्रमिति नः श्रुतम् ॥ ३ ॥ तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाच ह। मा मुञ्च वीर नाराचान् ब्रूहि किं करवाणि ते ॥ ४ ॥ मदाश्रयाणि भूतानि त्वद्विसृष्टैर्महेषुभिः। बध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥ ५ ॥

अर्जुन उवाच। मत्समो यदि संग्रामे शरासनधरः क्वचित्। विद्यते तं समाचक्ष्व यः समासीत मां मृधे ॥ ६ ॥

समुद्र उवाच। महर्षिर्जमदग्निस्ते यदि राजन् परिश्रुतः। तस्य पुत्रस्तवातिथ्यं यथावत् कर्त्तुमर्हति ॥ ७ ॥ तत स राजा प्रययौ क्रोधेन महता वृतः। स तमाश्रममागम्य राममेवान्वपद्यत ॥ ८ ॥ स रामप्रतिकूलानि चकार सह बन्धुभिः। आयासं जनयामास रामस्य च महात्मनः ॥ ९ ॥ ततस्तेजः प्रजज्वाल रामस्यामिततेजसः। प्रदहन् रिपुसैन्यानि तदा कमललोचने ॥ १० ॥ ततः परशुमादाय स तं बाहुसहस्रिणम्। चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥ ११ ॥ तं हतं पतितं दृष्ट्वा समेताः सर्वबान्धवाः। असीनादाय शक्तीश्च भार्गवं पर्य्यधावयन् ॥ १२ ॥ रामोऽपि धनुरादाय रथमारुह्य सत्वरः। विसृजन् शरवर्षाणि व्यधमत् पार्थिवं बलम् ॥ १३ ॥ ततस्तु क्षत्रियाः केचिज्जामदग्न्यभयार्दिताः। विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव ॥ १४ ॥ तेषां स्वविहितं कर्म्म तद्भयान्नानुतिष्ठताम्। प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ १५ ॥ एवं ते द्रविड़ाभीराः पुण्ड्राश्च शवरैः सह। वृषलत्वं परिगता व्युत्थानात् क्षत्रधर्म्मिणः ॥ १६ ॥ ततश्च हतवीरासु क्षत्रियासु पुनः

पुनः । द्विजैस्त्यादितं चत्रं जामदग्न्यो व्यकृन्तत ॥ १७ ॥ एक-
विंशतिमेधान्ते रामं वागशरीरिणी । दिव्या प्रोवाच मधुरा
सर्वलोकपरिश्रुता ॥ १८ ॥ राम राम निवर्त्तस्व कं गुणं तात
पश्यसि । चत्रबन्धूनिमान् प्राणैर्विप्रयोज्य पुनः पुनः ॥ १९ ॥
तथैव तं महात्मानमृचीकप्रमुखास्तदा । पितामहा महाभाग
निवर्त्तस्वेत्यथाब्रुवन् ॥ २० ॥ पितुर्वधममृष्यंस्तु रामः प्रोवाच
तानृषीन् । नार्हन्तीह भवन्तो मां निवारयितुमित्युत ॥ २१ ॥

पितर ऊचुः । नार्हसि चत्रबन्धूंस्त्वं निहन्तुं जयतां वर ।
नेह युक्तं त्वया हन्तुं ब्राह्मणेन सता नृपान् ॥ २२ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां
ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

पितर ऊचुः । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रुत्वा च तत्तथा कार्य्यं भवता द्विजसत्तम ॥ १ ॥ अलर्को नाम
राजर्षिरभवत् सुमहातपाः । धर्म्मज्ञः सत्यवादी च महात्मा
सुदृढ़व्रतः ॥ २ ॥ स सागरान्तां धनुषा विनिर्ज्जित्य महीमिमाम् ।
कृत्वा सुदुष्करं कर्म्म मनः सूक्ष्मे समादधे ॥ ३ ॥ स्थितस्य वृक्ष-
मूलेषु तस्य चिन्ता बभूव ह । उत्सृज्य सुमहत् कर्म्म सूक्ष्मं
प्रति महामते ॥ ४ ॥

अलर्क उवाच । मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः ।
अन्यत्र वाणान् धास्यामि शत्रुभिः परिवारितः ॥ ५ ॥ यदिदं
चापलात् कर्म्म सर्वान् मर्त्त्यान् चिकीर्षति । मनः प्रति सुतीक्ष्णा-
ग्रानहं मोच्यामि सायकान् ॥ ६ ॥

मन उवाच । नेमे वाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म्म भेत्स्यन्ति भिन्नमर्म्मा मरिष्यसि ॥ ७ ॥ अन्यान् वाणान्

समीक्षस्व यैस्त्वं मां सूदयिष्यसि। तत् श्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ८ ॥

अलर्क उवाच। आघ्राय सुबहून् गन्धांस्तानेव प्रतिगृध्यति। तस्माद्घ्राणं प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् ॥ ९ ॥

घ्राण उवाच। नेमे वाणास्तरिष्यन्ति मामलर्क कथञ्चन। तवैव मर्म्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि॥ १० ॥ अन्यान् वाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि। तत् श्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ११ ॥

अलर्क उवाच। इयं स्वादून् रसान् भुक्त्वा तानेव प्रतिगृध्यति। तस्मात् जिह्वां प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् ॥ १२ ॥

जिह्वोवाच। नेमे वाणास्तरिष्यन्ति मामलर्क कथञ्चन। तवैव मर्म्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि॥ १३ ॥ अन्यान् वाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि। तत् श्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ १४ ॥

अलर्क उवाच। स्पृष्ट्वा त्वग्विविधान् स्पर्शांस्तानेव प्रतिगृध्यति। तस्मात्त्वचं पाटयिष्ये विविधैः कङ्कपत्रिभिः ॥ १५ ॥

त्वगुवाच। नेमे वाणास्तरिष्यन्ति मामलर्क कथञ्चन। तवैव मर्म्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ १६ ॥ अन्यान् वाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि। तत् श्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ १७ ॥

अलर्क उवाच। श्रुत्वा तु विविधान् शब्दांस्तानेव प्रतिगृध्यति। तस्मात् श्रोत्रं प्रति शरान् प्रतिमुञ्चाम्यहं शितान्॥ १८ ॥

श्रोत्र उवाच। नेमे वाणास्तरिष्यन्ति मामलर्क कथञ्चन। तवैव मर्म्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ १९ ॥ अन्यान् वाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि। तत् श्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ २० ॥

अलर्क उवाच । दृष्ट्वा रूपाणि बहुशस्तान्येव प्रतिगृध्यति । तस्माच्चक्षुर्हनिष्यामि निशितैः सायकैरहम् ॥ २१ ॥

चक्षुरुवाच । नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ २२ ॥ अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि । तत् श्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ २३ ॥

अलर्क उवाच । इयं निष्ठा बहुविधा प्रज्ञया त्वध्यवस्यति । तस्माद्बुद्धिं प्रति शरान् प्रतिमोक्ष्याम्यहं शितान् ॥ २४ ॥

बुद्धिरुवाच । नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन । तवैव मर्म्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि । अन्यान् बाणान् समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ २५ ॥

ब्राह्मण उवाच । ततोऽलर्कस्तपो घोरं तत्रैवास्थाय दुष्करम् । नाध्यगच्छत् परं शक्त्या बाणमेतेषु सप्तसु ॥ २६ ॥ सुसमाहितचेतास्तु स ततोऽचिन्तयत् प्रभुः । स विचिन्त्य चिरं कालमलर्को द्विजसत्तम ॥ २७ ॥ नाध्यगच्छत् परं श्रेयो योगान्मतिमतां वरः । स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ॥ २८॥ इन्द्रियाणि जघानाशु बाणेनैकेन वीर्य्यवान् । योगेनात्मानमाविश्य सिद्धिं परमिकां गतः ॥ २९ ॥ विस्मितश्चापि राजर्षिरिमां गाथां जगाद ह । अहो कष्टं यदस्माभिः सर्वं बाह्यमनुष्ठितम् ॥ ३० ॥ भोगतृष्णासमायुक्तैः पूर्वं राज्यमुपासितम् । इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम् ॥ ३१ ॥ इति त्वमनुजानीहि राम मा क्षत्रियान् जहि । तपो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे ॥३२॥ इत्युक्तः स तपो घोरं जामदग्न्यः पितामहैः । आस्थितः सुमहाभागो ययौ सिद्धिञ्च दुर्गमाम् ॥ ३३ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां त्रिंशोऽध्यायः ॥ ३० ॥

ब्राह्मण उवाच। त्रयो वै रिपवो लोके नवधा गुणतः स्मृताः। प्रहर्षः प्रीतिरानन्दस्त्रयस्ते सात्त्विका गुणाः॥ १॥ तृष्णा क्रोधोऽभिसंरम्भो राजसास्ते गुणाः स्मृताः। श्रमस्तन्द्रा च मोहश्च त्रयस्ते तामसा गुणाः॥ २॥ एतान्निकृत्य धृतिमान् बाणसंघैरतन्द्रितः। जेतुं परानुत्सहते प्रशान्तात्मा जितेन्द्रियः॥ ३॥ अत्र गाथाः कीर्त्तयन्ति पुराकल्पविदो जनाः। अम्बरीषेण या गीता राज्ञा पूर्वं प्रशाम्यता॥ ४॥ समुदीर्णेषु दोषेषु बध्यमानेषु साधुषु। जग्राह तरसा राज्यमम्बरीषो महायशाः॥ ५॥ स निगृह्यात्मनो दोषान् साधून् समभिपूज्य च। जगाम महतीं सिद्धिं गाथाश्चेमा जगाद ह॥ ६॥ भूयिष्ठं विजिता दोषा निहताः सर्वशत्रवः। एको दोषो वरिष्ठश्च वध्यः स न हतो मया॥ ७॥ यत्प्रयुक्तो जन्तुरयं वैतृष्ण्यं नाधिगच्छति। तृष्णार्त्त इह निम्नानि धावमानो न बुध्यते॥ ८॥ अकार्य्यमपि येनेह प्रयुक्तः सेवते नरः। तं लोभमसिभिस्तीक्ष्णैर्निकृन्तत निकृन्तत॥ ९॥ लोभाद्धि जायते तृष्णा ततश्चिन्ता प्रवर्त्तते। स लिप्समानो लभते भूयिष्ठं राजसान् गुणान्॥ १०॥ तदवाप्तौ तु लभते भूयिष्ठं तामसान् गुणान्॥ ११॥ स तैर्गुणैः संहतदेहबन्धनः पुनः पुनर्जायति कर्म्म चेहते। जन्मक्षये भिन्नविकीर्णदेहो मृत्युं पुनर्गच्छति जन्मनैव॥ १२॥ तस्मादेतं सम्यगवेक्ष्य लोभं निगृह्य धृत्यात्मनि राज्यमिच्छेत्। एतद्राज्यं नान्यदस्तीह राज्यमात्मैव राजा विदितो यथावत्॥ १३॥ इति राज्ञाम्बरीषेण गाथा गीता यशस्विना। आधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तता॥ १४॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां एकत्रिंशोऽध्यायः॥ ३१॥

———

ब्राह्मण उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । ब्राह्मणस्य च संवादं जनकस्य च भाविनि ॥ १ ॥ ब्राह्मणं जनको राजा सन्तं कस्मिंश्चिदागसि । विषये मे न वस्तव्यमिति शिष्टार्थमब्रवीत् ॥ २ ॥ इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम् । आचक्ष्व विषयं राजन् यावांस्तव वशे स्थितः ॥ ३ ॥ सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो । वचस्ते कर्त्तुमिच्छामि यथाशास्त्रं महीपते ॥ ४ ॥ इत्युक्तस्तु तदा राजा ब्राह्मणेन यशस्विना । मुहुरुष्णं विनिश्वस्य न किञ्चित् प्रत्यभाषत ॥ ५ ॥ तमासीनं ध्यायमानं राजानममितौजसम् । कश्मलं सहसागच्छद्भानुमन्तमिव ग्रहः ॥ ६ ॥ समाश्वस्य ततो राजा विगते कश्मले तदा । ततो मुहूर्त्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ॥ ७ ॥

जनक उवाच । पितृपैतामहे राज्ये वश्ये जनपदे सति । विषयं नाधिगच्छामि विचिन्वन् पृथिवीमहम् ॥ ८ ॥ नाध्यगच्छं यदा पृथ्वां मिथिला मार्गिता मया । नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ॥ ९ ॥ नाध्यगच्छं यदा तस्यां तदा मे कश्मलो भवेत् । ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ॥१०॥ तदा न विषयं मन्ये सर्व्वो वा विषयो मम । आत्मापि चायं न मम सर्व्वा वा पृथिवी मम ॥ ११ ॥ यथा मम तथान्येषामिति मन्ये द्विजोत्तम । उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ॥ १२ ॥

ब्राह्मण उवाच । पितृपैतामहे राज्ये वश्ये जनपदे सति । ब्रूहि कां मतिमास्थाय ममत्वं वर्ज्जितं त्वया ॥ १३ ॥ कां वै बुद्धिं समाश्रित्य सर्व्वो वै विषयस्तव । नावैषि विषयं येन सर्व्वो वा विषयस्तव ॥ १४ ॥

जनक उवाच । अन्तवन्त्य इहावस्था विदिताः सर्व्वकर्म्मसु । नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत् ॥ १५ ॥ कस्येदमिति कस्य स्वमिति वेदवचस्तथा । नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्-

भवेत् ॥ १६ ॥ एतां बुद्धिं समाश्रित्यममत्वं वर्ज्जितं मया । शृणु बुद्धिञ्च यां ज्ञात्वा सर्व्वत्र विषयो मम ॥ १७ ॥ नाहमात्मार्थमिच्छामि गन्धान् घ्राणगतानपि । तस्मान्मे निर्ज्जिता भूमिर्वशे तिष्ठति नित्यदा ॥ १८ ॥ नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्त्ततः । आपो मे निर्ज्जितास्तस्माद्वशे तिष्ठन्ति नित्यदा ॥ १९ ॥ नाहमात्मार्थमिच्छामि रूपं ज्योतिश्च चक्षुषः । तस्मान्मे निर्ज्जितं ज्योतिर्वशे तिष्ठति नित्यदा ॥ २० ॥ नाहमात्मार्थमिच्छामि स्पर्शान् त्वचि गताश्च ये । तस्मान्मे निर्ज्जितो वायुर्वशे तिष्ठति नित्यदा ॥ २१ ॥ नाहमात्मार्थमिच्छामि शब्दान् श्रोत्रगतानपि । तस्मान्मे निर्ज्जिताः शब्दा वशे तिष्ठन्ति नित्यदा ॥ २२ ॥ नाहमात्मार्थमिच्छामि मनो नित्यं मनोऽन्तरे । मनो मे निर्ज्जितं तस्मात् वशे तिष्ठति सर्वदा ॥ २३ ॥ देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह । इत्यर्थं सर्व एवेति समारम्भा भवन्ति वै ॥ २४ ॥ ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत् । त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्ममागतम् ॥ २५ ॥ त्वमस्य ब्रह्मलाभस्य दुर्वारस्यानिवर्त्तिनः । सत्त्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्त्तकः ॥ २६ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

ब्राह्मण उवाच । नाहं तथा भीरु चरामि लोके यथा त्वं मां तर्कयसे स्वबुद्ध्या । विप्रोऽस्मि मुक्तोऽस्मि वनेचरोऽस्मि गृहस्थधर्मा व्रतवांस्तथास्मि ॥ १ ॥ नाहमस्मि यथा मां त्वं पश्यसे च शुभाशुभे । मया व्याप्तमिदं सर्वं यत्किञ्चिज्जगतीगतम् ॥ २ ॥ ये केचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह । तेषां मामन्तकं विद्धि दारुणामिव पावकम् ॥ ३ ॥ राज्यं पृथिव्यां सर्वस्यामथ

चापि त्रिपिष्टपे । तया बुद्धिरियं वेत्ति बुद्धिरेव धनं मम ॥ ४ ॥ एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः । गृहेषु वनवासिषु गुरुवासिषु भिक्षुषु ॥ ५ ॥ लिङ्गैर्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते । नानालिङ्गाश्रमस्थानां येषां बुद्धिः शमात्मिका । ते भावमेक-मायान्ति सरितः सागरं यथा ॥ ६ ॥ बुद्ध्यायं गम्यते मार्गः शरीरेण न गम्यते । आद्यन्तवन्ति कर्म्माणि शरीरं कर्म्मबन्ध-नम् ॥ ७ ॥ तस्मात्ते सुभगे नास्ति परलोककृतं भयम् । तद्भाव-भावनिरता ममैवात्मानमेष्यसि ॥ ८ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि ब्राह्मणगीतायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

ब्राह्मण्युवाच । नेदमल्पात्मना शक्यं वेदितुं नाकृतात्मना । बहु चाल्पञ्च संक्षिप्तं विप्लुतञ्च मतं मम ॥ १ ॥ उपायं तं मम ब्रूहि येनैषा लभ्यते मतिः । तन्मन्ये कारणं त्वत्तो यत एषा प्रवर्त्तते ॥२॥

ब्राह्मण उवाच । अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरा-रणिः । तपः श्रुतेऽभिमथ्नीतो ज्ञानाग्निर्ज्जायते ततः ॥ ३ ॥

ब्राह्मण्युवाच । यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति सञ्ज्ञितम् । ग्रहीतुं येन यच्छक्यं लक्षणं तस्य तत् क्व नु ॥ ४ ॥

ब्राह्मण उवाच । अलिङ्गो निर्गुणश्चैव कारणं नास्य लक्ष्यते । उपायमेव वक्ष्यामि येन गृह्येत वा न वा ॥ ५ ॥ सम्यगुपायो दृष्टश्च भ्रमरैरिव लक्ष्यते । कर्म्मबुद्धिरबुद्धित्वात् ज्ञानलिङ्गैरिवा-श्रितम् ॥ ६ ॥ इदं कार्य्यमिदं नेति न मोक्षेषूपदिश्यते । पश्यतः शृण्वतो बुद्धिरात्मनो येषु जायते ॥ ७ ॥ यावन्त इह शक्येरं-स्तावतोऽशान् प्रकल्पयेत् । अव्यक्तान् व्यक्तरूपांश्च शतशोऽथ सहस्रशः ॥ ८ ॥ सर्व्वान्नानार्थयुक्तांश्च सर्व्वान् प्रत्यक्षहेतुकान् । यतः परं न विद्येत ततोऽभ्यासे भविष्यति ॥ ९ ॥

भगवानुवाच । ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसंक्षये ।
क्षेत्रज्ञानेन परतः क्षेत्रज्ञेभ्यः प्रवर्त्तते ॥ १० ॥

अर्जुन उवाच । क्व नु सा ब्राह्मणी कृष्ण क्व चासौ ब्राह्मणर्षभः । याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ॥ ११ ॥

श्रीभगवानुवाच । मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् । क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय ॥ १२ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि ब्राह्मणगीतायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

अर्जुन उवाच । ब्रह्म यत् परमं ज्ञेयं तन्मे व्याख्यातुमर्हसि ।
भवतो हि प्रसादेन सूक्ष्मे मे रमते मतिः ॥ १ ॥

वासुदेव उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ २ ॥ कश्चिद्ब्राह्मणमासीनमाचार्य्यं संशितव्रतम् । शिष्यः पप्रच्छ मेधावी किं स्वित् श्रेयः परन्तप ॥ ३ ॥ भगवन्तं प्रपन्नोऽहं निःश्रेयसपरायणः । याचे त्वां शिरसा विप्र यद्ब्रूयां ब्रूहि तन्मम ॥ ४ ॥ तमेवं वादिनं पार्थ शिष्यं गुरुरुवाच ह । सर्वन्तु ते प्रवक्ष्यामि यत्र वै संशयो द्विज ॥ ५ ॥ इत्युक्तः स कुरुश्रेष्ठ गुरुणा गुरुवत्सलः । प्राञ्जलिः परिपप्रच्छ यत्तत् शृणु महामते ॥ ६ ॥

शिष्य उवाच । कुतश्चाहं कुतश्च त्वं तत् सत्यं ब्रूहि यत् परम् । कुतो जातानि भूतानि स्थावराणि चराणि च ॥ ७ ॥
केन जीवन्ति भूतानि तेषामायुश्च किं परम् । किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः ॥ ८ ॥ के पन्थानः शिवाश्च स्युः किं सुखं किञ्च दुष्कृतम् । एतान्मे भगवन् प्रश्नान् याथातथ्येन सुव्रत ॥ ९ ॥ वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः । त्वदन्यः कश्च न

प्रश्नानेतान् वक्तुमिहार्हति ॥ १० ॥ ब्रूहि धर्म्मविदांश्रेष्ठ परं कौतूहलं मम। मोक्षधर्मार्थकुशलो भवांल्लोकेषु गीयते ॥ ११ ॥ सर्वसंशयसंछेत्ता त्वदन्यो न च विद्यते। संसारभीरवश्चैव मोक्षकामास्तथा वयम् ॥ १२ ॥

वासुदेव उवाच। तस्मै संप्रतिपन्नाय यथावत् परिपृच्छते। शिष्याय गुणयुक्ताय शान्ताय प्रियवर्त्तिने ॥ १३ ॥ छायाभूताय दान्ताय यतये ब्रह्मचारिणे। तान् प्रश्नानब्रवीत् पार्थ मेधावी स धृतव्रतः। गुरुः कुरुकुलश्रेष्ठ सम्यक् सर्वानरिन्दम ॥ १४ ॥

गुरुरुवाच। ब्रह्मणोक्तमिदं सर्वमृषिप्रवरसेवितम्। वेदविद्यां समाश्रित्य तत्त्वभूतार्थभावनम् ॥ १५ ॥ ज्ञानन्त्वेव परं ब्रह्म सन्न्यासं तप उत्तमम्। यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात् ॥ १६ ॥ सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते। यो विद्वान् सहवासञ्च विवासञ्चैव पश्यति ॥ १७॥ तथैवैकत्वनानात्वे स दुःखात् परिमुच्यते। यो न कामयते किञ्चिन्न किञ्चिदभिमन्यते ॥ १८ ॥ इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते। प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ॥१९॥ निर्म्ममो निरहङ्कारो मुच्यते नात्र संशयः। अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ॥ २०॥ महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः। महाभूतविशेषश्च विशेषप्रतिशाखवान् ॥२१॥ सदापर्णः सदापुष्पः सदाशुभफलोदयः। आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः ॥ २२ ॥ एतज्ज्ञात्वा च तत्त्वानि ज्ञानेन परमासिना। छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी ॥२३॥ भूतभव्यभविष्यादिधर्म्मकामार्थनिश्चयम्। सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनम् ॥ २४ ॥ प्रवक्ष्येऽहं महाप्राज्ञ पदमुत्तममद्य ते। बुद्ध्या यदिह संसिद्धा भवन्तीह मनीषिणः ॥ २५ ॥ उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम्। प्रजापतिभरद्वाजो गौतमो भार्गवस्तथा ॥ २६ ॥ वशिष्ठः कश्यपश्चैव विश्वामित्रोऽत्रिरेव च। मार्गान्

सर्वान् परिक्रम्य परिश्रान्ताः स्वकर्म्मभिः ॥ २७ ॥ ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः। ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम् ॥ २८ ॥ तं प्रणम्य महात्मानं सुखासीनं महर्षयः। पप्रच्छुर्विनयोपेता नैःश्रेयसमिदं परम् ॥ २९ ॥ कथं कर्म्म क्रियात् साधुः कथं मुच्येत किल्बिषात्। के नो मार्गाः शिवाश्च स्युः किं सत्यं किञ्च दुष्कृतम् ॥ ३० ॥ कौ चोभौ कर्म्मणां मार्गौ प्राप्नुयुर्दक्षिणोत्तरौ। प्रलयञ्चापवर्गञ्च भूतानां प्रभवाप्ययौ ॥ ३१ ॥ इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः। ततेऽहं संप्रवक्ष्यामि शृणु शिष्य यथागमम् ॥ ३२ ॥

ब्रह्मोवाच। सत्याद्भूतानि जातानि स्थावराणि चराणि च। तपसा तानि जीवन्ति इति तद्वित्त सुव्रताः। स्वां योनिं समतिक्रम्य वर्त्तन्ते स्वेन कर्म्मणा ॥ ३३ ॥ सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणम्। ब्रह्म सत्यं तपः सत्यं सत्यञ्चैव प्रजापतिः ॥ ३४ ॥ सत्याद्भूतानि जातानि सत्यं भूतमयं जगत्। तस्मात् सत्याश्रया विप्रा नित्यं योगपरायणाः ॥ ३५ ॥ अतीतक्रोधसन्तापा नियता धर्म्मसेतवः। अन्योऽन्यनियतान् वैद्यान् धर्म्मसेतुप्रवर्त्तकान् ॥ ३६ ॥ तानहं संप्रवक्ष्यामि शाश्वताँल्लोकभावनान्। चातुर्विद्यं तथा वर्णांश्चातुराश्रमिकान् पृथक् ॥ ३७ ॥ धर्म्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः। पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः ॥ ३८ ॥ नियतं ब्रह्मभावाय गतं पूर्वं मनीषिभिः। गदतस्तं ममाद्येह पन्थानं दुर्विदं परम् ॥ ३९ ॥ निबोधत महाभागा निखिलेन परं पदम्। ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम् ॥ ४० ॥ गार्हस्थ्यन्तु द्वितीयं स्याद्वानप्रस्थमतः परम्। ततः परन्तु विज्ञेयमध्यात्मं परमं पदम् ॥ ४१ ॥ ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः। नोपैति यावदध्यात्मं तावदेतान्न पश्यति ॥ ४२ ॥ तस्योपायं प्रवक्ष्यामि पुरस्तात्तन्निबोधत। फल-

मूलानिलभुजां मुनीनां वसतां वने ॥ ४३ ॥ वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते । सर्व्वेषामेव वर्णानां गार्हस्थ्यं तद्विधीयते ॥ ४४ ॥ श्रद्धालक्षणमित्येवं धर्म्मं धीराः प्रचक्षते । इत्येवं देवयाना वः पन्थानः परिकीर्त्तिताः । सद्भिरध्यासिता धीरैः कर्म्मभिर्धर्म्मसेतवः ॥ ४५ ॥ एतेषां पृथगध्यास्ते यो धर्म्मं संशितव्रतः । कालात् पश्यति भूतानां सदैव प्रभवाप्ययौ ॥ ४६ ॥ अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना । विषयस्थानि सर्व्वाणि वर्त्तमानानि भागशः ॥ ४७ ॥ महानात्मा तथाव्यक्तमहङ्कारस्तथैव च । इन्द्रियाणि दशैकञ्च महाभूतानि पञ्च च ॥ ४८ ॥ विशेषाः पञ्चभूतानामिति सर्गः सनातनः । चतुर्विंशतिरेका च तत्त्वसंख्या प्रकीर्त्तिता ॥ ४९ ॥ तत्त्वानामथ यो वेद सर्व्वेषां प्रभवाप्ययौ । स धीरः सर्व्वभूतेषु न मोहमधिगच्छति ॥ ५० ॥ तत्त्वानि यो वेदयते यथातथं गुणांश्च सर्व्वानखिलाश्च देवताः । विधूतपाप्मा प्रविमुच्य बन्धनं स सर्व्वलोकानमलान् समश्नुते ॥ ५१ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

ब्रह्मोवाच । तदव्यक्तमनुद्रिक्तं सर्व्वव्यापि ध्रुवं स्थिरम् । नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकम् ॥ १ ॥ एकादशपरिक्षेपं मनोव्याकरणात्मकम् । बुद्धिस्वामिकमित्येतत् परमेकादशं भवेत् ॥ २ ॥ त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः । प्रनाड्यस्तिस्र एवैताः प्रवर्त्तन्ते गुणात्मिकाः ॥ ३ ॥ तमो रजस्तथा सत्त्वं गुणानेतान् प्रचक्षते । अन्योऽन्यमिथुनाः सर्व्वे तथान्योऽन्यानुजीविनः ॥ ४ ॥ अन्योऽन्यापाश्रयाश्चापि तथान्योऽन्यानुवर्त्तिनः । अन्योऽन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः ॥ ५ ॥ तमसो मिथुनं

सत्त्वं सत्त्वस्य मिथुनं रजः। रजसश्चापि सत्त्वं स्यात् सत्त्वस्य मिथुनं तमः ॥ ६ ॥ नियम्यते तमो यत्र रजस्तत्र प्रवर्त्तते। नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्त्तते ॥ ७ ॥ नैशात्मकं तमो विद्यात् त्रिगुणं मोहसंज्ञितम्। अधर्म्मलक्षणञ्चैव नियतं पापकर्म्मसु ॥८॥ प्रवृत्त्यात्मकमेवाहू रजः पर्य्यायकारकम्। प्रवृत्तं सर्वभूतेषु दृश्यमुत्पत्तिलक्षणम् ॥ ९ ॥ प्रकाशं सर्वभूतेषु लाघवं श्रद्दधानता। सात्त्विकं रूपमेवन्तु लाघवं साधुसम्मितम् ॥ १० ॥ एतेषां गुणतत्त्वानि वक्ष्यन्ते तत्त्वहेतुभिः। समासव्यासयुक्तानि तत्त्वतस्तान्निबोधत ॥ ११ ॥ संमोहोऽज्ञानमत्यागः कर्म्मणामविनिर्णयः। स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम् ॥ १२ ॥ अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता। निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता ॥ १३ ॥ अकृते कृतमानित्वमज्ञाने ज्ञानमानिता। अमैत्री विकृताभावो ह्यश्रद्धा मूढ़भावना ॥ १४ ॥ अनार्ज्जवमसज्ञत्वं कर्मपापमचेतना। गुरुत्वं सन्नभावत्वमवशित्वमवाग्गतिः ॥ १५ ॥ सर्व एते गुणा वृत्तास्तामसाः संप्रकीर्त्तिताः। ये चान्ये विहिता भावा लोकेऽस्मिन् भावसंज्ञिताः ॥ १६ ॥ तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः। परिवादकथा नित्यं नित्यं ब्राह्मणनिन्दकाः ॥ १७ ॥ अत्यागश्चाभिमानश्च मोहो मन्युस्तथाक्षमा। मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते ॥ १८ ॥ वृथारम्भा हि ये केचित् वृथा दानानि यानि च। वृथा भक्षणमित्येतत् तामसं वृत्तमिष्यते ॥ १९ ॥ अतिवादोऽतितिक्षा च मात्सर्य्यमभिमानिता। अश्रद्दधानता चैव तामसं वृत्तमिष्यते ॥ २० ॥ एवं विधाश्च ये केचित् लोकेऽस्मिन् पापकर्मिणः। मनुष्या भिन्नमर्य्यादास्ते सर्वे तामसाः स्मृताः ॥ २१ ॥ तेषां योनीः प्रवक्ष्यामि नियताः पापकर्मिणाम्। अवाङ्निरयभावाय तिर्य्यङ्निरयगामिनः ॥ २२ ॥ स्थावराणि च भूतानि पशवो वाहनानि च। क्रव्यादा दन्द-

शूकाश्च कृमिकीटविहङ्गमाः ॥ २३ ॥ अण्डजा जन्तवश्चैव सर्व्वे
चापि चतुष्पदाः । उन्मत्ता वधिरा मूका ये चान्ये पापरोगिणः
॥ २४ ॥ मग्नास्तमसि दुर्वृत्ताः स्वकर्म्मकृतलक्षणाः । अवाक्
स्रोतस इत्येते मग्नास्तमसि तामसाः ॥ २५ ॥ तेषामुत्कर्षमुद्रेकं
वक्ष्याम्यहमतः परम् । यथा ते सुकृतांल्लोकांल्लभन्ते पुण्यकर्म्मिणः
॥ २६ ॥ अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्म्मणः । स्वकर्म्म-
निरतानाञ्च ब्राह्मणानां शुभैषिणाम् ॥ २७ ॥ संस्कारेणोर्द्ध-
मायान्ति यतमानाः सलोकताम् । स्वर्गं गच्छन्ति देवानामित्येषा
वैदिकी श्रुतिः ॥ २८ ॥ अन्यथा प्रतिपन्नास्ते विवृद्धाः स्वेषु कर्म्मसु ।
पुनरावृत्तधर्म्माणस्ते भवन्तीह मानुषाः ॥ २९ ॥ पापयोनिं समा-
पन्नाश्चाण्डाला मूकचूचुकाः । वर्णान् पर्य्यायसश्चापि प्राप्नुवन्त्यु-
त्तरोत्तरम् ॥ ३० ॥ शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः ।
स्रोतोमध्ये समागम्य वर्त्तन्ते तामसे गुणे ॥ ३१ ॥ अभिष्वङ्गस्तु
कामेषु महामोह इति स्मृतः । ऋषयो मुनयो देवा मुह्यन्त्यत्र
सुखेप्सवः ॥ ३२ ॥ तमो मोहो महामोहस्तामिस्रः क्रोधसंज्ञितः ।
मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते ॥ ३३ ॥ वर्णतो गुणत-
श्चैव योनितश्चैव तत्त्वतः । सर्व्वमेतत्तमो विप्राः कीर्त्तितं वो यथा-
विधि ॥ ३४ ॥ कोऽन्वेतद्बुध्यते साधु कोऽन्वेतत् साधु पश्यति ।
अतत्त्वे तत्त्वदर्शी यस्तमसस्तत्त्वलक्षणम् ॥ ३५ ॥ तमो गुणा
बहुविधाः प्रकीर्त्तिता यथावदुक्तञ्च तमः परावरम् । नरो हि
यो वेद गुणानिमान् सदा स तामसैः सर्व्वगुणैः प्रमुच्यते ॥ ३६ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

ब्रह्मोवाच । रजो हि वः प्रवक्ष्यामि याथातथ्येन सत्तमाः ।

निबोधत महाभागा गुणवृत्तञ्च राजसम् ॥ १ ॥ सन्तापो रूप-मायासः सुखदुःखे हिमातपौ। ऐश्वर्य्यं विग्रहः सन्धिर्हेतुवादो रतिः क्षमा ॥ २ ॥ बलं शौर्य्यं मदो रोषो व्यायामकलहावपि। ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ॥ ३ ॥ वधबन्धपरिक्लेशाः क्रयो विक्रय एव च। निकृन्त छिन्धि भिन्धीति परमर्मविकर्त्तनम् ॥ ४ ॥ उग्रं दारुणमाक्रोशः परच्छिद्रानुशासनम्। लोकचिन्तानुचिन्ता च मत्सरः परिपालनम् ॥ ५ ॥ मृषावादो मृषादानं विकल्पः परिभाषणम्। निन्दा स्तुतिः प्रशंसा च प्रतापः परिधर्षणम् ॥ ६ ॥ परिचर्य्यानुशुश्रूषा सेवा तृष्णा व्यपाश्रयः। व्यूहो नयः प्रमादश्च परिवादः परिग्रहः ॥ ७ ॥ संस्कारा ये च लोकेषु प्रवर्त्तन्ते पृथक् पृथक्। नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ॥ ८ ॥ सन्तापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये। आशीर्युक्तानि कर्माणि पौर्त्तानि विविधानि च ॥ ९ ॥ स्वाहाकारो नमस्कारः स्वधाकारो वषट्क्रिया। याजनाध्यापने चोभे यजनाध्ययने अपि ॥ १० ॥ दानं प्रतिग्रहश्चैव प्रायश्चित्तानि मङ्गलम्। इदं मे स्यादिदं मे स्यात् स्नेहो गुणसमुद्भवः ॥ ११ ॥ अभिद्रोहस्तथा माया निकृतिर्मान एव च। स्तैन्यं हिंसा जुगुप्सा च परितापः प्रजागरः ॥ १२ ॥ दम्भो दर्पोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनम्। द्यूतञ्च जनवादश्च सम्बन्धाः स्त्रीकृताश्च ये ॥ १३ ॥ नृत्यवादित्रगीतानां प्रसङ्गा ये च केचन। सर्व एते गुणा विप्रा राजसाः संप्रकीर्त्तिताः ॥ १४ ॥ भूतभव्यभविष्याणां भावानां भुवि भावनाः। त्रिवर्गनिरता नित्यं धर्मोऽर्थः काम इत्यपि ॥१५॥ कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः। अर्वाक् स्रोतस इत्येते मनुष्या रजसावृताः ॥ १६ ॥ अस्मिंल्लोके प्रमोदन्ते जायमानाः पुनः पुनः। प्रेत्यभाविकमीहन्ते ऐहलौकिकमेव च। ददति प्रतिगृह्णन्ति तर्पयन्त्यथ जुह्वति ॥ १७ ॥ रजोगुणा वो बहुधानु-

कीर्त्तिता यथावदुक्तं गुणवृत्तमेव च। नरोऽपि यो वेदगुणा-
निमान् सदा स राजसैः सर्वगुणैर्विमुच्यते ॥ १८ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

ब्रह्मोवाच। अतःपरं प्रवक्ष्यामि तृतीयं गुणमुत्तमम्। सर्व-
भूतहितं लोके सतां धर्म्ममनिन्दितम् ॥ १ ॥ आनन्दः प्रीतिरुद्रेकः
प्राकाम्यं सुखमेव च। अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता
॥ २ ॥ क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवम्। अक्रोध-
श्चानसूया च शौचं दाक्ष्यं पराक्रमः ॥ ३ ॥ मुधाज्ञानं मुधावृत्तं
मुधासेवा मुधाश्रमः। एवं यो युक्तधर्म्मः स्यात् सोऽमुत्रात्यन्त-
मश्नुते ॥ ४ ॥ निर्म्ममो निरहङ्कारो निराशीः सर्वतः समः।
अकामभूत इत्येव सतां धर्म्मः सनातनः ॥ ५ ॥ विस्रम्भो ह्री-
स्तितिक्षा च त्यागः शौचमतन्द्रिता। आनृशंस्यमसंमोहो दया
भूतेष्वपैशुनम् ॥ ६ ॥ हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तिता।
शान्तिकर्म्मणि शुद्धिश्च शुभाशुभविमोचनम् ॥ ७ ॥ उपेक्षा ब्रह्म-
चर्य्यञ्च परित्यागश्च सर्वशः। निर्ममत्वमनाशीस्त्वमपरिक्षतधर्मता
॥ ८ ॥ मुधादानं मुधायज्ञो मुधाधीतं मुधाव्रतम्। मुधाप्रति-
ग्रहश्चैव मुधाधर्मो मुधातपः ॥ ९ ॥ एवं वृत्तास्तु ये केचिल्लोके-
ऽस्मिन् सत्त्वसंश्रयाः। ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधु-
दर्शिनः ॥ १० ॥ हित्वा सर्वाणि पापानि निःशोका ह्यथ मानवाः।
दिवं प्राप्य तु ते धीराः कुर्वते वै ततस्तनूः ॥ ११ ॥ ईशित्वञ्च वशि-
त्वञ्च लघुत्वं मनसश्च ते। विकुर्वते महात्मानो देवास्त्रिदिवगा
इव ॥ १२ ॥ ऊर्द्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः। विकु-
र्वन्तः प्रकृत्या वै दिवं प्राप्तास्ततस्ततः। यद्यदिच्छन्ति तत् सर्वं

लभन्ते विभजन्ति च ॥ १३ ॥ इत्येतत् सात्त्विकं वृत्तं कथितं वो द्विजर्षभाः। एतद्विज्ञाय विधिवल्लभते यद्यदिच्छति ॥ १४ ॥ प्रकीर्त्तिताः सत्त्वगुणा विशेषतो यथावदुक्तं गुणवृत्तमेव च। नरस्तु यो वेद गुणानिमान् सदा गुणान् स भुङ्क्ते न गुणैः स युज्यते ॥१५॥

इति आश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

ब्रह्मोवाच। नैव शक्या गुणा वक्तुं पृथक्त्वेनैव सर्वशः। अविच्छिन्नानि दृश्यन्ते रजः सत्त्वं तमस्तथा ॥ १ ॥ अन्योऽन्यमथ रज्यन्ते ह्यन्योऽन्यं चाथ जीविनः। अन्योऽन्यमाश्रयाः सर्वे तथान्योऽन्यानुवर्त्तिन. ॥ २ ॥ यावत् सत्त्वं रजस्तावद्वर्त्तते नात्र संशयः। यावत् तमश्च सत्त्वञ्च रजस्तावदिहोच्यते ॥ ३ ॥ संहत्य कुर्वते यात्रां सहिताः सङ्घचारिणः। सङ्घातवृत्तयो ह्येते वर्त्तन्ते हेतुहेतुभिः ॥ ४ ॥ उद्रेकव्यतिरिक्तानां तेषामन्योऽन्यवर्त्तिनाम्। वच्यते तद्यथा न्यूनं व्यतिरिक्तञ्च सर्वशः ॥ ५ ॥ व्यतिरिक्तं तमो यत्र तिर्य्यग्भावगतं भवेत्। अल्पं तत्र रजो ज्ञेयं सत्त्वमल्पतरं तथा ॥ ६ ॥ उद्रिक्तञ्च रजो यत्र मध्यस्रोतोगतं भवेत्। अल्पं तत्र तमो ज्ञेयं सत्त्वमल्पतरं तथा ॥ ७ ॥ उद्रिक्तञ्च यदा सत्त्वमूर्द्ध्वस्रोतोगतं भवेत्। अल्पं तत्र तमो ज्ञेयं रजश्चाल्पतरं तथा ॥ ८ ॥ सत्त्वं वैकारिकी योनिरिन्द्रियाणां प्रकाशिका। न हि सत्त्वात् परो धर्मः कश्चिदन्यो विधीयते ॥ ९ ॥ ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः ॥ १० ॥ तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्। इत्येवं त्रिषु वर्णेषु विवर्त्तन्ते गुणास्त्रयः ॥ ११ ॥ दूरादपि हि दृश्यन्ते सहिताः सङ्घचारिणः। तमः सत्त्वं रजश्चैव पृथक्त्वे-

नानुग्रुश्रुम ॥ १२ ॥ दृष्ट्वा त्वादित्यमुद्यन्तं कुचराणां भयं भवेत् । अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः ॥ १३ ॥ आदित्यः सत्त्वमुद्रिक्तं कुचरास्तु तथा तमः । परितापोऽध्वगानाञ्च रजसो गुण उच्यते ॥ १४ ॥ प्राकाश्यं सत्त्वमादित्यः सन्तापो रजसो गुणः । उपप्लवस्तु विज्ञेयस्तामसस्तस्य पर्व्वसु ॥ १५ ॥ एवं ज्योतिःषु सर्व्वेषु निवर्त्तन्ते गुणास्त्रयः । पर्य्यायेण च वर्त्तन्ते तत्र तत्र तथा तथा ॥ १६ ॥ स्थावरेषु तु भावेषु तिर्य्यग्भावगतं तमः । राजसास्तु विवर्त्तन्ते स्नेहभावस्तु सात्त्विकः ॥ १७ ॥ अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते । मासार्द्धमासवर्षाणि ऋतवः सन्धयस्तथ ॥ १८ ॥ त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्त्तते । त्रिधा लोकास्त्रिधा देवास्त्रिधा विद्यास्त्रिधा गतिः ॥ १९ ॥ भूतं भव्यं भविष्यञ्च धर्म्मोऽर्थः काम एव च । प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः ॥ २० ॥ पर्य्यायेण प्रवर्त्तन्ते तत्र तत्र तथा तथा । यत्किञ्चिदिह लोकेऽस्मिन् सर्व्वमेते त्रयो गुणाः ॥२१॥ त्रयो गुणाः प्रवर्त्तन्ते ह्यव्यक्ता नित्यमेव तु । सत्त्वं रजस्तमश्चैव गुणसर्गः सनातनः ॥ २२ ॥ तमोऽव्यक्तं शिवो धाम रजो योनिः सनातनः । प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ॥ २३ ॥ अनुद्रिक्तमनूनं वाप्यकम्पमचलं ध्रुवम् । सदसच्चैव तत्सर्व्वमव्यक्तं त्रिगुणं स्मृतम् ॥ २४ ॥ ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ॥ २५ ॥ अव्यक्तनामानि गुणांश्च तत्त्वतो यो वेद सर्व्वाणि गतीश्च केवलाः । विमुक्तदेहः प्रविभागतत्त्ववित् स मुच्यते सर्व्वगुणैर्निरामयः ॥ २६ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

ब्रह्मोवाच। अव्यक्तात् पूर्वमुत्पन्नो महानात्मा महामतिः। आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते ॥ १ ॥ महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्य्यवान्। बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः ॥ २ ॥ पर्य्यायवाचकैः शब्दैर्महानात्मा विभाव्यते। तं जानन् ब्राह्मणो विद्वान् प्रमोहं नाधिगच्छति ॥ ३ ॥ सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः। सर्वतः श्रुतिमांल्लोके सर्वं व्याप्य स तिष्ठति ॥ ४ ॥ महाप्रभावः पुरुषः सर्वस्य हृदि निश्रितः। अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ ५ ॥ तत्र बुद्धिविदो लोके सद्भावनिरताश्च ये। ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः ॥ ६ ॥ ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः। प्रसन्नमनसो धीरा निर्म्ममा निरहङ्कृताः ॥ ७ ॥ विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत। आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् ॥ ८ ॥ अहङ्कारात् प्रसूतानि महाभूतानि पञ्च वै। पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ९ ॥ तेषु भूतानि युज्यन्ते महाभूतेषु पञ्चसु। ते शब्दस्पर्शरूपेषु रसगन्धक्रियासु च ॥ १० ॥ महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते। सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ॥ ११ ॥ स धीरः सर्वलोकेषु न मोहमधिगच्छति। विष्णुरेवादिसर्गेषु स्वयम्भुर्भवति प्रभुः ॥ १२ ॥ एवं हि यो वेद गुहाशयं प्रभुं परं पुराणं पुरुषं विश्वरूपम्। हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥ १३ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे चत्वारिंशोऽध्यायः ॥ ४० ॥

---

ब्रह्मोवाच। य उत्पन्नो महान् पूर्वमहङ्कारः स उच्यते। अहमित्येव संभूतो द्वितीयः सर्ग उच्यते ॥ १ ॥ अहङ्कारश्च

भूतादिर्वैकारिक इति स्मृतः । तैजसश्चेतना धातुः प्रजासर्गः प्रजायते ॥ २ ॥ देवानां प्रभवो देवो मनसश्च त्रिलोककृत् । अहमित्येव तत्सर्वमभिमन्ता स उच्यते ॥ ३ ॥ अध्यात्मज्ञानतृप्तानां मुनीनां भावितात्मनाम् । स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः ॥ ४ ॥ अहङ्कारेणाहरतो गुणानिमान् भूतादिरेवं सृजति स भूतकृत् । वैकारिकः सर्वमिदं विचेष्टते स्वतेजसा रञ्जयते जगत्तथा ॥ ५ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

ब्रह्मोवाच । अहङ्कारात् प्रसूतानि महाभूतानि पञ्च वै । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १ ॥ तेषु भूतानि मुह्यन्ति महाभूतेषु पञ्चसु । शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च ॥ २ ॥ महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते । सर्वप्राणभृतां धीरा महदभ्युद्यते भयम् ॥ ३ ॥ यद्यस्माज्जायते भूतं तत्र तत् प्रविलीयते । लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ ४ ॥ ततः प्रलीने सर्वस्मिन् भूते स्थावरजङ्गमे । स्मृतिमन्तस्तदा धीरा न लीयन्ते कदाचन ॥ ५ ॥ शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः । क्रियाकरणनित्याः स्युरनित्या मोहसंज्ञिताः ॥ ६ ॥ लोभप्रजनसम्भूता निर्विशेषा ह्यकिञ्चनाः । मांसशोणितसङ्घाता अन्योऽन्यस्योपजीविनः ॥ ७ ॥ वहिरात्मान इत्येते दीनाः कृपणवृत्तयः । प्राणापानावुदानश्च समानो व्यान एव च ॥ ८ ॥ अन्तरात्मनि चाप्येते नियताः पञ्च वायवः । वाङ्मनो बुद्धिभिः सार्द्धमिदमष्टात्मकं जगत् ॥ ९ ॥ त्वक्घ्राणश्रोत्रचक्षूंषि रसना वाक् च संयता । विशुद्धञ्च मनो यस्य बुद्धिश्चाव्यभिचारिणी ॥ १० ॥

अष्टौ यस्याग्नयो ह्येते न दहन्ते मनः सदा । स तद्ब्रह्म शुभं याति तस्माद्भूयो न विद्यते ॥ ११ ॥ एकादश च यान्याहुरिन्द्रियाणि विशेषतः । अहङ्कारात् प्रसूतानि तानि वक्ष्याम्यहं द्विजाः ॥ १२ ॥ श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी । पादौ पायुरुपस्थश्च हस्तौ वाग्दशमी भवेत् ॥ १३ ॥ इन्द्रियग्राम इत्येष मन एकादशं भवेत् । एतं ग्रामं जयेत् पूर्वं ततो ब्रह्म प्रकाशते ॥ १४ ॥ बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च । श्रोत्रादीन्यपि पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः ॥ १५॥ अविशेषाणि चान्यानि कर्मयुक्तानि यानि तु । उभयत्र मनो ज्ञेयं बुद्धिस्तु द्वादशी भवेत् ॥ १६॥ इत्युक्तानीन्द्रियाण्येतान्येकादश यथाक्रमम् । मन्यन्ते कृतमित्येवं विदित्वा तानि पण्डिताः ॥ १७ ॥ अतः परं प्रवक्ष्यामि सर्वं विविधमिन्द्रियम् । आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ॥ १८ ॥ अधिभूतं तथा शब्दो दिशस्तत्राधिदैवतम् । द्वितीयं मारुतो भूतं त्वगध्यात्मञ्च विश्रुतम् ॥ १९ ॥ स्प्रष्टव्यमधिभूतञ्च विद्युत्तत्राधिदैवतम् । तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते ॥ २० ॥ अधिभूतं ततो रूपं सूर्य्यस्तत्राधिदैवतम् । चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममुच्यते ॥ २१ ॥ अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतम् । पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममुच्यते ॥२२॥ अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम् । एषु पञ्चसु भूतेषु त्रिषु यश्च विधिः स्मृतः ॥ २३ ॥ अतः परं प्रवक्ष्यामि सर्वं विविधमिन्द्रियम् । पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ॥ २४ ॥ अधिभूतन्तु गन्तव्यं विष्णुस्तत्राधिदैवतम् । अवाग्गतिरपानश्च पायुरध्यात्ममुच्यते ॥ २५ ॥ अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् । प्रजनः सर्वभूतानामुपस्थोऽध्यात्ममुच्यते ॥ २६ ॥ अधिभूतं तथा शुक्रं दैवतञ्च प्रजापतिः । हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ॥ २७ ॥ अधिभूतञ्च कर्माणि शक्रस्तत्राधिदैवतम् ।

वैश्वदेवी ततः पूर्वा वागध्यात्ममिहोच्यते ॥ २८ ॥ वक्तव्यमधि-
भूतञ्च वह्निस्तत्राधिदैवतम्। अध्यात्मं मन इत्याहुः पञ्चभूतात्म-
वारकम् ॥ २९ ॥ अधिभूतञ्च सङ्कल्पश्चन्द्रमाश्चाधिदैवतम्। अह-
ङ्कारस्तथाध्यात्मं सर्वसंसारकारकम् ॥ ३० ॥ अभिमानोऽधिभूतञ्च
रुद्रस्तत्राधिदैवतम् । अध्यात्मं बुद्धिरित्याहुः षड़िन्द्रियविचा-
रिणी ॥ ३१ ॥ अधिभूतन्तु मन्तव्यं ब्रह्मा तत्राधिदैवतम्। त्रीणि
स्थानानि भूतानां चतुर्थं नोपपद्यते ॥ ३२ ॥ स्थलमापस्तथाकाशं
जन्म चापि चतुर्विधम्। अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च
॥ ३३ ॥ चतुर्द्धा जन्म इत्येतत् भूतग्रामस्य लक्ष्यते। अपरा-
ण्यथ भूतानि खेचराणि तथैव च ॥ ३४ ॥ अण्डजानि विजा-
नीयात् सर्वांश्चैव सरीसृपान्। स्वेदजाः क्रमयः प्रोक्ता जन्तवश्च
यथाक्रमम् ॥ ३५ ॥ जन्म द्वितीयमित्येतत् जघन्यतरमुच्यते ।
भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्य्ययात् ॥ ३६ ॥ उद्भि-
ज्जानि च तान्याहुर्भूतानि द्विजसत्तमाः । द्विपादबहुपादानि
तिर्य्यग्गतिमतीनि च ॥ ३७ ॥ जरायुजानि भूतानि विकृतान्यपि
सत्तमाः । द्विविधा खलु विज्ञेया ब्रह्मयोनिः सनातनी ॥ ३८ ॥
तपः कर्म च यत् पुण्यमित्येष विदुषां नयः । विविधं कर्म विज्ञेय-
मिज्यादानञ्च तन्मखे ॥ ३९ ॥ जातस्याध्ययनं पुण्यमिति वृद्धानु-
शासनम्। एतद्यो वेत्ति विधिवद्युक्तः स स्याद्द्विजर्षभाः ॥ ४० ॥
विमुक्तः सर्वपापेभ्य इति चैव निबोधत। यथावदध्यात्मविधिरेष
वः कीर्त्तितो मया ॥ ४१ ॥ ज्ञानमस्य हि धर्मज्ञाः प्राप्तं ज्ञान-
वतामिह । इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च । सर्वा-
ण्येतानि सन्धाय मनसा संप्रधारयेत् ॥ ४२ ॥ क्षीणे मनसि सर्व-
स्मिन्न जन्मसुखमिष्यते । ज्ञानसम्पन्नसत्त्वानां तत् सुखं विदुषां
मतम् ॥ ४३ ॥ अतःपरं प्रवक्ष्यामि सूक्ष्मभावकरीं गिरम् ।
निवृत्तिं सर्वभूतेषु मृदुना दारुणेन च ॥ ४४ ॥ गुणागुणमना-

सङ्गमेकचर्य्यमनन्तरम्। एतद्ब्राह्मणतो वृत्तमाहुरेकपदं सुखम् ॥ ४५ ॥ विद्वान् कूर्म्म इवाङ्गानि कामान् संहृत्य सर्वतः। विरजाः सर्वतो मुक्तो यो नरः स सुखी सदा ॥ ४५ ॥ कामानात्मनि संयम्य क्षीणतृष्णः समाहितः। सर्वभूतसुहृन्मित्रो ब्रह्मभूयाय कल्पते ॥ ४७ ॥ इन्द्रियाणां निरोधेन सर्वेषां विषयैषिणाम्। मुनेर्जनपदत्यागादध्यात्माग्निः समिध्यते ॥ ४८ ॥ यथाग्निरिन्धनैरिद्धो महाज्ज्योतिः प्रकाशते। तथेन्द्रियनिरोधेन महानात्मा प्रकाशते ॥ ४९ ॥ यदा पश्यति भूतानि प्रसन्नात्मात्मनो हृदि। स्वयं ज्योतिस्तदा सूक्ष्मात् सूक्ष्मं प्राप्नोत्यनुत्तमम् ॥ ५० ॥ अग्नीरूपं पयः स्रोतो वायुः स्पर्शनमेव च। मही पङ्कधरं घोरमाकाशं श्रवणं तथा ॥ ५१ ॥ रोगशोकसमाविष्टं पञ्चस्रोतः समावृतम्। पञ्चभूतसमायुक्तं नवद्वारं द्विदैवतम् ॥ ५२ ॥ रजस्वलमथादृश्यं त्रिगुणञ्च त्रिधातुकम्। संसर्गाभिरतं मूढं शरीरमिति धारणा ॥ ५३ ॥ दुश्चरं सर्वलोकेऽस्मिन् सत्त्वं प्रतिसमाश्रितम्। एतदेव हि लोकेऽस्मिन् कालचक्रं प्रवर्त्तते ॥ ५४ ॥ एतन्महार्णवं घोरमगाधं मोहसंज्ञितम्। विक्षिपेत् संक्षिपेच्चैव बोधयेत् सामरं जगत् ॥ ५५ ॥ कामं क्रोधं भयं लोभमभिद्रोहमथानृतम्। इन्द्रियाणां निरोधेन सतस्त्यजति दुस्त्यजान् ॥ ५६ ॥ यस्यैते निर्जिता लोके त्रिगुणाः पञ्चधातवः। व्योम्नि तस्य परं स्थानमानन्त्यमथ लभ्यते ॥ ५७ ॥ पञ्चेन्द्रियमहाकूलां मनोवेगमहोदकाम्। नदीं मोहह्रदां तीर्त्वा कामक्रोधावुभौ जयेत् ॥ ५८ ॥ स सर्वदोषनिर्मुक्तस्ततः पश्यति तत्परम्। मनो मनसि सन्धाय पश्यन्नात्मानमात्मनि ॥ ५९ ॥ सर्ववित् सर्वभूतेषु विन्दत्यात्मानमात्मनि। एकधा बहुधा चैव विकुर्वाणस्ततस्ततः ॥ ६० ॥ ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा। स वै विष्णुश्च मित्रश्च वरुणोऽग्निः प्रजापतिः ॥ ६१ ॥ स हि धाता विधाता च स

प्रभुः सर्व्वतो मुखः । हृदयं सर्व्वभूतानां महानात्मा प्रकाशते ॥६२॥
तं विप्रसङ्घाश्च सुरासुराश्च यक्षाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्व्वे महर्षयश्चैव सदा स्तुवन्ति ॥ ६३ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

ब्रह्मोवाच । मनुष्याणान्तु राजन्यः क्षत्रियो मध्यमोगुणः ।
कुञ्जरो वाहनानाञ्च सिंहश्चारण्यवासिनाम् ॥ १ ॥ अविः पशूनां
सर्व्वेषामहिस्तु बिलवासिनाम् । गवां गोवृषभश्चैव स्त्रीणां पुरुष
एव च ॥ २ ॥ न्यग्रोधो जम्बुवृक्षश्च पिप्पलः शाल्मलिस्तथा ।
शिंशपामेषशृङ्गश्च तथा कीचकवेणवः । एते द्रुमाणां राजानो
लोकेऽस्मिन्नात्र संशयः ॥ ३ ॥ हिमवान् पारिपात्रश्च सह्यो विन्ध्य-
स्त्रिकूटवान् । श्वेतो नीलश्च भासश्च कोष्ठवांश्चैव पर्व्वतः ॥ ४ ॥
गुरुस्कन्धो महेन्द्रश्च माल्यवान् पर्व्वतस्तथा । एते पर्व्वतराजानो
गुणानां महतां तथा ॥ ५ ॥ सूर्य्यो ग्रहाणामधिपो नक्षत्राणाञ्च
चन्द्रमाः । यमः पितॄणामधिपः सरितामथ सागरः ॥ ६ ॥
अम्भसां वरुणो राजा मरुतामिन्द्र उच्यते । अर्कोऽधिपतिरुष्णानां
ज्योतिषामिन्दुरुच्यते ॥ ७ ॥ अग्निर्भूतपतिर्नित्यं ब्राह्मणानां वृह-
स्पतिः । ओषधीनां पतिः सोमो विष्णुर्ब्बलवतां वरः ॥ ८ ॥
त्वष्टाधिराजो रूपाणां पशूनामीश्वरः शिवः । दीक्षितानां तथा
यज्ञो देवानामधिपस्तथा ॥ ९ ॥ दिशामुदीची विप्राणां सोमो
राजा प्रतापवान् । कुवेरः सर्व्वरत्नानां देवतानां पुरन्दरः ॥ १० ॥
एष भूताधिपः सर्गः प्रजानाञ्च प्रजापतिः । सर्व्वेषामेव भूताना-
महं ब्रह्ममयो महान् ॥ ११ ॥ भूतं परतरं मत्तो विष्णोर्व्वापि न
विद्यते । राजाधिराजः सर्व्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरत्वं

विजानीध्वं कर्त्तारमकृतं हरिम् ॥ १२ ॥ नरकिन्नरयक्षाणां गन्धर्वोरगरक्षसाम्। देवदानवनागानां सर्वेषामीश्वरो हि सः ॥ १३ ॥ भगदेवानुयातानां सर्वासां वामलोचना। माहेश्वरी महादेवी प्रोच्यते पार्वती हि सा ॥ १४ ॥ उमां देवीं विजानीध्वं नारीणामुत्तमां शुभाम्। रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ॥ १५ ॥ धर्म्मकामाश्च राजानो ब्राह्मणा धर्म्मसेतवः। तस्माद्राजा द्विजातीनां प्रयतेत्तस्य रक्षणे ॥ १६ ॥ राज्ञां हि विषये येषामवसीदन्ति साधवः। हीनास्ते स्वगुणैः सर्वैः प्रेत्य चोन्मार्गगामिनः ॥ १७ ॥ राज्ञां हि विषये येषां साधवः परिरक्षिताः। तेऽस्मिंल्लोके प्रमोदन्ते सुखं प्रेत्य च भुञ्जते ॥ १८ ॥ प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः। अत ऊर्द्ध्वं प्रवक्ष्यामि नियतं धर्म्मलक्षणम् ॥ १९ ॥ अहिंसा परमो धर्मो हिंसा चाधर्म्मलक्षणा। प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः ॥ २० ॥ शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणम्। ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ॥ २१ ॥ धारिणी सर्वभूतानां पृथिवी गन्धलक्षणा। स्वरव्यञ्जनसंस्कारा भारती शब्दलक्षणा ॥ २२॥ मनसो लक्षणं चिन्ता चिन्तोक्ता बुद्धिलक्षणा। मनसा चिन्तितानर्थान् बुद्ध्या चेह व्यवस्यति ॥ २३ ॥ बुद्धिर्हि व्यवसायेन लक्षते नात्र संशयः। लक्षणं मनसो ध्यानमव्यक्तं साधुलक्षणम् ॥ २४ ॥ प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम्। तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ २५ ॥ संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम्। अतीतो द्वन्द्वमभ्येति तमोमृत्युजरातिगः ॥ २६ ॥ धर्म्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया। गुणानां ग्रहणं सम्यक् वक्ष्याम्यहमतः परम् ॥ २७ ॥ पार्थिवो यस्तु गन्धो वै घ्राणेन स हि गृह्यते। घ्राणस्थश्च तथा वायुर्गन्धज्ञाने विधीयते ॥ २८ ॥ अपां धातूरसो नित्यं जिह्वया स तु गृह्यते। जिह्वास्थश्च

तथा सोमो रसज्ञाने विधीयते ॥ २९ ॥ ज्योतिषश्च गुणो रूपं चक्षुषा तच्च गृह्यते । चक्षुस्थश्च सदादित्यो रूपज्ञाने विधीयते ॥ ३० ॥ वायव्यस्तु सदा स्पर्शस्त्वचा प्रज्ञायते च सः । त्वक्स्थश्चैव सदा वायुः स्पर्शने स विधीयते ॥ ३१ ॥ आकाशस्य गुणो ह्येष श्रोत्रेण च स गृह्यते । श्रोत्रस्थाश्च दिशः सर्वाः शब्दज्ञाने प्रकीर्त्तिताः ॥ ३२ ॥ मनसश्च गुणश्चिन्ता प्रज्ञया सा तु गृह्यते । हृदिस्थश्चेतनाधातुर्मनो ज्ञाने विधीयते ॥ ३३ ॥ बुद्धिरध्यवसायेन ज्ञानेन च महांस्तथा । निश्चित्य ग्रहणं व्यक्तमव्यक्तं नात्र संशयः ॥ ३४ ॥ अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः । तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥ ३५ ॥ अव्यक्तं क्षेत्रलिङ्गस्थं गुणानां प्रभवाप्ययम् । सदा पश्याम्यहं लीनं विजानामि शृणोमि च ॥ ३६ ॥ पुरुषस्तद्विजानीते तस्मात् क्षेत्रज्ञ उच्यते । गुणवृत्तं तथा वृत्तं क्षेत्रज्ञः परिपश्यति ॥ ३७ ॥ आदिमध्यावसानान्तं सृज्यमानमचेतनम् । न गुणा विदुरात्मानं सृज्यमानाः पुनः पुनः ॥ ३८ ॥ न च तं विन्दते कश्चित् क्षेत्रज्ञस्त्वेष विन्दति । गुणानां गुणभूतानां यत् परं परमं महत् ॥ ३९ ॥ तस्माद्गुणांश्च सत्त्वञ्च परित्यज्येह धर्मवित् । क्षीणदोषो गुणातीतः क्षेत्रज्ञं प्रविशत्यथ ॥ ४० ॥ निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च । अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः ॥ ४१ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

ब्रह्मोवाच । यदादिमध्यपर्य्यन्तं ग्रहणोपायमेव च । नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः ॥ १ ॥ अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः । श्रवणादीनि ऋक्षाणि ऋतवः शिशि-

हादयः ॥ २ ॥ भूमिरादिस्तु गन्धानां रसानामाप एव च।
रूपाणां ज्योतिरादित्यः स्पर्शानां वायुरुच्यते ॥ ३ ॥ शब्दस्यादि-
स्तथाकाशमेष भूतकृतो गुणः। अतः परं प्रवक्ष्यामि भूताना-
मादिमुत्तमम् ॥ ४ ॥ आदित्यो ज्योतिषामादिरग्निर्भूतादिरुच्यते।
सावित्री सर्वविद्यानां देवतानां प्रजापतिः ॥ ५ ॥ ओंकारः सर्व-
वेदानां वचसां प्राण एव च। यदस्मिन्नियतं लोके सर्वं सावित्रि-
रुच्यते ॥ ६ ॥ गायत्री छन्दसामादिः पशूनामज आदितः।
गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः ॥ ७ ॥ श्येनः पतत्रिणा-
मादिर्यज्ञानां हुतमुत्तमम्। सरीसृपाणां सर्वेषां ज्येष्ठः सर्पो
द्विजोत्तमाः ॥ ८ ॥ कृतमादिर्युगानाञ्च सर्वेषां नात्र संशयः।
हिरण्यं सर्वरत्नानामोषधीनां यवास्तथा ॥ ९ ॥ सर्वेषां भक्ष्य-
भोज्यानामन्नं परमसुच्यते। द्रवाणाञ्चैव सर्वेषां पेयानामाप
उत्तमाः ॥ १० ॥ स्थावराणान्तु भूतानां सर्वेषामविशेषतः। ब्रह्म-
क्षेत्रं सदा पुण्यं प्लक्षः प्रथमतः स्मृतः ॥ ११ ॥ अहं प्रजापतीनाञ्च
सर्वेषां नात्र संशयः। मम विष्णुरचिन्त्यात्मा स्वयम्भूरिति स
स्मृतः ॥ १२ ॥ पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः। दिशाञ्च
प्रदिशाञ्चोर्द्ध्वं दिक् पूर्वा प्रथमा तथा ॥ १३ ॥ तथा त्रिपथगा
गङ्गा नदीनामग्रजा स्मृता। तथा सरोदपानानां सर्वेषां साग-
रोऽग्रजः ॥ १४ ॥ देवदानवभूतानां पिशाचोरगरक्षसाम्। नर-
किन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥ १५ ॥ आदिर्विश्वस्य जगतो
विष्णुर्ब्रह्ममयो महान्। भूतं परतरं यस्मात्त्रैलोक्ये नेह विद्यते
॥ १६ ॥ आश्रमाणाञ्च सर्वेषां गार्हस्थ्यं नात्र संशयः। लोकाना-
मादिरव्यक्तं सर्वस्यान्तस्तदेव च ॥ १७ ॥ अहान्यस्तमयान्तानि
उदयान्ता च शर्वरी। सुखस्यान्तं सदा दुःखं दुःखस्यान्तं सदा
सुखम् ॥ १८ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगाश्च वियोगान्ता मरणान्तञ्च जीवितम् ॥ १९ ॥ सर्वं कृतं

विनाशान्तं जातस्य मरणं ध्रुवम् । अशाश्वतं हि लोकेऽस्मिन् सदा स्थावरजङ्गमम् ॥ २० ॥ इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये । सर्व्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥ २१ ॥ तस्माज्ज्ञानेन शुद्धेन प्रशान्तात्मा जितेन्द्रियः । निर्म्ममो निरहङ्कारो मुच्यते सर्व्वपाप्मभिः ॥ २२ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

ब्रह्मोवाच । बुद्धिसारं मनस्तम्भमिन्द्रियग्रामबन्धनम् । महाभूतपरिस्कन्धं निवेशपरिवेशनम् ॥ १ ॥ जराशोकसमाविष्टं व्याधिव्यसनसम्भवम् । देशकालविचारीदं श्रमव्यायामनिस्वनम् ॥ २ ॥ अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलम् । सुखदुःखान्तरं क्लेशं क्षुत्पिपासावकीलकम् ॥ ३ ॥ छायातपविलेखञ्च निमेषोन्मेषविह्वलम् । घोरमोहजलाकीर्णं वर्त्तमानमचेतनम् ॥ ४ ॥ मासार्द्धमासगणितं विषमं लोकसञ्चरम् । तमोनियमपङ्कञ्च रजोवेगप्रवर्त्तकम् ॥ ५ ॥ महाहङ्कारदीप्तञ्च गुणसञ्जातवर्त्तनम् । अरतिग्रहणानीकं शोकसङ्घातवर्त्तनम् ॥ ६ ॥ क्रियाकारणसंयुक्तं रागविस्तारमायतम् । लोभेप्सापरिविक्षोभं विचित्राज्ञानसम्भवम् ॥७॥ भयमोह परीवारं भूतसम्मोहकारकम् । आनन्दप्रीतिचारञ्च कामक्रोधपरिग्रहम् ॥ ८ ॥ महदादिविशेषान्तमसक्तप्रभवाव्ययम् । मनोजवं मनःकान्तं कालचक्रं प्रवर्त्तते ॥ ९ ॥ एतद्द्वन्द्वसमायुक्तं कालचक्रमचेतनम् । विसृजेत् सङ्क्षिपेच्चापि बोधयेत् सामरं जगत् ॥ १० ॥ कालचक्रप्रवृत्तिञ्च निवृत्तिञ्चैव तत्त्वतः । यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ॥ ११ ॥ विमुक्तः सर्व्वसंस्कारैः सर्व्वद्वन्द्वविवर्ज्जितः । विमुक्तः सर्व्वपापेभ्यः प्राप्नोति परमां गतिम्

॥ १२ ॥ गृहस्थो ब्रह्मचारी च वाणप्रस्थोऽथ भिक्षुकः । चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः ॥ १३ ॥ यः कश्चिदिह लोकेऽस्मिन्नगमः परिकीर्त्तितः । तस्यानुगमनं श्रेयः कीर्त्तिरेषा सनातनी ॥ १४ ॥ संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः । जातौ गुणविशिष्टायां समावर्त्तेत तत्त्ववित् ॥ १५ ॥ स्वदारनिरतो नित्यं शिष्टाचारो जितेन्द्रियः । पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह ॥ १६ ॥ देवतातिथिशिष्टाशी निरतो देवकर्मसु । इज्या-प्रदानयुक्तश्च यथाशक्ति यथासुखम् ॥ १७ ॥ न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ १८ ॥ नित्यं यज्ञोपवीती स्यात् शुक्लवासाः शुचिव्रतः । नियतो यमदानाभ्यां सदा शिष्टैश्च संविशेत् ॥ १९ ॥ जितशिश्नोदरो मैत्रः शिष्टाचारसमन्वितः । वैणवीं धारयेद्यष्टिं सोदकञ्च कम-ण्डलुम् ॥ २० ॥ अधीत्यध्यापनं कुर्यात्तथा यजनयाजने । दानं प्रतिग्रहं वापि षड्गुणां वृत्तिमाचरेत् ॥ २१ ॥ त्रीणि कर्माणि जानीत ब्राह्मणानान्तु जीविकाम् । याजनाध्यापने चोभे शुद्धा-च्चापि प्रतिग्रहः ॥ २२ ॥ अथ शेषाणि चान्यानि त्रीणि कर्माणि यानि तु । दानमध्ययनं यज्ञो धर्म्मयुक्तानि तानि तु ॥ २३ ॥ तेष्वप्रमादं कुर्वीत त्रिषु कर्म्मसु धर्म्मवित् । दान्तो मैत्रः क्षमा-युक्तः सर्वभूतसमो मुनिः ॥ २४ ॥ सर्वमेतद्यथाशक्ति विप्रो निर्वर्त्त-यन् शुचिः । एवं युक्तो जयेत् स्वर्गं गृहस्थः शंसितव्रतः ॥ २५ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

ब्रह्मोवाच । एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि । अधीत-वान् यथाशक्ति तथैव ब्रह्मचर्य्यवान् ॥ १ ॥ स्वधर्म्मनिरतो विद्वान्

सर्व्वेन्द्रिययतो मुनिः। गुरोः प्रियहिते युक्तः सत्यधर्म्मपरः शुचिः ॥२॥ गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन्। हविष्यभैक्ष्य-भुक् चापि स्थानासनविहारवान्॥३॥ द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः। धारयीत सदा दण्डं वैल्वं पालाशमेव वा॥४॥ क्षौमं कार्पासिकञ्चापि मृगाजिनमथापि वा। सर्वं कषायरक्तं वा वासो वापि द्विजस्य ह॥५॥ मेखला च भवेन्मौञ्जी जटी नित्योदकस्तथा। यज्ञोपवीती स्वाध्यायी अलुब्धो नियतव्रतः॥६॥ पूताभिश्च तथैवाद्भिः सदा दैवततर्पणम्। भावेन नियतः कुर्वन् ब्रह्मचारी प्रशस्यते॥७॥ एवंयुक्तो जयेत् स्वर्गमूर्द्धरेताः समाहितः। न संसरति जातीषु परमं स्थानमाश्रितः॥८॥ संस्कृतः सर्वसंस्कारैस्तथैव ब्रह्मचर्य्यवान्। ग्रामान्निष्क्रम्य चारण्ये मुनिः प्रव्रजितो वसेत्॥९॥ चर्म्मवल्कलसंवासी सायं प्रातरुपस्पृशेत्। अरण्यगोचरो नित्यं न ग्रामं प्रविशेत् पुनः॥१०॥ अर्च्चयन्नतिथीन् काले दद्याच्चापि प्रतिश्रयम्। फलपत्रावरैर्मूलैः श्यामाकेन च वर्त्तयन्॥११॥ प्रवृत्तमुदकं वायुं सर्वं वानेयमाश्रयेत्। प्राश्नीयादानुपूर्व्वेण यथादीक्षमतन्द्रितः॥१२॥ स मूलफलभिक्षाभिरर्च्चेदतिथिमागतम्। यद्भक्ष्यं स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः॥१३॥ देवतातिथिपूर्व्वञ्च सदा प्राश्नीत वाग्यतः। अस्पर्द्धितमनाश्चैव लब्धाशीर्देवताश्रयः॥१४॥ दान्तो मैत्रः क्षमायुक्तः केशान् श्मश्रु च धारयन्। जुह्वत्स्वाध्यायशीलश्च सत्यधर्म्मपरायणः॥१५॥ शुचिर्देहः सदा दक्षो वननित्यः समाहितः। एवंयुक्तो जयेत् स्वर्गं वानप्रस्थो जितेन्द्रियः॥१६॥ गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ वा पुनः। य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत्॥१७॥ अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्। सर्वभूतसुखो मैत्रः सर्व्वेन्द्रिययतो मुनिः॥१८॥ अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया। कृत्वा वह्निं

चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ॥ १९ ॥ वृत्ते शरावसम्पाते भैक्ष्यं लिप्सेत मोक्षवित्। लाभेन च न हृष्येत नालाभे विमना भवेत् ॥ २० ॥ यात्रार्थी कालमाकाङ्क्षन् चरेद्भैक्ष्यं समाहितः। लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ॥ २१ ॥ अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः। भुक्तान्यन्नानि तिक्तानि कषायकटुकानि च ॥ २२ ॥ नास्वादयति भुञ्जानो रसांश्च मधुरांस्तथा। यात्रामात्रञ्च भुञ्जीत केवलं प्राणधारणम् ॥ २३ ॥ असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित्। न चान्यमन्नं लिप्सेत भिक्षमाणः कथञ्चन ॥ २४ ॥ न सन्निकाशयेद्धर्मं विमुक्ते चारजाश्चरेत्। शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ॥ २५ ॥ प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम्। ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ॥ २६ ॥ अध्वा सूर्य्येन निर्द्दिष्टः कीटवच्च चरेन्महीम्। दयार्थं चैव भूतानां समीक्ष्य पृथिवीञ्चरेत् ॥ २७ ॥ सञ्चयांश्च न कुर्वीत स्नेहवासञ्च वर्ज्जयेत्। पूताभिरद्भिर्नित्यं वै कार्य्यं कुर्वीत मोक्षवित् ॥ २८ ॥ उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा। अहिंसा ब्रह्मचर्य्यञ्च सत्यमार्ज्जवमेव च ॥२९ ॥ अक्रोधश्चानसूया च दमो नित्यमपैशुनम्। अष्टस्वेतेषु युक्तः स्याद्व्रतेषु नियतेन्द्रियः ॥ ३० ॥ अपापमशठं वृत्तमजिह्मं नित्यमाचरेत्। जोषयीत सदा भोज्यं ग्राममागतमस्पृहः ॥ ३१ ॥ यात्रामात्रञ्च भुञ्जीत केवलं प्राणयात्रिकम्। धर्म्मलब्धमथाश्नीयान्न काममनुवर्त्तयेत् ॥ ३२ ॥ ग्रासादाच्छादनादन्यन्न गृह्णीयात् कथञ्चन। यावदाहारयेत्तावत् प्रतिगृह्णीत नाधिकम् ॥ ३३ ॥ परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन। दैन्यभावाच्च भूतानां संविभज्य सदा बुधः ॥ ३४ ॥ नाददीत परस्वानि न गृह्णीयादयाचितः। न किञ्चिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः ॥ ३५ ॥ मृदमापस्तथान्नानि पत्रपुष्पफलानि च। असंवृतानि गृह्णीयात् प्रवृत्तानि च कार्य्यवान् ॥ ३६ ॥ न

शिल्पजीविकां जीवेद्धिरण्यं नोत कामयेत् । न द्वेष्टा नोपदेष्टा च भवेत निरुपस्कृतः ॥ ३७ ॥ श्रद्धापूतानि भुञ्जीत निमित्तानि च वर्ज्जयेत् । सुधावृत्तिरसक्तश्च सर्वभूतैरसंविदम् ॥ ३८ ॥ आशीर्युक्तानि सर्वाणि हिंसायुक्तानि यानि च । लोक संग्रहधर्म्मञ्च नैव कुर्य्यान्नकारयेत् ॥ ३९ ॥ सर्वभावानतिक्रम्य लघुमात्रः परिव्रजेत् । समः सर्व्वेषु भूतेषु स्थावरेषु चरेषु च ॥ ४० ॥ परं नोद्विजयेत् कञ्चिन्न च कस्यचिदुद्विजेत् । विश्वास्यः सर्वभूतानामग्र्यो मोक्षविदुच्यते ॥ ४१ ॥ अनागतञ्च न ध्यायेन्नातीतमनुचिन्तयेत् । वर्त्तमानमुपेक्षेत कालाकाङ्क्षी समाहितः ॥ ४२ ॥ न चक्षुषा न मनसा न वाचा दूषयेत् क्वचित् । न प्रत्यक्षं परोक्षं वा किञ्चिद्दुष्टं समाचरेत् ॥ ४३ ॥ इन्द्रियाण्युपसंहृत्य कूर्म्मोऽङ्गानीव सर्वशः । क्षीणेन्द्रियमनो बुद्धिर्निरीहः सर्वतत्त्ववित् ॥ ४४ ॥ निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च । निर्म्ममो निरहङ्कारो निर्योगक्षेम आत्मवान् ॥ ४५ ॥ निराशीर्निर्गुणः शान्तो निरासक्तो निराश्रयः । आत्मसङ्गी च तत्त्वज्ञो मुच्यते नात्र संशयः ॥ ४६ ॥ अपाणिपादपृष्ठन्तदशिरस्कमनूदरम् । प्रहीणगुणकर्म्माणं केवलं विमलं स्थिरम् ॥ ४७ ॥ अगन्धमरसस्पर्शमरूपाशब्दमेव च । अनुगम्यमनासक्तममांसमपि चैव तत् ॥ ४८ ॥ निश्चिन्तमव्ययं दिव्यं गृहस्थमपि सर्वदा । सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ॥ ४९ ॥ न तत्र क्रमते बुद्धिर्नेन्द्रियाणि न देवताः । वेदा यज्ञाश्च लोकाश्च न तपो न व्रतानि च ॥ ५० ॥ यत्र ज्ञानवतां प्राप्तिरलिङ्गग्रहणा स्मृता । तस्मादलिङ्गधर्म्मज्ञो धर्म्मतत्त्वमुपाचरेत् ॥ ५१ ॥ गूढधर्माश्रितो विद्वान् विज्ञानचरितञ्चरेत् । अमूढो मूढरूपेण चरेद्धर्म्ममदूषयन् ॥ ५२ ॥ यथैनमवमन्येरन् परे सततमेव हि । तथावृत्तश्चरेद्धर्म्मं सतां धर्म्ममकुत्सयन् ॥ ५३ ॥ य एवं वृत्तसम्पन्नः स मुनिः श्रेष्ठ उच्यते ।

इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च च ॥ ५४ ॥ मनोबुद्धि-रहङ्कारमव्यक्तं पुरुषं तथा । एतत् सर्वं प्रसंख्याय यथावत्तत्त्व-निश्चयात् ॥ ५५ ॥ ततः स्वर्गमवाप्नोति विमुक्तः सर्वबन्धनैः । एतावदन्तवेलायां परिसङ्ख्याय तत्त्ववित् ॥ ५६ ॥ ध्यायेदेकान्त-मास्थाय मुच्यतेऽथ निराश्रयः । निर्मुक्तः सर्वसङ्गेभ्यो वायुराका-शगो यथा । क्षीणकोशो निरातङ्कस्तथेदं प्राप्नुयात् परम् ॥५७॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

ब्रह्मोवाच । सन्न्यासं तप इत्याहुर्वृद्धा निश्चितवादिनः । ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः ॥ १ ॥ अतिदूरात्मकं ब्रह्म वेदविद्याव्यपाश्रयम् । निर्द्वन्द्वं निर्गुणं नित्यमचिन्त्यगुण-मुत्तमम् ॥ २ ॥ ज्ञानेन तपसा चैव धीराः पश्यन्ति तत् परम् । निर्णिक्तमनसः पूता व्युत्क्रान्तरजसोऽमलाः ॥ ३ ॥ तपसा क्षेम-मध्वानं गच्छन्ति परमेश्वर । सन्न्यासनिरतानित्यं ये च ब्रह्म-विदो जनाः ॥ ४ ॥ तपः प्रदीप इत्याहुराचारो धर्म्मसाधकः । ज्ञानं वै परमं विद्यात् सन्न्यासं तप उत्तमम् ॥ ५ ॥ यस्तु वेद निराबाधं ज्ञानं तत्त्वविनिश्चयात् । सर्वभूतस्थमात्मानं ससर्वगति-रिष्यते ॥ ६ ॥ यो विद्वान् सहवासञ्च विवासञ्चैव पश्यति । तथै-वैकत्वनानात्वे स दुःखात् प्रतिमुच्यते ॥ ७ ॥ यो न कामयते किञ्चिन्नकिञ्चिदवमन्यते । इहलोकस्थ एवैष ब्रह्मभूताय कल्पते ॥ ८ ॥ विधानगुणतत्त्वज्ञः सर्वभूतप्रधानवित् । निर्म्ममो निरह-ङ्कारो मुच्यते नात्र संशयः ॥ ९ ॥ निर्द्वन्द्वो निर्नमस्कारो निः-स्वधाकार एव च । निर्गुणं नित्यमद्वन्द्वं प्रशमेनैव गच्छति ॥ १०॥ हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् । उभे सत्यानृते हित्वा

मुच्यते नात्र संशयः ॥ ११ ॥ अव्यक्तयोनिप्रभवो बुद्धिस्कन्धमयो महान् । महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ॥ १२ ॥ महाभूतविशालश्च विशेषप्रतिशाखिनः । सदापत्रः सदापुष्पः शुभाशुभफलोदयः ॥ १३ ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एवं छित्त्वा च भित्त्वा च तत्त्वज्ञानासिना बुधः ॥ १४ ॥ हित्वा सङ्गमयान् पाशान्मृत्युजन्मजरोदयान् । निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥ १५ ॥ द्वाविमौ पक्षिणौ नित्यौ सखायौ चाप्यचेतनौ । एताभ्यान्तु परो योऽन्यश्चेतनावान् स उच्यते ॥१६॥ अचेतनः सत्त्वसङ्घातविमुक्तः सत्त्वात् परं चेतयतेऽन्तरात्मा । स क्षेत्रवित् सर्वसङ्घातबुद्धिर्गुणातिगो मुच्यते सर्वपापैः ॥ १७ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

ब्रह्मोवाच । केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्मवनं महत् । केचित्तु ब्रह्म चाव्यक्तं केचित् परमनामयम् ॥ १ ॥ मन्यन्ते सर्वमप्येतदव्यक्तप्रभवाव्ययम् । उच्छ्वासमात्रमपि चेत् योऽन्तकाले समोभवेत् ॥ २ ॥ आत्मानमुपसङ्गम्य सोऽमृतत्वाय कल्पते । निमेषमात्रमपि चेत् संयम्यात्मानमात्मनि ॥ ३ ॥ गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम् । प्राणायामैरथ प्राणान् संयम्य स पुनः पुनः ॥ ४ ॥ दशद्वादशभिर्वापि चतुर्विंशात् परं ततः । एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति ॥ ५ ॥ अव्यक्तात् सत्त्वमुद्रिक्तममृतत्वाय कल्पते । सत्त्वात् परतरं नान्यत् प्रशंसन्तीह तद्विदः ॥ ६ ॥ अनुमानाद्विजानामः पुरुषं सत्त्वसंश्रयम् । न शक्यमन्यथा गन्तुं पुरुषं द्विजसत्तमाः ॥ ७ ॥ क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवम् । ज्ञानं त्यागोऽथ सन्न्यासः सात्त्विकं वृत्तमिष्यते ॥८॥

एतेनैवानुमानेन मन्यन्ते वै मनीषिणः। सत्त्वञ्च पुरुषश्चैव तत्र नास्ति विचारणा ॥ ९ ॥ आहुरेके च विद्वांसो ये ज्ञानपरिनिष्ठिताः। क्षेत्रज्ञसत्त्वयोरैक्यमित्येतन्नोपपद्यते ॥ १० ॥ पृथग्-भूतं ततः सत्त्वमित्येतदविचारितम्। पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः ॥ ११ ॥ तथैवैकत्वनानात्वमिष्यते विदुषां नयः। मशकोडुम्बरे चैकं पृथक्त्वमपि दृश्यते ॥ १२ ॥ मत्स्यो यथान्यः स्यादप्सु संप्रयोगस्तथा तयोः। सम्बन्धस्तोयबिन्दूनां पर्णे कोकनदस्य च ॥ १३ ॥

गुरुरुवाच। इत्युक्तवन्तस्ते विप्रास्तदा लोकपितामहम्। पुनः संशयमापन्नाः पप्रच्छुर्मुनिसत्तमाः ॥ १४ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

ऋषय ऊचुः। को वा स्विदिह धर्माणामनुष्ठेयतमो मतः। व्याहतामिव पश्यामि धर्मस्य विविधां गतिम् ॥ १ ॥ ऊर्द्धं देहाद्वदन्त्येके नैतदस्तीति चापरे। केचित् संशयितं सर्वं निःसंशयमथापरे ॥ २ ॥ अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे। एकरूपं द्विधेत्येके व्यामिश्रमिति चापरे ॥ ३ ॥ मन्यन्ते ब्राह्मणा एव ब्रह्मज्ञास्तत्त्ववादिनः। एकमेके पृथक् चान्ये बहुत्वमपि चापरे ॥ ४ ॥ देशकालावुभौ केचित् नैतदस्तीति चापरे। जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः ॥ ५ ॥ अस्नानं केचिदिच्छन्ति स्नानमप्यपरे जनाः। मन्यन्ते ब्राह्मणा देवा ब्रह्मज्ञास्तत्त्वदर्शिनः ॥ ६ ॥ आहारं केचिदिच्छन्ति केचिच्चानशने रताः। कर्म केचित् प्रशंसन्ति प्रशान्तिञ्चापरे जनाः ॥ ७ ॥ देशकालावुभौ केचिन्नैतदस्तीति चापरे। केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान्

पृथग्विधान् ॥ ८ ॥ धनानि केचिदिच्छन्ति निर्धनत्वमथापरे ।
उपास्यसाधनन्त्वेके नैतदस्तीति चापरे ॥ ९ ॥ अहिंसानिरता-
श्चान्ये केचिद्धिंसापरायणाः । पुण्येन यशसा चान्ये नैतदस्तीति
चापरे ॥ १० ॥ सद्भावनिरताश्चान्ये केचित् संशयिते स्थिताः ।
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे जनाः ॥ ११ ॥ यज्ञमित्यपरे
विप्राः प्रदानमिति चापरे । तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे
जनाः ॥ १२ ॥ ज्ञानं सन्न्यासमित्येके स्वभावं भूतचिन्तकाः ।
सर्व्वमेके प्रशंसन्ति न सर्व्वमिति चापरे ॥ १३ ॥ एवं व्युत्थापिते
धर्म्मे बहुधा विप्रबोधिते । निश्चयं नाधिगच्छामः संमूढ़ाः सुर-
सत्तम ॥ १४ ॥ इदं श्रेय इदं श्रेय इत्येवं व्युत्थितो जनः । यो
हि यस्मिन् रतो धर्म्मे स तं पूजयते सदा ॥ १५ ॥ तेन नोऽविहिता
प्रज्ञा मनश्च बहुलीकृतम् । एतदाख्यातमिच्छामः श्रेयः किमिति
सत्तम ॥ १६ ॥ अतः परन्तु यद्गुह्यं तद्भवान् वक्तुमर्हति ।
सत्त्वक्षेत्रज्ञयोश्चापि सम्बन्धः केन हेतुना ॥ १७ ॥ एवमुक्तः स
तैर्विप्रैर्भगवान् लोकभावनः । तेभ्यः शशंस धर्म्मात्मा याथातथ्येन
बुद्धिमान् ॥ १८ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

ब्रह्मोवाच । हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
गुरुणा शिष्यमासाद्य यदुक्तं तन्निबोधत ॥ १ ॥ समस्तमिह तत्
श्रुत्वा सम्यगेवावधार्य्यताम् । अहिंसा सर्व्वभूतानामेतत् कृत्यतमं
मतम् ॥ २ ॥ एतत् पदमनुद्विग्नं वरिष्ठं धर्म्मलक्षणम् । ज्ञानं
निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः ॥ ३ ॥ तस्माज्ज्ञानेन शुद्धेन
मुच्यते सर्व्वकिल्बिषैः । हिंसापराश्च ये केचित् ये च नास्तिक-

वृत्तयः ॥ ४ ॥ लोभमोहसमायुक्तास्ते वै निरयगामिणः। आशी-र्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ॥ ५ ॥ तेऽस्मिल्लोके प्रमोदन्ते जायमानाः पुनः पुनः। कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः ॥ ६ ॥ अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः। अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा ॥ ७ ॥ संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः। विषयो विषयित्वञ्च सम्बन्धोऽयमिहोच्यते ॥ ८ ॥ विषयी पुरुषो नित्यं सत्त्वञ्च विषयः स्मृतः। व्याख्यातं पूर्वकल्पेन मशकोडुम्बरं यथा ॥ ९ ॥ भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम्। यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते ॥ १० ॥ नित्यं द्वन्द्वसमायुक्तः सत्त्वमाहुर्मनीषिणः। निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ॥ ११ ॥ समः संज्ञानुगश्चैव स सर्वत्र व्यवस्थितः। उपभुङ्क्ते सदा सत्त्वमपः पुष्करपर्णवत् ॥ १२ ॥ सर्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते। जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ॥ १३ ॥ एवमेवाप्यसंयुक्तः पुरुषः स्यान्नसंशयः। द्रव्यमात्रमभूत् सत्त्वं पुरुषस्येति निश्चयः ॥ १४ ॥ यथा द्रव्यञ्च कर्त्ता च संयोगोऽप्यनयोस्तथा। यथा प्रदीपमादाय कश्चित्तमसि गच्छति ॥ १५ ॥ तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः। यावद्द्रव्यगुणास्तावत् प्रदीपः सम्प्रकाशते ॥ १६ ॥ क्षीणे द्रव्ये गुणे ज्योतिरन्तर्द्धानाय गच्छति। व्यक्तः सत्त्वगुणस्त्वेवं पुरुषोऽव्यक्त इष्यते ॥ १७ ॥ एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः। सहस्रेणापि दुर्मेधा न बुद्धिमधिगच्छति ॥ १८ ॥ चतुर्थेनाप्यथांशेन बुद्धिमान् सुखमेधते। एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ॥ १९ ॥ उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते। यथाध्वानमपाथेयः प्रसन्नो मनुजः क्वचित् ॥ २० ॥ क्लेशेन याति महता विनश्येदन्तरापि च। तथा कर्म्मसु विज्ञेयं फलं भवति वा न वा ॥ २१ ॥ पुरुषस्यात्मनि श्रेयः शुभा-

शुभनिदर्शनम् । यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ॥ २२॥ अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्ज्जितः । तमेव च यथाध्वानं रथेनेहाशुगामिना ॥ २३ ॥ गच्छत्यश्वप्रयुक्तेन तथा बुद्धिमतां गतिः । ऊर्द्ध्वं पर्वतमारुह्य नान्ववेक्षेत भूतलम् ॥ २४ ॥ रथेन रथिनं पश्यन् क्लिश्यमानमचेतनम् । यावद्रथपथस्तावद्रथेन स तु गच्छति ॥ २५ ॥ क्षीणे रथपथे विद्वान् रथमुत्सृज्य गच्छति । एवं गच्छति मेधावी तत्त्वयोगविधानवित् ॥ २६ ॥ परिज्ञाय गुणज्ञश्च तूत्तरादुत्तरोत्तरम् । यथार्णवं महाघोरमप्लवः संप्रगाहते ॥ २७ ॥ बाहुभ्यामेव सम्मोहाद्वधं वाञ्छत्यसंशयम् । नावा चापि तथा प्राज्ञो विभावज्ञः सरित्त्रया ॥ २८ ॥ अश्रान्तः सलिलं गच्छेत् शीघ्रं सन्तरते ह्रदम् । तीर्णो गच्छेत् परं पारं नावमुत्सृज्य निर्म्ममः ॥ २९ ॥ व्याख्यातं पूर्वकल्पेन यथा रथपदातिनोः । स्नेहात् सम्मोहमापन्नो नावि दाशो यथा तथा ॥ ३०॥ ममत्वेनाभिभूतः संस्तत्रैव परिवर्त्तते । नावं न शक्यमारुह्य स्थले विपरिवर्त्तितुम् ॥ ३१ ॥ तथैव रथमारुह्य नाप्सु चर्य्या विधीयते । एवं कर्म्मकृतं चित्रं विषयस्थं पृथक् पृथक् ॥ ३२ ॥ यथा कर्म्म कृतं लोके तथैतानुपपद्यते । यन्नैव गन्धि नो रस्यं न रूपस्पर्शशब्दवत् ॥ ३३ ॥ मन्यन्ते मुनयो बुद्ध्या तत्प्रधानं प्रचक्षते । तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ॥ ३४ ॥ महत् प्रधानभूतस्य गुणोऽहङ्कार एव च । अहङ्कारात्तु सम्भूतो महाभूतकृतो गुणः ॥ ३५ ॥ पृथक्त्वेन हि भूतानां विषया वै गुणाः स्मृताः । वीजधर्म्मं तथा व्यक्तं प्रसवात्मकमेव च ॥ ३६ ॥ वीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् । वीजधर्म्मस्त्वहङ्कारः प्रसवश्च पुनः पुनः ॥ ३७ ॥ वीजप्रसवधर्माणि महाभूतानि पञ्च वै । वीजधर्मिण इत्याहुः प्रसवञ्च प्रकुर्वते ॥ ३८ ॥ विशेषाः पञ्चभूतानां तेषां चित्तं विशेषणम् । तत्रैकगुणमाकाशं द्विगुणो

वायुरुच्यते ॥ ३९ ॥ त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ।
पृथ्वीः पञ्चगुणा ज्ञेया चरस्थावरसङ्कुला ॥ ४० ॥ सर्वभूतकरी
देवी शुभाशुभनिदर्शनी । शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च
पञ्चमः ॥ ४१ ॥ एते पञ्चगुणा भूमेर्विज्ञेया द्विजसत्तमाः । पार्थि-
वश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ॥ ४२ ॥ तस्य गन्धस्य
वक्ष्यामि विस्तरेण बहून् गुणान् । इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः
कटुस्तथा ॥ ४३ ॥ निर्हारी संहतः स्निग्धो रुक्षो विशद एव
च । एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ॥ ४४ ॥ शब्दः
स्पर्शस्तथा रूपं द्रवश्चापां गुणाः स्मृताः । रसज्ञानन्तु वक्ष्यामि
रसस्तु बहुधा स्मृतः ॥ ४५ ॥ मधुरोऽम्लः कटुस्तिक्तः कषायो
लवणस्तथा । एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ॥४६॥
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते । ज्योतिषश्च गुणो
रूपं रूपञ्च बहुधा स्मृतम् ॥ ४७ ॥ शुक्लं कृष्णं तथा रक्तं नीलं
पीतारुणन्तथा । ह्रस्वं दीर्घं कृशं स्थूलं चतुरस्रन्तु वृत्तवत् ॥४८॥
एवं द्वादशविस्तारं तेजसो रूपमुच्यते । विज्ञेयं ब्राह्मणैर्वृद्धै-
र्धर्म्मज्ञैः सत्यवादिभिः ॥ ४९ ॥ शब्दस्पर्शौ च विज्ञेयौ द्विगुणो
वायुरुच्यते । वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥५०॥
रुक्षः शीतस्तथैवोष्णः स्निग्धो विशद एव च । कठिनश्चिक्कणः
श्लक्ष्णः पिच्छलो दारुणो मृदुः ॥ ५१ ॥ एवं द्वादश विस्तारो
वायव्यो गुण एव च । विधिवद्ब्राह्मणैः सिद्धैर्धर्म्मज्ञैस्तत्त्व-
दर्शिभिः ॥ ५२ ॥ तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः । तस्य
शब्दस्य वक्ष्यामि विस्तरेण बहून् गुणान् ॥ ५३ ॥ षड्जर्षभः
सगान्धारो मध्यमः पञ्चमस्तथा । अतः परन्तु विज्ञेयो निषादो
धैवतस्तथा । इष्टश्चानिष्टशब्दश्च संहतः प्रविभागवान् ॥ ५४ ॥
एवं दशविधो ज्ञेयः शब्द आकाशसम्भवः । आकाशमुत्तमं भूत-
महङ्कारस्ततः परः ॥ ५५ ॥ अहङ्कारात् परा बुद्धिर्बुद्धेरात्मा

तथा परः । तस्मात्तु परमव्यक्तमव्यक्तात् पुरुषः परः ॥ ५५ ॥
परापरज्ञो भूतानां विधिज्ञः सर्व्वकर्म्मणाम् । सर्व्वभूतात्मभूतात्मा
गच्छत्यात्मानमव्ययम् ॥ ५६ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

ब्रह्मोवाच । भूतानामथ पञ्चानां यथैषामीश्वरो मनः ।
नियमे च विसर्गे च भूतात्मा मन एव च ॥ १ ॥ अधिष्ठाता मनो
नित्यं भूतानां महतां तथा । बुद्धिरैश्वर्य्यमाचष्टे क्षेत्रज्ञश्च स
उच्यते ॥ २ ॥ इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः ।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा ॥ ३ ॥ महदश्व-
समायुक्तं बुद्धिसंयमनं रथम् । समारुह्य स भूतात्मा समन्तात्
परिधावति ॥ ४ ॥ इन्द्रियग्रामसंयुक्तो मनः सारथिरेव च ।
बुद्धिसंयमनो नित्यं महान् ब्रह्ममयो रथः ॥ ५ ॥ एवं यो वेत्ति
विद्वान् वै सदा ब्रह्ममयं रथम् । स धीरः सर्व्वभूतेषु न मोह-
मधिगच्छति ॥ ६ ॥ अव्यक्तादिविशेषान्तं सत्रस्थावरजङ्गमम् ।
सूर्य्यचन्द्रप्रभालोकं ग्रहनक्षत्रमण्डितम् ॥ ७ ॥ नदीपर्व्वतजालैश्च
सर्व्वतः परिभूषितम् । विविधाभिस्तथा चाद्भिः सततं समलङ्कृतम्
॥ ८ ॥ आजीवं सर्व्वभूतानां सर्व्वप्राणभृतां गतिः । एतद्ब्रह्मपरं
नित्यं तस्मिंश्चरति क्षेत्रवित् ॥ ९ ॥ लोकेऽस्मिन् यानि सत्त्वानि
त्रसानि स्थावराणि च । तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता
गुणाः ॥ १० ॥ गुणेभ्यः पञ्चभूतानि एष भूतसमुच्छ्रयः । देवा
मनुष्या गन्धर्व्वाः पिशाचासुरराक्षसाः ॥ ११ ॥ सर्व्वे स्वभावतः सृष्टा
न क्रियाभ्यो न कारणात् । एते विश्वसृजो विप्रा जायन्तीह
पुनः पुनः ॥ १२ ॥ तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु । प्रली-

यन्ति यथाकालमूर्म्मयः सागरे यथा ॥ १३ ॥ विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतस्तु सर्व्वशः। भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत् परां गतिम् ॥ १४ ॥ प्रजापतिरिदं सर्व्वं मनसैवासृजत् प्रभुः। तथैव देवानृषयस्तपसा प्रतिपेदिरे ॥ १५ ॥ तपसश्चानुपूर्व्वेण फलमूलाशिनस्तथा। त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः ॥ १६ ॥ औषधान्यगदादीनि नानाविद्याश्च सर्व्वशः। तपसैव प्रसिध्यन्ति तपोमूलं हि साधनम् ॥ १७ ॥ यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम्। तत् सर्व्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १८ ॥ सुरापो ब्रह्महा स्तेयी भ्रूणहा गुरुतल्पगः। तपसैव सुतप्तेन मुच्यते किल्बिषात्ततः ॥ १९ ॥ मनुष्याः पितरो देवाः पशवो मृगपक्षिणः। यानि चान्यानि भूतानि चराणि स्थावराणि च ॥ २० ॥ तपः परायणा नित्यं सिध्यन्ति तपसा सदा। तथैव तपसा देवा महामाया दिवं गताः ॥ २१ ॥ आशीर्युक्तानि कर्म्माणि कुर्व्वते ये त्वतन्द्रिताः। अहङ्कारसमायुक्तास्ते सकाशे प्रजापतेः ॥ २२ ॥ ध्यानयोगेन शुद्धेन निर्म्ममा निरहङ्कृताः। आप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् ॥ २३ ॥ ध्यानयोगमुपागम्य प्रसन्नमतयः सदा। सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः ॥ २४ ॥ ध्यानयोगादुपागम्य निर्म्ममा निरहङ्कृताः। अव्यक्तं प्रविशन्तीह महतां लोकमुत्तमम् ॥ २४ ॥ अव्यक्तादेव सम्भूतः स्वप्नसंज्ञां गतः पुनः। तमोरजोभ्यां निर्मुक्तः सत्त्वमास्थाय केवलम् ॥ २६ ॥ विमुक्तः सर्व्वपापेभ्यः सर्व्वं सृजति निष्कलम्। क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् ॥ २७ ॥ चित्तं चित्तादुपागम्य मुनिरासीत संयतः। यच्चित्तं तन्मनो वश्यं गुह्यमेतत् सनातनम् ॥ २८ ॥ अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम्। निबोधत तथाहीदं गुणैर्लक्षणमित्युत ॥ २९ ॥ द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्। ममेति च भवेन्मृत्युर्न

ममेति च शाश्वतम् ॥ ३० ॥ कर्म केचित् प्रशंसन्ति मन्दबुद्धिरता नराः । ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥ ३१ ॥ कर्मणा जायते जन्तुर्मूर्त्तिमान् षोड़शात्मकः । पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनाम् ॥ ३२ ॥ तस्मात् कर्मसु निस्नेहा ये केचित् पारदर्शिनः । विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ॥ ३३॥ य एवममृतं नित्यमग्राह्यं शश्वदक्षरम् । वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ॥ ३४॥ अपूर्व्वमकृतं नित्यं य एनमपराजितम् । य एवं विन्देदात्मानमग्राह्यममृताशनम् । अग्राह्यो मृतो भवति स एभिः कारणैर्ध्रुवः ॥ ३५ ॥ आयोज्य सर्व्वसंस्कारान् संयम्यात्मानमात्मनि । स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ॥३६॥ प्रसादे चैव सत्त्वस्य प्रसादं समवाप्नुयात् । लक्षणं हि प्रसादस्य यथा स्यात् स्वप्नदर्शनम् ॥ ३७ ॥ गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः । प्रवृत्तयश्च याः सर्व्वाः पश्यन्ति परिणामजाः ॥३८॥ एषा गतिर्विरक्तानामेष धर्म्मः सनातनः । एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम् ॥ ३९ ॥ समेन सर्व्वभूतेषु निस्पृहेण निराशिषा । शक्या गतिरियं गन्तुं सर्व्वत्र समदर्शिना ॥ ४० ॥ एतद्वः सर्व्वमाख्यातं मया विप्रर्षिसत्तमाः । एवमाचरतः क्षिप्रं ततः सिद्धिमवाप्स्यथ ॥ ४१ ॥

गुरुरुवाच । इत्युक्तास्ते तु मुनयो गुरुणा ब्रह्मणा तथा । कृतवन्तो महात्मानस्ततो लोकमवाप्नुवन् ॥ ४२ ॥ त्वमप्येतन्महाभाग मयोक्तं ब्रह्मणो वचः । सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ॥ ४३ ॥

वासुदेव उवाच । इत्युक्तः स तदा शिष्यो गुरुणा धर्म्ममुत्तमम् । चकार सर्व्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥ ४४ ॥ कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह । तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ॥ ४४ ॥

अर्जुन उवाच । को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्द्दन । श्रोतव्यञ्चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ॥ ४६ ॥

वासुदेव उवाच । अहं गुरुर्महाबाहो मनः शिष्यञ्च विद्धि मे । त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनञ्जय ॥ ४७ ॥ मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह । अध्यात्ममेतत् श्रुत्वा त्वं सम्यगाचर सुव्रत ॥ ४८ ॥ ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्नरिकर्षण । सर्व्वपापविनिर्मुक्तो मोक्षं प्राप्स्यसि केवलम् ॥ ४९ ॥ पूर्व्वमप्येतदेवोक्तं युद्धकाल उपस्थिते । मया तव महाबाहो तस्मादत्र मनः कुरु ॥ ५० ॥ मया तु भरतश्रेष्ठ चिरदृष्टः पिता प्रभुः । तमहं द्रष्टुमिच्छामि सम्मते तव फाल्गुन ॥ ५१ ॥

वैशम्पायन उवाच । इत्युक्तवचनं कृष्णं प्रत्युवाच धनञ्जयः । गच्छावो नगरात् कृष्ण गजसाह्वयमद्य वै ॥ ५२ ॥ समेत्य तत्र राजानं धर्म्मात्मानं युधिष्ठिरम् । समनुज्ञाप्य राजानं स्वां पुरीं यातुमर्हसि ॥ ५३ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि गुरुशिष्यसंवादे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

वैशम्पायन उवाच । ततोऽभ्यचोदयत् कृष्णो युज्यतामिति दारुकम् । मुहूर्त्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ १ ॥ तथैव चानुयात्राणि चोदयामास पाण्डवः । सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥ २ ॥ इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशाम्पते । आचख्युः सज्जमित्येव पार्थायामिततेजसे ॥ ३ ॥ ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ । विकुर्व्वाणौ कथाश्चित्राः प्रीयमाणौ विशाम्पते ॥ ४ ॥ रथस्थन्तु महातेजा वासुदेवं धनञ्जयः । पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ॥ ५ ॥ त्वत्प्रसादा-

ञ्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह । निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥ ६ ॥ नाथवन्तश्च भवता पाण्डवा मधुसूदन । भवन्तं प्लवमासाद्य तीर्णाः स्मः कुरुसागरम् ॥ ७ ॥ विश्वकर्म्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसत्तम । तथा त्वामभिजानामि यथा चाहं भवान्मतः ॥ ८ ॥ त्वत्तेजःसम्भवो नित्यं भूतात्मा मधुसूदन । रतिः क्रीड़ामयी तुभ्यं माया ते रोदसी विभो ॥ ९ ॥ त्वयि सर्व्वमिदं विश्वं यदिदं स्थाणुजङ्गमम् । त्वं हि सर्व्वं विकुरुषे भूतग्रामं चतुर्व्विधम् ॥ १० ॥ पृथिवीञ्चान्तरीक्षञ्च द्यौश्चैव मधुसूदन । हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियाणि च ॥ ११ ॥ प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः । प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते ॥ १२ ॥ रतिस्तुष्टिर्धृतिः क्षान्तिर्मतिः कान्तिश्चराचरम् । त्वमेवेह युगान्तेषु निधनं चोच्यसेऽनघ ॥ १३ ॥ सुदीर्घेणापि कालेन न ते शक्या गुणा मया । आत्मा च परमात्मा च नमस्ते नलिनेक्षण ॥ १४ ॥ विदितो मे सुदुर्द्धर्ष नारदाद्देवलात्तथा । कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥ १५ ॥ त्वयि सर्व्वं समासक्तं त्वमेवैको जनेश्वरः । यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयानघ ॥ १६ ॥ एतत् सर्व्वमहं सम्यगाचरिष्ये जनार्द्दन । इदञ्चाद्भुतमत्यन्तं कृतमस्मत्प्रियेप्सया ॥ १७ ॥ यत् पापो निहतः सङ्ग्रे कौरव्यो धृतराष्ट्रजः । त्वया दग्धं हि तत् सैन्यं मया विजितमाहवे ॥ १८ ॥ भवता तत् कृतं कर्म्म येनावाप्तो जयो मया । दुर्य्योधनस्य संग्रामे तव बुद्धिपराक्रमैः ॥ १९ ॥ कर्णस्य च वधोपायो यथावत् संप्रदर्शितः । सैन्धवस्य च पापस्य भूरिश्रवस एव च ॥ २० ॥ अहञ्च प्रीयमाणेन त्वया देवकिनन्दन । यदुक्तस्तत् करिष्यामि न हि मेऽत्र विचारणा ॥ २१ ॥ राजानञ्च समासाद्य धर्म्मात्मानं युधिष्ठिरम् । चोदयिष्यामि धर्म्मज्ञ गमनार्थं तवानघ ॥ २२ ॥ रुचितं हि ममैतत्ते द्वारकागमनं प्रभो । अचि-

रादेव दृष्टा त्वं मातुलं मे जनार्द्दन ॥ २३ ॥ बलदेवञ्च दुर्द्धर्षं तथान्यान् वृष्णिपुङ्गवान्। एवं सम्भाषमाणौ तौ प्राप्तौ वारण-साह्वयम् ॥ २४ ॥ तथा विविशतुश्चोभौ संप्रहृष्टनराकुलम्। तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम् ॥ २५॥ ददृशाते महाराज धृतराष्ट्रं जनेश्वरम्। विदुरञ्च महाबुद्धिं राजानञ्च युधिष्ठिरम् ॥ २६ ॥ भीमसेनञ्च दुर्द्धर्षं माद्रीपुत्रौ च पाण्डवौ। धृतराष्ट्र-मुपासीनं युयुत्सुञ्चापराजितम् ॥ २७ ॥ गान्धारीञ्च महाप्राज्ञां पृथां कृष्णाञ्च भामिनीम्। सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रिय-स्तथा ॥ २८ ॥ ददृशाते स्त्रियः सर्वा गान्धारीपरिचारिकाः। ततः समेत्य राजानं धृतराष्ट्रमरिन्दमौ ॥ २९ ॥ निवेद्य नामधेये स्वे तस्य पादावगृह्णताम्। गान्धार्य्याश्च पृथायाश्च धर्म्मराजस्य चैव हि ॥ ३० ॥ भीमस्य च महात्मानौ तथा पादावगृह्णताम्। क्षत्तारञ्चापि संगृह्य पृष्ट्वा कुशलमव्ययम् ॥ ३१ ॥ तैः सार्द्धं नृपतिं वृद्धं ततस्तौ पर्य्युपासताम्। ततो निशि महाराजो धृतराष्ट्रः कुरूद्वहान् ॥ ३२ ॥ जनार्द्दनञ्च मेधावी व्यसर्ज्जयत वै गृहान्। तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम् ॥ ३३ ॥ धनञ्जय-गृहानेव ययौ कृष्णस्तु वीर्य्यवान्। तत्रार्च्चितो यथान्यायं सर्व-कामैरुपस्थितः ॥ ३४ ॥ कृष्णः सुष्वाप मेधावी धनञ्जयसहाय-वान्। प्रभातायान्तु शर्व्वर्य्यां कृत्वा पौर्वाह्णिकीं क्रियाम् ॥ ३५ ॥ धर्म्मराजस्य भवनं जग्मतुः परमार्च्चितौ। यत्रास्ते स सहामात्यो धर्म्मराजो महाबलः ॥ ३६ ॥ तौ प्रविश्य महात्मानौ तद्गृहं परमार्च्चितम्। धर्मराजं ददृशतुर्द्देवराजमिवाश्विनौ ॥ ३७ ॥ समासाद्य तु राजानं वार्ष्णेयकुरुपुङ्गवौ। निषेदतुरनुज्ञातौ प्रीयमाणेन तेन तौ ॥ ३८ ॥ ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ। प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥ ३९ ॥

युधिष्ठिर उवाच। विवक्षू हि युवां मन्ये वीरौ यदुकुरु-

दृष्टौ । ब्रूतं कर्त्तास्मि सर्वं वा न चिरान्मा विचार्य्यताम् ॥ ४० ॥ इत्युक्तः फाल्गुनस्तत्र धर्मराजानमब्रवीत् । विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥ ४१ ॥ अयं चिरोषितो राजन् वासुदेवः प्रतापवान् । भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ४२ ॥ स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे । आनर्त्तनगरीं वीर तदनुज्ञातुमर्हसि ॥ ४३ ॥

युधिष्ठिर उवाच । पुण्डरीकाक्ष भद्रन्ते गच्छ त्वं मधुसूदन । पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभो ॥ ४४ ॥ रोचते मे महाबाहो गमनं तव केशव । मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ॥ ४५ ॥ समेत्य मातुलं गत्वा बलदेवञ्च मानद । पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ॥ ४६ ॥ स्मरेथाश्चापि मां नित्यं भीमञ्च बलिनाम्वरम् । फाल्गुनं सहदेवञ्च नकुलञ्चैव मानद ॥ ४७ ॥ आनर्त्तानवलोक्य त्वं पितरञ्च महाभुज । वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ ४८ ॥ स गच्छ रत्नान्यादाय विविधानि वसूनि च । यच्चाप्यन्यन्मनोज्ञन्ते तदप्यादत्स्व सात्वत ॥ ४९ ॥ इयञ्च वसुधा कृत्स्ना प्रसादात्तव केशव । अस्मानुपागता वीर निहताश्चापि शत्रवः ॥ ५० ॥ एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे । वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ५१ ॥

वासुदेव उवाच । तवैव रत्नानि धनञ्च केवलं धरा तु कृत्स्ना तु महाभुजाद्य वै । यदस्ति चान्यद्द्रविणं गृहे मम त्वमेव तस्येश्वर नित्यमीश्वरः ॥ ५२ ॥ तथेत्यथोक्तः प्रतिपूजितस्तदा गदाग्रजो धर्मसुतेन वीर्य्यवान् । पितृष्वसारं त्वदद्यथाविधि सम्पूजितश्चाप्यगमत् प्रदक्षिणम् ॥ ५३ ॥ तया स सम्यक् प्रतिनन्दितस्ततस्तथैव सर्वैर्विदुरादिभिस्तथा । विनिर्य्ययौ नागपुराद्गदाग्रजो रथेन दिव्येन चतुर्भुजः स्वयम् ॥ ५४ ॥ रथे सुभद्रामधिरोप्य भामिनीं युधिष्ठिरस्यानुमते जनार्द्दनः । पितृष्वसु-

श्चापि तथा महाभुजो विनिर्य्ययौ पौरजनाभिसंवृतः ॥ ५५ ॥
तमन्वयाद्गनरवर्य्यकेतनः ससात्यकिर्माद्रवतीसुतावपि। अगाध-
बुद्धिर्विदुरश्च माधवं स्वयञ्च भीमो गजराजविक्रमः ॥ ५६ ॥
निवर्त्तयित्वा कुरुराष्ट्रवर्द्धनांस्ततः स सर्वान् विदुरञ्च वीर्य्यवान्।
जनार्द्दनो दारुकमाह सत्वरः प्रचोदयाश्वानिति सात्वकिं तथा
॥ ५७ ॥ ततो ययौ शत्रुगणप्रमर्द्दनः शिनिप्रवीरानुगतो जना-
र्द्दनः। यथा निहत्यारिगणान् शतक्रतुर्द्दिवं तथानर्त्तपुरीं प्रताप-
वान् ॥ ५८ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि कृष्णप्रयाणे
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

वैशम्पायन उवाच। तथा प्रयान्तं वार्ष्णेयं द्वारकां भरत-
र्षभाः। परिष्वज्य न्यवर्त्तन्त सानुयात्राः परन्तपाः ॥ १ ॥ पुनः
पुनश्च वार्ष्णेयं पर्य्यष्वजत फाल्गुनः। आचक्षुर्विषयाच्चैनं स ददर्श
पुनः पुनः ॥ २ ॥ कृच्छ्रेणैव तु तां पार्थो गोविन्दे विनिवेशिताम्।
सञ्जहार ततो दृष्टिं कृष्णश्चाप्यपराजितः ॥ ३ ॥ तस्य प्रयाणे
यान्यासन्निमित्तानि महात्मनः। बहून्यद्भुतरूपाणि तानि मे
निगदतः शृणु ॥ ४ ॥ वायुर्वेगेन महता रथस्य पुरतो ववौ।
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ॥ ५ ॥ ववर्ष वासवश्चैव
तोयं शुचि सुगन्धि च। दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्ग-
धन्वनः ॥ ६ ॥ स प्रयातो महाबाहुः समेषु मरुधन्वसु। दद-
र्शाथ मुनिश्रेष्ठमुतङ्कममितौजसम् ॥ ७ ॥ स तं सम्पूज्य तेजस्वी
मुनिं पृथुललोचनः। पूजितस्तेन च तदा पर्य्यपृच्छदनामयम् ॥८॥
स पृष्टः कुशलं तेन सम्पूज्य मधुसूदनम्। उतङ्को ब्राह्मणश्रेष्ठ-
स्ततः पप्रच्छ माधवम् ॥ ९ ॥ कच्चित् शौरे त्वया गत्वा कुरु-

पाण्डवसद्म तत् । कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि ॥ १० ॥ अपि सन्धाय तान् वीरानुपावृत्तोऽसि केशव । सम्बन्धिनः स्वदयितान् सततं वृष्णिपुङ्गव ॥ ११ ॥ कच्चित् पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः । लोकेषु विहरिष्यन्ति त्वया सह परन्तप ॥ १२ ॥ स्वराष्ट्रेषु च राजानः कच्चित् प्राप्स्यन्ति वै सुखम् । कौरवेषु प्रशान्तेषु त्वया नाथेन केशव ॥ १३ ॥ या मे सम्भावना तात त्वयि नित्यमवर्त्तत । अपि सा सफला तात कृता ते भरतान् प्रति ॥ १४ ॥

श्रीभगवानुवाच । कृतो यत्नो मया पूर्वं सौशाम्ये कौरवान् प्रति । नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा ॥ १५ ॥ ततस्ते निधनं प्राप्ताः सर्व्वे ससुतबान्धवाः । न दिष्टमत्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ॥ १६ ॥ महर्षे विदितं भूयः सर्वमेतत्तवानघ । तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च ॥ १७ ॥ ततो यमक्षयं जग्मुः समासाद्येतरेतरम् । पञ्चैव पाण्डवाः शिष्टा हतमित्रा हतात्मजाः । धार्त्तराष्ट्राश्च निहताः सर्व्वे ससुतबान्धवाः ॥ १८ ॥ इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः । उतङ्क इत्युवाचैनं रोषादुत्फुल्ललोचनः ॥ १९ ॥

उतङ्क उवाच । यस्मात् शक्तेन ते कृष्ण न त्राताः कुरुपुङ्गवाः । सम्बन्धिनः प्रियास्तस्माच्छप्स्येऽहं त्वामसंशयम् ॥ २० ॥ न च ते प्रसभं यस्मात् ते निगृह्य निवारिताः । तस्मान्मन्युपरीतस्त्वां शपस्यामि मधुसूदन ॥ २१ ॥ त्वया शक्तेन हि सता मिथ्याचारेण माधव । ते परीताः कुरुश्रेष्ठा नश्यन्त स्म ह्युपेक्षिताः ॥२२॥

वासुदेव उवाच । शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन । गृहाणानुनयं चापि तपस्वी ह्यसि भार्गव ॥ २३ ॥ श्रुत्वा च मे तदध्यात्मं मुञ्चेथाः शापमद्य वै । न च मां तपसाल्पेन शक्तोऽभिभवितुं पुमान् ॥ २४ ॥ न च ते तपसो नाशमिच्छामि तपता-

ध्वर । तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ॥ २५ ॥ कौमारं ब्रह्मचर्य्यन्ते जानामि द्विजसत्तम । दुःखार्ज्जितस्य तपसस्तस्मान्नेच्छामि ते व्ययम् ॥ २६ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि उतङ्कोपाख्याने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

उतङ्क उवाच । ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम् । श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्द्दन ॥ १ ॥

वासुदेव उवाच । तमो रजश्च सत्त्वञ्च विद्धि भावान्मदाश्रयान् । तथा रुद्रान् वसून् वापि विद्धि मत्प्रभवान् द्विज ॥ २ ॥ मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् । स्थित इत्यभिजानीहि मा ते भूदत्र संशयः ॥ ३ ॥ तथा दैत्यगणान् सर्वान् यक्षगन्धर्वराक्षसान् । नागानप्सरसश्चैव विद्धि मत्प्रभवान् द्विज ॥ ४ ॥ सदसच्चैव यत् प्राहुरव्यक्तं व्यक्तमेव च । अक्षरञ्च क्षरञ्चैव सर्वमेतन्मदात्मकम् ॥ ५ ॥ ये चाश्रमेषु वै धर्म्माश्चतुर्धा विदिता मुने । वैदिकानि च सर्वाणि विद्धि सर्वं मदात्मकम् ॥ ६ ॥ असच्च सदसच्चैव तद्विश्वं सदसत्परम् । मत्तः परतरं नास्ति देवदेवात् सनातनात् ॥ ७ ॥ ओङ्कारप्रमुखान् वेदान् विद्धि मां त्वं भृगूद्वह । यूपं सोमं चरुं होमं त्रिदशाप्यायनं मखे ॥ ८ ॥ होतारमपि हव्यञ्च विद्धि मां भृगुनन्दन । अध्वर्य्युः कल्पकश्चापि हविः परमसंस्कृतम् ॥ ९ ॥ उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे । प्रायश्चित्तेषु मां ब्रह्मन् शान्तिमङ्गलवाचकाः । स्तुवन्ति विश्वकर्म्माणं सततं द्विजसत्तम ॥ १० ॥ मम विद्धि सुतं धर्म्ममग्रजं द्विजसत्तम । मानसं दयितं विप्र सर्वभूतदयात्मकम् ॥ ११ ॥ तत्राहं वर्त्तमानैश्च निवृत्तैश्चैव मानवैः । बह्वीः संसरमाणो वै

योनीर्वर्त्तामि सत्तम। धर्म्मसंरक्षणार्थाय धर्म्मसंस्थापनाय च ॥ १२ ॥ तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव। अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः ॥ १३ ॥ भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च। अधर्मे वर्त्तमानानां सर्वेषामहमच्युतः ॥ १४ ॥ धर्म्मस्य सेतुं बध्नामि चलिते चलिते युगे। तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ॥ १५ ॥ यदा त्वहं देवयोनौ वर्त्तामि भृगुनन्दन। तदाहं देववत् सर्वमाचरामि न संशयः ॥ १६ ॥ यदा गन्धर्वयोनौ वा वर्त्तामि भृगुनन्दन। तदा गन्धर्ववत् सर्वमाचरामि न संशयः ॥ १७ ॥ नागयोनौ यदा चैव तदा वर्त्तामि नागवत्। यक्षराक्षसयोन्योस्तु यथावद्विचराम्यहम् ॥ १८ ॥ मानुष्ये वर्त्तमाने तु कृपणं याचिता मया। न च ते जातसम्मोहा वचोऽगृह्णन्त मोहिताः ॥ १९ ॥ भयञ्च महदुद्दिश्य त्रासिताः कुरवो मया। क्रुद्धेन भूत्वा च पुनर्यथावदनुदर्शिताः ॥ २० ॥ तेऽधर्मेणेह संयुक्ताः परीताः कालधर्म्मणा। धर्मेण निहता युद्धे गताः स्वर्गं न संशयः ॥ २१ ॥ लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम। एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ २२ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि उतङ्कोपाख्याने
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

उतङ्क उवाच। अभिजानामि जगतः कर्त्तारं त्वां जनार्द्दन। नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः ॥ १ ॥ चित्तञ्च सुप्रसन्नं मे त्वद्भावगतमच्युत। विनिवृत्तञ्च मे शापादिति विद्धि परन्तप ॥ २ ॥ यदि त्वनुग्रहं किञ्चित्त्वत्तोऽर्हामि जनार्द्दन। द्रष्टुमिच्छामि ते रूपमैश्वरं त्वं निदर्शय ॥ ३ ॥

वैशम्पायन उवाच। ततः स तस्मै प्रीतात्मा दर्शयामास

तद्वपुः । शाश्वतं वैष्णवं धीमान् ददृशे यदुनन्दनः ॥ ४ ॥ स ददर्श महात्मानं विश्वरूपं महाभुजम् । सहस्रसूर्य्यप्रतिमं दीप्तिमत्पावकोपमम् । सर्व्वमाकाशमावृत्य तिष्ठन्तं सर्व्वतो मुखम् ॥५ ॥ तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् । विस्मयञ्च ययौ विप्रस्तं दृष्ट्वा परमेश्वरम् ॥ ६ ॥

उतङ्क उवाच । विश्वकर्म्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव । पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ ७ ॥ द्यावापृथिव्योर्यन्मध्यं जठरेण तवावृतम् । भुजाभ्यामावृताश्चाशास्त्वमिदं सर्व्वमच्युत ॥ ८ ॥ संहरस्व पुनर्द्देव रूपमक्षय्यमुत्तमम् । पुनस्त्वां स्वेनरूपेण द्रष्टुमिच्छामि शाश्वतम् ॥ ९ ॥

वैशम्पायन उवाच । तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय । वरं वृणीष्वेति तदा तमुतङ्कोऽब्रवीदिदम् ॥ १० ॥ पर्य्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते । यत्ते रूपमिदं कृष्ण पश्यामि पुरुषोत्तम ॥ ११ ॥ तमब्रवीत् पुनः कृष्णो मा त्वमत्र विचारय । अवश्यमेतत् कर्त्तव्यममोघं दर्शनं मम ॥ १२ ॥

उतङ्क उवाच । अवश्यकरणीयञ्च यद्येतन्मन्यसे विभो । तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ १३ ॥ ततः संहृत्य तत्तेजः प्रोवाचोतङ्कमीश्वरः । एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ ॥ १४ ॥ ततः कदाचिद्भगवानुतङ्कस्तोयकाङ्क्षया । तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ १५ ॥ ततो दिग्वाससं धीमान् मातङ्गं मलपङ्किनम् । अपश्यत मरौ तस्मिन् श्वयूथपरिवारितम् ॥ १६ ॥ भीषणं वद्धनिस्त्रिंशं वाणकार्म्मुकधारिणम् । तस्याधः स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ १७ ॥ स्मरन्नेव च तं प्राह मातङ्ग प्रहसन्निव । एह्युतङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ॥ १८ ॥ कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाश्रितम् । इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत ॥ १९ ॥ विक्षिप

च स तं धीमान् वाग्भिरुग्राभिरच्युतम् । पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ॥ २० ॥ न चापिबत् स सक्रोधः क्षुभितेनान्तरात्मना । स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ॥२१॥ श्वभिः सह महाराज तत्रैवान्तरधीयत । उतङ्कस्तं तथा दृष्ट्वा ततो व्रीड़ितमानसः ॥ २२ ॥ मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना । अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ॥ २३ ॥ आजगाम महाबुद्धिरुतङ्कश्चैनमब्रवीत् । न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ॥ २४ ॥ सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो । इत्युक्तवचनं तन्तु महाबुद्धिर्ज्जनार्द्दनः ॥ २५ ॥ उतङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् । यादृशेनेह रूपेण योग्यं दातुं धृतेन वै ॥ २६ ॥ तादृशं खलु ते दत्तं तच्च त्वं नावबुध्यथाः । मया त्वदर्थमुक्तो वै वज्रपाणिः पुरन्दरः ॥ २७ ॥ उतङ्कायामृतं देहि तोयरूपमिति प्रभुः । स मामुवाच देवेन्द्रो न मर्त्त्योऽमर्त्त्यतां व्रजेत् ॥ २८ ॥ अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन । अमृतं देयमित्येव मयैवोक्तः शचीपतिः ॥ २९ ॥ स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् । यदि देयमवश्यं वै मातङ्गोऽहं महामते ॥ ३० ॥ भूत्वामृतं प्रदास्यामि भार्गवाय महात्मने । यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ॥ ३१ ॥ प्रदातुमेष गच्छामि भार्गवायामृतं विभो । प्रत्याख्यातस्त्वहं तेन दास्यामि न कथञ्चन ॥ ३२ ॥ स तथा समयं कृत्वा तेन रूपेण वासवः । उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ॥ ३३ ॥ चाण्डालरूपी भगवान् सुमहांस्ते व्यतिक्रमः । यत्तु शक्यं मया कर्त्तुं भूय एव तवेप्सितम् ॥ ३४ ॥ तोयेप्सां तव दुर्द्धर्षां करिष्ये सफलामहम् । येष्वहःसु च ते ब्रह्मन् सलिलेप्सा भविष्यति ॥ ३५ ॥ तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः । रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन । उतङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते ॥ ३६ ॥ इत्युक्तः

प्रीतिमान् विप्रः कृष्णेन स बभूव ह। अद्याप्युतङ्कमेघाश्च मरौ वर्षन्ति भारत॥३७॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि उतङ्कोपाख्याने पञ्चपञ्चाशोऽध्यायः॥ ५५॥

---

जनमेजय उवाच। उतङ्कः केन तपसा संयुक्तो वै महामनाः। यः शापं दातुकामोऽभूत् विष्णवे प्रभविष्णवे॥ १॥

वैशम्पायन उवाच। उतङ्को महता युक्तस्तपसा जनमेजय। गुरुभक्तः स तेजस्वी नान्यत् किञ्चिदपूजयत्॥ २॥ सर्वेषामृषिपुत्राणामेष आसीन्मनोरथः। औतङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत॥ ३॥ गौतमस्य तु शिष्याणां बहूनां जनमेजय। उतङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा॥ ४॥ स तस्य दमशौचाभ्यां विक्रान्तेन च कर्म्मणा। सम्यक् चैवोपचारेण गौतमः प्रीतिमानभूत्॥ ५॥ अथ शिष्यसहस्राणि समनुज्ञातवानृषिः। उतङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत॥ ६॥ तं क्रमेण जरा तात प्रतिपेदे महामुनिम्। न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः॥ ७॥ ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ। उतङ्कः काष्ठभारञ्च महान्तं समुपानयत्॥ ८॥ स तद्भाराभिभूतात्मा काष्ठभारमरिन्दम। निष्पिपेष क्षितौ राजन् परिश्रान्तो बुभुक्षितः॥ ९॥ तस्य काष्ठे विलग्नाभूत् जटा रूप्यसमप्रभा। ततः काष्ठैः सह तदा पपात धरणीतले॥ १०॥ ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत। दृष्ट्वा तां वयसोऽवस्थां रुरोदार्त्तस्वरस्तदा॥ ११॥ ततो गुरुसुता तस्य पद्मपत्रनिभानना। जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना॥ १२॥ पितुर्नियोगाद्धर्म्मज्ञा शिरसावनता तदा। तस्या निपेततुर्दग्धौ करौ तैरश्रुविन्दुभिः॥ १३॥

न हि तानश्रुपातांस्तु शक्ता धारयितुं मही । गौतमस्त्वब्रवीत् विप्रसुतङ्कं प्रीतमानसः ॥ १४ ॥ कस्मात्तात तवाद्येह शोकातुरमिदं मनः । स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि तत्त्वतः ॥ १५ ॥

उतङ्क उवाच । भवद्गतेन मनसा भवत्प्रियचिकीर्षया । भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥ १६ ॥ जरेयं नावबुद्धा मे नाभिज्ञातं सुखञ्च मे । शतवर्षोषितं मां हि न त्वमभ्यनुजानिथाः ॥ १७ ॥ भवता त्वभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम । उपपन्ना द्विजश्रेष्ठाः शतशोऽथ सहस्रशः ॥ १८ ॥

गौतम उवाच । त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव । व्यतिक्रामन्महाकालो नावबुद्धो द्विजर्षभ ॥ १९ ॥ किन्त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव । अनुज्ञां प्रतिगृह्य त्वं स्वगृहान् गच्छ माचिरम् ॥ २० ॥

उतङ्क उवाच । गुर्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम । तमुपाहृत्य गच्छेयमनुज्ञातस्त्वया विभो ॥ २१ ॥

गौतम उवाच । दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते । तव ह्याचरतो ब्रह्मंस्तुष्टोऽहं वै न संशयः ॥ २२ ॥ इत्थञ्च परितुष्टं मां विजानीहि भृगूद्वह । युवा षोड़शवर्षो हि यद्यद्य भविता भवान् ॥ २२ ॥ ददानि पत्नीं कन्याञ्च स्वान्ते दुहितरं द्विज । एतामृतेऽङ्गना नान्या त्वत्तेजोऽर्हति सेवितुम् ॥ २४ ॥ ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम् । गुरुणा चाभ्यनुज्ञाते गुरुपत्नीमथाब्रवीत् ॥ २५ ॥ किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष माम् । प्रियं हितञ्च काङ्क्षामि प्राणैरपि धनैरपि ॥२६॥ यद्दुर्लभं हि लोकेऽस्मिन् रत्नमत्यद्भुतं महत् । तदानयेयं तपसा न हि मेऽत्रास्ति संशयः ॥ २७ ॥

अहल्योवाच । परितुष्टास्मि ते विप्र नित्यं भक्त्यानयानघ । पर्य्याप्तमेतद्भद्रन्ते गच्छ तात यथेप्सितम् ॥ २८ ॥

वैशम्पायन उवाच। उतङ्कस्तु महाराज पुनरेवाब्रवीद्वचः। आज्ञापयस्व मां मातः कर्त्तव्यञ्च तव प्रियम्॥ २९॥

अहल्योवाच। सौदासपत्नीविधृते दिव्ये ये मणिकुण्डले। ते समानय भद्रन्ते गुर्वर्थः सुकृतो भवेत्॥ ३०॥ स तथेति प्रतिश्रुत्य जगाम जनमेजय। गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा॥ ३१॥ स जगाम ततः शीघ्रमुतङ्को ब्राह्मणर्षभ। सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले॥ ३२॥ गौतमस्त्वमब्रवीत् पत्नीमुतङ्को नाद्य दृश्यते। इति पृष्टा तमाचष्ट कुण्डलार्थं गतञ्च सा॥ ३३॥ ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम्। शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति॥ ३४॥

अहल्योवाच। अजानन्त्या नियुक्तः स भगवन् ब्राह्मणो मया। भवत्प्रसादान्न भयं किञ्चित्तस्य भविष्यति॥ ३५॥ इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः। उतङ्कोऽपि वने शून्ये राजानं तं ददर्श ह॥ ३६॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि उतङ्कोपाख्याने षट्पञ्चाशोऽध्यायः॥ ५६॥

---

वैशम्पायन उवाच। स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम्। दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम्॥ १॥ चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत्। प्रत्युत्थाय महातेजा भयकर्त्ता यमोपमः॥ २॥ दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम्। भक्ष्यं मृगयमाणस्य सम्प्राप्तो द्विजसत्तम॥ ३॥

उतङ्क उवाच। राजन् गुर्वर्थिनं विद्धि चरन्तं मामिहागतम्। न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः॥ ४॥

राजोवाच । षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न शक्यस्त्वं समुत्स्रष्टुं क्षुधितेन मयाद्य वै ॥ ५ ॥

उतङ्क उवाच । एवमस्तु महाराज समयः क्रियतान्तु मे । गुर्व्वर्थमभिनिर्व्वर्त्त्य पुनरेष्यामि ते वशम् ॥ ६ ॥ संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम । त्वदधीनः स राजेन्द्र तं त्वां भिक्षे नरेश्वर ॥ ७ ॥ ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि नित्यदा । दाता च त्वं नरव्याघ्र पात्रभूतः क्षिताविह ॥ ८ ॥ पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम । उपाहृत्य गुरोरर्थं त्वदायत्तमरिन्दम ॥ ९ ॥ समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् । सत्यं ते प्रतिजानामि नात्र मिथ्या कथञ्चन । अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ १० ॥

सौदास उवाच । यदि मत्तस्त्वदायत्तो गुर्व्वर्थः कृत एव सः ।
यदि चास्मि प्रतिग्राह्यः साम्प्रतं तद्ददस्व मे ॥ ११ ॥

उतङ्क उवाच । प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ ।
सोऽहं त्वामनुसंप्राप्तो भिक्षितुं मणिकुण्डले ॥ १२ ॥

सौदास उवाच । पत्न्यास्ते मम विप्रर्षे उचिते मणिकुण्डले ।
वरयार्थं त्वमन्यं वै तं ते दास्यामि सुव्रत ॥ १३ ॥

उतङ्क उवाच । अलं ते व्यपदेशेन प्रमाणा यदि ते वयम् ।
प्रयच्छ कुण्डले मह्यं सत्यवाग्भव पार्थिव ॥ १४ ॥

वैशम्पायन उवाच । इत्युक्तस्त्वब्रवीद्राजा तमुतङ्कं पुनर्व्वचः । गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ॥१५॥ सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिव्रता । प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः ॥१६॥

उतङ्क उवाच । क्व पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर ।
स्वयञ्चापि भवान् पत्नीं किमर्थं नोपसर्पति ॥ १७ ॥

सौदास उवाच । तां द्रक्ष्यति भवानद्य कस्मिंश्चिद्वननिर्झरे ।
षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ॥ १८ ॥

वैशम्पायन उवाच । उतङ्कस्तु तयोक्तः स जगाम भरतर्षभ । मदयन्तीञ्च दृष्ट्वा सोऽज्ञापयत् स्वं प्रयोजनम् ॥ १९ ॥ सौदासवचनं श्रुत्वा ततः सा पृथुलोचना । प्रत्युवाच महाबुद्धिमुतङ्कं जन्मेजय ॥ २० ॥ एवमेतन्महाब्रह्मन्नानृतं वदसेऽनघ । अभिज्ञानन्तु किञ्चित्त्वं समानयितुमर्हसि ॥ २१ ॥ इमे हि दिव्ये मणिकुण्डले मे देवाश्च यक्षाश्च महर्षयश्च । तैस्तैरुपायैरपहर्त्तुकामाश्छिद्रेषु नित्यं परितर्कयन्ति ॥ २२ ॥ निक्षिप्तमेतद्भुवि पन्नगास्तु रत्नं समासाद्य परामृषेयुः । यक्षास्तथोच्छिष्टधृतं सुराश्च निद्रावशाद्वा परिधर्षयेयुः ॥ २३ ॥ छिद्रेष्वेतेष्विमे नित्यं ह्रियते द्विजसत्तम । देवराक्षसनागानामप्रमत्तेन धार्यते ॥ २४ ॥ स्यन्दते हि दिवारुक्मं रात्रौ च द्विजसत्तम । नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्त्तते ॥ २५ ॥ एते ह्यामुच्य भगवन् क्षुत्पिपासाभयं कुतः । विषाग्निभयदेभ्यश्च भयं जातु न विद्यते ॥ २६ ॥ ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके तदा । अनुरूपेण चामुक्ते जायते तत् प्रमाणके ॥ २७ ॥ एवं विधे ममैते वै कुण्डले परमार्च्चिते । त्रिषु लोकेषु विज्ञाते तदभिज्ञानमानय ॥ २८ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि उतङ्कोपाख्याने सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

वैशम्पायन उवाच । स मित्रसहमासाद्य अभिज्ञानमयाचत । तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा ॥ १ ॥

सौदास उवाच । न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः । एतन्मे मतमाज्ञाय प्रयच्छ मणिकुण्डले ॥ २ ॥ इत्युक्तास्तामुतङ्कस्तु भर्त्तुर्वाक्यमथाब्रवीत् । श्रुत्वा च सा तदा प्रादात्

ततस्ते मणिकुण्डले ॥ ३ ॥ अवाप्य कुण्डले ते तु राजानं पुन-रब्रवीत् । किमेतद्गुह्यवचनं श्रोतुमिच्छामि पार्थिव ॥ ४ ॥

सौदास उवाच । प्रजानिसर्गाद्विप्रान् वै क्षत्रियाः पूजयन्ति हि । विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति वै ॥ ५ ॥ सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमाप्तवान् । गतिमन्यां न पश्यामि मदयन्तीसहायवान् ॥ ६ ॥ न चान्यामपि पश्यामि गतिं गति-मतांवर । स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ॥ ७ ॥ न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः । शक्यं हि लोके स्थातुं वै प्रेत्य वा सुखमेधितम् ॥ ८ ॥ तदिष्टे ते मया दत्ते एते स्वे मणिकुण्डले । यः कृतस्तेऽद्य समयः सफलं तत् कुरुष्व मे ॥९॥

उतङ्क उवाच । राजंस्तथेह कर्त्तास्मि पुनरेष्यामि ते वशम् । प्रश्नञ्च कञ्चित् प्रष्टुं त्वां निवृत्तोऽस्मि परन्तप ॥ १० ॥

सौदास उवाच । ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः । छेत्तास्मि संशयं तेऽद्य न मेऽत्रास्ति विचारणा ॥ ११ ॥

उतङ्क उवाच । प्राहुर्वाक्संयतं मित्रं धर्मनैपुण्यदर्शिनः । मित्रेषु यश्च विषमस्तेन इत्येव तं विदुः ॥ १२ ॥ स भवान् मित्रता-मद्य सम्प्राप्तो मम पार्थिव । स मे बुद्धिं प्रयच्छ त्वं सम्मतां पुरुष-र्षभ ॥ १३ ॥ अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः । भवत्-सकाशमागन्तुं क्षमं मम न वेति वै ॥ १४ ॥

सौदास उवाच । क्षमञ्चेदिह वक्तव्यं तव द्विजवरोत्तम । मत्-समीपं द्विजश्रेष्ठ नागन्तव्यं कथञ्चन ॥१५॥ एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह । आगच्छतो हि ते विप्र भवेन्मृत्युर्न संशयः ॥ १६ ॥

वैशम्पायन उवाच । इत्युक्तः स तदा राज्ञा क्षमं बुद्धिमता हि तम् । अनुज्ञाप्य स राजानमहल्यां प्रति जग्मिवान् ॥ १७ ॥ गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियङ्करः । जवेन महता प्रायाद्गौतमस्याश्रमं प्रति ॥ १८ ॥ यथा तयोरक्षणञ्च मदयन्त्या-

भिभाषितम्। तथा ते कुण्डले बद्धा तदा कृष्णाजिनेऽनयत् ॥१९॥ स वास्मिंश्चित्क्षुधाविष्टः फलभारसमन्वितम्। विल्वं ददर्श विप्रर्षि-रारुरोह च तं ततः॥ २०॥ शाखामासज्य तस्यैव कृष्णाजिन-मरिन्दम। पातयामास विल्वानि तदा स द्विजपुङ्गव॥ २१॥ अथ पातयमानस्य विल्वापहृतचक्षुषः। न्यपतंस्तानि विल्वानि तस्मिन्नेवाजिने विभो॥ २२॥ यस्मिंस्ते कुण्डले बद्धे तदा द्विज-वरेण वै। विल्वप्रहारैस्तस्याथ व्यशीर्य्यद्बन्धनं ततः॥ २३॥ स-कुण्डलं तदजिनं पपात सहसा तरोः। विशीर्णबन्धने तस्मिन् गते कृष्णाजिने महीम्॥ २४॥ अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले। ऐरावतकुलोद्भूतः शीघ्रोभूत्वा तदा हि सः॥२५॥ विदश्यास्येन वल्मीकं विवेशाथ सकुण्डलः। ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह॥ २६॥ पपात वृक्षात् सोद्वेगो दुःखात् परमकोपनः। स दण्डकाष्ठमादाय वल्मीकमखनत्तदा॥ २७॥ अहानि त्रिंशदव्यग्रः पञ्च चान्यानि भारत। क्रोधामर्षाभिसन्तप्त-स्तदा ब्राह्मणसत्तमः॥ २८॥ तस्य वेगमसह्यन्तमसहन्ती वसु-न्धरा। दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमाकुला॥ २९॥ ततः खनत एवाथ विप्रर्षे धरणीतलम्। नागलोकस्य पन्थानं कर्त्तु-कामस्य निश्चयात्॥ ३०॥ रथेन हरियुक्तेन तं देशमुपजग्मि-वान्। वज्रपाणिर्महातेजास्तं ददर्श द्विजोत्तमम्॥ ३१॥

वैशम्पायन उवाच। स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः। उतङ्कमब्रवीद्वाक्यं नैतच्छक्यं त्वयेति वै॥ ३२॥ दूरो हि नागलोको वै योजनानि सहस्रशः। न दण्डकाष्ठ-साध्यञ्च मन्ये कार्य्यमिदं तव॥ ३३॥

उतङ्क उवाच। नागलोके यदि ब्रह्मन्नाशक्ये कुण्डले मया। प्राप्तुं प्राणान् विमोक्ष्यामि पश्यतस्ते द्विजोत्तम॥ ३४॥

वैशम्पायन उवाच। यदा स नाशकत्तस्य निश्चयं कर्त्तुमन्यथा।

वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ॥ ३५ ॥ ततो वज्र-
प्रहारैस्तैर्दार्य्यमाणा वसुन्धरा । नागलोकस्य पन्थानमकरोज्जन-
मेजय ॥ ३६ ॥ स तेन मार्गेण तदा नागलोकं विवेश ह । ददर्श
नागलोकञ्च योजनानि सहस्रशः ॥ ३७ ॥ प्राकारनिचयैर्दिव्यै-
र्मणिमुक्तास्वलंकृतैः । उपपन्नं महाभाग शातकुम्भमयैस्तथा
॥ ३८ ॥ वापीस्फटिकसोपाना नदीश्च विमलोदकाः । ददर्श
वृक्षांश्च बहून्नानाद्विजगणायुतान् ॥ ३९ ॥ तस्य लोकस्य च द्वारं
स ददर्श भृगूद्वह । पञ्चयोजनविस्तारमायतं शतयोजनम् ॥ ४० ॥
नागलोकमुतङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा । निराशश्चाभवत्तत्र
कुण्डलाहरणे पुनः ॥ ४१ ॥ तत्र प्रोवाच तुरगस्तं कृष्णः श्वेत-
बालधिः । ताम्रास्यनेत्रः कौरव्य प्रज्वलन्निव तेजसा ॥ ४२ ॥
धमस्वापानमेतन्मे ततस्त्वं विप्रलप्स्यसे । ऐरावतसुतेनेह तवानीते
हि कुण्डले ॥ ४३ ॥ मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथञ्चन ।
त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा ॥ ४४ ॥

उतङ्क उवाच । कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति ।
यन्मयाचीर्णपूर्वं हि श्रोतुमिच्छामि तद्ध्यहम् ॥ ४५ ॥

अश्व उवाच । गुरोर्गुरुं मां जानीहि ज्वलन्तं जातवेदसम् ।
त्वया ह्यहं सदा विप्र गुरोरर्थेऽभिपूजितः ॥ ४६ ॥ विधिवत् सततं
विप्र शुचिना भृगुनन्दन । तस्मात् श्रेयो विधास्यामि तवैवं कुरु
मा चिरम् ॥ ४७ ॥ इत्युक्तस्तु तथाकार्षीदुतङ्कश्चित्रभानुना ।
घृतार्च्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया ॥ ४८ ॥ ततोऽस्य
रोमकूपेभ्यो धर्म्मतस्तत्र भारत । घनः प्रादुरभूद्धूमो नागलोक-
भयावहः ॥ ४९ ॥ तेन धूमेन महता वर्द्धमानेन भारत । नाग-
लोके महाराज न प्राज्ञायत किञ्चन ॥ ५० ॥ हाहाकृतमभूत्
सर्वमैरावतनिवेशनम् । वासुकिप्रमुखानाञ्च नागानां जनमेजय
॥ ५१ ॥ न प्राकाशन्त वेश्मानि धूमरुद्धानि भारत । नीहार-

संवृतानीव वनानि गिरयस्तथा ॥ ५२ ॥ ते धूमरक्तनयना वह्नि-तेजोऽभितापिताः । आजग्मुर्निश्चयं ज्ञातुं भार्गवस्य महात्मनः ॥ ५३ ॥ श्रुत्वा तु निश्चयं तस्य महर्षेरतितेजसः । संभ्रान्तनयनाः सर्वे पूजाञ्चक्रुर्यथाविधि ॥ ५४ ॥ सर्वे प्राञ्जलयो नागा वृद्धबाल-पुरोगमाः । शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ॥ ५५ ॥ प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घं निवेद्य च । प्रायच्छन् कुण्डले दिव्ये पन्नगाः परमार्च्चिते ॥ ५६ ॥ ततः स पूजितो नागैस्तदो-तङ्कः प्रतापवान् । अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत् ॥५७॥ स गत्वा त्वरितो राजन् गौतमस्य निवेशनम् । प्रायच्छत् कुण्डले दिव्ये गुरुपत्न्यास्तदानघ ॥ ५८ ॥ वासुकिप्रमुखानाञ्च नागानां जनमेजय । सर्वं शशंस गुरवे यथावद्द्विजसत्तमः ॥ ५९ ॥ एवं महात्मना तेन त्रीन् लोकान् जनमेजय । परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले ॥ ६० ॥ एवं प्रभावः स मुनिरुतङ्को भरतर्षभ । परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि ॥ ६१ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि उतङ्कोपाख्याने अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

जनमेजय उवाच । उतङ्कस्य वरं दत्त्वा गोविन्दो द्विज-सत्तम । अत ऊर्द्ध्वं महाबाहुः किञ्चकार महायशाः ॥ १ ॥

वैशम्पायन उवाच । दत्त्वा वरमुतङ्काय प्रायात् सात्यकिना सह । द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः ॥ २ ॥ सरांसि सरितश्चैव वनानि च गिरींस्तथा । अतिक्रम्याससादाथ रम्यां द्वारवतीं पुरीम् ॥ ३ ॥ वर्त्तमाने महाराज महे रैवतकस्य च । उपायात् पुण्डरीकाक्षो युयुधानानुगस्तदा ॥ ४ ॥ अलंकृतस्तु स गिरिर्नानारूपैर्विचित्रितैः । बभौ रत्नमयैः कोषैः संवृतः पुरुषर्षभ ॥ ५ ॥ काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च ।

वासोभिश्च महार्हैश्च कल्पवृक्षैस्तथैव च ॥ ६ ॥ दीपवृक्षैश्च सौवर्णै-रभीक्ष्णमुपशोभितः । गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ॥ ७ ॥ पताकाभिर्विचित्राभिः सघण्टाभिः समन्ततः । पुंभिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत् ॥ ८ ॥ अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव । मत्तानां हृष्टरूपाणां स्त्रीणां पुंसाञ्च भारत ॥ ९ ॥ गायतां पर्वतेन्द्रस्य दिवस्पृगिव निःस्वनः । प्रमत्तमत्तसम्मत्तक्ष्वेडितोत्क्रुष्टसंकुलः ॥ १० ॥ तथा किलकिलाशब्दैर्भूधरोऽभून्मनोहरः । विपणापणवान् रम्यो भोक्ष्यभोज्यविहारवान् ॥ ११ ॥ वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् । सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ॥ १२ ॥ दीनान्धकृपणादिभ्यो दीयमानेन चानिशम् । बभौ परमकल्याणो महस्तस्य महागिरेः ॥ १३ ॥ पुण्यावसथवान् वीर पुण्यकृद्भिर्निषेवितः । विहारो वृष्णिवीराणां महे रैवतकस्य ह ॥ १४ ॥ स नगो वेश्मसंकीर्णो देवलोक इवाबभौ । तदा च कृष्णसान्निध्यमासाद्य भरतर्षभ ॥१५॥ शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् । ततः सम्पूज्यमानः स विवेश भवनं शुभम् ॥ १६ ॥ गोविन्दः सात्यकिश्चैव जगाम भवनं स्वकम् । विवेश च प्रहृष्टात्मा चिरकालप्रवासतः ॥ १७ ॥ कृत्वा न सुकरं कर्म्म दानवेष्विव वासवः । उपयातन्तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तथा । अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम् ॥१८॥ सतानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा । अभ्यवादयत प्रीतः पितरं मातरन्तथा ॥ १९ ॥ ताभ्यां स संपरिष्वक्तः सान्त्वितश्च महाभुजः । उपोपविष्टैः सर्व्वैस्तैर्वृष्णिभिः परिवारितः ॥ २० ॥ स विश्रान्तो महातेजाः कृतपादावनेजनः । कथयामास तत् सर्वं पृष्टः पित्रा महाहवम् ॥ २१ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि कृष्णस्य द्वारकाप्रवेशे एकोनषष्टोऽध्यायः ॥ ५९॥

वासुदेव उवाच। श्रुतवानस्मि वार्ष्णेय संग्रामं परमाद्भुतम्। नराणां वदतां तत्र कथोद्घातेषु नित्यशः॥ १॥ त्वन्तु प्रत्यक्षदर्शी च रूपज्ञश्च महाभुज। तस्मात् प्रब्रूहि संग्रामं याथातथ्येन मेऽनघ॥ २॥ यथा तदभवद्युद्धं पाण्डवानां महात्मनाम्। भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमम्॥ ३॥ अन्येषां क्षत्रियाणाञ्च कृतास्त्राणामनेकशः। नानावेशाकृतिमतां नानादेशनिवासिनाम्॥४॥

वैशम्पायन उवाच। इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदन्तिके। शशंस कुरुवीराणां संग्रामे निधनं यथा॥ ५॥

वासुदेव उवाच। अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम्। बहुलत्वान्नसंख्यातुं शक्यान्यब्दशतैरपि॥ ६॥ प्राधान्यतस्तु गदतः समासेनैव मे शृणु। कर्माणि पृथिवीशानां यथावदमरद्युते॥ ७॥ भीष्मः सेनापतिरभूदेकादशचमूपतिः। कौरव्यः कौरवेन्द्राणां देवानामिव वासवः॥ ८॥ शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः। बभूव रक्षितो धीमान् श्रीमता सव्यसाचिना॥ ९॥ तेषां तदभवद्युद्धं दशाहानि महात्मनाम्। कुरूणां पाण्डवानाञ्च सुमहल्लोमहर्षणम्॥ १०॥ ततः शिखण्डी गाङ्गेयं युध्यमानं महाहवे। जघान बहुभिर्बाणैः सह गाण्डीवधन्वना॥ ११॥ अकरोत् स ततः कालं शरतल्पगतो मुनिः। अयनं दक्षिणं हित्वा सम्प्राप्ते चोत्तरायणे॥ १२॥ ततः सेनापतिरभूत् द्रोणोऽस्त्रविदुषां वरः। प्रवीरः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव॥ १३॥ अक्षौहिणीभिः शिष्टाभिर्नवभिर्द्विजसत्तमः। सम्वृतः समरश्लाघी गुप्तः कृपवृषादिभिः॥ १४॥ धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित्। गुप्तो भीमेन मेधावी मित्रेण वरुणो यथा॥ १५॥ स च सेनापरिवृतो द्रोणप्रेप्सुर्महामनाः। पितुर्निकारान् संस्मृत्य रणे कर्माकरोन्महत्॥ १६॥ तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसङ्गरे। नानादिगागता वीराः प्रायशो निधनं

गताः ॥ १७ ॥ दिनानि पञ्च तद्युद्धमभूत् परमदारुणम्। ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशङ्गतः ॥ १८ ॥ ततः सेनापतिरभूत् कर्णो दौर्य्योधने बले। अक्षौहिणीभिः शिष्टाभिर्वृतः पञ्चभिराहवे ॥ १९ ॥ तिस्रस्तु पाण्डुपुत्राणां चम्वो बीभत्सुपालिताः। हतप्रवीरभूयिष्ठा बभूवुः समरस्थिताः ॥ २० ॥ ततः पार्थं समासाद्य पतङ्ग इव पावकम्। पञ्चत्वमगमत् सौतिर्द्वितीयेऽहनि दारुणः ॥ २१ ॥ हते कर्णे तु कौरव्या निरुत्साहा हतौजसः। अक्षौहिणीभिस्तिसृभिर्मद्रेशं पर्य्यवारयन् ॥ २२ ॥ हतवाहनभूयिष्ठाः पाण्डवापि युधिष्ठिरम्। अक्षौहिण्या निरुत्साहाः शिष्टया पर्य्यवारयन् ॥ २३ ॥ अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः। तस्मिंस्तथार्द्धदिवसे कृत्वा कर्म्म सुदुष्करम् ॥ २४ ॥ हते शल्ये च शकुनिं सहदेवो महामनाः। आहर्त्तारं कलेस्तस्य जघानामितविक्रमः ॥ २५ ॥ निहते शकुनौ राजा धार्त्तराष्ट्रः सुदुर्म्मनाः। अपाक्रामत्गदापाणिर्हतभूयिष्ठसैनिकः ॥ २६ ॥ तमन्वधावत् संक्रुद्धो भीमसेनः प्रतापवान्। ह्रदे द्वैपायने चापि सलिलस्थं ददर्श तम् ॥ २७ ॥ हतशिष्टेन सैन्येन समन्तात् परिवार्य्य तम्। अथोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः ॥ २८ ॥ विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः। उत्थाय स गदापाणिर्युद्धाय समुपस्थितः ॥ २९ ॥ ततः स निहतो राजा धार्त्तराष्ट्रो महारणे। भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षिताम् ॥ ३० ॥ ततस्तत् पाण्डवं सैन्यं प्रसुप्तं शिविरे निशि। निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ॥ ३१ ॥ हतपुत्रा हतबला हतमित्रा मया सह। युयुधानसहायेन पञ्च शिष्टास्तु पाण्डवाः ॥३२॥ सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत। युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात् ॥ ३३ ॥ निहते कौरवेन्द्रे तु सानुबन्धे सुयोधने। विदुरः सञ्जयश्चैव धर्म्मराजमुपस्थितौ ॥ ३४ ॥ एवं

तद्भवद्युद्धमहान्यष्टादश प्रभो। यत्र ते पृथिवीपाला निहताः स्वर्गमावसन्॥ ३५॥

वैशम्पायन उवाच। शृखतान्तु महाराज कथां तां लोमहर्षणाम्। दुःखशोकपरिक्लेशा वृष्णीनामभवंस्तदा॥ ३६॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि वासुदेववाक्ये षष्टितमोऽध्यायः॥ ६०॥

---

वैशम्पायन उवाच। कथयन्नेव तु तदा वासुदेवः प्रतापवान्। महाभारतयुद्धं तत् कथान्ते पितुरग्रतः॥ १॥ अभिमन्योर्वधं वीरः सोऽत्यक्रामन्महामतिः। अप्रियं वसुदेवस्य मा भूदिति महामतिः॥ २॥ मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम्। दुःखशोकाभिसन्तप्तो भवेदिति महामतिः॥ ३॥ सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे। आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि॥ ४॥ तामपश्यन्निपतितां वसुदेवः क्षितौ तदा। दृष्ट्वैव च पपातोर्व्यां सोऽपि दुःखेन मूर्च्छितः॥ ५॥ ततः स दौहित्रवधदुःखशोकसमाहतः। वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत्॥ ६॥ ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः। यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन्॥ ७॥ तद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे प्रभो। सदृशाक्षस्तव कथं शत्रुभिर्निहतो रणे॥ ८॥ दुर्मरं बत वार्ष्णेय कालेऽप्राप्ते नृभिः सह। यत्र मे हृदयं दुःखात् शतधा न विदीर्य्यते॥ ९॥ किमब्रवीत्तां संग्रामे सुभद्रां मातरं प्रति। माञ्चापि पुण्डरीकाक्ष चपलाक्षः प्रियो मम॥ १०॥ आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः। कच्चिन्मुखं न गोविन्द तेनाजौ विकृतं कृतम्॥ ११॥ स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः। बालभावेन विनयमात्मनोऽकृ-

थयत् प्रभुः ॥ १२ ॥ कच्चिन्न निकृतो बालो द्रोणकर्णकृपादिभिः । धरण्यां निहतः शेते तन्ममाचक्ष्व केशव ॥ १३ ॥ स हि द्रोणञ्च भीष्मञ्च कर्णञ्च बलिनां वरम् । स्पर्द्धते स्म रणे नित्यं दुहितुः पुत्रको मम ॥ १४ ॥ एवंविधं बहु तदा विलपन्तं सुदुःखितम् । पितरं दुःखिततरो गोविन्दो वाक्यमब्रवीत् ॥ १५ ॥ न तेन विकृतं वक्त्रं कृतं संग्राममूर्द्धनि । न पृष्ठतः कृतश्चापि संग्रामस्तेन दुस्तरः ॥ १६ ॥ निहत्य पृथिवीपालान् सहस्रशतसङ्घशः । खेदितो द्रोणकर्णाभ्यां दौःशासनिवशंगतः ॥ १७ ॥ एको ह्येकेन सततं युध्यमानो यदि प्रभो । न स शक्येत संग्रामे निहन्तुमपि वज्रिणा ॥ १८ ॥ समाहूते च संग्रामात् पार्थे संशप्तकैस्तदा । पर्य्यवार्य्यत संक्रुद्धैः स द्रोणादिभिराहवे ॥ १९ ॥ ततः शत्रुवधं कृत्वा सुमहान्तं रणे पितः । दौहित्रस्तव वार्ष्णेय दौःशासनिवशंगतः ॥ २० ॥ नूनञ्च स गतः स्वर्गं जहि शोकं महामते । न हि व्यसनमासाद्य सीदन्ति कृतबुद्धयः ॥ २१ ॥ द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः । बले महेन्द्रप्रतिमाः स कथं नाप्नुयाद्दिवम् ॥ २२ ॥ स शोकं जहि दुर्द्धर्ष मा च मन्युवशंगमः । शस्त्रपूतां हि स गतिं गतः परपुरञ्जयः ॥ २३ ॥ तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम । दुःखार्त्ताथो पृथां प्राप्य कुररीव ननाद ह ॥ २४ ॥ द्रौपदीं च समासाद्य पर्य्यपृच्छत दुःखिता । आर्य्ये क्व दारकाः सर्व्वे द्रष्टुमिच्छामि तानहम् ॥ २५ ॥ तस्यास्तु वचनं श्रुत्वा सर्व्वास्ताः कुरुयोषितः । भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्त्तवत् ॥ २६ ॥ उत्तराञ्चाब्रवीद्भद्रे भर्त्ता स क्व नु ते गतः । क्षिप्रमागमनं मह्यं तस्य त्वं वेदयस्व ह ॥ २७ ॥ ननु नाम स्ववैराटिः श्रुत्वा मम गिरं सदा । भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः ॥ २८ ॥ अभिमन्योः कुशलिनो मातुलास्ते महारथाः । कुशलञ्चाब्रुवन् सर्व्वे त्वां युयुत्सुमिहागतम् ॥ २९ ॥

आचक्ष्व मेऽद्य संग्रामं यथापूर्वमरिन्दम। कस्मादेवं विलपतीं नाद्येह प्रतिभाषसे॥ ३०॥ एवमादि तु वार्ष्णेय्यास्तस्यास्तत् परिदेवितम्। श्रुत्वा पृथा सुदुःखार्त्ता शनैर्वाक्यमथाब्रवीत्॥३१॥ सुभद्रे वासुदेवेन तथा सात्यकिना रणे। पित्रा च लालितो बालः स हतः कालधर्म्मणा॥ ३२॥ ईदृशो मर्त्त्यधर्मोऽयं मा शुचो यदुनन्दिनि। पुत्रो हि तव दुर्द्धर्षः सम्प्राप्तः परमां गतिम्॥ ३३॥ कुले महति जातासि क्षत्रियाणां महात्मनाम्। मा शुचश्चपलाक्षि त्वं पद्मपत्रनिभेक्षणे॥ ३४॥ उत्तरां त्वमवेक्षस्व गुर्विणीं मा शुचः शुभे। पुत्रमेषा हि तस्याशु जनयिष्यति भाविनी॥ ३५॥ एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह। विहाय शोकं दुर्द्धर्ष श्राद्धमस्य ह्यकल्पयत्॥ ३६॥ समनुज्ञाप्य धर्म्मज्ञा राजानं भीममेव च। यमौ यमोपमौ चैव ददौ दाना-न्यनेकशः॥ ३७॥ ततः प्रदाय बह्वीर्गा ब्राह्मणाय यदूद्वह। समाहृष्य तु वार्ष्णेयी वैराटीमब्रवीदिदम्॥ ३८॥ वैराटि नेह सन्तापस्त्वया कार्य्यो ह्यनिन्दिते। भर्त्तारं प्रति सुश्रोणि गर्भस्थं रक्ष वै शिशुम्॥ ३९॥ एवमुक्त्वा ततः कुन्ती विरराम महा-द्युते। तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयम्॥ ४०॥ एवं स निधनं प्राप्तो दौहित्रस्तव मानद। सन्तापं त्यज दुर्द्धर्ष मा च शोके मनः कृथा॥ ४१॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि
एकषष्टोऽध्यायः॥ ६१॥

---

वैशम्पायन उवाच। एतत् श्रुत्वा तु पुत्रस्य वचः शूरात्मज-स्तदा। विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम्॥ १॥ तथैव वासुदेवश्च स्वस्रीयस्य महात्मनः। दयितस्य पितुर्नित्यमकरो-

र्द्धं दैहिकम् ॥ २ ॥ षष्टिं शतसहस्राणि ब्राह्मणानां महौजसाम् । विधिवद्भोजयामास भोज्यं सर्वगुणान्वितम् ॥ ३ ॥ आच्छाद्य च महाबाहुर्धनतृष्णामपानुदत् । ब्राह्मणानां तदा कृष्णास्तदभूल्लोमहर्षणम् ॥ ४ ॥ सुवर्णञ्चैव गाश्चैव शयनाच्छादनं तथा । दीयमानं तदा विप्रा वर्द्धतामिति चाब्रुवन् ॥ ५ ॥ वासुदेवोऽथ दाशार्हो बलदेवः ससात्यकिः । अभिमन्योस्तदा श्राद्धमकुर्वन् सत्यकस्तदा ॥ ६ ॥ अतीव दुःखसन्तप्ता न शमं चोपलेभिरे । तथैव पाण्डवा वीरा नगरे नागसाह्वये ॥ ७ ॥ नोपागच्छन्त वै शान्तिमभिमन्युविनाकृताः । सुबहूनि च राजेन्द्र दिवसानि विराटजा ॥ ८ ॥ नाभुङ्क्त पतिदुःखार्त्ता तदाभूत् करुणं महत् । कुक्षिस्थ एव तस्याथ गर्भो वै संप्रलीयते ॥ ९ ॥ आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा । समागम्याब्रवीद्धीमान् पृथां पृथुललोचनाम् ॥ १० ॥ उत्तराञ्च महातेजाः शोकः सन्त्यज्यतामयम् । भविष्यति महातेजाः पुत्रस्तव यशस्विनि ॥ ११ ॥ प्रभावाद्वासुदेवस्य मम व्याहरणादपि । पाण्डवानामयञ्चान्ते पालयिष्यति मेदिनीम् ॥ १२ ॥ धनञ्जयञ्च संप्रेक्ष्य धर्म्मराजस्य शृण्वतः । व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ॥ १३ ॥ पौत्रस्तव महाभागो जनिष्यति महामनाः । पृथ्वीं सागरपर्य्यन्तां पालयिष्यति धर्म्मतः ॥ १४ ॥ तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिकर्षण । विचार्य्यमत्र न हि ते सत्यमेतद्भविष्यति ॥ १५ ॥ यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन । पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा ॥ १६ ॥ विबुधानां गतो लोकानक्षयानात्मनिर्ज्जितान् । न स शोच्यस्त्वया वीरो न चान्यैः कुरुभिस्तथा ॥ १७ ॥ एवं पितामहेनोक्तो धर्मात्मा स धनञ्जयः । त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा ॥ १८ ॥ पितापि तव धर्म्मज्ञ गर्भे तस्मिन्महामते । अवर्द्धत यथाकामं शुक्लपक्षे यथा शशी ॥ १९ ॥

ततः सञ्चोदयामास व्यासो धर्मात्मजं नृपम् । अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् ॥ २० ॥ धर्म्मराजोऽपि मेधावी श्रुत्वा व्यासस्य तद्वचः । वित्तस्यानयने तात चकार गमने मतिम् ॥२१॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि
द्विषष्टोऽध्यायः ॥ ६२ ॥

---

जनमेजय उवाच । श्रुत्वैतद्वचनं ब्रह्मन् व्यासेनोक्तं महात्मना । अश्वमेधं प्रति तदा किं भयः प्रचकार ह ॥ १ ॥ रत्नञ्च यन्मरुत्तेन निहितं वसुधातले । तदवाप कथञ्चेति तन्मे ब्रूहि द्विजोत्तम ॥ २ ॥

वैशम्पायन उवाच । श्रुत्वा द्वैपायनवचो धर्म्मराजो युधिष्ठिरः । भ्रातॄन् सर्वान् समानाय्य काले वचनमब्रवीत् ॥ ३ ॥ अर्जुनं भीमसेनञ्च माद्रीपुत्रौ यमावपि । श्रुतं वो वचनं वीराः सौहृदात् यन्महात्मना ॥ ४ ॥ कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता । तपोवृद्धेन महता सुहृदां भूतिमिच्छता ॥ ५ ॥ गुरुणा धर्म्मशीलेन व्यासेनाद्भुतकर्म्मणा । भीष्मेण च महाप्राज्ञ गोविन्देन च धीमता ॥ ६ ॥ संस्मृत्य तदहं सम्यक् कर्त्तुमिच्छामि पाण्डवाः । आयत्याञ्च तदात्वे च सर्वेषां तद्धि नो हितम् ॥ ७ ॥ अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः । इयं हि वसुधा सर्वा क्षीणरत्ना कुरूद्वहाः ॥ ८ ॥ तच्चाचष्ट तदा व्यासो मरुत्तस्य धनं नृपाः । यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि ॥ ९ ॥ तदानयामेह धनं कथं वा भीम मन्यसे । इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह ॥ १० ॥ भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्वाक्यमब्रवीत् । रोचते मे महाबाहो यदिदं भाषितं त्वया ॥ ११ ॥ व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति । यदि तत् प्राप्नुयामेह

धनमाविचितं प्रभो ॥ १२॥ कृतमेव महाराज भवेदिति मतिर्मम । ते वयं प्रणिपातेन गिरिशस्य महात्मनः ॥ १३ ॥ तदानयाम भद्रन्ते समभ्यर्च्य कपर्द्दिनम् । तं विभुं देवदेवेशं तस्यैवानुचरांश्च तान् ॥१४॥ प्रसादार्थमवाप्स्यामो नूनं वाग्बुद्धिकर्म्मभिः । रक्षन्ति ये च तद्द्रव्यं किन्नरा रौद्रदर्शनाः ॥ १५ ॥ ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे । श्रुत्वैवं वदतस्तस्य वाक्यं भीमस्य भारत ॥१६॥ प्रीतो धर्मात्मजो राजा बभूवातीव भारत । अर्जुनप्रमुखाश्चापि तथेत्येवाब्रुवन् वचः ॥ १७ ॥ कृत्वा तु पाण्डवाः सर्व्वे रत्नाहरण-निश्चयम् । सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ॥ १८ ॥ ततो ययुः पाण्डुसुता ब्राह्मणान् स्वस्ति वाच्य च । अर्च्चयित्वा सुरश्रेष्ठं पूर्व्वमेव महेश्वरम् ॥ १९ ॥ मोदकैः पायसेनाथ मांसपूपैस्तथैव च । आशास्य च महात्मानं प्रययुर्मुदिता भृशम् ॥ २० ॥ तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ । प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ते ॥ २१ ॥ ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च । ब्राह्मणानग्निसहितान् प्रययुः पाण्डुनन्दनाः ॥ २२ ॥ समनुज्ञाप्य राजानं पुत्रशोकसमाहतम् । धृतराष्ट्रं सभार्य्यं वै पृथाञ्च पृथु-लोचनाम् ॥ २३ ॥ मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम् । सम्पूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः ॥ २४ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि
त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

वैशम्पायन उवाच । ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः । रथघोषेण महता पूरयन्तो वसुन्धराम् ॥ १ ॥ संस्तूयमानाः स्तुतिभिः सूतमागधवन्दिभिः । स्वेन सैन्येन संवीता यथादित्याः स्वरश्मिभिः ॥ २ ॥ पाण्डरेणातपत्रेण ध्रियमाणेन मूर्द्धनि ।

बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ॥ ३ ॥ जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः । प्रत्यगृह्णाद्यथान्यायं यथावत् पुरुषर्षभः ॥ ४ ॥ तथैव सैनिका राजन् राजानमनुयान्ति ये । तेषां हलहलाशब्दो दिवं स्तब्ध्वा व्यतिष्ठत ॥ ५ ॥ सरांसि सरितश्चैव वनान्युपवनानि च । अत्यक्रामन्महाराजो गिरिं चाप्यन्वपद्यत ॥ ६ ॥ तस्मिन् देशे च राजेन्द्र यत्र तत् द्रव्यमुत्तमम् । चक्रे निवेशनं राजा पाण्डवैः सह सैनिकैः ॥ ७ ॥ शिवे देशे समे चैव तदा भरतसत्तम । अग्रतो ब्राह्मणान् कृत्वा तपोविद्यादमान्वितान् ॥ ८ ॥ पुरोहितञ्च कौरव्य वेदवेदाङ्गपारगम् । आग्निवेश्यञ्च राजानो ब्राह्मणाः सपुरोधसः ॥ ९ ॥ कृत्वा शान्तिं यथान्यायं सर्वशः पर्य्यवारयन् । कृत्वा तु मध्ये राजानममात्यांश्च यथाविधि ॥ १० ॥ षट्पदं नवसंख्यानं निवेशं चक्रिरे द्विजाः । मत्तानां वारणेन्द्राणां निवेशञ्च यथाविधि ॥ ११ ॥ कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् । अस्मिन् कार्य्ये द्विजश्रेष्ठो नक्षत्रे दिवसे शुभे ॥ १२ ॥ यथा भवन्तो मन्यन्ते कर्त्तुमर्हन्ति तत्तथा । न नः कालात्ययो वै स्यादिहैव परिलम्बताम् । इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरम् ॥ १३ ॥ श्रुत्वैतद्वचनं राज्ञो ब्राह्मणाः सपुरोधसः । इदमूचुर्वचो हृष्टा धर्म्मराजप्रियैप्सवः ॥ १४ ॥ अद्यैव नक्षत्रमहश्च पुण्यं यतामहे श्रेष्ठतमक्रियासु । अम्भोभिरद्येह वसाम राजन् उपोष्यताञ्चापि भवद्भिरद्य ॥ १५ ॥ श्रुत्वा तु तेषां द्विजसत्तमानां कृतोपवासा रजनीं नरेन्द्राः । ऊषुः प्रतीताः कुशसंस्तरेषु यथाध्वरे प्रज्वलिता हुताशाः ॥ १६॥ ततो निशा सा व्यगमन्महात्मनां संशृण्वतां विप्रसमीरिता गिरः । ततः प्रभाते विमले द्विजर्षभा वचोऽब्रुवन् धर्म्मसुतं नराधिपम् ॥ १७ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि सुवर्णकोषसम्प्राप्तौ चतुःषष्टोऽध्यायः ॥ ६४ ॥

ब्राह्मणा ऊचुः। क्रियतामुपहारोऽस्य त्र्यम्बकस्य महात्मनः। दत्त्वोपहारं नृपते ततः स्वार्थं यतामहे ॥ १ ॥ श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः। गिरीशस्य यथान्यायमुपहारमुपाहरत् ॥ २ ॥ आज्येन तर्पयित्वाग्निं विधिवत् संस्कृतेन च। मन्त्रसिद्धं चरुं कृत्वा पुरोधाः स ययौ तदा ॥ ३ ॥ स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप। मोदकैः पायसेनाथ मांसैश्चोपाहरद्वलिम् ॥ ४ ॥ सुमनोभिश्च चित्राभिर्लाजैरुच्चावचैरपि। सर्वं स्विष्टतमं कृत्वा विधिवद्वेदपारगः ॥ ५ ॥ किङ्कराणां ततः पश्चाच्चकार बलिमुत्तमम्। यक्षेन्द्राय कुवेराय मणिभद्राय चैव ह ॥ ६ ॥ तथान्येषाञ्च यक्षाणां भूतानां पतयश्च ये। कृशरेण च मांसेन निवापैस्तिलसंयुतैः ॥ ७ ॥ ओदनं कुम्भशः कृत्वा पुरोधाः समुपाहरत्। ब्राह्मणेभ्यः सहस्राणि गवां दत्त्वा तु भूमिपः ॥ ८ ॥ नक्तञ्चराणां भूतानां व्यादिदेश वलिं तदा। धूपगन्धनिरुद्धन्तत् सुमनोभिश्च संवृतम् ॥ ९ ॥ शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिव। कृत्वा पूजाञ्च रुद्रस्य गणानाञ्चैव सर्वशः ॥ १० ॥ ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति। पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च ॥ ११ ॥ सुमनोभिर्विचित्राभिरपूपैः कृशरेण च। शङ्खादींश्च निधीन् सर्वान् निधिपालांश्च सर्वशः ॥ १२ ॥ अर्च्चयित्वा द्विजाग्र्यान् स स्वस्तिवाच्य च वीर्य्यवान्। तेषां पुण्याहघोषेण तेजसा समवस्थितः ॥ १३ ॥ प्रीतिमान् स कुरुश्रेष्ठः खानयामास तद्धनम्। ततः पात्रीः सकरका बहुरूपा मनोरमाः ॥ १४ ॥ भृङ्गाराणि कटाहानि कलसान् वर्द्धमानकान्। बहूनि च विचित्राणि भाजनानि सहस्रशः ॥ १५ ॥ उद्धारयामास तदा धर्म्मराजो युधिष्ठिरः। तेषां रक्षणमप्यासीन्महान् करपुटस्तदा ॥ १६ ॥ नद्धञ्च भाजनं राजन् तुलार्द्धमभवन्नृप। वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशाम्पते ॥ १७॥

षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः । वारणाश्च महाराज सहस्रशतसम्मिताः ॥ १८ ॥ शकटानि रथाश्चैव तावदेव करेणवः । खराणां पुरुषाणाञ्च परिसंख्या न विद्यते ॥ १९ ॥ एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः । षोड़शाष्टौ चतुर्विंशसहस्रं भारलक्षणम् ॥ २० ॥ एतेष्वादाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः । महादेवं प्रतिययौ पुरं नागाह्वयं प्रति ॥ २१ ॥ द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम् । गोयुते गोयुते चैव न्यवसत् पुरुषर्षभः ॥ २२ ॥ सा पुराभिमुखी राजन्नुवाह महती चमूः । कृच्छ्राद्द्रविणभारार्त्ता हर्षयन्ती कुरूद्वहान् ॥ २३ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि सुवर्णकोषसम्प्राप्तौ पञ्चषष्टोऽध्यायः ॥ ६५ ॥

---

वैशम्पायन उवाच । एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्य्यवान् । उपायाद्वृष्णिभिः सार्द्धं पुरं वारणसाह्वयम् ॥ १ ॥ समयं वाजिमेधस्य विदित्वा पुरुषर्षभः । यथोक्तो धर्म्मपुत्रेण प्रव्रजन् स्वपुरीं प्रति ॥ २ ॥ रौक्मिणेयेन सहितो युयुधानेन चैव हि । चारुदेष्णेन शाम्बेन गदेन कृतवर्म्मणा ॥ ३ ॥ सारणेन च वीरेण निशठेनोल्मुकेन च । बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥ ४ ॥ द्रौपदीमुत्तराञ्चैव पृथाञ्चाप्यवलोककः । समाश्वासयितुञ्चापि क्षत्रिया निहतेश्वराः ॥ ५ ॥ तानागतान् समीक्ष्यैव धृतराष्ट्रो महीपतिः । प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ॥ ६ ॥ तत्रैव न्यवसत् कृष्णः स्वर्च्चितः पुरुषोत्तमः । विदुरेण महातेजास्तथैव च युयुत्सुना ॥ ७ ॥ वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय । जज्ञे तव पिता राजन् परिक्षित् परवीरहा ॥ ८ ॥ स तु राजा महाराज ब्रह्मास्त्रेणावपीड़ितः । शवो बभूव निश्चेष्टो हर्षशोक-

विवर्द्धनः ॥ ९ ॥ हृष्टानां सिंहनादेन जनानां तत्र निःस्वनः ।
गविश्य प्रदिशः सर्वाः पुनरेव व्युपारमत् ॥ १० ॥ ततः सोऽति-
त्वरः कृष्णो विवेशान्तःपुरं तदा । युयुधानद्वितीयो वै व्यथिते-
न्द्रियमानसः ॥ ११ ॥ ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम् ।
क्रोशन्तीमभिधावेति वासुदेवं पुनः पुनः ॥ १२ ॥ पृष्ठतो द्रौपदी-
च्चैव सुभद्राञ्च यशस्विनीम् । सविक्रोशं सकरुणं बान्धवानां स्त्रियो
नृप ॥ १३ ॥ ततः कृष्णं समासाद्य कुन्तीभोजसुता तदा । प्रोवाच
राजशार्दूल वास्पगद्गदया गिरा ॥ १४ ॥ वासुदेव महाबाहो
सुप्रजा देवकी त्वया । त्वन्नो गतिः प्रतिष्ठा च त्वदायत्तमिदं
कुलम् ॥ १५ ॥ यदुप्रवीर योऽयन्ते स्वस्रीयस्यात्मजः प्रभो ।
अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव ॥ १६ ॥ त्वया ह्येतत्
प्रतिज्ञातमैषीके यदुनन्दन । अहं सञ्जीवयिष्यामि मृतजातमिति
प्रभो ॥ १७ ॥ सोऽयं जातो मृतस्तात पश्यैनं पुरुषर्षभ । उत्त-
राञ्च सुभद्राञ्च द्रौपदीं माञ्च माधव ॥ १८ ॥ धर्म्मपुत्रञ्च भीमञ्च
फाल्गुनं नकुलं तथा । सहदेवञ्च दुर्द्धर्षं सर्व्वान्नस्त्रातुमर्हसि ॥१९॥
अस्मिन् प्राणाः समायत्ताः पाण्डवानां ममैव च । पाण्डोश्च पिण्डो
दाशार्ह तथैव श्वशुरस्य मे ॥ २० ॥ अभिमन्योश्च भद्रं ते प्रियस्य
सदृशस्य च । प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्द्दन ॥ २१ ॥
उत्तरा हि पुरोक्तं वै कथयत्यरिसूदन । अभिमन्योर्वचः कृष्ण
प्रियत्वात्तन्न संशयः ॥ २२ ॥ अब्रवीत् किल दाशार्ह वैराटी-
मार्जुनिस्तदा । मातुलस्य कुलं भद्रे तव पुत्रो गमिष्यति ॥ २३ ॥
गत्वा वृष्ण्यन्धककुलं धनुर्वेदं ग्रहीष्यति । अस्त्राणि च विचि-
त्राणि नीतिशास्त्रञ्च केवलम् ॥ २४ ॥ इत्येतत् प्रणयात्तात सौभद्रः
परवीरहा । कथयामास दुर्द्धर्षस्तथा चैतन्न संशयः ॥ २५ ॥
तास्त्वां वयं प्रणम्येह याचामो मधुसूदन । कुलस्यास्य हिता-
र्थन्त्वं कुरु कल्याणमुत्तमम् ॥ २६ ॥ एवमुक्त्वा तु वार्ष्णेयं पृथा

पृथुललोचना। उच्छ्रित्य बाहू दुःखार्त्ता ताश्चान्याः प्रापतन् भुवि ॥ २७ ॥ अब्रुवंश्च महाराज सर्वाः शास्त्रविलोचनाः। स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥ २८ ॥ एवमुक्ते ततः कुन्तीं पर्य्यगृह्णाज्जनार्द्दनः। भूमौ निपतितां चैनां सान्त्वयामास भारत ॥ २९ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि परिच्छिज्जन्मकथने षट्षष्टोऽध्यायः ॥ ६६ ॥

---

वैशम्पायन उवाच। उत्थितायां पृथायान्तु सुभद्रा भ्रातरं तदा। दृष्ट्वा चुक्रोश दुःखार्त्ता वचनं चेदमब्रवीत् ॥ १ ॥ पुण्डरीकाक्ष पश्य त्वं पौत्रं पार्थस्य धीमतः। परिक्षीणेषु कुरुषु परिक्षीणं गतायुषम् ॥ २ ॥ इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता। सोत्तरायां निपतिता विजये मयि चैव च ॥ ३ ॥ सेयं विदीर्णे हृदये मयि तिष्ठति केशव। यन्न पश्यामि दुर्द्धर्षं सहपुत्रन्तु तं प्रभो ॥ ४ ॥ किन्नु वक्ष्यति धर्मात्मा धर्म्मराजो युधिष्ठिरः। भीमसेनार्जुनौ चापि माद्रवत्याः सुतौ च तौ ॥ ५ ॥ श्रुत्वाभिमन्योस्तनयं जातञ्च मृतमेव च। मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः ॥ ६ ॥ अभिमन्युः प्रियः कृष्ण भ्रातॄणां नात्र संशयः। ते श्रुत्वा किन्नु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्ज्जिताः ॥ ७ ॥ भवितातः परं दुःखं किन्तन्यज्जनार्द्दन। अभिमन्योः सुतात् कृष्ण मृताज्जातादरिन्दम ॥ ८ ॥ साहं प्रसादये कृष्ण त्वामद्य शिरसा नता। पृथेयं द्रौपदी चैव ताः पश्य पुरुषोत्तम ॥ ९ ॥ यदा द्रोणसुतो गर्भान् पाण्डूनां हन्ति माधव। तदा किल त्वया द्रौणिः क्रुद्धेनोक्तोऽरिमर्द्दन ॥ १० ॥ अकामं त्वां करिष्यामि ब्रह्मबन्धो नराधम। अहं सञ्जीवयिष्यामि किरीटितनयात्मजम् ॥ ११ ॥

इत्येतद्वचनं श्रुत्वा जानानाहं बलन्तव । प्रसादये त्वां दुर्द्धर्ष जीवतामभिमन्युजः ॥ १२ ॥ यद्येतत्त्वं प्रतिश्रुत्य न करोषि वचः शुभम् । सफलं वृष्णिशार्दूल मृतां मामवधारय ॥ १३ ॥ अभिमन्योः सुतो वीर न सञ्जीवति यद्ययम् । जीवति त्वयि दुर्द्धर्ष किं करिष्याम्यहं त्वया ॥ १४ ॥ सञ्जीवयैनं दुर्द्धर्षं मृतं त्वमभिमन्युजम् । सदृशाक्षसुतं वीर शस्यं वर्षन्निवाम्बुदः ॥ १५ ॥ त्वं हि केशव धर्म्मात्मा सत्यवान् सत्यविक्रमः । सतीं वाचमृतां कर्त्तुमर्हसि त्वमरिन्दम ॥ १६ ॥ इच्छन्नपि हि लोकांस्त्रीन् जीवयेथा मृतानिमान् । किं पुनर्दयितं जातं स्वस्रीयस्यात्मजं मृतम् ॥ १७ ॥ प्रभावज्ञास्मि ते कृष्ण तस्मात्त्वां याचयाम्यहम् । कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहम् ॥ १८ ॥ स्वसेति वा महाबाहो हतपुत्रेति वा पुनः । प्रपन्नां मामियञ्चेति दयां कर्त्तुमिहार्हसि ॥१९॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि परिक्षिज्जन्मकथने सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

वैशम्पायन उवाच। एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्च्छितः । तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनम् ॥ १ ॥ वाक्येनैतेन हि तदा तं जनं पुरुषर्षभः । ह्लादयामास स विभुर्घर्म्मार्त्तं सलिलैरिव ॥ २ ॥ ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव । अर्च्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ ३ ॥ अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्व्वतो दिशम् । घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ॥ ४ ॥ अस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः । वृद्धाभिश्चाभिरामाभिः परिचारार्थमावृतम् ॥ ५ ॥ दक्षैश्च परितो धीर भिषग्भिः कुशलैस्तथा । ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्व्वशः ॥ ६ ॥ द्रव्याणि स्थापितानि स्म विधिवत् कुशलैर्जनैः ।

तथा युक्तञ्च तद्दृष्ट्वा जन्मवेश्म पितुस्तव। हृष्टोऽभवद्धृषीकेशः साधु साध्विति चाब्रवीत् ॥ ७ ॥ तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तदा। द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ॥ ८ ॥ अयमायाति ते भद्रे श्वशुरो मधुसूदनः। पुराणर्षिरचिन्त्यात्मा समीपमपराजितः ॥ ९ ॥ सापि वाष्पकलां वाचं निगृह्याश्रूणि चैव ह। दृष्ट्वा ताभवद्देवी देववत् कृष्णमीयुषी ॥ १० ॥ सा तथा दूयमानेन हृदयेन तपस्विनी। दृष्ट्वा गोविन्दमायान्तं कृपणं पर्य्यदेवयत् ॥ ११ ॥ पुण्डरीकाक्ष पश्यावां बालेन हि विनाकृतौ। अभिमन्युञ्च माञ्चैव हतौ तुल्यं जनार्द्दन ॥ १२ ॥ वार्ष्णेय मधुहन् वीर शिरसा त्वां प्रसादये। द्रोणपुत्रास्त्रनिर्द्दग्धं जीवयैनं ममात्मजम् ॥ १३ ॥ यदि स्म धर्म्मराज्ञा वा भीमसेनेन वा पुनः। त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् ॥ १४ ॥ अजानतीमिषीकेयं जनित्रीं हन्त्विति प्रभो। अहमेव विनष्टा स्यां नैतदेवं गतं भवेत् ॥ १५ ॥ गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनम्। कृत्वा नृशंसं दुर्बुद्धिर्द्रौणिः किं फलमश्नुते ॥ १६ ॥ सा त्वां प्रसाद्य शिरसा याचे शत्रुनिवर्हणम्। प्राणांस्त्यक्ष्यामि गोविन्द नायं सञ्जीवते यदि ॥ १७ ॥ अस्मिन् हि बहवः साधो ये ममासन् मनोरथाः। ते द्रोणपुत्रेण हताः किन्नु जीवामि केशव ॥ १८ ॥ आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्द्दन। अभिवादयिष्ये त्वां कृष्ण तदिदं वितथीकृतम् ॥ १९ ॥ चपलाक्षस्य दायादे मृतेऽस्मिन् पुरुषर्षभ। विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः ॥ २० ॥ चपलाक्षः किलातीव प्रियस्ते मधुसूदन। सुतं पश्य त्वमस्यैनं ब्रह्मास्त्रेण निपातितम् ॥ २१ ॥ कृतघ्नोऽयं नृशंसोऽयं यथास्य जनकस्तथा। यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनम् ॥ २२ ॥ मया चैतत् प्रतिज्ञातं रणमूर्द्धनि केशव। अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिव ॥ २३ ॥ तच्च नाकरवं

कृष्णा नृशंसा जीवितप्रिया । इदानीं मां गतां तत्र किन्नु वक्ष्यति फाल्गुनिः ॥ २४ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि परिक्षिज्जन्मकथने अष्टषष्टोऽध्यायः ॥ ६८ ॥

---

वैशम्पायन उवाच । सैवं विलप्य करुणं सोन्मादेव तपस्विनी । उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ॥ १ ॥ तान्तु दृष्ट्वा निपतितां हतपुत्रपरिच्छदाम् । चुक्रोश कुन्ती दुःखार्त्ता सर्वाश्च भरतस्त्रियः ॥ २ ॥ मुहूर्त्तमिव राजेन्द्र पाण्डवानां निवेशनम् । अप्रेक्षणीयमभवदार्त्तस्वरनिनादितम् ॥ ३ ॥ सा मुहूर्त्तञ्च राजेन्द्र पुत्रशोकाभिपीड़िता । कश्मलाभिहता वीर वैराटी त्वभवत्तदा ॥४॥ प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ । अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ॥ ५ ॥ धर्म्मज्ञस्य सुतः स त्वमधर्म्मं नावबुध्यसे । यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ ६ ॥ पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरन्त्विदम् । दुर्म्मरं प्राणिनां वीर कालेऽप्राप्ते कथञ्चन ॥ ७ ॥ याहं त्वया विनाद्येह पत्या पुत्रेण चैव ह । मर्त्तव्ये सति जीवामि हतस्वस्तिरकिञ्चना ॥ ८ ॥ अथवा धर्म्मराज्ञाहमनुज्ञाता महाभुज । भक्षयिष्ये विषं घोरं प्रवेक्ष्ये वा हुताशनम् ॥ ९ ॥ अथवा दुर्द्धरं तात यदिदं मे सहस्रधा । पतिपुत्रविहीनाया हृदयं न विदीर्य्यते ॥ १० ॥ उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीम् । आर्त्तामुपप्लुतां दीनां निमग्नां शोकसागरे ॥ ११ ॥ आर्य्याञ्च पश्य पाञ्चालीं सात्वतीञ्च तपस्विनीम् । माञ्च पश्य सुदुःखार्त्तां व्याधविद्धां मृगीमिव ॥ १२ ॥ उत्तिष्ठ पश्य वदनं लोकनाथस्य धीमतः । पुण्डरीकपलाशाक्षं पुरेव चपलेक्षणम् ॥ १३ ॥ एवं विप्रलपन्तीन्तां दृष्ट्वा निपातितां

पुनः । उत्तरां ताः स्त्रियः सर्वाः पुनरुत्थापयंस्ततः ॥ १४ ॥
उत्थाय च पुनर्धैर्यात्तदा मत्स्यपतेः सुता । प्राञ्जलिः पुण्डरी-
काक्षं भूमाविवाभ्यवादयत् ॥ १५ ॥ श्रुत्वा स तस्या विपुलं विलापं
पुरुषर्षभः । उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं प्रत्यसंहरत् ॥ १६ ॥
प्रतिजज्ञे च दाशार्हस्तस्य जीवितुमच्युतः । अब्रवीच्च विशुद्धात्मा
सर्वं विश्रावयन् जगत् ॥ १७ ॥ न ब्रवीम्युत्तरे मिथ्या सत्यमेत-
द्भविष्यति । एष सञ्जीवयाम्येनं पश्यतां सर्वदेहिनाम् ॥ १८ ॥
नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन । न च युद्धात् परा-
वृत्तस्तथा संजीवतामयम् ॥ १९ ॥ यथा मे दयितो धर्मो ब्राह्म-
णाश्च विशेषतः । अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा
॥ २० ॥ यथाहं नाभिजानामि विजयेन कदाचन । विरोधन्तेन
सत्येन मृतो जीवत्वयं शिशुः ॥ २१ ॥ यथा सत्यञ्च धर्म्मश्च मयि
नित्यं प्रतिष्ठितौ । तथा मृतः शिशुरयं जीवितामभिमन्युजः ॥२२॥
यथा कंसश्च केशी च धर्म्मेण निहतो मया । तेन सत्येन बालोऽद्य
पुनः सञ्जीवतामयम् ॥ २३ ॥ इत्युक्तो वासुदेवेन स बालो भरत-
र्षभ । शनैः शनैर्महाराज प्रास्पन्दत सचेतनः ॥ २४ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि परीक्षितः कृष्णात्
सञ्जीवने एकोनसप्ततोऽध्यायः ॥ ६९ ॥

---

वैशम्पायन उवाच । ब्रह्मास्त्रन्तु यदा राजन् कृष्णेन प्रति-
संहृतम् । तदा तद्वेश्म त्वत्पित्रा तेजसाभिविदीपितम् ॥ १ ॥
ततो रक्षांसि सर्वाणि नेशुस्त्यक्त्वा गृहन्तु तत् । अन्तरीक्षे च
वागासीत् साधु केशव साध्विति ॥ २ ॥ तदस्त्रं ज्वलितञ्चापि
पितामहमगात्तदा । ततः प्राणान् पुनर्लेभे पिता तव जनेश्वर

॥ ३ ॥ व्यचेष्टत च बालोऽसौ यथोत्साहं यथाबलम् । बभूवु-
र्मुदिता राजंस्ततस्ता भरतस्त्रियः ॥ ४ ॥ ब्राह्मणान् वाचया-
मासुर्गोविन्दस्यैव शासनात् । ततस्ता मुदिताः सर्व्वाः प्रशशंसु-
र्जनार्द्दनम् ॥ ५ ॥ स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः ।
कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा ॥ ६ ॥ स्त्रियश्चान्या
नृसिंहानां बभूवुर्हृष्टमानसाः । तत्र मल्ला नटाश्चैव ग्रन्थिकाः
सौख्यशायिकाः ॥ ७ ॥ सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्द्दनम् ।
कुरुवंशस्तवाख्याभिराशीर्भिर्भरतर्षभ ॥ ८ ॥ उत्थाय तु यथा-
कालमुत्तरा यदुनन्दनम् । अभ्यवादयत प्रीता सह पुत्रेण भारत
॥ ९ ॥ तस्य कृष्णो ददौ हृष्टो बहु रत्नं विशेषतः । यथान्ये
वृष्णिशार्दूला नाम चास्याकरोत् प्रभुः ॥ १० ॥ पितुस्तव महा-
राज सत्यसन्धो जनार्द्दनः । परिक्षीणे कुले यस्मात् जातोऽय-
मभिमन्युजः ॥ ११ ॥ परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा ।
सोऽवर्द्धत यथाकालं पिता तव जनाधिप ॥ १२ ॥ मनः प्रह्लादन-
श्चासीत् सर्व्वलोकस्य भारत । मासजातस्तु ते वीर पिता भवति
भारत ॥ १३ ॥ अथाजग्मुः सुबहुलं रत्नमादाय पाण्डवाः । तान्
समीपगतान् श्रुत्वा निर्य्ययुर्वृष्णिपुङ्गवाः ॥ १४॥ अलंचक्रुश्च माल्यौघैः
पुरुषा नागसाह्वयम् । पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि
॥ १५ ॥ वेश्मानि समलंचक्रुः पौराश्चापि जनेश्वर । देवतायतना-
नाञ्च पूजाः सुविविधास्तथा ॥ १६ ॥ सन्दिदेशाथ विदुरः पाण्डु-
पुत्रप्रियेप्सया । राजमार्गाश्च तत्रासन् सुमनोभिरलंकृताः ॥ १७ ॥
शुशुभे तत्पुरञ्चापि समुद्रौघनिभस्वनम् । नर्त्तकैश्चापि नृत्यद्भि-
र्गायकानाञ्च निःस्वनैः ॥ १८ ॥ आसीद्वैश्रवणस्येव निवासस्तत्
पुरन्तदा । वन्दिभिश्च नरै राजन् स्त्रीसहायैश्च सर्व्वशः ॥ १९ ॥
तत्र तत्र विविक्तेषु समन्तादुपशोभितम् । पताका धूयमानाश्च
समन्तान्मातरिश्वना ॥ २०॥ अदर्शयन्निव तदा कुरून् वै दक्षिणो-

न्तरान् । अघोषयंस्तदा चापि पुरुषा राजधूर्गताः । सर्वराष्ट्र-विहारोऽद्य रत्नाहरणलक्षणः ॥ २१ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि पाण्डवागमने सप्ततितमोऽध्यायः ॥ ७० ॥

---

वैशम्पायन उवाच । तान् समीपगतान् श्रुत्वा पाण्डवान् शत्रुकर्षणः । वासुदेवः सहामात्यः प्रत्युद्यातो दिदृक्षया ॥ १ ॥ ते समेत्य यथाधर्मं पाण्डवा वृष्णिभिः सह । विविशुः सहिता राजन् पुरं वारणसाह्वयम् ॥ २ ॥ महतस्तस्य सैन्यस्य खुर-नेमिस्वनेन ह । द्यावापृथिव्यौ खञ्चैव सर्वमासीत् समावृतम् ॥३॥ ते कोषानग्रतः कृत्वा विविशुः स्वपुरन्तदा । पाण्डवाः प्रीतमनसः सामात्याः ससुहृद्गणाः ॥ ४ ॥ ते समेत्य यथान्यायं धृतराष्ट्रं जनाधिपम् । कीर्त्तयन्तः स्वनामानि तस्य पादौ ववन्दिरे ॥ ५ ॥ धृतराष्ट्रादनु च ते गान्धारीं सुबलात्मजाम् । कुन्तीञ्च राज-शार्दूल तदा भरतसत्तमाः ॥ ६ ॥ विदुरं पूजयित्वा च वैश्यापुत्रं समेत्य च । पूज्यमानाः स्म ते वीरा व्यरोचन्त विशाम्पते ॥ ७ ॥ ततस्तत् परमाश्चर्य्यं विचित्रमहदद्भुतम् । शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत ॥ ८ ॥ तदुपश्रुत्य तत् कर्म्म वासुदेवस्य धीमतः । पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनम् ॥ ९ ॥ ततः कतिपयाहस्य व्यासः सत्यवतीसुतः । आजगाम महातेजा नगरं नागसाह्वयम् ॥ १० ॥ तस्य सर्व्वे यथान्यायं पूजाञ्चक्रुः कुरूद्वहाः । सह वृष्ण्यन्धकव्याघ्रैरुपासाञ्चक्रिरे तदा ॥ ११ ॥ तत्र नानाविधा-काराः कथाः समभिकीर्त्त्य वै । युधिष्ठिरो धर्म्मसुतो व्यासं वचनमब्रवीत् ॥ १२ ॥ भवत्प्रसादाद्भगवन् यदिदं रत्नमाहृतम् । उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ ॥ १३ ॥ तमनुज्ञातु-

मिच्छामि भवता मुनिसत्तम। त्वदधीना वयं सर्वे कृष्णस्य च महात्मनः॥ १४॥

व्यास उवाच। अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम्। यजस्व वाजिमेधेन विधिवद्दक्षिणावता॥ १५॥ अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम्। तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः॥ १६॥

वैशम्पायन उवाच। इत्युक्तः स तु धर्म्मात्मा कुरुराजो युधिष्ठिरः। अश्वमेधस्य कौरव्य चकाराहरणे मतिम्॥ १७॥ समनुज्ञाप्य तत् सर्वं कृष्णद्वैपायनं नृपः। वासुदेवमथाभ्येत्य वाग्मी वचनमब्रवीत्॥ १८॥ देवकी सुप्रजा देवी त्वया पुरुषसत्तम। यद्ब्रूयां त्वां महाबाहो तत् कृथास्त्वमिहाच्युत॥ १९॥ त्वत्प्रभावाज्जितान् भोगानश्नीम यदुनन्दन। पराक्रमेण बुद्धा च त्वयेयं निर्ज्जिता मही॥ २०॥ दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः। त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम्॥ २१॥ त्वं हि यज्ञोऽक्षरः सर्वस्त्वं धर्म्मस्त्वं प्रजापतिः। त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः॥ २२॥

वासुदेव उवाच। त्वमेवैतन्महाबाहो वक्तुमर्हस्यरिन्दम। त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः॥ २३॥ त्वञ्चाद्य कुरुवीराणां धर्म्मेण हि विराजसे। गुणीभूताः स्म ते राजंस्त्वन्नो राजा गुरुर्मतः॥ २४॥ यजस्व मदनुज्ञातः प्राप्य एष क्रतुस्त्वया। युनक्तु नो भवान् कार्य्ये यत्र वाञ्छसि भारत। सत्यन्ते प्रतिजानामि सर्वं कर्त्तास्मि तेऽनघ॥ २५॥ भीमसेनार्ज्जुनौ चैव तथा माद्रवतीसुतौ। इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिव॥ २६॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि व्यासगमने एकसप्ततोऽध्यायः॥ ७१॥

वैशम्पायन उवाच। एवमुक्तस्तु कृष्णेन धर्म्मपुत्रो युधिष्ठिरः। व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत्॥ १॥ यदा कालं भवान् वेत्ति हयमेधस्य तत्त्वतः। दीक्षयस्व तदा मां त्वं त्वय्यायत्तो हि मे क्रतुः॥ २॥

व्यास उवाच। अहं पैलोऽथ कौन्तेय याज्ञवल्क्यस्तथैव च। विधानं यद्यथाकालं तत्कर्त्तारो न संशयः॥ ३॥ चैत्र्यां हि पौर्णमास्यान्तु तव दीक्षा भविष्यति। सम्भाराः संभ्रियन्ताञ्च यज्ञार्थं पुरुषर्षभ॥ ४॥ अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः। मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये॥ ५॥ तमुत्सृज यथाशास्त्रं पृथिवीं सागराम्बराम्। स पर्य्येतु यशो दीप्तं तव पार्थिव दर्शयन्॥ ६॥

वैशम्पायन उवाच। इत्युक्तः स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः। चकार सर्वं राजेन्द्र यथोक्तं ब्रह्मवादिना॥ ७॥ सम्भाराश्चैव राजेन्द्र सर्व्वे सङ्कल्पिताभवन्॥ ८॥ स सम्भारान् समाहृत्य नृपो धर्म्मसुतस्तदा। न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै॥ ९॥ ततोऽब्रवीन्महातेजा व्यासो धर्मात्मजं नृपम्। यथाकालं यथायोगं सज्जाः स्म तव दीक्षणे॥ १०॥ स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव। तत्र योग्यं भवेत् किञ्चिद्रौक्मं तत् क्रियतामिति॥ ११॥ अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम्। सुगुप्तश्चरताञ्चापि यथाशास्त्रं यथाविधि॥ १२॥

युधिष्ठिर उवाच। अयमश्वो यथा ब्रह्मन्नुत्सृष्टः पृथिवीमिमाम्। चरिष्यति यथाकामं तत्र वै संविधीयताम्॥ १३॥ पृथिवीं पर्य्यटन्तं हि तुरङ्गं कामचारिणम्। कः पालयेदिति मुने तद्भवान् वक्तुमर्हति॥ १४॥

वैशम्पायन उवाच। इत्युक्तः स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत्। भीमसेनादवरजः श्रेष्ठः सर्वधनुष्मताम्॥ १५॥ जिष्णुः

सहिष्णुर्धृष्णुश्च स एनं पालयिष्यति । शक्तः स हि महीं जेतुं निवातकवचान्तकः ॥ १६ ॥ तस्मिन् ह्यस्त्राणि दिव्यानि दिव्यं संहननं तथा । दिव्यं धनुश्चेषुधी च स एनमनुयास्यति ॥ १७ ॥ स हि धर्मार्थकुशलः सर्व्वविद्याविशारदः । यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयम् ॥ १८ ॥ राजपुत्रो महाबाहुः श्यामो राजीवलोचनः । अभिमन्योः पिता वीरः स एनं पालयिष्यति ॥ १९ ॥ भीमसेनोऽपि तेजस्वी कौन्तेयोऽमितविक्रमः । समर्थो रक्षितुं राष्ट्रं नकुलश्च विशाम्पते ॥ २० ॥ सहदेवस्तु कौरव्य समाधास्यति बुद्धिमान् । कुटुम्बतन्त्रं विधिवत् सर्व्वमेव महायशाः ॥ २१ ॥ तत्तु सर्व्वं यथान्यायमुक्तः कुरुकुलोद्वहः । चकार फाल्गुनञ्चापि सन्दिदेश हयम्प्रति ॥ २२ ॥

युधिष्ठिर उवाच । एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् । त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥ २३ ॥ ये चापि त्वां महाबाहो प्रत्युद्यान्ति नराधिपाः । तैर्विग्रहो यथा न स्यात्तथा कार्य्यं त्वयानघ ॥ २४ ॥ आख्यातव्यश्च भवता यज्ञोऽयं मम सर्व्वशः । पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥२५॥

वैशम्पायन उवाच । एवमुक्त्वा स धर्म्मात्मा भ्रातरं सव्यसाचिनम् । भीमञ्च नकुलञ्चैव पुरगुप्तौ समादधत् ॥ २६ ॥ कुटुम्बतन्त्रे च तदा सहदेवं युधां पतिम् । अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः ॥ २७ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वरक्षार्थमर्जुननियोगे द्विसप्ततोऽध्यायः ॥ ७२ ॥

---

वैशम्पायन उवाच । दीक्षाकाले तु संप्राप्ते ततस्ते सुमहर्त्विजः । विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् ॥ १ ॥ कृत्वा

स पशुबन्धांश्च दीक्षितः पाण्डुनन्दनः। धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ॥ २ ॥ हयश्च हयमेधार्थं स्वयञ्च ब्रह्मवादिना। उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ॥ ३ ॥ स राजा धर्मराट् राजन् दीक्षितो विबभौ तदा। हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ॥ ४ ॥ कृष्णाजिनी दण्डपाणिः क्षौमवासाः स धर्मजः। विबभौ द्युतिमान् भूयः प्रजापतिरिवाध्वरे ॥ ५ ॥ तथैवास्यर्त्विजः सर्वे तुल्यवेशा विशाम्पते। बभूवुरर्जुनश्चापि प्रदीप्त इव पावकः ॥ ६ ॥ श्वेताश्वः कृष्णसारं तं ससाराश्वं धनञ्जयः। स्वस्ति तेऽस्तु व्रजाविघ्नं पुनश्चेहीति भारत ॥ ७ ॥ अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन्। नैनं पश्याम संमर्द्दे धनुरेतत् प्रदृश्यते ॥ ८ ॥ एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः। ब्राह्मणाश्च महीपाल बहवो वेदपारगाः ॥ ९ ॥ विधिवत् पृथिवीपाल धर्मराजस्य शासनात्। विक्षिपन् गाण्डिवं राजन् बद्धगोधाङ्गुलित्रवान् ॥ १० ॥ तमश्वं पृथिवीपाल मुदा-युक्तः ससार च। आकुमारं तदा राजन्नागमत्तत् पुरं विभो ॥ ११ ॥ द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनञ्जयम्। तेषामन्योऽन्यसंमर्द्दादुष्मेव समजायत ॥ १२ ॥ दिदृक्षूणां हयन्तञ्च तञ्चैव हयसारिणम्। ततः शब्दो महाराज दिशः खं प्रतिपूरयन् ॥ १३ ॥ बभूव प्रेक्षतां नृणां कुन्तीपुत्रं धनञ्जयम्। एष गच्छति कौन्तेय तुरगश्चैव दीप्तिमान् ॥ १४ ॥ यमन्वेति महाबाहुः संस्पृशन्धनुरुत्तमम्। एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ॥ १५ ॥ स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चेहीति भारत। अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् ॥ १६ ॥ नैनं पश्याम संमर्द्दे धनुरेतत् प्रदृश्यते। एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः ॥ १७ ॥ स्वस्ति गच्छत्वरिष्टो वै पन्थानमकुतोभयम्। निवृत्तमेनं द्रक्ष्यामः पुनरेष्यति च ध्रुवम् ॥ १८ ॥ एवमाद्या मनुष्याणां स्त्रीणाञ्च भरत-

र्षभ । शुश्राव मधुरा वाचः पुनः पुनरुदारधीः ॥ १९ ॥ याज्ञ-
वल्क्यस्य शिष्यश्च कुशलो यज्ञकर्म्मणि । प्रायात् पार्थेन सहितः
शान्त्यर्थं वेदपारगः ॥ २० ॥ ब्राह्मणाश्च महीपालो बहवो वेद-
पारगाः । अनुजग्मुर्महात्मानं क्षत्रियाश्च विशाम्पते । विधिवत्
पृथिवीपाल धर्म्मराजस्य शासनात् ॥ २१ ॥ पाण्डवैः पृथिवीमश्वो
निर्ज्जितामस्त्रतेजसा । चचार स महाराज यथादेशञ्च सत्तम ॥२२॥
तत्र युद्धानि वृत्तानि यान्यासन् पाण्डवस्य ह । तानि वक्ष्यामि
ते वीर विचित्राणि महान्ति च ॥ २३ ॥ स हयः पृथिवीं राजन्
प्रदक्षिणमवर्त्तत । ससारोत्तरतः पूर्वं तन्निबोध महीपते ॥ २४ ॥
अवमृद्नन् स राष्ट्राणि पार्थिवानां हयोत्तमः । शनैस्तदा परि-
ययौ श्वेताश्वश्च महारथः ॥ २५ ॥ तत्र संगणना नास्ति राज्ञा-
मयुतशस्तदा । येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः ॥ २६ ॥
किराता यवना राजन् बहवोऽपि धनुर्द्धराः । म्लेच्छाश्चान्ये बहु-
विधाः पूर्वं ये निकृता रणे ॥ २७ ॥ आर्य्याश्च पृथिवीपालाः
प्रहृष्टनरवाहनाः । समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्म्मदाः ॥२८॥
एवं वृत्तानि युद्धानि तत्र तत्र महीपते । अर्जुनस्य महीपालै-
र्नानादेशसमागतैः ॥ २९ ॥ यानि तूभयतो राजन् प्रतप्तानि
महान्ति च । तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवानघ ॥ ३० ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि अश्वानुसारे
त्रिसप्ततोऽध्यायः ॥ ७३ ॥

---

वैशम्पायन उवाच । त्रिगर्त्तैरभवद्युद्धं कृतवैरैः किरीटिनः ।
महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः ॥ १ ॥ ते समाज्ञाय संप्राप्तं
यज्ञियं तुरगोत्तमम् । विषयान्ते ततो वीर दंशिताः पर्य्यवार-
यन् ॥ २ ॥ रथिनो बद्धतूणीराः सदश्वैः समलंकृतैः । परिवार्य्य

हयं राजन् ग्रहीतुं संप्रचक्रमुः ॥ ३ ॥ ततः किरीटी सञ्चिन्त्य तेषां तत्र चिकीर्षितम्। वारयामास तान् वीरान् सान्त्वपूर्वमरिन्दम ॥ ४ ॥ तदनादृत्य ते सर्वे शरैरभ्यहनंस्तदा। तमोरजोभ्यां संच्छन्नांस्तान् किरीटी न्यवारयत् ॥ ५ ॥ तानब्रवीत्ततो जिष्णुः प्रहसन्निव भारत। निवर्त्तध्वमधर्मज्ञाः श्रेयो जीवितमेव च ॥ ६ ॥ स हि वीरः प्रयास्यन् वै धर्मराजेन वारितः। हतबान्धवा न ते पार्थ हन्तव्याः पार्थिवा इति ॥ ७ ॥ स तदा तद्वचः श्रुत्वा धर्मराजस्य धीमतः। तान्निवर्त्तध्वमित्याह न न्यवर्त्तन्त चापि ते ॥ ८ ॥ ततस्त्रिगर्त्तराजानं सूर्य्यवर्माणमाहवे। विजित्य शरजालेन प्रजहास धनञ्जयः ॥ ९ ॥ ततस्ते रथघोषेण रथनेमिस्वनेन च। पूरयन्तो दिशः सर्वा धनञ्जयमुपाद्रवन् ॥ १० ॥ सूर्य्यवर्मा ततः पार्थं शराणां नतपर्वणाम्। शतान्यमुञ्चद्राजेन्द्र लघुस्त्वनभिदर्शयन् ॥ ११ ॥ तथैवान्ये महेष्वासा ये च तस्यानुयायिनः। मुमुचुः शरवर्षाणि धनञ्जयवधैषिणः ॥ १२ ॥ स तान् ज्यामुखनिर्मुक्तैर्बहुभिः सुबहून् शरान्। चिच्छेद पाण्डवो राजंस्ते भूमौ न्यपतंस्तदा ॥ १३ ॥ केतुवर्मा तु तेजस्वी तस्यैवावरजो युवा। युयुधे भ्रातुरर्थाय पाण्डवेन यशस्विना ॥ १४ ॥ तमापतन्तं संप्रेक्ष्य केतुवर्माणमाहवे। अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परवीरहा ॥ १५ ॥ केतुवर्मण्यभिहते धृतवर्मा महारथः। रथेनाशु समुत्पत्य शरैर्जिष्णुमवाकिरत् ॥ १६ ॥ तस्य तां शीघ्रतामीक्ष्य तुतोषातीव वीर्य्यवान्। गुडाकेशो महातेजा बालस्य धृतवर्मणः ॥ १७ ॥ न सन्दधानं ददृशे नाददानञ्च तं तदा। किरन्तमेव स शरान् ददृशे पाकशासनिः ॥ १८ ॥ स तु तं पूरयामास धृतवर्माणमाहवे। मनसा स मुहूर्त्तं वै रणे समभिहर्षयन् ॥ १९ ॥ तं पन्नगमिव क्रुद्धं कुरुवीरः स्मयन्निव। प्रीतिपूर्वं महाबाहुः प्राणैर्न व्यपरोपयत् ॥ २० ॥ स तथा रक्ष्यमाणो

वै पार्थेनामिततेजसा । धृतवर्म्मा शरं दीप्तं मुमोच विजये तदा ॥ २१ ॥ स तेन विजयस्तूर्णमासीद्विद्धः करे भृशम् । मुमोच गाण्डीवं मोहात्तत् पपाताथ भूतले ॥ २२ ॥ धनुषः पततस्तस्य सव्यसाचिकराद्विभो । बभूव सदृशं रूपं शक्रचापस्य भारत ॥२३॥ तस्मिन्निपतिते दिव्ये महाधनुषि पार्थिव । जहास सस्वनं हासं धृतवर्म्मा महाहवे ॥ २४ ॥ ततो रोषार्द्दितो जिष्णुः प्रमृज्य रुधिरं करात् । धनुरादत्त तद्दिव्यं शरवर्षैर्ववर्ष च ॥ २५ ॥ ततो हल-हलाशब्दो दिवस्पृगभवत्तदा । नानाविधानां भूतानां तत्कर्म्माणि प्रशंसताम् ॥ २६ ॥ ततः सम्प्रेक्ष्य संक्रुद्धं कालान्तकयमोपमम् । जिष्णुं त्रैगर्त्तका योधाः परीताः पर्य्यवारयन् ॥ २७ ॥ अभि-सृत्य परीप्सार्थं ततस्ते धृतवर्म्मणः । परिवव्रुर्गुडाकेशं तत्रा-क्रुध्यद्धनञ्जयः ॥ २८ ॥ ततो योधान् जघानाशु तेषां स दश चाष्ट च । महेन्द्रवज्रप्रतिमैरायसैर्बहुभिः शरैः ॥ २९ ॥ तान् संप्रभग्नान् संप्रेक्ष्य त्वरमाणो धनञ्जयः । शरैराशीविषाकारै-र्जघान स्वनवद्धसन् ॥ ३० ॥ ते भग्नमनसः सर्व्वे त्रैगर्त्तकमहारथाः । दिशोऽभिदुद्रुवूराजन् धनञ्जयशरार्द्दिताः ॥ ३१ ॥ तमूचुः पुरुष-व्याघ्रं संशप्तकनिसूदनम् । तवास्म किङ्कराः सर्व्वे सर्व्वे वै वशगा-स्तव ॥ ३२ ॥ आज्ञापयस्व नः पार्थ प्रह्वान् प्रेष्यानवस्थितान् । करिष्यामः प्रियं सर्व्वं तव कौरवनन्दन ॥ ३३ ॥ एतदाज्ञाय वचनं सर्व्वांस्तानब्रवीत्तदा । जीवितं रक्षत नृपाः शासनं प्रति-गृह्यताम् ॥ ३४ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे चतुःसप्ततोऽध्यायः ॥ ७४ ॥

---

वैशम्पायन उवाच । प्रागज्योतिषमथाभ्येत्य व्यचरत् स

हयोत्तमः। भगदत्तात्मजस्तत्र निर्ययौ रणकर्कशः॥ १॥ स हयं पाण्डुपुत्रस्य विषयान्तमुपागतम्। युयुधे भरतश्रेष्ठ वज्रदत्तो महीपतिः॥ २॥ सोऽभिनिर्याय नगरात् भगदत्तसुतो नृपः। अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ॥ ३॥ तयालक्ष्य महाबाहुः कुरूणामृषभस्तदा। गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत्॥ ४॥ ततो गाण्डीवनिर्मुक्तैरिषुभिर्मोहितो नृपः। हयमुत्सृज्य तं वीरस्ततः पार्थमुपाद्रवत्॥ ५॥ पुनः प्रविश्य नगरं दंशितः स नृपोत्तमः। आरुह्य नागप्रवरं निर्ययौ रणकर्कशः॥ ६॥ पाण्डरेणातपत्रेण ध्रियमाणेन मूर्द्धनि। दोधूयता चामरेण श्वेतेन च महारथः॥ ७॥ ततः पार्थं समासाद्य पाण्डवानां महारथम्। आह्वयामास वीभत्सुं बाल्यान्मोहाच्च संयुगे॥ ८॥ स वारणं नगप्रख्यं प्रभिन्नकरटामुखम्। प्रेषयामास संक्रुद्धः श्वेताश्वं प्रति पार्थिवः॥ ९॥ विक्षरन्तं महामेघं परवारणवारणम्। शास्त्रवत् कल्पितं सङ्ख्ये विवशं युद्धदुर्म्मदम्॥ १०॥ प्रचोद्यमानः स गजस्तेन राज्ञा महाबलः। तदाङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरम्॥ ११॥ तमापतन्तं संप्रेक्ष्य क्रुद्धो राजन् धनञ्जयः। भूमिष्ठो वारणगतं योधयामास भारत॥ १२॥ वज्रदत्तस्ततः क्रुद्धो मुमोचाशु धनञ्जये। तोमरानग्निसङ्काशान् शलभानिव वेगितान्॥ १३॥ अर्जुनस्तानसंप्राप्तान् गाण्डीवप्रभवैः शरैः। द्विधा त्रिधा च चिच्छेद ख एव खगमैस्तदा॥ १४॥ स तान् दृष्ट्वा तथा छिन्नांस्तोमरान् भगदत्तजः। इषूनसक्तांस्त्वरितः प्राहिणोत् पाण्डवं प्रति॥ १५॥ ततोऽर्जुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान्। प्रेषयामास संक्रुद्धो भगदत्तात्मजं प्रति॥ १६॥ स तैर्विद्धो महातेजा वज्रदत्तो महामृधे। भृशाहतः पपातोर्व्यां न त्वेनमजहात् स्मृतिः॥ १७॥ ततः स पुनरारुह्य वारणप्रवरं रणे। अव्यग्रः प्रेषयामास जयार्थी विजयं प्रति॥१८॥

तस्मै बाणांस्ततो जिष्णुर्निर्मुक्ताशीविषोपमान् । प्रेषयामास संक्रुद्धो ज्वलितज्वलनोपमान् ॥ १९ ॥ स तैर्विद्धो महानागो विस्रवन् रुधिरं बभौ । गैरिकाक्तमिवाम्भोऽद्रिर्बहुप्रस्रवणं तदा ॥ २० ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

---

वैशम्पायन उवाच । एवं त्रिरात्रमभवद्युद्धं भरतर्षभ । अर्ज्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः ॥ १ ॥ ततश्चतुर्थे दिवसे वज्रदत्तो महाबलः । जहास सस्वनं हासं वाक्यञ्चेदमथाब्रवीत् ॥ २ ॥ अर्ज्जुनार्ज्जुन तिष्ठस्व न मे जीवन् विमोच्यसे । त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि ॥ ३ ॥ त्वया वृद्धो मम पिता भगदत्तः पितुः सखा । हतो वृद्धोपचायित्वात् शिशुं मामद्य योधय ॥ ४ ॥ इत्येवमुक्त्वा संक्रुद्धो वज्रदत्तो नराधिपः । प्रेषयामास कौरव्य वारणं पाण्डवं प्रति ॥ ५ ॥ संप्रेष्यमाणो नागेन्द्रो वज्रदत्तेन धीमता । उत्पतिष्यन्निवाकाशमभिदुद्राव पाण्डवम् ॥६॥ अग्रहस्तसमुक्तेन शीकरेण स नागराट् । समैक्षत गुड़ाकेशं शैलं नीलमिवाम्बुदः ॥ ७ ॥ स तेन प्रेषितो राजा मेघवद्विनदन्मुहुः । मुखाड़म्बरसंह्रादैरभ्यद्रवत फाल्गुनम् ॥ ८ ॥ स नृत्यन्निव नागेन्द्रो वज्रदत्तप्रचोदितः । आससाद द्रुतं राजन् कौरवाणां महारथम् ॥ ९ ॥ तमायान्तमथालक्ष्य वज्रदत्तस्य वारणम् । गाण्डीवमाश्रित्य बली न व्यकम्पत शत्रुहा ॥ १० ॥ चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपते । कार्य्यविघ्नमनुस्मृत्य पूर्ववैरञ्च भारत ॥ ११ ॥ ततस्तं वारणं क्रुद्धः शरजालेन पाण्डवः । निवारयामास तदा वेलेव मकरालयम् ॥ १२ ॥ स नागप्रवरः श्रीमानर्ज्जुनेन निवारितः । तस्थौ शरैर्विभिन्नाङ्गः श्वाविच्छललितो

यथा ॥ १३ ॥ निवारितं गजं दृष्ट्वा भगदत्तसुतो नृपः । उत्ससर्ज्ज
शितान् वाणानर्जुनं क्रोधमूर्च्छितः ॥ १४ ॥ अर्जुनस्तु महाबाहुः
शरैररिनिघातिभिः । वारयामास तान् वाणांस्तदद्भुतमिवा-
भवत् ॥ १५ ॥ ततः पुनरभिक्रुद्धो राजा प्राग्ज्योतिषाधिप ।
प्रेषयामास नागेन्द्रं बलवत् पर्वतोपमम् ॥ १६ ॥ तमापतन्तं
संप्रेक्ष्य बलवत् पाकशासनिः । नाराचमग्निसङ्काशं प्राहिणोद्वारणं
प्रति ॥ १७ ॥ स तेन वारणो राजन् मर्मस्वभिहतो भृशम् ।
पपात सहसा भूमौ वज्ररुग्ण इवाचलः ॥ १८ ॥ स पतन् शुशुभे
नागो धनञ्जयशराहतः । विशन्निव महाशैलो महीं वज्रप्रपी-
ड़ितः ॥ १९ ॥ तस्मिन्निपतिते नागे वज्रदत्तस्य पाण्डवः । तन्न
भेतव्यमित्याह ततो भूमिगतं नृप ॥ २० ॥ अब्रवीद्धि महातेजाः
प्रस्थितं मां युधिष्ठिरः । राजानस्ते न हन्तव्या धनञ्जय कथ-
ञ्चन ॥ २१ ॥ सर्वमेतन्नरव्याघ्र भवत्येतावता कृतम् । योधाश्चापि
न हन्तव्या धनञ्जय रणे त्वया ॥ २२ ॥ वक्तव्याश्चापि राजानः
सर्वे सह सुहृज्जनैः । युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम्
॥ २३ ॥ इति भ्रातृवचः श्रुत्वा न हन्मि त्वां नराधिप । उत्तिष्ठ
न भयं तेऽस्ति स्वस्तिमान् गच्छ पार्थिव ॥ २४ ॥ आगच्छेथा
महाराज परां चैत्रीमुपस्थिताम् । यदाश्वमेधो भविता धर्म्म-
राजस्य धीमतः ॥ २५ ॥ एवमुक्तः स राजा तु भगदत्तात्मज-
स्तदा । तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्ज्जितः ॥ २६ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि अश्वानुसारे वज्र-
दत्तपराजये षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

वैशम्पायन उवाच । सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः ।
हतशेषैर्महाराज हतानाञ्च सुतैरपि ॥ १ ॥ तेऽवतीर्णमुपश्रुत्य

विषयं श्वेतवाहनम् । प्रत्युद्ययुरनृष्यन्तो राजानः पाण्डवर्षभम् ॥ २ ॥ अश्वञ्च तं परामृष्य विषयान्ते विषोपमाः । न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात् ॥ ३ ॥ ते विदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च । वीभत्सुं प्रत्यपद्यन्त पदातिनमवस्थितम् ॥ ४ ॥ ततस्ते तं महावीर्य्या राजानः पर्य्यवारयन् । जिगीषन्तो नरव्याघ्रं पूर्व्वं विनिकृता युधि ॥ ५ ॥ ते नामान्यपि गोत्राणि कर्म्माणि विविधानि च । कीर्त्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन् ॥ ६ ॥ ते किरन्तः शरव्रातान् वारणप्रतिवारणान् । रणे जयमभीप्सन्तः कौन्तेयं पर्य्यवारयन् ॥ ७ ॥ ते समीक्ष्य च तं कृष्णमुग्रकर्म्माणमाहवे । सर्व्वे युयुधिरे वीरा रथस्थास्तं पदातिनम् ॥ ८ ॥ ते तमाजघ्निरे वीरं निवातकवचान्तकम् । संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च ॥ ९ ॥ ततो रथसहस्रेण हयानामयुतेन च । कोष्ठकीकृत्य वीभत्सुं प्रहृष्टमनसोऽभवन् ॥ १० ॥ तं स्मरन्तो वधं वीराः सिन्धुराजस्य चाहवे । जयद्रथस्य कौरव्य समरे सव्यसाचिना ॥ ११ ॥ ततः पर्ज्जन्यवत् सर्व्वे शरवृष्टीरवासृजन् । तैः कीर्णः शुशुभे पार्थो रविर्म्मेघान्तरे यथा ॥ १२ ॥ स शरैः समवच्छन्नश्चकाशे पाण्डवर्षभः । पञ्जरान्तरसञ्चारी शकुन्त इव भारत ॥ १३ ॥ ततो हाहाकृतं सर्व्वं कौन्तेये शरपीड़िते । त्रैलोक्यमभवद्राजन् रविरासीच्च निष्प्रभः ॥ १४ ॥ ततो ववौ महाराज मारुतो लोमहर्षणः । राहुरग्रसदादित्यं युगपत् सोममेव च ॥ १५ ॥ उल्काश्च जघ्निरे सूर्य्यं व्यकीर्य्यन्त समन्ततः । वेपथुश्चाभवद्राजन् कैलासस्य महागिरेः ॥ १६ ॥ मुमुचुः श्वासमत्युष्णं दुःखशोकसमन्विताः । सप्तर्षयो जातभयास्तथा देवर्षयोऽपि च ॥ १७ ॥ ततः खात्तु विनिर्भिद्य मण्डलं शशिनोऽपतत् । विपरीता दिशश्चापि सर्व्वा धमाकुलास्तथा ॥ १८ ॥ रासभारुणसङ्काशा धनुष्मन्तः सविद्युतः । आवृत्य गगनं मेघा मुमुचु-

मांसशोणितम् ॥ १९ ॥ एवमासीत्तदा वीरे शरवर्षेण संवृते। फाल्गुने भरतश्रेष्ठ तदद्भुतमिवाभवत् ॥ २० ॥ तस्य तेनावकीर्णस्य शरजालेन सर्वतः। मोहात् पपात गाण्डीवमावापश्च करादपि ॥ २१ ॥ तस्मिन्मोहमनुप्राप्ते शरजालं महत्तदा। सैन्धवा मुमुचुस्तूर्णं गतसत्त्वे महारथे ॥ २२ ॥ ततो मोहसमापन्नं ज्ञात्वा पार्थं दिवौकसः। सर्वे वित्रस्तमनसस्तस्य शान्तिकृतोऽभवन् ॥२३॥ ततो देवर्षयः सर्वे तथा सप्तर्षयोऽपि च। ब्रह्मर्षयश्च विजयं जेपुः पार्थस्य धीमतः ॥ २४॥ ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव। तस्थावचलवद्धीमान् संग्रामे परमास्त्रवित् ॥ २५ ॥ विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः। यन्त्रस्येवेह शब्दोऽभुन्महांस्तस्य पुनः पुनः ॥ २६ ॥ ततः स शरवर्षाणि प्रत्यमित्रान् प्रति प्रभुः। ववर्ष धनुषा पार्थो वर्षाणीव पुरन्दरः ॥ २७ ॥ ततस्ते सैन्धवा योधाः सर्व एव सराजकाः। नादृश्यन्त शरैः कीर्णाः शलभैरिव पादपाः ॥ २८ ॥ तस्य शब्देन वित्रेसुर्भयार्त्ताश्च विदुद्रुवुः। मुमुचुश्चाश्रु शोकार्त्ताः शुशुचुश्चापि सैन्धवाः ॥ २९ ॥ तांस्तु सर्वान्नरव्याघ्र सैन्धवान् व्यचरद्बली। अलातचक्रवद्राजन् शरजालैः समार्पयत् ॥ ३० ॥ तदिन्द्रजालप्रतिमं वाणजालममित्रहा। व्यसृजद्दिक्षु सर्वासु महेन्द्र इव वज्रभृत् ॥ ३१ ॥ मेघजालनिभं सैन्यं विदार्य्य शरवृष्टिभिः। विबभौ कौरवश्रेष्ठः शरदीव दिवाकरः ॥ ३२ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि अश्वानुसारे सप्तसप्ततोऽध्यायः ॥ ७७ ॥

---

वैशम्पायन उवाच। ततो गाण्डीवभृच्छूरो युद्धाय समुपस्थितः। विबभौ युधि दुर्द्धर्षो हिमवानचलो यथा॥ १ ॥ ततस्ते सैन्धवा योधाः पुनरेव व्यवस्थिताः। व्यमुञ्चन्त सुसंरब्धाः शर-

वर्षाणि भारत ॥ २ ॥ तान् प्रहस्य महाबाहुः पुनरेव व्यवस्थितान् । ततः प्रोवाच कौन्तेयो मुमुर्षून् श्लक्ष्णया गिरा ॥ ३ ॥ युध्यध्वं परया शक्त्या यतध्वञ्च जये मम । कुरुध्वं सर्वकार्य्याणि महद्वो भयमागतम् ॥ ४ ॥ एष योत्स्यामि सर्वांस्तु निवार्य्य शरवागुराम् । तिष्ठध्वं युद्धमनसो दर्पं शमयितास्मि वः ॥ ५ ॥ एतावदुक्त्वा कौरव्यो रोषाद्गाण्डीवभृत्तदा । ततोऽथ वचनं स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ॥ ६ ॥ न हन्तव्या रणे तात क्षत्रिया विजिगीषवः । जेतव्याश्चेति यत् प्रोक्तं धर्म्मराज्ञा महात्मना ॥७॥ चिन्तयामास स तदा फाल्गुनः पुरुषर्षभः । इत्युक्तोऽहं नरेन्द्रेण न हन्तव्या नरा इति ॥ ८ ॥ कथं तन्न मृषेदं स्याद्धर्म्मराजवचः शुभम् । न हन्येरंश्च राजानो राज्ञश्चाज्ञा कृता भवेत् ॥ ९ ॥ इति सञ्चिन्त्य स तदा फाल्गुनः पुरुषर्षभः । प्रोवाच वाक्यं धर्म्मज्ञः सैन्धवान् युद्धदुर्म्मदान् ॥ १० ॥ श्रेयो वदामि युष्माकं न हिंसेयमवस्थितान् । यश्च वक्ष्यति संग्रामे तवास्मीति पराजितः ॥ ११ ॥ एतत् श्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः । ततोऽन्यथा कृच्छ्रगता भविष्यथ मयार्द्दिताः ॥ १२ ॥ एवमुक्त्वा तु तान् वीरान् युयुधे कुरुपुङ्गवः । अर्जुनोऽतीव संक्रुद्धः संक्रुद्धैर्विजिगीषुभिः ॥१३॥ शतं शतसहस्राणि शराणां नतपर्व्वणाम् । मुमुचुः सैन्धवा राजंस्तदा गाण्डीवधन्वनि ॥ १४ ॥ शरानापततः क्रूरानाशीविषविषोपमान् । चिच्छेद निशितैर्बाणैरन्तरा स धनञ्जयः ॥ १५ ॥ छित्त्वा च तानाशु चैव कङ्कपत्रान् शिलाशितान् । एकैकमेषां समरे विभेद निशितैः शरैः ॥ १६ ॥ ततः प्रासांश्च शक्तीश्च पुनरेव धनञ्जये । जयद्रथं हतं स्मृत्वा चिक्षिपुः सैन्धवा नृपाः ॥१७॥ तेषां किरीटी सङ्कल्पं मोघञ्चक्रे महाबलः । सर्वांस्तानन्तरा छित्त्वा तदा चुक्रोश पाण्डवः ॥ १८ ॥ तथैवापततां तेषां योधानां जयगृद्धिनाम् । शिरांसि पातयामास भल्लैः सन्नतपर्व्वभिः ॥ १९ ॥

तेषां प्रद्रवताञ्चापि पुनरेवाभिधावताम् । निबर्हतांश्च शब्दोऽभूत् पूर्णस्येव महोदधेः ॥ २० ॥ ते वध्यमानास्तु तदा पार्थेनामिततेजसा । यथाप्राणं यथोत्साहं योधयामासुरर्जुनम् ॥ २१ ॥ ततस्ते फाल्गुनेनाजौ शरैः सन्नतपर्वभिः । कृता विसंज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः ॥ २२ ॥ तांस्तु सर्वान् परिम्लानान् विदित्वा धृतराष्ट्रजा । दुःशला बालमादाय नप्तारं प्रययौ तदा ॥ २३ ॥ सुरथस्य सुतं वीरं रथेनाथागमत्तदा । शान्त्यर्थं सर्वयोधानामभ्यगच्छत पाण्डवम् ॥ २४ ॥ सा धनञ्जयमासाद्य मुमोचार्त्तस्वरं तदा । धनञ्जयोऽपि तां दृष्ट्वा धनुर्विससृजे प्रभुः ॥ २५ ॥ समुत्सृज्य धनुः पार्थो विधिवद्भगिनीं तदा । प्राह किं करवाणीति सा च तं प्रत्युवाच ह ॥ २६ ॥ एष ते भरतश्रेष्ठ स्वस्रीयस्यात्मजः शिशुः । अभिवादयते पार्थ तं पश्य पुरुषर्षभ ॥२७ ॥ इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तदा । क्वासाविति ततो राजन् दुःशला वाक्यमब्रवीत् ॥ २८ ॥ पितृशोकाभिसन्तप्तो विषादार्त्तोऽस्य वै पिता । पञ्चत्वमगमद्वीरो यथा तन्मे निशामय ॥ २९ ॥ स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयानघ । त्वामागतञ्च संश्रुत्य युद्धाय हयसारिणम् ॥ ३० ॥ पितुश्च मृत्युदुःखार्त्तोऽजहात् प्राणान् धनञ्जय । प्राप्तो वीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ ॥ ३१ ॥ विषादार्त्तः पपातोर्व्यां ममार च ममात्मजः । तं दृष्ट्वा पतितं तत्र ततस्तस्यात्मजं प्रभो ॥ ३२ ॥ गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी । इत्युक्त्वार्त्तस्वरं सा तु मुमोच धृतराष्ट्रजा ॥ ३३ ॥ दीना दीनं स्थितं पार्थमब्रवीच्चाप्यधोमुखम् । स्वसारं समवेक्षस्व स्वस्रीयात्मजमेव च ॥ ३४ ॥ कर्त्तुमर्हसि धर्मज्ञ दयां कुरुकुलोद्वह । विस्मृत्य कुरुराजानं तञ्च मन्दं जयद्रथम् ॥ ३५ ॥ अभिमन्योर्यथा जातः परीक्षित् परवीरहा । तथायं सुरथाज्जातो मम पौत्रो महाभुजः ॥ ३६ ॥ तमादाय नरव्याघ्र संप्राप्तास्मि

तवान्तिकम् । अस्यार्थं सर्व्वयोधानां शृणु चेदं वचो मम ॥ ३७ ॥
आगतोऽयं महाबाहो तस्य मन्दस्य पुत्रकः । प्रसादमस्य बालस्य
तस्मात्त्वं कर्त्तुमर्हसि ॥ ३८ ॥ एष प्रसाद्य शिरसा प्रशमार्थमरि-
न्दम । याचते त्वां महाबाहो शमं गच्छ धनञ्जय ॥ ३९ ॥
बालस्य हतबन्धोश्च पार्थ किञ्चिदजानतः । प्रसादं कुरु धर्म्मज्ञ
मा मन्युवशमन्वगाः ॥ ४० ॥ तमनार्य्यं नृशंसञ्च विस्मृत्यास्य पिता-
महम् । आगस्कारिणमत्यर्थं प्रसादं कर्त्तुमर्हसि ॥ ४१ ॥ एवं
ब्रुवन्त्यां करुणं दुःशलायां धनञ्जयः । संस्मृत्य देवीं गान्धारीं
धृतराष्ट्रञ्च पार्थिवम् । उवाच दुःखशोकार्त्तः क्षत्रधर्म्मं विगर्हयन्
॥ ४२ ॥ धिक् तं दुर्य्योधनं क्षुद्रं राज्यलुब्धञ्च मानिनम् । यत्कृते
बान्धवाः सर्व्वे मया नीता यमक्षयम् ॥ ४३ ॥ इत्युक्त्वा बहुसान्त्वादि
प्रसादमकरोज्जयः । परिष्वज्य च तां प्रीतो विससर्ज्ज गृहान्
प्रति ॥ ४४॥ दुःशला चापि तान् योधान् निवार्य्य महतो रणात् ।
सम्पूज्य पार्थं प्रययौ गृहानेव शुभानना ॥ ४५ ॥ एवं निर्ज्जित्य
तान् वीरान् सैन्धवान् स धनञ्जयः । अन्वधावत धावन्तं तं हयं
कामचारिणम् ॥ ४६ ॥ ततो मृगमिवाकाशे यथा देवः पिनाक-
धृक् । ससार तं तथा वीरो विधिवद्यज्ञियं हयम् ॥ ४७ ॥
स च वाजी यथेष्टेन तांस्तान् देशान् यथाक्रमम् । विचचार
यथाकामं कर्म्म पार्थस्य वर्द्धयन् ॥ ४८ ॥ क्रमेण स हयस्त्वेवं
विचरन् पुरुषर्षभ । मणिपूरपतेर्देशमुपायात् सह पाण्डवः ॥४९॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे
अष्टसप्ततोऽध्यायः ॥ ७८ ॥

---

वैशम्पायन उवाच । श्रुत्वा तु नृपतिः प्राप्तं पितरं बभ्रु-
वाहनः । निर्य्ययौ विनयेनाथ ब्राह्मणार्घ्यपुरःसरः ॥ १ ॥ मणि-

पूर्वेश्वरन्त्वेवमुपायातं धनञ्जयः । नाभ्यनन्दत् स मेधावी चत्र-धर्म्ममनुस्मरन् ॥ २ ॥ उवाच च स धर्मात्मा समन्युः फाल्गुन-स्तदा । प्रक्रियेयं न ते युक्ता वहिस्त्वं चत्रधर्म्मतः ॥ ३ ॥ संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम् । यज्ञियं विषयान्ते मां नायोत्सीः किन्नु पुत्रक ॥ ४ ॥ धिक् त्वामस्तु सुदुर्बुद्धे चत्रधर्म्म-वहिष्कृतम् । यो मां युद्धाय संप्राप्तं साम्नैव प्रत्यगृह्णथाः ॥ ५ ॥ यस्त्वं स्त्रीवद्यथा प्राप्तं मां साम्ना प्रत्यगृह्णथाः । यद्यहं न्यस्त-शस्त्रस्त्वामागच्छेयं सुदुर्म्मते ॥ ६ ॥ प्रक्रियेयं भवेद्युक्ता तावत्तव नराधम । तमेवमुक्तं भर्त्ता तु विदित्वा पन्नगात्मजा ॥ ७ ॥ अमृष्यमाणा भित्त्वोर्वीमुलुपी समुपागमत् । सा ददर्श ततः पुत्रं विमृष्यन्तमधोमुखम् ॥ ८ ॥ सन्तर्ज्यमानमसकृत् पित्रा युद्धार्थिना प्रभो । ततः सा चारुसर्वाङ्गी समुपेत्योरगात्मजा ॥ ९ ॥ उलुपी प्राह वचनं धर्म्यं धर्म्मविशारदम् । उलूपीं मां निबोध त्वं मातरं पन्नगात्मजाम् ॥ १० ॥ कुरुष्व वचनं पुत्र धर्म्मस्ते भविता परः । युध्यस्वैनं कुरुश्रेष्ठं पितरं युद्धदुर्म्मदम् ॥ ११ ॥ एवमेष हि ते प्रीतो भविष्यति न संशयः । एवं दुर्म्मर्षितो राजा स मात्रा बभ्रुवाहनः ॥ १२ ॥ मनश्चक्रे महातेजा युद्धाय भरतर्षभ । संनह्य काञ्चनं वर्म्म शिरस्त्राणञ्च भानुमत् ॥ १३ ॥ तूणीरशतसंबाध-मारुरोह रथोत्तमम् । सर्वोपकरणोपेतं युक्तमश्वैर्मनोजवैः ॥१४॥ सचक्रोपस्करं श्रीमान् हेमभाण्डपरिष्कृतम् । परमार्च्चितमुच्छ्रित्य ध्वजं सिंहं हिरण्मयम् । प्रययौ पार्थमुद्दिश्य स राजा बभ्रु-वाहनः ॥ १५ ॥ ततोऽभ्येत्य हयं वीरो यज्ञियं पार्थरक्षितम् । ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः ॥ १६ ॥ गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनञ्जयः । पुत्रं रथस्थं भूमिष्ठः संन्यवारय-दाहवे ॥ १७ ॥ स तत्र राजा तं वीरं शरसंघैरनेकशः । अर्द्दया-मास निशितैराशीविषविषोपमैः ॥ १८ ॥ तयोः समभवद्युद्धं पितुः

पुत्रस्य चातुलम्। देवासुररणप्रख्यमुभयोः प्रीयमाणयोः॥ १९॥
किरीटिनं प्रविव्याध शरेणानतपर्व्वणा। जत्रुदेशे नरव्याघ्रं प्रह-
सन् वभ्रुवाहनः॥ २०॥ सोऽभ्यगात् सह पुङ्खेन वल्मीकमिव
पन्नगः। विनिर्भिद्य च कौन्तेयं प्रविवेश महीतलम्॥ २१॥ स
गाढ़वेदनो धीमानालम्ब्य धनुरुत्तमम्। दिव्यं तेजः समाविश्य
प्रमीत इव सोऽभवत्॥ २२॥ स संज्ञामुपलभ्याथ प्रशस्य पुरुष-
र्षभः। पुत्रं शक्रात्मजो वाक्यमिदमाह महाद्युतिः॥ २३॥ साधु
साधु महाबाहो वत्स चित्राङ्गदात्मज। सदृशं कर्म्म ते दृष्ट्वा प्रीति-
मानस्मि पुत्रक॥ २४॥ विमुञ्चाम्येष ते वाणान् पुत्र युद्धे स्थिरो
भव। इत्येवमुक्त्वा नाराचैरभ्यवर्षदमित्रहा॥ २५॥ तान् स
गाण्डीवनिर्मुक्तान् वज्राशनिसमप्रभान्। नाराचानच्छिनद्राजा
भल्लैः सर्व्वांस्त्रिधा द्विधा॥ २६॥ तस्य पार्थशरैर्दिव्यैर्ध्वजं हेम-
परिष्कृतम्। सुवर्णतालप्रतिमं चुरेणापहरद्रथात्॥ २७॥ हयांश्चास्य महाकायान् महावेगानरिन्दम। चकार राजन्निर्जीवान्
प्रहसन्निव पाण्डवः॥ २८॥ स रथादवतीर्य्याथ राजा परम-
कोपनः। पदातिः पितरं क्रुद्धो योधयामास पाण्डवम्॥ २९॥
संप्रीयमाणः पार्थानामृषभः पुत्रविक्रमात्। अत्यर्थं पीड़यामास
पुत्रं वज्रधरात्मजः॥ ३०॥ स मन्यमानो विमुखं पितरं बभ्रु-
वाहनः। शरैराशीविषाकारैः पुनरेवार्द्दयद्वली॥ ३१॥ ततः
स बाल्यात् पितरं विव्याध हृदि पत्रिणा। निशितेन सुपुङ्खेन
बलवद्बभ्रुवाहनः॥ ३२॥ विवेश पाण्डवं राजन् मर्म्म भित्त्वाति-
दुःखकृत्। स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः॥ ३३॥ महीं
जगाम मोहार्त्तस्ततो राजन् धनञ्जयः। तस्मिन्निपतिते वीरे
कौरवाणां धुरन्धरे॥ ३४॥ सोऽपि मोहं जगामाथ ततश्चित्रा-
ङ्गदासुतः। व्यायस्य संयुगे राजा दृष्ट्वा च पितरं हतम्॥ ३५॥
पूर्व्वमेव स वाणौघैर्गाढ़विद्धोऽर्जुनेन ह। पपात सोऽपि धरणी-

मालिङ्ग्य रणमूर्द्धनि ॥ ३६ ॥ भर्त्तारं निहतं दृष्ट्वा पुत्रञ्च पतितं भुवि । चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरे ॥ ३७ ॥ शोकसन्तप्तहृदया रुदन्ती वेपती भृशम् । मणिपूरपतेर्माता ददर्श निहतं पतिम् ॥ ३८ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि अश्वानुसारे अर्जुनपराजये एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

वैशम्पायन उवाच । ततो बहुतरं भूरि विलप्य कमलेक्षणा । मुमोह दुःखसन्तप्ता पपात च महीतले ॥ १ ॥ प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्धरा । उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ॥ २ ॥ उलूपि पश्य भर्त्तारं शयानं निहतं रणे । त्वत्कृते मम पुत्रेण बालेन समितिञ्जयम् ॥ ३ ॥ ननु त्वमार्य्यधर्मज्ञा ननु चासि पतिव्रता । यत्त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ॥ ४ ॥ किन्तु सर्व्वापराधोऽयं यदि तेऽद्य धनञ्जयः । क्षमस्व याचमाना वै जीवयस्व धनञ्जयम् ॥ ५ ॥ ननु त्वमार्य्ये धर्मज्ञा त्रैलक्यविदिता शुभे । यद्घातयित्वा पुत्रेण भर्त्तारं नानुशोचसि ॥ ६ ॥ नाहं शोचामि तनयं हतं पन्नगनन्दिनि । पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतम् ॥ ७ ॥ इत्युक्त्वा सा तदा देवीमुलूपीं पन्नगात्मजाम् । भर्त्तारमभिगम्येदमित्युवाच यशस्विनी ॥ ८ ॥ उत्तिष्ठ कुरुमुख्यस्य प्रियमुख्योऽसि मे प्रिय । अयमश्वो महाबाहो मया ते परिमोक्षितः ॥ ९ ॥ ननु त्वया नाम विभो धर्मराजस्य यज्ञियः । अयमश्वोऽनुसर्त्तव्यः स शेषे किं महीतले ॥ १० ॥ त्वयि प्राणा ममायत्ताः कुरूणां कुरुनन्दन । स कस्मात् प्राणदोऽन्येषां प्राणान् संत्यक्तवानसि ॥ ११ ॥

चित्राङ्गदोवाच । उलूपि साधु पश्येमं पतिं निपतितं भुवि ।

पुत्रश्चेमं समुत्थाद्य घातयित्वा न शोचसि ॥ १२ ॥ कामं स्वपितु बालोऽयं भूमौ मृत्युवशं गतः । लोहिताक्षो गुडाकेशो विजयः साधु जीवतु ॥ १३॥ नापराधोऽस्ति सुभगे नराणां बहुभार्य्यता। प्रमदानां भवत्येष मा ते भूद्बुद्धिरीदृशी ॥ १४ ॥ सख्यं चैतत् कृतं धात्रा शश्वदव्ययमेव तु । सख्यं समभिजानीहि सत्यं सङ्गतमस्तु ते ॥ १५ ॥ पुत्रेण घातयित्वेमं पतिं यदि न मेऽद्य वै । जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितम् ॥ १६ ॥ साहं दुःखान्विता देवि पतिपुत्रविनाकृता । इहैव प्रायमासिष्ये प्रेक्षन्त्यास्ते न संशयः ॥ १७ ॥ इत्युक्त्वा पन्नगसुतां सपत्नीं चैत्रवाहनी । ततः प्रायमुपासीना तुष्णीमासीज्जनाधिप ॥ १८ ॥

वैशम्पायन उवाच । ततो विलप्य विरता भर्त्तुः पादौ प्रगृह्य सा । उपविष्टाभवद्दीना सोच्छ्वासं पुत्रमिच्छती ॥ १९ ॥ ततः संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः । मातरं तामथालोक्य रणभूमावथाब्रवीत् ॥ २० ॥ इतो दुःखतरं किन्नु यन्मे माता सुखैधिता । भूमौ निपतितं वीरमनुशेते मृतं पतिम् ॥ २१ ॥ निहन्तारं रणेऽरीणां सर्व्वशस्त्रभृतां वरम् । मया विनिहतं संख्ये प्रेक्षते दुर्म्मरं वत ॥ २२ ॥ अहोऽस्या हृदयं देव्या दृढ़ं यन्न विदीर्य्यते । व्यूढ़ोरस्कं महाबाहुं प्रेक्षन्त्या निहतं पतिम् ॥ २३ ॥ दुर्म्मरं पुरुषेणेह मन्ये ह्यध्वन्यनागते । यत्र नाहं न मे माता विप्रयुज्येत जीवितात् ॥ २४ ॥ हा हा धिक् कुरुवीरस्य सन्नाहं काञ्चनं भुवि । अपविद्धं हतस्येह मया पुत्रेण पश्यता ॥ २५ ॥ भो भो पश्यत मे वीरं पितरं ब्राह्मणा भुवि । शयानं वीरशयने मया पुत्रेण पातितम् ॥ २६ ॥ ब्राह्मणाः कुरुमुख्यस्य ये मुक्ता हयसारिणः । कुर्व्वन्ति शान्तिं कामस्य रणे योऽयं मया हतः ॥ २७ ॥ व्यादिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे । आनृशंसस्य पापस्य पितृहन्तरणाजिरे ॥ २८ ॥ दुश्चरा द्वादश-

समा हत्वा पितरमद्य वै। ममेह सुनृशंसस्य सम्वीतस्यास्य चर्म्मणा ॥ २९ ॥ शिरःकपाले चास्यैव युञ्जतः पितुरद्य मे। प्रायश्चित्तं हि नास्त्यन्यद्धत्वाद्य पितरं मम ॥ ३० ॥ पश्य नागोत्तमसुते भर्त्तारं निहतं मया। कृतं प्रियं मया तेऽद्य निहत्य समरेऽर्जुनम् ॥ ३१ ॥ सोऽहमद्य गमिष्यामि गतिं पितृनिषेविताम्। न शक्नोम्यात्मनात्मानमहं धारयितुं शुभे ॥ ३२ ॥ सा त्वं मयि मृते मातस्तथा गाण्डीवधन्वनि। भव प्रीतिमती देवि सत्येनात्मानमालभे ॥ ३३ ॥ इत्युक्त्वा स ततो राजा दुःखशोकसमाहतः। उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत् ॥ ३४ ॥ शृण्वन्तु सर्वभूतानि स्थावराणि चराणि च। त्वाञ्च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे ॥ ३५ ॥ यदि नोत्तिष्ठति जयः पिता मे नरसत्तमः। अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरम् ॥ ३६ ॥ न हि मे पितरं हत्वा निष्कृतिर्विद्यते क्वचित्। नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्द्दितः ॥ ३७ ॥ वीरं हि क्षत्रियं हत्वा गोशतेन प्रमुच्यते। पितरन्तु निहत्यैवं दुर्ल्लभा निष्कृतिर्मम ॥ ३८ ॥ एष एको महातेजाः पाण्डुपुत्रो धनञ्जयः। पिता च मम धर्मात्मा तस्य मे निष्कृतिः कुतः ॥ ३९ ॥ इत्येवमुक्त्वा नृपते धनञ्जयसुतो नृपः। उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः ॥ ४० ॥

वैशम्पायन उवाच। प्रायोपविष्टे नृपतौ मणिपूरेश्वरे तदा। पितृशोकसमाविष्टे सह मात्रा परन्तपे ॥ ४१ ॥ उलूपी चिन्तयामास तदा सञ्जीवनं मणिम्। स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ ४२ ॥ तं गृहीत्वा तु कौरव्य नागराजपतेः सुता। मनःप्रह्लादिनीं वाचं सैनिकानामथाब्रवीत् ॥ ४३ ॥ उत्तिष्ठ मा शुचः पुत्र नैव जिष्णुस्त्वया जितः। अजेयः पुरुषैरेष तथा देवैः सवासवैः ॥ ४४ ॥ मया तु मोहनी नाम मायैषा संप्रदर्शिता। प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः ॥ ४५ ॥ जिज्ञासुर्ह्येष

पुत्रस्य बलस्य तत्र कौरव । संग्रामे युध्यतो राजन्नागतः पर-
वीरहा ॥ ४६ ॥ तस्मादसि मया पुत्र युद्धाय परिचोदितः । मा
पापमात्मनः पुत्र शङ्केथा ह्यण्वपि प्रभो ॥ ४७ ॥ ऋषिरेव महा-
नात्मा पुराणः शाश्वतोऽचरः । नैनं शक्तो हि संग्रामे जेतुं
शक्रोऽपि पुत्रक ॥ ४८ ॥ अयन्तु मे मणिर्दिव्यः समानीतो विशा-
म्पते । मृतान् मृतान् पन्नगेन्द्रान् यो जीवयति नित्यदा ॥ ४९ ॥
एवमस्योरसि त्वञ्च स्थापयस्व पितुः प्रभो । सञ्जीवितं तदा पार्थं
स त्वं द्रष्टासि पाण्डवम् ॥ ५० ॥ इत्युक्तः स्थापयामास तस्योरसि
मणिं तदा । पार्थस्यामिततेजाः स पितृस्नेहादपापकृत् ॥ ५१ ॥
तस्मिन्न्यस्ते मणौ वीरो जिष्णुरुज्जीवितः प्रभुः । चिरसुप्त इवो-
त्तस्थौ मृष्टलोहितलोचनः ॥ ५२ ॥ तमुत्थितं महात्मानं लब्ध-
संज्ञं मनस्विनम् । समीक्ष्य पितरं स्वस्थं ववन्दे वभ्रुवाहनः ॥५३॥
उत्थिते पुरुषव्याघ्रे पुनर्लब्धजीविते प्रभो । दिव्याः सुमनसः पुण्या
ववृषे पाकशासनः ॥५४॥ अनाहता दुन्दुभयो विनेदुर्मेघनिस्वनाः ।
साधु साध्विति चाकाशे बभूव सुमहान् स्वनः ॥ ५५ ॥ उत्थाय
च महाबाहुः पर्य्याश्वस्तो धनञ्जयः । वभ्रुवाहनमालिङ्ग्य समा-
जिघ्रत मूर्द्धनि ॥५६॥ ददर्श चापि दूरेऽस्य मातरं शोककर्षिताम् ।
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनञ्जयः ॥ ५७ ॥ किमिदं
लक्ष्यते सर्वं शोकविस्मयहर्षवत् । रणाजिरममित्रघ्न यदि जानासि
शंस मे ॥ ५८ ॥ जननी च किमर्थन्ते रणभूमिमुपागता । नागेन्द्र-
दुहिता चेयमुलूपी किमिहागता ॥ ५९ ॥ जानाम्यहमिदं युद्धं
त्वया मद्वचनात् कृतम् । स्त्रीणामागमने हेतुमहमिच्छामि वेदि-
तुम् ॥ ६० ॥ तमुवाच तथा पृष्टो मणिपूरपतिस्तदा । प्रसाद्य
शिरसा विद्वानुलूपी पृच्छतामियम् ॥ ६१ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि अश्वानुसारे
अर्जुनप्रत्युज्जीवनेऽशीतितमोऽध्यायः ॥ ८० ॥

अर्जुन उवाच । किमागमनकृत्यन्ते कौरव्यकुलनन्दिनि ।
मणिपूरपतेर्मातुस्तथैव च रणाजिरे ॥ १ ॥ कच्चित् कुशलकामासि
राज्ञोऽस्य भुजगात्मजे । मम वा चपलापाङ्गि कच्चित्त्वं शुभ-
मिच्छसि ॥ २ ॥ कच्चित्ते पृथुलश्रोणि नाप्रियं प्रियदर्शने ।
अकार्षमहमज्ञानादयं वा बभ्रुवाहनः ॥ ३ ॥ कच्चिन्नु राजपुत्री
ते सपत्नी चैत्रवाहनी । चित्राङ्गदा वरारोहा नापराध्यति किञ्चन
॥ ४ ॥ तमुवाचोरगपतेर्दुहिता प्रहसन्निव । न मे त्वमपराद्धो-
ऽसि न हि मे बभ्रुवाहनः ॥ ५ ॥ न जनित्री तथास्येयं मम या
प्रेष्यवत् स्थिता । श्रूयतां यद्यथा चेदं मया सर्वं विचेष्टितम् ॥ ६॥
न मे कोपस्त्वया कार्य्यः शिरसा त्वां प्रसादये । त्वत्प्रियार्थं हि
कौरव्य कृतमेतन्मया विभो ॥ ७॥ यत्तत् शृणु महाबाहो
निखिलेन धनञ्जय । महाभारतयुद्धे यत् त्वया शान्तनवो नृपः
॥ ८ ॥ अधर्म्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता । न हि
भीष्मस्त्वया वीर युध्यमानो हि पातितः ॥ १० ॥ शिखण्डिना
तु संयुक्तस्तमाश्रित्य हतस्त्वया । तस्य शान्तिमकृत्वा त्वं त्यजेथा
यदि जीवितम् ॥ ११ ॥ कर्म्मणा तेन पापेन पतेथा निरये ध्रुवम् ।
एषा तु विहिता शान्तिः पुत्राद्यां प्राप्तवानसि ॥ १२ ॥ वसुभि-
र्वसुधापाल गङ्गया च महामते । पुरा हि श्रुतमेतत्ते वसुभिः
कथितं मया ॥ १३ ॥ गङ्गायास्तीरमाश्रित्य हते शान्तनवे नृप ।
आप्लुत्य देवा वसवः समेत्य च महानदीम् ॥ १४ ॥ इदमूचुर्वचो
घोरं भागीरथ्या मते तदा । एष शान्तनवो भीष्मो निहतः
सव्यसाचिना ॥ १४ ॥ अयुध्यमानः सङ्ग्रामे संसक्तोऽन्येन भाविनि ।
तदनेनानुषङ्गेन वयमद्य धनञ्जयम् ॥ १५ ॥ शापेन योजयामेति
तथास्त्विति च साब्रवीत् । तदहं पितुरावेद्य प्रविश्य व्यथिते-
न्द्रिया ॥ १६ ॥ अभयं स च तत् श्रुत्वा विषादमगमत् परम् ।
पिता तु मे वसून् गत्वा त्वदर्थं समयाचत ॥ १७ ॥ पुनः पुनः

प्रसाद्यैतांस्त एनमिदमब्रुवन् । पुत्रस्तस्य महाभाग मणिपूरेश्वरो युवा ॥ १८ ॥ स एनं रणमध्यस्थः शरैः पातयिता भुवि । एवं कृते स नागेन्द्र मुक्तशापो भविष्यति ॥ १९ ॥ गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः । तच्छ्रुत्वा त्वं मया तस्मात् शापादसि विमोचितः ॥ २० ॥ न हि त्वां देवराजोऽपि समरेषु पराजयेत् । आत्मा पुत्रः स्मृतस्तस्मात्तेनेहासि पराजितः ॥ २१ ॥ न हि दोषो मम मतः कथं वा मन्यसे विभो ॥ २२ ॥ इत्येवमुक्तो विजयः प्रसन्नात्माब्रवीदिदम् । सर्वं मे सुप्रियं देवि यदेतत् कृतवत्यसि ॥ २३ ॥ इत्युक्त्वा सोऽब्रवीत् पुत्रं मणिपूरपतिर्जयः । चित्राङ्गदायाः शृण्वन्त्याः कौरव्यदुहितुस्तदा ॥ २४ ॥ युधिष्ठिरस्याश्वमेधः परां चैत्रीं भविष्यति । तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप ॥ २५ ॥ इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः । उवाच पितरं धीमानिदमस्राविलेक्षणः ॥ २६ ॥ उपयास्यामि धर्म्मज्ञ भवतः शासनादहम् । अश्वमेधे महायज्ञे द्विजातिपरिवेशकः ॥ २७ ॥ मम त्वनुग्रहार्थाय प्रविशस्व पुरं स्वकम् । भार्य्याभ्यां सह धर्म्मज्ञ मा भूत्तेऽत्र विचारणा ॥ २८ ॥ उषित्वेह निशामेकां सुखं स्वभवने प्रभो । पुनरश्वानुगमनं कर्त्तासि जयतां वर ॥ २९ ॥ इत्युक्तः स तु पुत्रेण तदा वानरकेतनः । स्वयं प्रोवाच कौन्तेयस्तदा चित्राङ्गदासुतम् ॥ ३० ॥ विदितं ते महाबाहो यथा दीक्षाञ्चराम्यहम् । न स तावत् प्रवेक्ष्यामि पुरं ते पृथुलोचन ॥ ३१ ॥ यथाकामं व्रजत्येष यज्ञियोऽश्वो नरर्षभ । स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम ॥ ३२ ॥ स तत्र विधिवत्तेन पूजितः पाकशासनिः । भार्य्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ॥ ३३ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे एकाशीतोऽध्यायः ॥ ८१ ॥

वैशम्पायन उवाच । स तु वाजी समुद्रान्तां पर्य्येत्य वसुधामिमाम् ! निवृत्तोऽभिमुखो राजन् येन वारणसाह्वयम् ॥ १ ॥ अनुगच्छंश्च तुरगं निवृत्तोऽथ किरीटभृत् । यदृच्छया समापेदे पुरं राजगृहं तदा ॥ २ ॥ तमभ्यासगतं दृष्ट्वा सहदेवात्मजः प्रभो । चत्रधर्मे स्थितो वीरः समरायाजुहाव ह ॥ ३ ॥ ततः पुरात् स निष्क्रम्य रथी धन्वी शरी तली । मेघसन्धिः पदातिस्तं धनञ्जयमुपाद्रवत् ॥ ४ ॥ आसाद्य च महातेजा मेघसन्धिर्धनञ्जयम् । बालभावान्महाराज प्रोवाचेदं न कौशलात् ॥ ५ ॥ किमयञ्चार्य्यते वाजी स्त्रीमध्य इव भारत । हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ॥ ६ ॥ अदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम । करिष्यामि तवातिथ्यं प्रहर प्रहरामि च ॥ ७ ॥ इत्युक्तः प्रत्युवाचैनं प्रहसन्निव पाण्डवः । विघ्नकर्त्ता मया कार्य्य इति मे व्रतमाहितम् ॥ ८ ॥ भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवम् । प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ॥ ९ ॥ इत्युक्तः प्राहरत् पूर्वं पाण्डवं मगधेश्वरः । किरन् शरसहस्राणि वर्षाणीव सहस्रदृक् ॥ १० ॥ ततो गाण्डीवभृत् शूरो गाण्डीवप्रहितैः शरैः । चकार मोघांस्तान् वाणान् सयत्नान् भरतर्षभ ॥ ११ ॥ स मोघं तस्य वाणौघं कृत्वा वानरकेतनः । शरान् मुमोच ज्वलितान् दीप्तास्यानिव पन्नगान् ॥ १२ ॥ ध्वजे पताकादण्डेषु रथयन्त्रहयेषु च । अन्येषु च रथाङ्गेषु न शरीरे न सारथौ ॥ १३ ॥ संरक्ष्यमाणः पार्थेन शरीरे सव्यसाचिना । मान्यमानः स्ववीर्य्यान्तन्मागधः प्राहिणोत् शरान् ॥ १४ ॥ ततो गाण्डीवधन्वा तु मागधेन भृशाहतः । बभौ वसन्तसमये पलाशः पुष्पितो यथा ॥ १५ ॥ अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभम् । तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ॥ १६ ॥ सव्यसाची तु संक्रुद्धो विकृष्य बलवद्धनुः । हयांश्चकार निर्जीवान् सारथेश्च शिरो-

हरत् ॥ १७ ॥ धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त्त ह । हस्ता-
वापं पताकाञ्च ध्वजं चास्य न्यपातयत् ॥ १८ ॥ स राजा व्यथितो
व्यश्वो विधनुर्हतसारथिः । गदामादाय कौन्तेयमभिदुद्राव वेग-
वान् ॥ १९ ॥ तस्यापतत एवाशु गदां हेमपरिष्कृताम् । शरै-
श्चकर्त्त बहुधा बहुभिर्गृध्रवाजितैः ॥ २० ॥ सा गदा शकलीभूता
विशीर्णमणिबन्धना । व्याली विमुच्यमानेव पपात धरणीतले
॥ २१ ॥ विरथं विधनुष्कञ्च गदया परिवर्ज्जितम् । नैच्छत्ताड़-
यितुं धीमानर्ज्जुनः समराग्रणीः ॥ २२ ॥ तत एनं विमनसं क्षत्र-
धर्म्मे समास्थितम् । सान्त्वपूर्व्वमिदं वाक्यमब्रवीत् कपिकेतनः ॥२३॥
पर्य्याप्तः क्षत्रधर्म्मोऽयं दर्शितः पुत्र गम्यताम् । बह्वेतत् समरे कर्म्म
तव बाल्यस्य पार्थिव ॥ २४ ॥ युधिष्ठिरस्य सन्देशो न हन्तव्या
नृपा इति । तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे ॥ २५ ॥
इति मत्वा तदात्मानं प्रत्यादिष्टं स मागधः । तथ्यमित्यभिगम्यैनं
प्राञ्जलिः प्रत्यपूजयत् ॥ २६ ॥ पराजितोऽस्मि भद्रन्ते नाहं योद्धु-
मिहोत्सहे । यच्च कृत्यं मया तेऽद्य तद्ब्रूहि कृतमेव तु ॥ २७ ॥
तमर्ज्जुनः समाश्वास्य पुनरेवेदमब्रवीत् । आगन्तव्यं परां चैत्री-
मश्वमेधे नृपस्य नः ॥ २८ ॥ इत्युक्तः स तथेत्युक्त्वा पूजयामास तं
हयम् । फाल्गुनञ्च युधि श्रेष्ठं विधिवत् सहदेवजः ॥ २९ ॥
ततो यथेष्टमगमत् पुनरेव स केशरी । ततः समुद्रतीरेण वङ्गान्
पुण्ड्रान् सकोशलान् ॥ ३० ॥ तत्र तत्र च भूरीणि म्लेच्छसैन्या-
न्यनेकशः । विजिग्ये धनुषा राजन् गाण्डीवेन धनञ्जयः ॥ ३१ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे
मागधपराजये द्व्यशीतोऽध्यायः ॥ ८२ ॥

---

वैशम्पायन उवाच । मागधेनार्च्चितो राजन् पाण्डवः श्वे त-

वाहनः । दक्षिणां दिशमास्थाय चारयामास तं हयम् ॥ १ ॥ ततः स पुनरावृत्त्य हयः कामचरो बली । आससाद पुरीं रम्यां चेदीनां शुक्तिसाह्वयाम् ॥ २ ॥ शरभेणार्च्चितस्तत्र शिशुपालसुतेन सः । युद्धपूर्वं तदा तेन पूजया च महाबलः ॥ ३ ॥ ततोऽर्च्चितो ययौ राजंस्तदा स तुरगोत्तमः । काशीनङ्गान् कोशलांश्च किरातानथ तङ्गणान् ॥ ४ ॥ पूजां तत्र यथान्यायं प्रतिगृह्य धनञ्जयः । पुनरावृत्य कौन्तेयो दशार्णानगमत्तदा ॥ ५ ॥ तत्र चित्राङ्गदो नाम बलवानरिमर्द्दनः । तेन युद्धमभूत्तस्य विजयस्यातिभैरवम् ॥ ६ ॥ तञ्चापि वशमानीय किरीटी पुरुषर्षभः । निषादराज्ञो विषयमेकलव्यस्य जग्मिवान् ॥ ७ ॥ एकलव्यसुतश्चैनं युद्धेन जगृहे तदा । तत्र चक्रे निषादैः स संग्रामं लोमहर्षणम् ॥ ८ ॥ ततस्तमपि कौन्तेयः समरेष्वपराजितः । जिगाय युधि दुर्द्धर्षो यज्ञविघ्नार्थमागतम् ॥ ९ ॥ स तं जित्वा महाराज नैषादिं पाकशासनिः । अर्च्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम् ॥ १० ॥ तत्रापि द्रविडैरन्ध्रै रौद्रैर्माहिषकैरपि । तथा कोल्लगिरेयैश्च युद्धमासीत् किरीटिनः ॥ ११ ॥ तांश्चापि विजयो जित्वा नातितीव्रेण कर्म्मणा । तुरङ्गमवशेनाथ सुराष्ट्रानभितो ययौ ॥ १२ ॥ गोकर्णमथ चासाद्य प्रभासमपि जग्मिवान् । ततो द्वारवतीं रम्यां वृष्णिवीराभिपालिताम् ॥ १३ ॥ आससाद हयः श्रीमान् कुरुराजस्य यज्ञियः । तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः ॥१४॥ प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् । ततः पुराद्विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा ॥ १५ ॥ सहितो वसुदेवेन मातुलेन किरीटिनः । तौ समेत्य कुरुश्रेष्ठं विधिवत् प्रीतिपूर्वकम् ॥ १६ ॥ परया भरतश्रेष्ठं पूजया समवस्थितौ । ततस्ताभ्यामनुज्ञातो ययौ येन हयो गतः ॥ १७ ॥ ततः स पश्चिमं देशं समुद्रस्य तदा हयः । क्रमेण व्यचरत् स्फीतस्ततः पञ्चनदं ययौ ॥ १८ ॥ तस्मादपि स

कौरव्य गान्धारविषयं हयः । विचचार यथाकामं कौन्तेयानुगतस्तदा ॥ १९ ॥ ततो गान्धारराजेन युद्धमासीत् किरीटिनः । घोरं शकुनिपुत्त्रेण पूर्व्ववैरानुसारिणा ॥ २० ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वानुसारे त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

वैशम्पायन उवाच । शकुनेस्तनयो वीरो गान्धाराणां महारथः । प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः । हस्त्यश्वरथयुक्तेन पताकाध्वजमालिना ॥ १ ॥ अमृष्यमाणास्ते योधा नृपस्य शकुनेर्व्वधम् । अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः ॥ २ ॥ स तानुवाच धर्म्मात्मा वीभत्सुरपराजितः । युधिष्ठिरस्य वचनं न च ते जगृहुर्हितम् ॥ ३ ॥ वार्य्यमाणापि पार्थेन सान्त्वपूर्व्वममर्षिताः । परिवार्य्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः ॥ ४ ॥ ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः । क्षुरैर्गाण्डीवनिर्म्मुक्तैर्नातियत्नादिवार्ज्जुनः ॥ ५ ॥ ते वध्यमानाः पार्थेन हयमुत्सृज्य सम्भ्रमात् । न्यवर्त्तन्त महाराज शरवर्षार्द्दिता भृशम् ॥६॥ निरुध्यमानस्तैश्चापि गान्धारैः पाण्डुनन्दनः । आदिश्यादिश्य तेजस्वी शिरांस्येषां व्यपातयत् ॥ ७॥ वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः । स राजा शकुनेः पुत्त्रः पाण्डवं प्रत्यवारयत् ॥ ८ ॥ तं युध्यमानं राजानं क्षत्त्रधर्म्मे व्यवस्थितम् । पार्थोऽब्रवीन्न मे वध्या राजानो राजशासनात् ॥ ९ ॥ अलं युद्धेन ते वीर न तेऽस्त्वद्य पराजयः ॥ १० ॥ इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः । स शक्रसमकर्म्माणं समवाकिरदाशुगैः ॥ ११ ॥ तस्य पार्थः शिरस्त्राणमर्द्धचन्द्रेण पत्त्रिणा । अपाहरदमेयात्मा जयद्रथशिरो यथा ॥ १२ ॥ तं दृष्ट्वा विस्मयं जग्मुर्गान्धाराः सर्व्व एव

ते। इच्छता तेन न हतो राजेत्यसि च तं विदुः ॥ १३ ॥ गान्धारराजपुत्रस्तु पलायनकृतक्षणः। ययौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव ॥ १४ ॥ तेषान्तु तरसा पार्थस्तत्रैव परिधावताम्। प्रजहारोत्तमाङ्गानि भल्लैः सन्नतपर्वभिः ॥ १५ ॥ उच्छ्रितांस्तु भुजान् केचित् नाबुध्यन्त शरैर्हृतान्। शरैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः ॥ १६ ॥ सम्भ्रान्तनरनागाश्वमपतद्विद्रुतं बलम्। हतविध्वस्तभूयिष्ठमावर्त्तत मुहुर्मुहुः ॥ १७ ॥ नाश्यदृश्यन्त वीरस्य केचिदग्रेऽग्र्यकर्म्मणः। रिपवः पात्यमाना वै ये सहेयुर्धनञ्जयम् ॥ १८ ॥ ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा। जननी निर्ययौ भीता पुरस्कृत्यार्घमुत्तमम् ॥ १९ ॥ सा न्यवारयदव्यग्रं तं पुत्रं युद्धदुर्म्मदम्। प्रसादयामास च तं जिष्णुमक्लिष्टकारिणम् ॥ २० ॥ तां पूजयित्वा बीभत्सुः प्रसादमकरोत् प्रभुः। शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ॥ २१ ॥ न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता। प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ ॥ २२ ॥ गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च। तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ॥ २३ ॥ मैवं भूः शाम्यतां वैरं मा ते भूद्बुद्धिरीदृशी। गच्छेथास्त्वं पराञ्चैत्रीमश्वमेधे नृपस्य नः ॥ २४ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि अश्वानुसारे चतुरशीतोऽध्यायः ॥ ८४ ॥

---

वैशम्पायन उवाच। इत्युक्त्वानुययौ पार्थो हयं कामविहारिणम्। न्यवर्त्तत ततो वाजी येन नागाह्वयं पुरम् ॥ १ ॥ तं निवृत्तन्तु शुश्राव चारेणैव युधिष्ठिरः। श्रुत्वार्जुनं कुशलिनं स च हृष्टमनाभवत् ॥ २ ॥ विजयस्य च तत्कर्म्म गान्धारविषये तदा।

श्रुत्वा चान्येषु देशेषु स सुप्रीतोऽभवत्तदा ॥ ३ ॥ एतस्मिन्नेव काले तु द्वादशीं माघपाक्षिकीम् । इष्टं गृहीत्वा नक्षत्रं धर्म्मराजो युधिष्ठिरः ॥ ४ ॥ समानीय महातेजाः सर्व्वान् भ्रातॄन्महीपतिः । भीमञ्च नकुलञ्चैव सहदेवञ्च कौरव ॥ ५ ॥ प्रोवाचेदं वचः काले तदा धर्म्मभृतां वरः । आमन्त्र्य वदतां श्रेष्ठो भीमं प्रहरतां वरम् ॥ ६ ॥ आयाति भीमसेनासौ सहाश्वेन तवानुजः । यथा मे पुरुषाः प्राहुर्ये धनञ्जयसारिणः ॥ ७ ॥ उपस्थितश्च कालोऽयमभितो वर्त्तते हयः । माघी च पौर्णमासीयं मासः शेषो वृकोदर ॥ ८ ॥ तत् प्रस्थाप्यन्तु विद्वांसो ब्राह्मणा वेदपारगाः । वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु यज्ञियम् ॥ ९ ॥ इत्युक्तः स तु तच्चक्रे भीमो नृपतिशासनम् । हृष्टः श्रुत्वा गुड़ाकेशमायान्तं पुरुषर्षभम् ॥ १० ॥ ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह । ब्राह्मणानग्रतः कृत्वा कुशलान् यज्ञकर्म्मणि ॥ ११ ॥ तं स शालचयं श्रीमत् संप्रतोलीसुघट्टितम् । मापयामास कौरव्यो यज्ञवाटं यथाविधि ॥ १२ ॥ प्रासादशतसम्बाधं मणिप्रवरकुट्टिमम् । कारयामास विधिवद्धेमरत्नविभूषितम् ॥ १३ ॥ स्तम्भान् कनकचित्रांश्च तोरणानि वृहन्ति च । यज्ञायतनदेशेषु दत्त्वा शुद्धञ्च काञ्चनम् ॥ १४ ॥ अन्तःपुराणां राज्ञाञ्च नानादेशसमीयुषाम् । कारयामास धर्मात्मा तत्र तत्र यथाविधि ॥ १५ ॥ ब्राह्मणानाञ्च वेश्मानि नानादेशसमीयुषाम् । कारयामास कौन्तेयो विधिवत्तान्यनेकशः ॥ १६ ॥ तथा संप्रेषयामास दूतान् नृपतिशासनात् । भीमसेनो महाबाहो राज्ञामक्लिष्टकर्म्मणाम् ॥ १७ ॥ ते प्रियार्थं कुरुपतेराययुर्नृपसत्तमाः । रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ॥ १८ ॥ तेषां निविशतान्तेषु शिविरेषु महात्मनाम् । नर्द्दतः सागरस्येव दिवस्पृगभवत् स्वनः ॥ १९ ॥ तेषामभ्यागतानाञ्च स राजा कुरुनन्दनः । व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः

॥ २० ॥ वाहनानाञ्च विविधाः शालाः शालीक्षुगोरसैः। उपेता भरतश्रेष्ठो व्यादिदेश स धर्म्मराट्॥ २१ ॥ तथा तस्मिन्महायज्ञे धर्म्मराजस्य धीमतः। समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ २२ ॥ ये च द्विजातिप्रवरास्तत्रासन् पृथिवीपते। समाजग्मुः सशिष्यास्तान् प्रतिजग्राह कौरवः॥ २३ ॥ सर्वांश्चताननुययौ यावदावसथान् प्रति। स्वयमेव महातेजा दम्भं त्यक्त्वा युधिष्ठिरः ॥ २४ ॥ ततः कृत्वा स्थपतयः शिल्पिनोऽन्ये च ये तदा। कृत्स्नं यज्ञविधिं राज्ञे धर्म्मराजे न्यवेदयन्॥ २५ ॥ तच्छ्रुत्वा धर्म्मराजस्तु कृतं सर्वमतन्द्रितः। हृष्टरूपोऽभवद्राजा सह भ्रातृभिरावृतः॥ २६ ॥

वैशम्पायन उवाच। तस्मिन् यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः। हेतुवादान् बहूनाहुः परस्परजिगीषवः ॥ २७ ॥ ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम्। देवेन्द्रस्येव विहितं भीमसेनेन भारत॥ २८ ॥ ददृशुस्तोरणान्यत्र शातकुम्भमयानि ते। शय्यासनविहारांश्च सुबहून् जनसञ्चयान्॥ २९ ॥ घटान् पात्रीः कटाहानि कलसान् वर्द्धमानकान्। न हि किञ्चिदसौवर्णमपश्यन् वसुधाधिपाः॥ ३० ॥ यूपांश्च शास्त्रपठितान् दारवान् हेमभूषितान्। उपक्लृप्तान् यथाकामं विधिवद्भूरिवर्च्चसः॥३१॥ स्थलजा जलजा ये च पशवः केचन प्रभो। सर्वानेव समानीतानपश्यंस्तत्र ते नृपाः॥ ३२ ॥ गाश्चैव महिषीश्चैव तथा वृद्धस्त्रियोऽपि च। औदकानि च सत्त्वानि श्वापदानि वयांसि च ॥ ३३ ॥ जरायुजाण्डजातानि स्वेदजान्युद्भिदानि च। पर्वतानूपजातानि भूतानि ददृशुश्च ते॥ ३४ ॥ एवं प्रमुदितं सर्वं पशुगोधनधान्यतः। यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागताः॥ ३५ ॥ ब्राह्मणानां विशाञ्चैव बहुमृष्टान्नमृद्धिमत्। पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जताम्॥ ३६ ॥ दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहु-

रताऽग्रत । विनना(?)दासकृञ्चापि दिवसे दिवसे गते ॥ ३७ ॥ एवं स ववृते यज्ञो धर्म्मराजस्य धीमतः । अन्नस्य सुबहून् राजन्नुत्सर्गान् पर्वतोपमान् । दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदान् जनाः ॥ ३८ ॥ जम्बुद्वीपो हि सकलो नानाजनपदायुतः । राजन्नदृश्यतैकस्थो राष्ट्रस्तस्य महामखे ॥ ३९ ॥ तत्र जातीसहस्राणि पुरुषाणां ततस्ततः । गृहीत्वा भाजनान् जग्मुर्बहूनि भरतर्षभ ॥ ४० ॥ स्रग्विणश्चापि ते सर्व्वे सुमृष्टमणिकुण्डलाः । पर्य्यवेषन् द्विजातींस्तान् शतशोऽथ सहस्रशः ॥ ४१ ॥ विविधान्यन्नपानानि पुरुषा येऽनुयायिनः । ते वै नृपोपभोज्यानि ब्राह्मणानां ददुश्च ह ॥ ४२ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि युधिष्ठिराश्वमेधे
पञ्चाशीतोऽध्यायः ॥ ८५ ॥

---

वैशम्पायन उवाच । समागतान् वेदविदो राज्ञश्च पृथिवीश्वरान् । दृष्ट्वा युधिष्ठिरो राजा भीमसेनमभाषत ॥ १ ॥ उपायाता नरव्याघ्र य एते पृथिवीश्वराः । एतेषां क्रियतां पूजा पूजार्हा हि नराधिपाः ॥ २ ॥ इत्युक्तः स तथा चक्रे नरेन्द्रेण यशस्विना । भीमसेनो महातेजा यमाभ्यां सह पाण्डवः ॥ ३ ॥ अथाभ्यगच्छद्गोविन्दो वृष्णिभिः सह धर्म्मजम् । बलदेवं पुरस्कृत्य सर्व्वप्राणभृतां वरः ॥ ४ ॥ युयुधानेन सहितः प्रद्युम्नेन गदेन च । निशठेनाथ शाम्बेन तथैव कृतवर्म्मणा ॥ ५ ॥ तेषामपि परां पूजां चक्रे भीमो महारथः । विविशुस्ते च वेश्मानि रत्नवन्ति च सर्वशः ॥ ६ ॥ युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः । अर्जुनं कथयामास बहुसंग्रामकर्षितम् ॥ ७ ॥ स तं पप्रच्छ कौन्तेयः पुनः पुनररिन्दमम् । धर्म्मजः शक्रजं जिष्णुं समाचष्ट जगत्पतिः ॥ ८ ॥

आगमद्द्वारकावासी ममाप्तः पुरुषो नृपः। योऽद्राक्षीत् पाण्डव-श्रेष्ठं बहुसंग्रामकर्षितम् ॥ ९ ॥ समीपे च महाबाहुमाचष्ट च मम प्रभो। कुरु कार्य्याणि कौन्तेय हयमेधार्थसिद्धये ॥ १० ॥ इत्युक्तः प्रत्युवाचैनं धर्मराजो युधिष्ठिरः। दिष्ट्या स कुशली जिष्णुरुपायाति च माधव ॥ ११ ॥ यदिदं सन्दिदेशास्मिन् पाण्डवानां बलाग्रणीः। तदाज्ञातुमिहेच्छामि भवता यदुनन्दन ॥१२॥ इत्युक्तो धर्मराजेन वृष्ण्यन्धकपतिस्तदा। प्रोवाचेदं वचो वाग्मी धर्मात्मानं युधिष्ठिरम् ॥ १३ ॥ इदमाह महाराज पार्थवाक्यं स्मरन्नरः। वाच्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम ॥ १४ ॥ आगमिष्यन्ति राजानः सर्वे वै कौरवर्षभ। प्राप्तानां महतां पूजा कार्य्या ह्येतत् क्षमं हि नः ॥ १५ ॥ इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद। यथा चात्ययिकं न स्याद्यदर्घहरणेऽभवत् ॥ १६ ॥ कर्त्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यताम्। राजद्वेषान्न नश्येयुरिमा राजन् पुनः प्रजाः ॥ १७ ॥ इदमन्यच्च कौन्तेय वचः स पुरुषोऽब्रवीत्। धनञ्जयस्य नृपते तन्मे निगदतः शृणु ॥ १८ ॥ उपयास्यति यज्ञं नो मणिपूरपतिर्नृपः। पुत्रो मम महातेजा दयितो बभ्रुवाहनः ॥ १९ ॥ तं भवान् मदपेक्षार्थं विधिवत् प्रतिपूजयेत्। स तु भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो ॥ २० ॥ इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः। अभिनन्द्यास्य तद्वाक्यमिदं वचनमब्रवीत् ॥ २१ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि युधिष्ठिराश्वमेधे षड़शीतोऽध्यायः ॥ ८६ ॥

---

युधिष्ठिर उवाच। श्रुतं प्रियमिदं कृष्ण यत्त्वमर्हसि भाषितुम्। तन्मेऽमृतरसं पुण्यं मनो ह्लादयति प्रभो ॥ १ ॥ बहूनि

किल युद्धानि विजयस्य नराधिपैः । पुनरासन् हृषीकेश तत्र तत्र च मे श्रुतम् ॥ २ ॥ किं निमित्तं स नित्यं हि पार्थः सुखविवर्ज्जितः । अतीव विजयो धीमान् इति मे दूयते मनः ॥ ३ ॥ सञ्चिन्तयामि कौन्तेयं रहो जिष्णुं जनार्द्दन । अतीव दुःखभागी स सततं पाण्डुनन्दनः ॥ ४ ॥ किन्नु तस्य शरीरेऽस्ति सर्व्वलक्षणपूजिते । अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ॥ ५ ॥ अतीवासुखभोगी स सततं कुन्तिनन्दनः । न हि पश्यामि वीभत्सोर्निन्द्यं गात्रेषु किञ्चन । श्रोतव्यञ्चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि ॥ ६ ॥ इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदुत्तरम् । राजानं भोजराजन्यवर्द्धनो विष्णुरब्रवीत् ॥ ७ ॥ न ह्यस्य नृपते किञ्चित् संश्लिष्टमुपलक्षये । ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः ॥ ८ ॥ स ताभ्यां पुरुषव्याघ्रो नित्यमध्वसु वर्त्तते । न चान्यदनुपश्यामि येनासौ दुःखभाजनम् ॥ ९ ॥ इत्युक्तः पुरुषश्रेष्ठस्तदा कृष्णेन धीमता । प्रोवाच वृष्णिशार्दूलमेवमेतदिति प्रभो ॥ १० ॥ कृष्णा तु द्रौपदी कृष्णं तिर्य्यक् सासूयमैक्षत । प्रतिजग्राह तस्यास्तं प्रणयञ्चापि केशिहा । सख्युः सखा हृषीकेशः साक्षादिव धनञ्जयः ॥ ११ ॥ तत्र भीमादयस्ते तु कुरवो याजकाश्च ये । रेमुः श्रुत्वा विचित्रान्तां धनञ्जयकथां शुभाम् ॥ १२ ॥ तेषां कथयतामेव पुरुषोऽर्जुनसंकथाम् । उपायाद्वचनाद्दूतो विजयस्य महात्मनः ॥ १३ ॥ सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् । उपायातं नरव्याघ्रं फाल्गुनं प्रत्यवेदयत् ॥ १४ ॥ तत् श्रुत्वा नृपतिस्तस्य हर्षवाष्पाकुलेक्षणः । प्रियाख्याननिमित्तं वै ददौ बहुधनं तदा ॥ १५ ॥ ततो द्वितीयदिवसे महान् शब्दो व्यवर्द्धत । आगच्छति नरव्याघ्रे कौरवाणां धुरन्धरे ॥ १६ ॥ ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः । अभितो वर्त्तमानस्य यथोच्चैःश्रवसस्तथा ॥ १७ ॥ तत्र हर्षकरीर्वाचो नराणां शुश्रुवेऽर्जुनः ।

दिष्ट्यासि पार्थ कुशली धन्यो राजा युधिष्ठिरः ॥ १८ ॥ कोऽन्यो हि पृथिवीं कृत्स्नां जित्वा हि युधि पार्थिवान् । चारयित्वा हयश्रेष्ठमुपागच्छेदृतेऽर्जुनात् ॥ १९ ॥ ये व्यतीता महात्मानो राजानः सगरादयः । तेषामपीदृशं कर्म्म न कदाचन शुश्रुम ॥ २० ॥ नैतदन्ये करिष्यन्ति भविष्या वसुधाधिपाः । यत्त्वं कुरु-कुलश्रेष्ठ दुष्करं कृतवानसि ॥ २१ ॥ इत्येवं वदतां तेषां पुंसां कर्णसुखा गिरः । शृण्वन् विवेश धर्म्मात्मा फाल्गुनो यज्ञसंस्तरम् ॥ २२ ॥ ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः । धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययतुस्तदा ॥ २३ ॥ सोऽभिवाद्य पितुः पादौ धर्म्मराजस्य धीमतः । भीमादींश्चापि संपूज्य पर्य्यष्वजत केशवम् ॥ २४ ॥ तैः समेत्यार्च्चितस्तांश्च प्रत्यर्च्याथ यथाविधि । विशश्राम महाबाहुस्तीरं लब्ध्वेव पारगः ॥ २५ ॥ एतस्मिन्नेव काले तु स राजा वभ्रुवाहनः । मातृभ्यां सहितो धीमान् कुरूनेव जगाम ह ॥ २६ ॥ तत्र वृद्धान् यथावत् स कुरूनन्यांश्च पार्थिवान् । अभिवाद्य महाबाहुस्तैश्चापि प्रतिनन्दितः । प्रविवेश पितामह्याः कुन्त्याभवनमुत्तमम् ॥ २७ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि वभ्रुवाहना-
गमने सप्ताशीतोऽध्यायः ॥ ८७ ॥

---

वैशम्पायन उवाच । स प्रविश्य महाबाहुः पाण्डवानां निवेशनम् । पितामहीमभ्यवन्दत् साम्ना परमवल्गुना ॥ १ ॥ ततश्चित्राङ्गदा देवी कौरव्यस्यात्मजापि च । पृथां कृष्णाञ्च सहिते विनयेनोपजग्मतुः । सुभद्राञ्च यथान्यायं याश्चान्याः कुरुयोषितः ॥ २ ॥ ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च । द्रौपदी च सुभद्रा च याश्चाप्यन्या ददुः स्त्रियः ॥ ३ ॥ ऊषतुस्तत्र ते देव्यौ

महार्हशयनासने । सुपूजिते स्वयं कुन्त्या पार्थस्य हितकाम्यया
॥ ४ ॥ स च राजा महातेजाः पूजितो वभ्रुवाहनः । धृतराष्ट्रं
महीपालमुपतस्थे यथाविधि ॥ ५ ॥ युधिष्ठिरञ्च राजानं भीमा-
दींश्चापि पाण्डवान् । उपगम्य महातेजा विनयेनाभ्यवादयत् ॥६॥
स तैः प्रेम्णा परिष्वक्तः पूजितश्च यथाविधि । धनञ्चास्मै ददुर्भूरि
प्रीयमाणा महारथाः ॥ ७ ॥ तथैव च महीपालः कृष्णं चक्र-
गदाधरम् । प्रद्युम्न इव गोविन्दं विनयेनोपतस्थिवान् ॥ ८ ॥
तस्मै कृष्णो ददौ राज्ञे महार्हमतिपूजितम् । रथं हेमपरिष्कारं
दिव्याश्वयुजमुत्तमम् ॥ ९ ॥ धर्म्मराजश्च भीमश्च फाल्गुनश्च यमौ
तथा । पृथक् पृथक् च ते चैनं मानार्घाभ्यामयोजयन् ॥ १० ॥
ततस्तृतीयदिवसे सत्यवत्यात्मजो मुनिः । युधिष्ठिरं समभ्येत्य
वाग्मी वचनमब्रवीत् ॥ ११ ॥ अद्यप्रभृति कौन्तेय यजस्व समयो
हि ते । मुहूर्त्तो यज्ञियः प्राप्तश्चोदयन्तीह याजकाः ॥ १२ ॥
अहीनो नाम राजेन्द्र क्रतुस्तेऽयञ्च कल्प्यताम् । बहुत्वात् काञ्च-
नाख्यस्य ख्यातो बहुसुवर्णकः ॥ १३ ॥ एवमत्र महाराज दक्षिणां
त्रिगुणां कुरु । त्रित्वं व्रजतु ते राजन् ब्राह्मणा ह्यत्र कारणम्
॥ १४ ॥ त्रीनश्वमेधानत्र त्वं सम्प्राप्य बहुदक्षिणान् । ज्ञाति-
बध्याकृतं पापं प्रहास्यसि नराधिप ॥ १५ ॥ पवित्रं परमञ्चैतत्
पावनञ्चैतदुत्तमम् । यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन ॥ १६ ॥
इत्युक्तः स तु तेजस्वी व्यासेनामितबुद्धिना । दीक्षां विवेश धर्मात्मा
वाजिमेधाप्तये ततः ॥ १७ ॥ ततो यज्ञं महाबाहुर्वाजिमेधं
महाक्रतुम् । बह्वन्नदक्षिणं राजा सर्वकामगुणान्वितम् ॥ १८ ॥
तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः । परिक्रमन्तः सर्वज्ञा
विधिवत् साधु शिक्षितम् ॥ १९ ॥ न तेषां स्खलितं किञ्चिदासी-
च्चाप्यकृतं तथा । क्रमयुक्तञ्च युक्तञ्च चक्रुस्तत्र द्विजर्षभाः ॥ २० ॥
कृत्वा प्रवर्ग्यं धर्माख्यं यथावत् द्विजसत्तमाः । चक्रुस्ते विधिव-

द्राजंस्तथैवाभिषवं द्विजाः॥२१॥ अभिसूय ततो राजन् सोमं सोमपसत्तमाः। सवनान्यानुपूर्व्वेण चक्रुः शास्त्रानुसारिणः॥२२॥ न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह। क्षुधितो दुःखितो वापि प्राकृतो वापि मानवः॥२३॥ भोजनं भोजनार्थिभ्यो दापयामास शत्रुहा। भीमसेनो महातेजाः सततं राजशासनात् ॥२४॥ संस्तरे कुशलाश्चापि सर्वकार्य्याणि याजकाः। दिवसे दिवसे चक्रुर्यथाशास्त्रानुदर्शनात् ॥२५॥ नाषड़ङ्गविदत्रासीत् सदस्यस्तस्य धीमतः। नाव्रतो नानुपाध्यायो न च वादाविचक्षणः॥२६॥ ततो यूपोच्छ्रये प्राप्ते षड़्बैल्वान् भरतर्षभ। खादिरान् बिल्वसमितांस्तावतः सर्ववर्णिनः॥२७॥ देवदारुमयौ द्वौ तु यूपौ कुरुपतेर्मखे। श्लेष्मातकमयञ्चैकं याजकाः समकल्पयन्॥२८॥ शोभार्थं चापरान् यूपान् काञ्चनान् भरतर्षभ। स भीमः कारयामास धर्म्मराजस्य शासनात्॥२९॥ ते व्यराजन्त राजर्षे वासोभिरुपशोभिताः। महेन्द्रानुगता देवा यथा सप्तर्षिभिर्द्दिवि॥३०॥ इष्टिकाः काञ्चनीश्चात्र चयनार्थं कृताभवन्। शुशुभे चयनं तत्र दक्षस्येव प्रजापतेः॥३१॥ चतुश्चित्यस्य तस्यासीदष्टादशकरात्मकः। स रुक्मपक्षो निचितस्त्रिकोणो गरुड़ाकृतिः॥३२॥ ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः। तं तं देवं समुद्दिश्य पक्षिणश्च यथाविधि॥३३॥ ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये। सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्म्मणि॥३४॥ यूपेषु नियता चासीत् पशूनां त्रिशती तथा। अश्वरत्नोत्तरा यज्ञे कौन्तेयस्य महात्मनः॥३५॥ स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसंकुलः। गन्धर्वगणसंगीतः प्रनृत्योऽप्सरसांगणैः॥३६॥ स किं पुरुषसंकीर्णः किन्नरैश्चोपशोभितः। सिद्धविप्रनिवासैश्च समन्तादभिसंवृतः॥३७॥ तस्मिन् सदसि नित्यास्तु व्यासशिष्या द्विजर्षभाः। सर्वशास्त्रप्रणेतारः कुशला यज्ञसंस्तरे॥३८॥

नारदश्च बभूवात्र तुम्बुरुश्च महाद्युतिः । विश्वावसुश्चित्रसेन-
स्तथान्ये गीतकोविदाः ॥ ३९ ॥ रमयन्ति स्म तान् विप्रान् यज्ञ-
कर्म्मान्तरेषु वै । गन्धर्वा गीतकुशला नृत्येषु च विशारदाः ॥ ४० ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वमेधे
अष्टाशीतोऽध्यायः ॥ ८८ ॥

---

वैशम्पायन उवाच । श्रपयित्वा पशून् रम्यान् विधिवद्द्विज-
सत्तमाः । तन्तुरङ्गं यथाशास्त्रमालभन्त द्विजातयः ॥ १ ॥ ततः
संज्ञाप्य तुरगं विधिवद्याजकास्तदा । उपसंवेशयन्राजंस्ततस्तां
द्रुपदात्मजाम् । कलाभिस्तिसृभीराजन् यथाविधि मनस्विनीम्
॥ २ ॥ उद्धृत्य तु वपान्तस्य यथाशास्त्रं द्विजातयः । श्रपया-
मासुरव्यग्रा विधिवद्भरतर्षभ ॥ ३ ॥ तं वपाधूमगन्धन्तु धर्म्मराजः
सहानुजैः । उपाजिघ्रद्यथाशास्त्रं सर्वपापापहन्तदा ॥ ४ ॥ शिष्टा-
न्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप । तान्यग्नौ जुहुवुर्धीराः
समस्ताः षोड़शर्त्विजः ॥ ५ ॥ संस्थाप्यैवं तस्य राज्ञस्तं यज्ञं
शक्रतेजसः । व्यासः सशिष्यो भगवान् वर्द्धयामास तं नृपम् ॥ ६ ॥
ततो युधिष्ठिरः प्रादाद्ब्राह्मणेभ्यो यथाविधि । कोटीः सहस्रं
निष्काणां व्यासाय तु वसुन्धराम् ॥ ७ ॥ प्रतिगृह्य धरां राजन्
व्यासः सत्यवतीसुतः । अब्रवीद्भरतश्रेष्ठं धर्म्मराजं युधिष्ठिरम्
॥ ८ ॥ वसुधा भवतस्त्वेषा संन्यस्ता राजसत्तम । निष्क्रयो
दीयतां मह्यं ब्राह्मणा हि धनार्थिनः ॥ ९ ॥ युधिष्ठिरस्तु तान्
विप्रान् प्रत्युवाच महामनाः । भ्रातृभिः सहितो धीमान्मध्ये राज्ञां
महात्मनाम् ॥ १० ॥ अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता ।
अर्जुनेन जिता चेयं ऋत्विग्भ्यः प्रापिता मया ॥ ११ ॥ वनं
प्रवेक्ष्ये विप्राग्र्या विभजध्वं महीमिमाम् । चतुर्धा पृथिवीं कृत्वा

चातुर्होत्रप्रमाणतः ॥ १२ ॥ नाहमादातुमिच्छामि ब्रह्मस्वं द्विज-
सत्तमाः । इदं नित्यं मनो विप्रा भ्रातॄणाञ्चैव मे सदा ॥ १३ ॥
इत्युक्तवति तस्मिंस्तु भ्रातरो द्रौपदी च सा । एवमेतदिति प्राहु-
स्तदभूल्लोमहर्षणम् ॥ १४ ॥ ततोऽन्तरीक्षे वागासीत् साधु
साध्विति भारत । तथैव द्विजसङ्घानां शंसतां विबभौ स्वनः ॥१५॥
द्वैपायनस्तथा कृष्णः पुनरेव युधिष्ठिरम् । प्रोवाच मध्ये विप्राणा-
मिदं संपूजयन् मुनिः ॥ १६ ॥ दत्तैषा भवता मह्यं तान्ते प्रति-
ददाम्यहम् । हिरण्यं दीयतामेभ्यो ब्राह्मणेभ्यो धरास्तु ते
॥ १७ ॥ ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम् । यथाह
भगवान् व्यासस्तथा त्वं कर्त्तुमर्हसि ॥ १८ ॥ इत्युक्तः स कुरुश्रेष्ठः
प्रीतात्मा भ्रातृभिः सह । कोटिकोटीकृतां प्रादात् दक्षिणां
त्रिगुणां क्रतोः ॥ १९ ॥ न करिष्यति तल्लोके कश्चिदन्यो नरा-
धिपः । यत् कृतं कुरुराजेन मरुत्तस्यानुकुर्वता ॥ २० ॥ प्रति-
गृह्य तु तद्रत्नं कृष्णद्वैपायनो मुनिः । ऋत्विग्भ्यः प्रददौ विद्वां-
श्चतुर्धा व्यभजंश्च ते ॥ २१ ॥ धरण्या निष्क्रियं दत्त्वा तद्धिरण्यं
युधिष्ठिरः । धूतपापो जितस्वर्गो मुमुदे भ्रातृभिः सह ॥ २२ ॥
ऋत्विजस्तमपर्य्यन्तं सुवर्णनिचयन्तदा । व्यभजन्त द्विजातिभ्यो
यथोत्साहं यथासुखम् ॥ २३ ॥ यज्ञवाटे च यत्किञ्चित् हिरण्यं
सविभूषणम् । तोरणानि च यूपांश्च घटान् पात्रीस्तथेष्टकाः ।
युधिष्ठिराभ्यनुज्ञाताः सर्वं तद्व्यभजन् द्विजाः ॥ २४ ॥ अनन्तरं
द्विजातिभ्यः क्षत्रिया जह्रिरे वसु । तथा विट्शूद्रसङ्घाश्च तथान्ये
म्लेच्छजातयः ॥ २५ ॥ ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुराल-
यान् । तर्पिता वसुना तेन धर्मराजेन धीमता ॥ २६ ॥ स्वमंशं
भगवान् व्यासः कुन्त्यै प्रादाद्धि मानतः । प्रददौ तस्य महतो
हिरण्यस्य महाद्युतिः ॥ २७ ॥ श्वशुरात् प्रीतिदायन्तं प्राप्य सा
प्रीतमानसा । चकार पुण्यकान्तेन सुमहत् सङ्घशः पृथा ॥ २८ ॥

गत्वा त्ववभृते राजा विपाप्मा भ्रातृभिः सह । संभाव्यमानः शुशुभे महेन्द्रस्त्रिदशैरिव ॥ २९ ॥ पाण्डवाश्च महीपालैः समेतैरभिसंवृताः । अशोभन्त महाराज ग्रहास्तारागणैरिव ॥ ३० ॥ राजभ्योऽपि ततः प्रादाद्रत्नानि विविधानि च । गजानश्वानलङ्कारान् स्त्रियो वासांसि काञ्चनम् ॥ ३१ ॥ तद्धनौघमपर्य्यन्तं पार्थः पार्थिवमण्डले । विसृजन् शुशुभे राजन् यथा वैश्रवणस्तथा ॥ ३२ ॥ आनीय च तथा वीरं राजानं बभ्रुवाहनम् । प्रदाय विपुलं वित्तं गृहान् प्रास्थापयत्तदा ॥ ३३ ॥ दुःशलायाश्च तं पौत्रं बालकं भरतर्षभ । स्वराज्येऽथ पितुर्धीमान् स्वसुः प्रीत्या न्यवेशयत् ॥ ३४ ॥ नृपतींश्चैव तान् सर्वान् सुविभक्तान् सुपूजितान् । प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ ३५ ॥ गोविन्दञ्च महात्मानं बलदेवं महाबलम् । तथान्यान् वृष्णिवीरांश्च प्रद्युम्नादीन् सहस्रशः ॥ ३६ ॥ पूजयित्वा महाराज यथाविधि महाद्युतिः । भ्रातृभिः सहितो राजा प्रास्थापयदरिन्दमः ॥ ३७ ॥ एवं बभूव यज्ञः स धर्म्मराजस्य धीमतः । बह्वन्नधनरत्नौघः सुरामैरेयसागरः ॥ ३८ ॥ सर्पिःपङ्का ह्रदा यत्र बभूवुश्चान्नपर्वताः । रसालाः कर्द्दमा नद्यो बभूवुर्भरतर्षभ ॥ ३९ ॥ भक्ष्यं खाण्डवरागाणां क्रियतां भुज्यतां तथा । पशूनां बध्यताञ्चैव नान्तं ददृशिरे जनाः ॥ ४० ॥ मत्तं प्रमत्तमुदितं सुप्रीतयुवतीजनम् । मृदङ्गशङ्खनादैश्च मनोरममभूत्तदा ॥ ४१ ॥ दीयतां भुज्यतां चेष्टं दिवारात्रमवारितम् । तं महोत्सवसङ्काशं हृष्टपुष्टजनाकुलम् । कथयन्ति स्म पुरुषा नानादेशनिवासिनः ॥४२॥ वर्षित्वा धनधाराभिः कामैरत्नै रसैस्तथा । विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत् पुरम् ॥ ४३ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि अश्वमेधसमाप्तौ एकोननवतितमोऽध्यायः ॥ ८९ ॥

जनमेजय उवाच। पितामहस्य मे यज्ञे धर्मराजस्य धीमतः। यदाश्चर्य्यमभूत् किञ्चित्तद्भवान् वक्तुमर्हति॥ १॥

वैशम्पायन उवाच। श्रूयतां राजशार्दूल महदाश्चर्य्यमुत्तमम्। अश्वमेधे महायज्ञे निवृत्ते यदभूत् प्रभो॥ २॥ तर्पितेषु द्विजाग्र्येषु ज्ञातिसम्बन्धिबन्धुषु। दीनान्धकृपणे वापि तदा भरतसत्तम॥ ३॥ घुष्यमाणे महादाने दिक्षु सर्वासु भारत। पतत्सु पुष्पवर्षेषु धर्म्मराजस्य मूर्द्धनि॥ ४॥ नीलाक्षस्तत्र नकुलो रुक्मपार्श्वस्तदानघ। वज्राशनिसमं नादममुञ्चद्दसुधाधिप॥ ५॥ सकृदुत्सृज्य तं नादं त्रासयानो मृगद्विजान्। मानुषं वचनं प्राह धृष्टो बिलशयो महान्॥ ६॥ सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः। उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः॥ ७॥ तस्य तद्वचनं श्रुत्वा नकुलस्य विशाम्पते। विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः॥ ८॥ ततः समेत्य नकुलं पर्य्यपृच्छन्त ते द्विजाः। कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम्॥ ९॥ किं बलं परमं तुभ्यं किं श्रुतं किं परायणम्। कथं भवन्तं विद्याम यो नो यज्ञं विगर्हसे॥ १०॥ अविलुप्यागमं कृत्स्नं विविधैर्यज्ञियैः कृतम्। यथागमं यथान्यायं कर्त्तव्यञ्च तथा कृतम्॥ ११॥ पूजार्हाः पूजिताश्चात्र विधिवत् शास्त्रदर्शनात्। मन्त्राहुतिहुतश्चाग्निर्दत्त्वं देयममत्सरम्॥ १२॥ तुष्टा द्विजातयश्चात्र दानैर्बहुविधैरपि। क्षत्रियाश्च सुयुद्धेन श्राद्धैश्चापि पितामहाः॥ १३॥ पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः। अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथग्जनाः॥ १४॥ ज्ञातिसम्बन्धिनस्तुष्टाः शौचेन च नृपस्य नः। देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः॥ १५॥ यदत्र तथ्यं तद्ब्रूहि सत्यं सत्यं द्विजातिषु। यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया॥ १६॥ श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यरूपं बिभर्षि च। समागतश्च विप्रैस्त्वं तद्भवान् वक्तुमर्हति॥ १७॥

इति पृष्टो द्विजैस्तैः स प्रहसन्नकुलोऽब्रवीत् । नैषा मृषा मया वाणी प्रोक्ता दर्पेण वा द्विजाः ॥ १८ ॥ यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् । सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः ॥ १९ ॥ इत्यवश्यं मयैतद्वो वक्तव्यं द्विजसत्तमाः । शृणुताव्यग्रमनसः शंसतो मे यथातथम् ॥ २० ॥ अनुभूतञ्च दृष्टञ्च यन्मयाद्भुतमुत्तमम् । उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ २१ ॥ स्वर्गं येन द्विजाः प्राप्तः सभार्य्यः ससुतस्नुषः । यथा चार्द्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥ २२ ॥

नकुल उवाच । हन्त वो वर्त्तयिष्यामि दानस्य फलमुत्तमम् । न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य तद्द्विजाः ॥ २३ ॥ धर्म्मक्षेत्रे कुरुक्षेत्रे धर्म्मज्ञैर्बहुभिर्वृते । उञ्छवृत्तिर्द्विजः कश्चित् कापोतिरभवत्तदा ॥ २४ ॥ सभार्य्यः सह पुत्रेण सस्नुषस्तपसि स्थितः । बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥ २५ ॥ षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह सुव्रतः । षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ॥ २६ ॥ भुङ्क्तेऽन्यस्मिन् कदाचित् स षष्ठे काले द्विजोत्तमः । कदाचिद्धर्म्मिणस्तस्य दुर्भिक्षे सति दारुणे ॥२७॥ नाविद्यत तदा विप्राः सञ्चयस्तन्निबोधत । क्षीणौषधिसमावेशे द्रव्यहीनोऽभवत्तदा ॥ २८ ॥ काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम् । क्षुधापरिगताः सर्व्वे प्रातिष्ठन्त तदा तु ते ॥ २९ ॥ उञ्छंस्तदा शुक्लपक्षे मध्यं तपति भास्करे । उष्णार्त्तश्च क्षुधार्त्तश्च स विप्रस्तपसि स्थित ॥३०॥ उञ्छमप्राप्तवानेव ब्राह्मणः क्षुच्छ्रमान्वितः । स तथैव क्षुधाविष्टः सार्द्धं परिजनेन ह ॥ ३१ ॥ क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः । अथ षष्ठे गते काले यवप्रस्थमुपार्ज्जयत् ॥ ३२ ॥ यवप्रस्थन्तु तं सक्तूनकुर्व्वन्त तपस्विनः । कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ॥ ३३ ॥ कुड़वं कुड़वं सर्व्वे व्यभजन्त तपस्विनः । अथागच्छत् द्विजः कश्चिदतिथि-

भुञ्जतां तदा॥ ३४॥ ते तं दृष्ट्वातिथिं प्राप्तं प्रहृष्टमनसोऽभवन्। तेऽभिवाद्य सुखप्रश्नं दृष्ट्वा तमतिथिं तदा॥ ३५॥ विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः। अनसूया जितक्रोधाः साधवो वीतमत्सराः॥ ३६॥ त्यक्तमानमदक्रोधा धर्म्मज्ञा द्विजसत्तमाः। सब्रह्मचर्य्यं गोत्रन्ते तस्याख्याला परस्परम्॥ ३७॥ कुटीं प्रवेशयामासुः क्षुधार्त्तमतिथिन्तदा। इदमर्घ्यञ्च पाद्यञ्च वृषी चेयं तवानघ॥ ३८॥ शुचयः सक्तवश्चेमे नियमोपार्ज्जिताः प्रभो। प्रतिगृह्णीष्व भद्रन्ते मया दत्ता द्विजर्षभ॥ ३९॥ इत्युक्तः प्रतिगृह्याथ सक्तूनां कुड़वं द्विजः। भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः॥ ४०॥ स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजः। आहारं चिन्तयामास कथं तुष्टो भवेदिति॥ ४१॥ तस्य भार्य्याब्रवीद्वाक्यं मद्भागो दीयतामिति। गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः॥ ४२॥ इति ब्रुवन्तीं तां साध्वीं भार्य्यां स द्विजसत्तमः। क्षुधापरिगतां ज्ञात्वा तान् सक्तून्नाभ्यनन्दत॥ ४३॥ आत्मानुमानतो विद्वान् स तु विप्रर्षभस्तदा। जानन् वृद्धां क्षुधार्त्ताञ्च श्रान्तां ग्लानां तपस्विनीम्॥ ४४॥ त्वगस्थिभूतां वेपन्तीं ततो भार्य्यामुवाच ह। अपि कीटपतङ्गानां मृगाणाञ्चैव शोभने॥ ४५॥ स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि। अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव सः॥ ४६॥ धर्म्मकामार्थकार्य्याणि शुश्रूषा कुलसन्ततिः। दारेष्वधीनो धर्म्मश्च पितॄणामात्मनस्तथा॥ ४७॥ न वेत्ति कर्म्मतो भार्य्यारक्षणे योऽक्षमः पुमान्। अयशो महदाप्नोति नरकांश्चैव गच्छति। प्रपतेद्यशसो दीप्तात् स च लोकान्न चाप्नुयात्॥ ४८॥ इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज। सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे॥ ४९॥ सत्यं रतिश्च धर्म्मश्च स्वर्गश्च गुणनिर्ज्जितः। स्त्रीणां पतिसमाधानं काङ्क्षितञ्च द्विजर्षभ॥ ५०॥ ऋतुर्मातुः पितुर्वीजं दैवतं परमं

पतिः । भर्त्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा ॥ ५१ ॥ पालनाद्धि पतिस्त्वं मे भर्त्तासि भरणाच्च मे । पुत्रप्रदानाद्वरदस्तस्मात् सक्तून् प्रयच्छ मे ॥ ५२ ॥ जरापरिगतो वृद्धः क्षुधार्त्तो दुर्व्वलो भृशम् । उपवासपरिश्रान्तो यदा त्वमपि कर्षितः ॥ ५३ ॥ इत्युक्तः स तया सक्तून् प्रगृह्येनं वचोऽब्रवीत् । द्विज सक्तूनिमान् भूयः प्रतिगृह्णीष्व सत्तम ॥ ५४ ॥ स तान् प्रगृह्य भुक्त्वा च न तुष्टिमगमत् द्विजः । तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ५५ ॥

पुत्र उवाच । सक्तूनिमान् प्रगृह्य त्वं देहि विप्राय सत्तम । इत्येव सुकृतं मन्ये तस्मादेतत् करोम्यहम् ॥ ५६ ॥ भवान् हि परिपाल्यो मे सर्व्वदैव प्रयत्नतः । साधूनां काङ्क्षितं यस्मात् पितुर्वृद्धस्य पालनम् ॥ ५७ ॥ पुत्रार्थो विहितो ह्येष वार्द्धके परिपालनम् । श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥ ५८ ॥ प्राणधारणमात्रेण शक्यं कर्त्तुं तपस्त्वया । प्राणो हि परमो धर्म्मः स्थितो देहेषु देहिनाम् ॥ ५९ ॥

पितोवाच । अपि वर्षसहस्री त्वं बाल एव मतो मम । उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत् सुतात् ॥ ६० ॥ बालानां क्षुद्बलवती जानाम्येतदहं प्रभो । वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ६१ ॥ जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च । दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ६२ ॥

पुत्र उवाच । अपत्यमस्मि ते पुत्रस्त्राणात् पुत्र इति श्रुतिः । आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ॥ ६३ ॥

पितोवाच । रूपेण सदृशस्त्वं मे शीलेन च दमेन च । परीक्षितश्च बहुधा सक्तूनाददे‍्मि ते सुत ॥ ६४ ॥ इत्युक्त्वादाय तान् सक्तून् प्रीतात्मा द्विजसत्तमः । प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ६५ ॥ भुक्त्वा तानपि सक्तून् स नैव तुष्टो बभूव ह । उञ्छवृत्तिस्तु धर्म्मात्मा व्रीड़ामनुजगाम ह ॥ ६६ ॥ तं वै वधः

स्थिता साध्वी ब्राह्मणप्रियकाम्यया। सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत्॥ ६७॥ सन्तानात्तव सन्तानं मम विप्र भविष्यति। सक्तूनिमानतिथये गृहीत्वा संप्रयच्छ मे॥ ६८॥ तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः। पौत्रेण तानवाप्नोति यत्र गत्वा न शोचति॥ ६९॥ धर्माद्यो हि यथा त्रेता वह्निस्त्रेता तथैव च। तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः॥ ७०॥ पितॄन् ऋणात्तारयति पुत्र इत्यनुशुश्रुम। पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते॥ ७१॥

श्वशुर उवाच। वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै। कर्षितां सुव्रताचारे क्षुधाविह्वलचेतसाम्॥ ७२॥ कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः। कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि॥ ७३॥ षष्ठे काले व्रतवतीं शौचशीलतपोऽन्विताम्। कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे॥ ७४॥ बाला क्षुधार्त्ता नारी च रक्ष्या त्वं सततं मया। उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी॥ ७५॥

स्नुषोवाच। गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम्। देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो॥ ७६॥ देहः प्राणाश्च धर्मश्च शुश्रूषार्थमिदं गुरोः। तव विप्र प्रसादेन लोकान् प्राप्स्यामहे शुभान्॥ ७७॥ अवेक्ष्या इति कृत्वाहं दृढभक्तेति वा द्विज। चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि॥ ७८॥

श्वशुर उवाच। अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे। या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे॥ ७९॥ तस्मात् सक्तून् ग्रहीष्यामि बधु नार्हसि वञ्चनाम्। गणयित्वा महाभागे त्वं हि धर्मभृतां वरे॥ ८०॥ इत्युक्त्वा तानुपादाय सक्तून् प्रादात् द्विजातये। ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः॥ ८१॥ प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम्। वाग्मी तदा द्विजश्रेष्ठो

धर्मः पुरुषविग्रहः ॥ ८२ ॥ शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः । यथाशक्ति विसृष्टेन प्रीतोऽस्मि द्विजसत्तम ॥ ८३ ॥ अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः । गगनात् पुष्पवर्षञ्च पश्येदं पतितं भुवि ॥ ८४ ॥ सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः । स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ॥ ८५ ॥ ब्रह्मर्षयो विमानस्था ब्रह्मलोकचराश्च ये । काङ्क्षन्तो दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ ॥ ८६ ॥ पितृलोकगताः सर्वे तारिताः पितरस्त्वया । अनागताश्च बहवः सुबहूनि युगान्युत ॥ ८७ ॥ ब्रह्मचर्य्येण दानेन यज्ञेन तपसा तथा । असङ्करेण धर्मेण तस्माद्गच्छ दिवं द्विज ॥ ८८ ॥ श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत । तस्माद्देवाश्च दानेन प्रीता ब्राह्मणसत्तम ॥ ८९ ॥ सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा । कृच्छ्रकाले ततः स्वर्गो विजितः कर्मणा त्वया ॥ ९० ॥ क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति । क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥ ९१ ॥ बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् । यदा दानरुचिः स्याद्वै तदा धर्मो न सीदति ॥ ९२ ॥ अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च । धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥ ९३ ॥ द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् । कालः परतरो दानात् श्रद्धा चैव ततः परा ॥ ९४ ॥ स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते । स्वर्गार्गलं लोभवीजं रागगुप्तं दुरासदम् ॥ ९५ ॥ तन्तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः । ब्राह्मणास्तपसा युक्ता यथाशक्तिप्रदायिनः ॥ ९६ ॥ सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च । दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥ ९७ ॥ रन्तिदेवो हि नृपतिरपः प्रादादकिञ्चनः । शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥ ९८ ॥ न धर्म्मः प्रीयते तात दानैर्दत्तैर्महाफलैः । न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ॥ ९९ ॥

गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः । एकां दत्त्वा स पारक्यां नरकं समपद्यत ॥ १०० ॥ आत्ममांसप्रदानेन शिबि-रौशीनरो नृपः । प्राप्य पुण्यकृतांल्लोकान् मोदते दिवि सुव्रतः ॥ १०१ ॥ विभवो न नृणां पुण्यं स्वशक्त्या स्वर्जितं सताम् । न यज्ञैर्विविधैर्विप्र यथान्यायेन सञ्चितैः ॥ १०२ ॥ क्रोधाद्दानफलं हन्ति लोभात् स्वर्गं न गच्छति । न्यायवृत्तिर्हि तपसा दानवित् स्वर्गमश्नुते ॥ १०३ ॥ न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः । न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥ १०४ ॥ सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाक्षयः । विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ॥ १०५ ॥ सर्वेषां वै द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् । आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ॥ १०६ ॥ तारितो हि त्वया देहो लोके कीर्त्तिः स्थिरा च ते । सभार्य्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥ १०७ ॥ इत्युक्तवाक्ये धर्मे तु यानमारुह्य स द्विजः । सदारः ससुतश्चैव सस्नुषश्च दिवं गतः ॥ १०८ ॥ तस्मिन् विप्रे गते स्वर्गं ससुते सस्नुषे तदा । भार्य्याचतुर्थे धर्मज्ञे ततोऽहं निःसृतो बिलात् ॥ १०९ ॥ ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च । दिव्यपुष्पविमर्द्दाच्च साधोर्दानलवैश्च तैः ॥ ११० ॥ विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् । तस्य सत्याभिसन्धस्य सक्तु-दानेन चैव ह ॥ १११ ॥ शरीरार्द्धञ्च मे विप्राः शातकुम्भमयं कृतम् । पश्यतेमं सुविपुलं तपसा तस्य धीमतः ॥ ११२ ॥ कथमेवं विधं स्यादै पार्श्वमन्यदिति द्विजाः । तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ॥ ११३ ॥ यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः । आशया परया प्राप्तो न चाहं काञ्चनीकृतः ॥ ११४ ॥ ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः । सक्तुप्रस्थेन यज्ञोऽयं सम्मितो नेति सर्वथा ॥ ११५ ॥ सक्तुप्रस्थलवैस्तैर्हि तदाहं काञ्चनीकृतः । न हि यज्ञो महानेष सदृशस्तैर्मतो मम ॥ ११६ ॥ इत्युक्त्वा नकुलः

सर्वान् यज्ञे द्विजवरांस्तदा । जगामादर्शनं तेषां विप्रास्ते च ययुर्गृहान् ॥ ११७ ॥

वैशम्पायन उवाच । एतत्ते सर्वमाख्यातं मया परपुरञ्जय । यदाश्चर्य्यमभूत्तत्र वाजिमेधे महाक्रतौ ॥ ११८ ॥ न विस्मयस्ते नृपते यज्ञे कार्य्यः कथञ्चन । ऋषिकोटिसहस्राणि तपोभिर्य्ये दिवं गताः ॥ ११९ ॥ अद्रोहः सर्वभूतेषु सन्तोषः शीलमार्ज्जवम् । तपो दमश्च सत्यञ्च प्रदानञ्चेति सम्मितम् ॥ १२० ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि नकुलाख्याने
नवतितमोऽध्यायः ॥ ९० ॥

---

जनमेजय उवाच । यज्ञे सक्ता नृपतयस्तपःसक्ता महर्षयः । शान्तिं व्यवस्थिता विप्राः शमो दम इति प्रभो ॥ १ ॥ तस्माद्यज्ञ-फलैस्तुल्यं न किञ्चिदिह दृश्यते । इति मे वर्त्तते बुद्धिस्तथा चैत-दसंशयम् ॥ २ ॥ यज्ञैरिष्ट्वा तु बहवो राजानो द्विजसत्तम । इह कीर्त्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्नुयुः ॥ ३ ॥ देवराजः सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः । देवराज्यं महातेजाः प्राप्तवानखिलं विभुः ॥ ४ ॥ यदा युधिष्ठिरो राजा भीमार्जुनपुरःसरः । सदृशो देव-राजेन समृद्ध्या विक्रमेण च ॥ ५ ॥ अथ कस्मात् स नकुलो गर्हया-मास तं क्रतुम् । अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ ६ ॥

वैशम्पायन उवाच । यज्ञस्य विधिमग्र्यं वै फलञ्चापि नरा-धिप । गदतः शृणु मे राजन् यथावदिह भारत ॥ ७ ॥ पुरा शक्रस्य यजतः सर्व ऊचुर्महर्षयः । ऋत्विक्षु कर्म्मव्यग्रेषु वितते यज्ञकर्म्मणि ॥ ८ ॥ हूयमाने तथा वह्नौ होत्रे गुणसमन्विते । देवेष्वाहूयमानेषु स्थितेषु परमर्षिषु ॥ ९ ॥ सुप्रतीतैस्तथा विप्रैः स्वागमैः सुस्वरैर्नृप । अश्रान्तैश्चापि लघुभिरध्वर्य्युवृषभैस्तथा ॥१०॥

आलम्भसमये तस्मिन् गृहीतेषु पशुष्वथ। महर्षयो महाराज बभूवुः कृपयान्विताः ॥ ११ ॥ ततो दीनान् पशून् दृष्ट्वा ऋषयस्ते तपोधनाः। ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः ॥ १२ ॥ अपरिज्ञानमेतत्ते महान्तं धर्ममिच्छतः। न हि यज्ञे पशुगणा विधिदृष्टाः पुरन्दर ॥ १३ ॥ धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो। नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते ॥ १४ ॥ आगमेनैव ते यज्ञं कुर्वन्तु यदि चेच्छसि। विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान् भवेत् ॥ १५ ॥ यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः। एष धर्मो महान् शक्र महागुणफलोदयः ॥ १६ ॥ शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः। उक्तं न प्रतिजग्राह मानान्मोहवशंगतः ॥ १७ ॥ तेषां विवादः सुमहान् शक्रयज्ञे तपस्विनाम्। जङ्गमैः स्थावरैर्वापि यष्टव्यमिति भारत ॥ १८ ॥ ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः। तदा सन्धाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ १९ ॥ महाभाग कथं यज्ञेष्वागमो नृपसत्तम। यष्टव्यं पशुभिर्मुख्यैरथो बीजै रसैरिति ॥ २० ॥ तत् श्रुत्वा तु वसुस्तेषामविचार्य्य बलाबलम्। यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥ २१ ॥ एवमुक्त्वा स नृपतिः प्रविवेश रसातलम्। उक्त्वाथ वितथं प्रश्नं चेदीनामीश्वरः प्रभुः ॥ २२ ॥ तस्मान्न वाच्यं ह्येकेन बहुज्ञेनापि संशये। प्रजापतिमपाहाय स्वयम्भुवस्तते प्रभुम् ॥ २३ ॥ तेन दत्तानि दानानि पापेनाशुद्धबुद्धिना। तानि सर्वाण्यनादृत्य नश्यन्ति विपुलान्यपि ॥ २४ ॥ तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः। दानेन कीर्त्तिर्भवति न प्रेत्येह च दुर्मतेः ॥ २५ ॥ अन्यायोपगतं द्रव्यमभीक्ष्णं यो ह्यपण्डितः। धर्माभिशङ्की यजते न स धर्मफलं लभेत् ॥ २६ ॥ धर्मवैतंसिको यस्तु पापात्मा पुरुषाधमः। ददाति दानं विप्रेभ्यो लोकविश्वासकारणम् ॥ २७ ॥ पापेन कर्मणा विप्रो धनं प्राप्य निरङ्कुशः। राग-

मोहान्वितः सोऽन्ते कलुषां गतिमश्नुते ॥ २८ ॥ अपि सञ्चयबुद्धिर्हि लोभमोहवशंगतः । उद्वेजयति भूतानि पापेनाशुद्धबुद्धिना ॥२९॥ एवं लब्ध्वा धनं मोहात् यो हि दद्याद्यजेत वा । न तस्य स फलं प्रेत्य भुङ्क्ते पापधनागमात् ॥ ३० ॥ उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः । दानं विभवतो दत्त्वा नराः स्वर्यान्ति धार्म्मिकाः ॥ ३१ ॥ एष धर्म्मो महायोगो दानं भूतदया तथा । ब्रह्मचर्य्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ॥ ३२ ॥ सनातनस्य धर्म्मस्य मूलमेतत् सनातनम् । श्रूयन्ते हि पुरावृत्ता विश्वामित्रादयो नृपाः ॥ ३३ ॥ विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः । कक्षसेनोष्टिसेनौ च सिन्धुद्वीपश्च पार्थिवः ॥ ३४ ॥ एते चान्ये च बहवः सिद्धिं परमिकां गताः । नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥ ३५ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः । दानधर्म्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥ ३६ ॥

इति अश्वमेधपर्व्वणि अनुगीतापर्व्वणि
एकनवतोऽध्यायः ॥ ९१ ॥

---

जनमेजय उवाच । धर्म्मागतेन त्यागेन भगवन् स्वर्गमस्ति चेत् । एतन्मे सर्व्वमाचक्ष्व कुशलो ह्यसि भाषितुम् ॥ १ ॥ तस्योञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत् । कथितन्तु मम ब्रह्मंस्तथ्यमेतदसंशयम् ॥ २ ॥ कथं हि सर्व्वयज्ञेषु निश्चयः परमो भवेत् । एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ ३ ॥

वैशम्पायन उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । अगस्त्यस्य महायज्ञे पुरावृत्तमरिन्दम ॥ ४ ॥ पुरागस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम् । प्रविवेश महाराज सर्व्वभूतहिते रतः ॥ ५ ॥ तत्राग्निकल्पा होतार आसन् सत्रे महात्मनः ।

मूलाहाराः फलाहाराः साश्मकुट्टा मरीचिपाः ॥ ६ ॥ परि-
घृष्टिका वैघसिकास्तथा प्रज्ञालास्तथैव च । यतयो भिक्षवश्चात्र बभूवुः
पर्य्यवस्थिताः ॥ ७ ॥ सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च सर्वे ते हिंसादम्भविवर्जिताः ॥ ८ ॥ वृत्ते शुद्धे स्थिता
नित्यमिन्द्रियैश्चाप्यबाधिताः । उपातिष्ठन्त तं यज्ञं यजन्तस्ते
महर्षयः ॥ ९ ॥ यथा शक्त्या भगवता तदन्नं समुपार्ज्जितम् ।
तस्मिन् सत्रे तु यद्वृत्तं यद्योग्यञ्च तदाभवत् ॥ १० ॥ तथा ह्यनेकै-
र्मुनिभिर्महान्तः क्रतवः कृताः । एवं विधे त्वगस्त्यस्य वर्त्तमाने
तथाध्वरे ॥ ११ ॥ न ववर्ष सहस्राक्षस्तदा भरतसत्तम । ततः
कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ॥ १२ ॥ कथेयमभिनिर्वृत्ता
मुनीनां भावितात्मनाम् । अगस्त्यो यजमानोऽसौ ददात्यन्नं
विमत्सरः ॥ १३ ॥ न च वर्षति पर्ज्जन्यः कथमन्नं भविष्यति ।
सत्रञ्चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ॥ १४ ॥ न वर्षिष्यति देवश्च
वर्षाण्येतानि द्वादश । एतद्भवन्तः सञ्चिन्त्य महर्षेरस्य धीमतः ॥१५॥
अगस्त्यस्यातितपसः कर्त्तुमर्हन्त्यनुग्रहम् । इत्येवमुक्ते वचने ततो-
ऽगस्त्यः प्रतापवान् ॥ १६ ॥ प्रोवाच वाक्यं स तदा प्रसाद्य शिरसा
मुनीन् । यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ॥ १७ ॥ चिन्ता-
यज्ञं करिष्यामि विधिरेष सनातनः । यदि द्वादशवर्षाणि न
वर्षिष्यति वासवः ॥ १८ ॥ स्पर्शयज्ञं करिष्यामि विधिरेष सना-
तनः । यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ॥ १९ ॥ व्यायामे-
नाहरिष्यामि यज्ञानन्यानतिव्रतान् । वीजयज्ञो मयायं वै बहु-
वर्षसमाचितः ॥ २० ॥ वीजैर्हितं करिष्यामि नात्र विघ्नो भवि-
ष्यति । नेदं शक्यं वृथाकर्त्तुं मम सत्रं कथञ्चन ॥ २१ ॥ वर्षि-
ष्यतीह वा देवो न वा देवो भविष्यति । अथ वाभ्यर्थनामिन्द्रो न
करिष्यति कामतः ॥ २२ ॥ स्वयमिन्द्रो भविष्यामि जीवयिष्यामि
च प्रजाः । यो यदाहारजातश्च स तथैव भविष्यति ॥ २३ ॥

विशेषञ्चैव कर्त्तास्मि पुनः पुनरतीव हि । अद्येह स्वर्गमभ्येतु यच्चान्यद्दस्तु किञ्चन ॥ २४ ॥ त्रिषु लोकेषु यच्चास्ति तदिहागम्यतां स्वयम् । दिव्याश्चाप्सरसां सङ्घा गन्धर्वाश्च सकिन्नराः ॥ २५ ॥ विश्वावसुश्च ये चान्ये तेप्युपासन्तु मे मखम् । उत्तरेभ्यः कुरुभ्यश्च यत्किञ्चिद्दस्तु विद्यते ॥ २६ ॥ सर्वं तदिह यज्ञेषु स्वयमेवोपतिष्ठतु । स्वर्गः स्वर्गसदश्चैव धर्म्मश्च स्वयमेव तु ॥ २७ ॥ इत्युक्ते सर्व्वमेवैतदभवत्तपसा मुनेः । तस्य दीप्ताग्निमनसस्त्वगस्त्यस्यातितेजसः ॥ २८॥ ततस्ते मुनयो हृष्टा ददृशुस्तपसो बलम् । विस्मिता वचनं प्राहुरिदं सर्व्वं महार्थवत् ॥ २९ ॥

ऋषय ऊचुः । प्रीताः स्मस्तव वाक्येन न त्विच्छामस्तपऽव्ययम् । तैरेव यज्ञैस्तुष्टाः स्म न्यायेनेच्छामहे वयम् ॥ ३० ॥ यज्ञदीक्षांस्तथा होमान् यच्चान्यन्मृगयामहे । न्यायेनोपार्ज्जिताहाराः स्वकर्म्माभिरता वयम् ॥ ३१ ॥ वेदांश्च ब्रह्मचर्य्येण न्यायतः प्रार्थयामहे । न्यायेनोत्तरकालञ्च गृहेभ्यो निःसृता वयम् ॥ ३२ ॥ धर्म्मदृष्टैर्विधिद्वारैस्तपस्तप्स्यामहे वयम् । भवतः सम्यगिष्टा तु बुद्धिर्हिंसाविवर्ज्जिता ॥ ३३ ॥ एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो । प्रीतास्ततो भविष्यामो वयन्तु द्विजसत्तम । विसर्ज्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे ॥ ३४ ॥ तथा कथयतां तेषां देवराजः पुरन्दरः । ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ ३५ ॥ आसमाप्तेश्च यज्ञस्य तस्यामितपराक्रमः । निकामवर्षी पर्ज्जन्यो बभूव जनमेजय ॥ ३६ ॥ प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः । स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥ ३७ ॥ ततो यज्ञसमाप्तौ तान् विससर्ज्ज महामुनीन् । अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥ ३८ ॥

जनमेजय उवाच । कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै । प्राह मानुषवद्वाचमेतत् पृष्टो वदस्व मे ॥ ३९ ॥

वैशम्पायन उवाच। एतत् पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम्। श्रूयतां नकुलो योऽसौ यथा वाक् तस्य मानुषी ॥ ४० ॥ श्राद्धं सङ्कल्पयामास जमदग्निः पुरा किल। होमधेनुस्तमागाच्च स्वयमेव दुदोह ताम् ॥ ४१ ॥ तत्पयः स्थापयामास नवे भाण्डे दृढ़े शुचौ। तच्च क्रोधस्वरूपेण पिठरं धर्म्म आविशत् ॥ ४२ ॥ जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्य्यात् विप्रिये कृते। इति सञ्चिन्त्य धर्म्मः स धर्षयामास तत् पयः ॥ ४३ ॥ तमाज्ञाय मुनिः क्रोधं नैवास्य स चुकोप ह। स तु क्रोधस्ततो राजन् ब्राह्मणीं मूर्त्तिमास्थितः ॥ ४४ ॥ जिते तस्मिन् भृगुश्रेष्ठमभ्यभाषदमर्षणः। जितोऽस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः। लोके मिथ्याप्रवादोऽयं यत्त्वयास्मि विनिर्ज्जितः ॥४५॥ वशे स्थितोऽहं त्वय्यद्य क्षमावति महात्मनि। बिभेमि तपसः साधो प्रसादं कुरु मे प्रभो ॥४६॥

जमदग्निरुवाच। साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः। न त्वयापकृतं मेऽद्य न च मे मन्युरस्ति वै ॥ ४७ ॥ यान् समुद्दिश्य सङ्कल्पः पयसोऽस्य कृतो मया। पितरस्ते महाभागास्तेभ्यो बुध्यस्व गम्यताम् ॥ ४८ ॥ इत्युक्तो जातसन्त्रासस्तत्रैवान्तरधीयत। पितॄणामभिषङ्गाच्च नकुलत्वमुपागतः ॥ ४९ ॥ स तान् प्रसादयामास शापस्यान्तो भवेदिति। तैश्चाप्युक्तः क्षिपन् धर्मं शापस्यान्तमवाप्स्यसि ॥ ५० ॥ तैश्चोक्तो यज्ञियान् देशान् धर्मारण्यं तथैव च। जुगुप्समानोऽधावन् स तं यज्ञं समुपासदत् ॥५१॥ धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः। मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीत् युधिष्ठिर ॥ ५२ ॥ एवमेतत्तदावृत्तं यज्ञे तस्य महात्मनः। पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ॥ ५३ ॥

इति अश्वमेधपर्वणि अनुगीतापर्वणि नकुलोपाख्याने द्विनवतोऽध्यायः ॥ ९२ ॥ समाप्तञ्चेदमाश्वमेधपर्व ॥

# MAHABHARATAM

## ACWAMEDHA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAP CHANDRA ROY, C. I. E.

# श्रीमहाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

अश्वमेधपर्व्व।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च।

"हृतपादादिसम्पन्ना यूयं किमसीदथ"

---

तृतीयसंस्करणम्।

कलिकाता बीडन् ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम्।

शकाब्दाः १८११।

# श्रीमहाभारतम्।

## आश्रमवासिकपर्व्व ॥



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच । प्राप्य राज्यं महात्मानः पाण्डवा मे
पितामहाः । कथमासन्महाराज्ञि धृतराष्ट्रे महात्मनि ॥ १ ॥
स तु राजा हतामात्यो हतपुत्रो निराश्रयः । कथमासीद्धतैश्वर्य्यो
गान्धारी च यशस्विनी ॥ २ ॥ कियन्तं चैव कालन्ते मम पूर्व्व-
पितामहाः । स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि ॥ ३॥
वैशम्पायन उवाच । प्राप्य राज्यं महात्मानः पाण्डवा हत-
शत्रवः । धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्य्यपालयन् ॥ ४ ॥ धृत-
राष्ट्रमुपातिष्ठद्विदुरः सञ्जयस्तथा । वैश्यापुत्रश्च मेधावी युयुत्सुः
कुरुसत्तम ॥ ५ ॥ पाण्डवाः सर्व्वकार्य्याणि सम्पृच्छन्ति स्म तं
नृपम् । चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च ॥ ६ ॥ सदा
हि गत्वा ते वीराः पर्य्युपासत तं नृपम् । पादाभिवादनं कृत्वा
धर्म्मराजमते स्थिताः ॥ ७ ॥ ते मूर्द्ध्नि समुपाघ्राताः सर्व्वकार्य्याणि
चक्रिरे । कुन्तिभोजसुता चैव गान्धारीमन्ववर्त्तत ॥ ८ ॥ द्रौपदी
च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः । समां वृत्तिमवर्त्तन्त तयोः

स्त्वब्रवीद्यथाविधि ॥ ९ ॥ शयनानि महार्हाणि वासांस्याभरणानि च। राजार्हाणि च सर्वाणि भक्ष्यभोज्यान्यनेकशः ॥ १० ॥ युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत्। तथैव कुन्ती गान्धार्यां गुरुवृत्तिमवर्त्तत ॥ ११ ॥ विदुरः सञ्जयश्चैव युयुत्सुश्चैव कौरव। उपासते स्म तं वृद्धं हतपुत्रं जनाधिपम् ॥ १२ ॥ स्यालो द्रोणस्य यश्चासीद्दयितो ब्राह्मणो महान्। स च तस्मिन्महेष्वासः कृपः समभवत्तदा ॥ १३ ॥ व्यासश्च भगवान्नित्यमासाञ्चक्रे नृपेण ह। कथाः कुर्वन् पुराणर्षिर्देवर्षिपितृरक्षसाम् ॥ १४ ॥ धर्मयुक्तानि कार्य्याणि व्यवहारान्वितानि च। धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत् ॥ १५ ॥ सामन्तेभ्यः प्रियाण्यस्य कार्य्याणि सुबहून्यपि। प्राप्यन्तेऽर्थैः सुलघुभिः सुनयाद्विदुरस्य वै ॥ १६ ॥ अकरोद्बन्धमोक्षञ्च वध्यानां मोक्षणं तदा। न च धर्मसुतो राजा कदाचित् किञ्चिदब्रवीत् ॥ १७ ॥ विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः। सर्वान् कामान् महातेजाः प्रददावम्बिकासुते ॥ १८ ॥ आरालिकाः सूपकारा रागखाण्डविकास्तथा। उपातिष्ठन्त राजानं धृतराष्ट्रं यथा पुरा ॥ १९ ॥ वासांसि च महार्हाणि माल्यानि विविधानि च। उपाजह्रुर्यथान्यायं धृतराष्ट्रस्य पाण्डवः ॥ २० ॥ मैरेयमत्स्यमांसानि पानकानि मधूनि च। चित्रान् भक्ष्यविकारांश्च चक्रुस्तस्य यथा पुरा ॥ २१ ॥ ये चापि पृथिवीपालाः समाजग्मुस्ततस्ततः। उपातिष्ठन्त ते सर्वे कौरवेन्द्रं यथा पुरा ॥ २२ ॥ कुन्ती च द्रौपदी चैव सात्वती च यशस्विनी। उलूपी नागकन्या च देवी चित्राङ्गदा तथा ॥ २३ ॥ धृष्टकेतोश्च भगिनी जरासन्धसुता तथा। एताश्चान्याश्च बह्वो वै योषितः पुरुषर्षभ ॥ २४ ॥ किंकराः पर्य्युपातिष्ठन् सर्वाः सुबलजास्तदा। यथा पुत्रवियुक्तोऽयं न किञ्चित् दुःखमाप्नुयात् ॥ २५ ॥ इति राजन्नथ भ्रातॄन् नित्यमेव युधिष्ठिरः। एवन्ते धर्मराजस्य श्रुत्वा

वचनमर्थवत् ॥ २६ ॥ सविशेषमवर्त्तन्त भीममेकं तदा विना । न हि तत्तस्य वीरस्य हृदयादपसर्पति । धृतराष्ट्रस्य दुर्बुद्ध्या यद्वृत्तं द्यूतकारितम् ॥ २७ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच । एवं सम्पूजितो राजा पाण्डवैरम्बिकासुतः । विजहार यथापूर्वमृषिभिः पर्य्युपासितः ॥ १ ॥ ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः । तच्च कुन्तीसुतो राजा सर्वमेवान्वपद्यत ॥ २ ॥ आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः । उवाच स तदा भ्रातॄनमात्यांश्च महीपतिः ॥ ३ ॥ मया चैव भवद्भिश्च मान्य एष नराधिपः । निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत् ॥ ४ ॥ विपरीतश्च मे शत्रुर्नियम्यश्च भवेन्नरः । पितृवृत्तेषु चाहःसु पुत्राणां श्राद्धकर्म्मणि । सुहृदाञ्चैव सर्व्वेषां यावदस्य चिकीर्षितम् ॥ ५ ॥ ततः स राजा कौरव्यो धृतराष्ट्रो महामनाः । ब्राह्मणेभ्यो यथार्हेभ्यो ददौ वित्तान्यनेकशः ॥ ६ ॥ धर्म्मराजश्च भीमश्च सव्यसाची यमावपि । तत् सर्वमन्ववर्त्तन्त तस्य प्रियचिकीर्षया ॥ ७ ॥ कथं नु राजा वृद्धः स पुत्रपौत्रवधार्द्दितः । शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिन्त्यते ॥ ८ ॥ यावद्धि कुरुवीरस्य जीवत्पुत्रस्य वै सुखम् । बभूव तदवाप्नोतु भोगांश्चेति व्यवस्थिताः ॥ ९ ॥ ततस्ते सहिताः पञ्च भ्रातरः पाण्डुनन्दनाः । तथाशीलाः समातस्थुर्धृतराष्ट्रस्य शासने ॥ १० ॥ धृतराष्ट्रश्च तान् सर्वान् विनीतान् नियमे स्थितान् । शिष्यवृत्तिं समापन्नान् गुरुवत् प्रत्यपद्यत ॥ ११ ॥ गान्धारी चैव पुत्राणां विविधैः श्राद्धकर्म्मभिः । आनृण्यमगमत् कामान् विप्रेभ्यः प्रतिपाद्य सा ॥ १२ ॥ एवं धर्मभृतांश्रेष्ठो

धर्मराजो युधिष्ठिरः। भ्रातृभिः सहितो धीमान् पूजयामास तं नृपम् ॥ १३ ॥

वैशम्पायन उवाच। स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः। न ददर्श तदा किञ्चिदप्रियं पाण्डुनन्दने ॥ १४ ॥ वर्त्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु। प्रीतिमानभवद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ १५ ॥ सौवलेयी च गान्धारी पुत्रशोकमपास्य तम्। सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव ॥ १६ ॥ प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वहः। वैचित्रवीर्य्ये नृपतौ समाचरत वीर्य्यवान् ॥ १७ ॥ यद्यद्ब्रूते च किञ्चित् स धृतराष्ट्रो जनाधिपः। गुरु वा लघु वा कार्य्यं गान्धारी च तपस्विनी ॥ १८ ॥ तं स राजा महाराज पाण्डवानां धुरन्धरः। पूजयित्वा वचस्तत्तदकार्षीत् परवीरहा ॥ १९ ॥ तेन तस्याभवत् प्रीतो वृत्तेन स नराधिपः। अन्वतप्यच्च संस्मृत्य पुत्रं तं मन्दचेतसम् ॥ २० ॥ सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृपः। आशास्ते पाण्डुपुत्राणां समरेष्वपराजयम् ॥ २१ ॥ ब्राह्मणान् स्वस्तिवाच्याथ हुत्वा चैव हुताशनम्। अयूंषि पाण्डुपुत्राणामाशंसत नराधिपः ॥ २२ ॥ न तां प्रीतिं परामाप पुत्रेभ्यः स कुरूद्वहः। यां प्रीतिं पाण्डुपुत्रेभ्यः सदावाप तदा नृपः ॥ २३ ॥ ब्राह्मणानां यथावृत्तः क्षत्रियाणां यथाविधिः। तथा विट्शूद्रसङ्घानामभवत् स प्रियस्तदा ॥ २४ ॥ यच्च किञ्चित्तदा पापं धृतराष्ट्रसुतैः कृतम्। अकृत्वा हृदि तत् पापं तं नृपं सोऽन्ववर्त्तत ॥ २५ ॥ यश्च कश्चिन्नरः किञ्चिदप्रियञ्चाम्बिकासुते। कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः ॥ २६ ॥ न राज्ञो धृतराष्ट्रस्य न च दुर्य्योधनस्य वै। उवाच दुष्कृतं कश्चिद्युधिष्ठिरभयान्नरः ॥ २७ ॥ धृत्या तुष्टो नरेन्द्रस्य गान्धारी विदुरस्तथा। शौचेन चाजातशत्रोर्न तु भीमस्य शत्रुहन् ॥ २८ ॥ अन्ववर्त्तत तत्रापि निश्चितो धर्मजो नृपम्।

धृतराष्ट्रश्च संप्रेच्य सदा भवति दुर्मनाः ॥ २९ ॥ राजानमनुवर्त्तन्तं धर्मपुत्रममित्रहा । अन्ववर्त्तत कौरव्यो हृदयेन पराजितः ॥३०॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
द्वितीयोऽध्यायः ॥ २ ॥

---

वैशम्पायन उवाच । युधिष्ठिरस्य नृपतेर्दुर्य्योधनपितुस्तथा । नान्तरं ददृशू राज्ये पुरुषा प्रणयं प्रति ॥ १ ॥ यदा तु कौरवो राजा पुत्रं सस्मार दुर्म्मतिम् । तदा भीमं हृदा राजन्नपध्याति स पार्थिवः ॥ २ ॥ तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम् । नामर्षयत राजेन्द्र सदैव दुष्टवद्धृदा ॥ ३ ॥ अप्रकाशान्यप्रियाणि चकारास्य वृकोदरः । आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ॥ ४ ॥ स्मरन् दुर्मन्त्रितं तस्य वृत्तान्यप्यस्य कानिचित् । अथ भीमः सुहृन्मध्ये बाहुशब्दं तदाकरोत् ॥ ५ ॥ संश्रवे धृतराष्ट्रस्य गान्धार्य्याश्चाप्यमर्षणः । स्मृत्वा दुर्य्योधनं शत्रुं कर्णदुःशासनावपि ॥ ६ ॥ प्रोवाचेदं सुसंरब्धो भीमः स परुषं वचः । अन्धस्य नृपतेः पुत्रा मया परिघबाहुना । नीता लोकममुं सर्वे नानाशस्त्रास्त्र-योधिनः ॥ ७ ॥ इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ । ययोरन्तरमासाद्य धार्त्तराष्ट्राः क्षयं गताः ॥ ८ ॥ इमौ पीनौ सुवृत्तौ मे भुजौ नागकरोपमौ । यावासाद्य रणे मूढ़ा धार्त्त-राष्ट्राः क्षयं गताः ॥ ९ ॥ ताविमौ चन्दनेनोक्तौ चन्दनार्हौ च मे भुजौ । याभ्यां दुर्य्योधनो नीतः क्षयं ससुतबान्धवः ॥ १० ॥ एता-श्चान्याश्च विविधाः शल्यभूता नराधिप । वृकोदरस्य ता वाचः श्रुत्वा निर्व्वेदमागमत् ॥ ११ ॥ सा च बुद्धिमती देवी कालपर्य्याय-वेदिनी । गान्धारी सर्वधर्म्मज्ञा तान्यलीकानि शुश्रुवे ॥ १२ ॥ ततः पञ्चदशे वर्षे समतीते नराधिपः । राजा निर्व्वेदमापेदे

भीमवाग्बाणपीड़ितः ॥ १३ ॥ नावबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः । श्वेताश्वो वाथ कुन्ती वा द्रौपदी वा यशस्विनी । माद्रीपुत्रौ च धर्मज्ञौ चित्तं तस्यान्ववर्त्तताम् ॥ १४ ॥ राज्ञस्तु चित्तं रक्षन्तौ नोचतुः किञ्चिदप्रियम् । ततः समानयामास धृतराष्ट्रः सुहृज्जनम् । वास्पसन्दिग्धमत्यर्थमिदमाह च तान् भृशम् ॥ १५ ॥

धृतराष्ट्र उवाच । विदितं भवतामेतत् यथावृत्तः कुरुक्षयः । ममापराधात् तत् सर्वमनुज्ञाताश्च कौरवैः ॥ १६ ॥ योऽहं दुष्टमतिं मन्दो ज्ञातीनां भयवर्द्धनम् । दुर्य्योधनं कौरवनामाधिपत्येऽभ्यषेचयम् ॥ १७ ॥ यच्चाहं वासुदेवस्य नाश्रौषं वाक्यमर्थवत् । बध्यतां साध्वयं पापः सामात्य इति दुर्मतिः ॥ १८ ॥ पुत्रस्नेहाभिभूतस्तु हितमुक्तो मनीषिभिः । विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ॥ १९ ॥ पदे पदे भगवता व्यासेन च महात्मना । सञ्जयेनाथ गान्धार्य्या तदिदं तप्यते च माम् ॥ २० ॥ यच्चाहं पाण्डुपुत्रेषु गुणवत्सु महात्मसु । न दत्तवान् श्रियं दीप्तां पितृपैतामहीमिमाम् ॥ २१ ॥ विनाशं पश्यमानो हि सर्वराज्ञां गदाग्रजः । एतत् श्रेयस्तु परममन्यत जनार्द्दनः ॥ २२ ॥ सोऽहमेतान्यनीकानि निवृत्तान्यात्मनस्तदा । हृदये शल्यभूतानि धारयामि सहस्रशः ॥ २३ ॥ विशेषतस्तु पश्यामि वर्षे पञ्चदशेऽद्य वै । अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्म्मतिः ॥ २४ ॥ चतुर्थे नियते काले कदाचिदपि चाष्टमे । तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम ॥ २५ ॥ करोत्याहारमिति मां सर्वः परिजनः सदा । युधिष्ठिरभयाद्वेत्ति भृशं तप्यति पाण्डवः ॥ २६ ॥ भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः । नियमव्यपदेशेन गान्धारी च यशस्विनी ॥ २७ ॥ हतं शतन्तु पुत्राणां ययोर्युद्धेऽपलायिनाम् । नानुतप्यामि तच्चाहं क्षत्रधर्म्ममिमं विदुः ॥ २८ ॥ इत्युक्त्वा धर्म्मराजानमभ्यभाषत कौरवः । भद्रन्ते यादवीमातर्वचनेदं निबोध

मे ॥ २९ ॥ सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः । महादानानि दत्तानि श्राद्धानि च पुनः पुनः ॥ ३० ॥ प्रकृष्टञ्च मया पुत्र पुण्यं चीर्णं यथाबलम् । गान्धारी हतपुत्रेयं धैर्य्येणोदीचते च माम् ॥ ३१ ॥ द्रौपद्या ह्यपकर्त्तारस्तव चैश्वर्य्यहारिणः । समतीता नृशंसास्ते स्वधर्म्मेण हता युधि ॥ ३२ ॥ न तेषु प्रतिकर्त्तव्यं पश्यामि कुरुनन्दन । सर्व्वशस्त्रकृताँल्लोकान् गतास्ते विमुखं हताः ॥ ३३ ॥ आत्मनस्तु हितं पुण्यं प्रतिकर्त्तव्यमद्य वै । गान्धार्य्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि ॥ ३४ ॥ त्वन्तु धर्म्मभृतां श्रेष्ठः सततं धर्म्मवत्सलः । राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम् ॥ ३५ ॥ अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम् । चीरवल्कलभृद्राजन् गान्धार्य्या सहितोऽनया ॥ ३६ ॥ तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः । उचितं नः कुले तात सर्व्वेषां भरतर्षभ ॥ ३७ ॥ पुत्रेष्वैश्वर्य्यमाधाय वयसोऽन्ते वनं नृप । तत्राहं वायुभक्षो वा निराहारोऽपि वा वसन् ॥ ३८ ॥ पत्न्या सहानया वीर चरिष्यामि तपः परम् । त्वञ्चापि फलभाक् तात तपसः पार्थिवो ह्यसि । फलभाजो हि राजानः कल्याणस्येतरस्य वा ॥३९॥

युधिष्ठिर उवाच । न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप । धिङ्मामस्तु सुदुर्बुद्धिं राज्यसक्तं प्रमादिनम् ॥ ४० ॥ योऽहं भवन्तं दुःखार्त्तमुपवासकृशं भृशम् । जिताहारं क्षितिशयं न विन्दे भ्रातृभिः सह ॥ ४१ ॥ अहोऽस्मि वञ्चितो मूढ़ो भवता गूढ़बुद्धिना । विश्वासयित्वा पूर्व्वं मां यदिदं दुःखमश्नुथाः ॥ ४२ ॥ किं मे राज्येन भोगैर्वा किं यज्ञैः किं सुखेन वा । यस्य मे त्वं महीपाल दुःखान्येतान्यवाप्तवान् ॥ ४३ ॥ पीड़ितञ्चापि जानामि राज्यमात्मानमेव च । अनेन वचसा तुभ्यं दुःखितस्य जनेश्वर ॥ ४४ ॥ भवान् पिता भवान्माता भवान्नः परमो गुरुः । भवता विप्रहीना हि क्व नु तिष्ठामहे वयम् ॥ ४५ ॥ औरसो भवतः पुत्रो युयुत्सु-

नृपसत्तम। अस्तु राजा महाराज यमन्यं मन्यते भवान्॥ ४६॥
अहं वनं गमिष्यामि भवान् राज्यं प्रशास्तु। न मामयशसा दग्धं
भूयस्त्वं दग्धुमर्हसि॥ ४७॥ नाहं राजा भवान्राजा भवतः
परवानहम्। कथं गुरुं त्वां धर्म्मज्ञमनुज्ञातुमिहोत्सहे॥४८॥
न मन्युर्हृदि नः कश्चित् सुयोधनकृतेऽनघ। भवितव्यं तथा तद्धि
वयं चान्ये च मोहिताः॥ ४९॥ वयं पुत्रा हि भवतो यथा
दुर्य्योधनादयः। गान्धारी चैव कुन्ती च निर्विशेषा मतिर्मम
॥ ५०॥ स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि। पृष्ठत-
स्त्वानुयास्यामि सत्यमात्मानमालभे॥ ५१॥ इयं हि वसुसम्पूर्णा
मही सागरमेखला। भवता विप्रहीनस्य न मे प्रीतिकरी भवेत्
॥ ५२॥ भवदीयमिदं सर्वं शिरसा त्वां प्रसादये। तदधीनाः
स्म राजेन्द्र व्येतु ते मानसो ज्वरः॥ ५३॥ भवितव्यमनुप्राप्तो
मन्ये त्वं वसुधाधिप। दिष्ट्या शुश्रूषमाणस्त्वां मोचिष्ये मनसो
ज्वरम्॥ ५४॥

धृतराष्ट्र उवाच। तापस्ये मे मनस्तात वर्त्तते कुरुनन्दन।
उचितञ्च कुलेऽस्माकमरण्यगमनं प्रभो॥ ५५॥ चिरमस्युषितः
पुत्र चिरं शुश्रूषितस्त्वया। वृद्धं मामप्यनुज्ञातुमर्हसि त्वं नरा-
धिप॥ ५६॥

वैशम्पायन उवाच। इत्युक्त्वा धर्मराजानं वेपमानः कृता-
ञ्जलिः। उवाच वचनं राजा धृतराष्ट्रोऽम्बिकासुतः॥ ५७॥
सञ्जयञ्च महात्मानं कृपञ्चापि महारथम्। अनुनेतुमिहेच्छामि
भवद्भिर्वसुधाधिप॥ ५८॥ ग्लायते मे मनो हीदं मुखञ्च परि-
शुष्यति। वयसा त्वप्रकृष्टेन वाग्व्यायामेन चैव ह॥ ५९॥ इत्युक्त्वा
स तु धर्मात्मा वृद्धो राजा कुरूद्वहः। गान्धारीं शिश्रिये श्रीमान्
सहसैव गतासुवत्॥ ६०॥ तन्तु दृष्ट्वा समासीनं विसंज्ञमिव
कौरवम्। आर्त्तिं राजागमत्तीव्रां कौन्तेयः परवीरहा॥ ६१॥

युधिष्ठिर उवाच । यस्य नागसहस्रेण शतसंख्येन वै बलम् । सोऽयं नारीं व्यपाश्रित्य शेते राजा गतासुवत् ॥ ६२ ॥ आयसी प्रतिमा येन भीमसेनस्य सा पुरा । चूर्णीकृता बलवता सोऽबला-माश्रितः स्त्रियम् ॥ ६३ ॥ धिगस्तु मामधर्म्मज्ञं धिग्बुद्धिं धिक् च मे श्रुतम् । यत्कृते पृथिवीपालः शेतेऽयमतथोचितः ॥ ६४ ॥ अहमप्युपवत्स्यामि यथैवायं गुरुर्मम । यदि राजा न भुङ्क्ते-ऽयं गान्धारी च यशस्विनी ॥ ६५ ॥

वैशम्पायन उवाच । ततोऽस्य पाणिना राजन् जलशीतेन पाण्डवः । उरो मुखञ्च शनकैः पर्य्यमार्ज्जत धर्म्मवित् ॥ ६६ ॥ तेन रत्नौषधिमता पुण्येन च सुगन्धिना । पाणिस्पर्शेन राज्ञः स राजा संज्ञामवाप ह ॥ ६७ ॥

धृतराष्ट्र उवाच । स्पृश मां पाणिना भूयः परिष्वज च पाण्डव । जीवामीवातिसंस्पर्शात् तव राजीवलोचन ॥ ६८ ॥ मूर्द्धानञ्च तवाघ्रातुमिच्छामि मनुजाधिप । पाणिभ्याञ्च परिस्पृष्टं प्रीणनं हि महन्मम ॥ ६९ ॥ अष्टमो ह्यद्य कालोऽयमाहारस्य कृतोऽस्य मे । येनाहं कुरुशार्दूल शक्नोमि न विचेष्टितुम् ॥ ७० ॥ व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता । ततो ग्लानमनास्तात नष्ट-संज्ञ इवाभवम् ॥ ७१ ॥ तवामृतरसप्रख्यं हस्तस्पर्शमिमं प्रभो । लब्ध्वा सञ्जीवितोऽस्मीति मन्ये कुरुकुलोद्वह ॥ ७२ ॥

वैशम्पायन उवाच । एवमुक्तस्तु कौन्तेयः पितुर्ज्येष्ठेन भारत । पस्पर्श सर्वगात्रेषु सौहार्द्दात्तं शनैस्तदा ॥ ७३ ॥ उपलभ्य ततः प्राणान् धृतराष्ट्रो महीपतिः । बाहुभ्यां संपरिष्वज्य मूर्द्ध्न्या-जिघ्रत पाण्डवम् ॥ ७४ ॥ विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशम् । अतिदुःखात्तु राजानं नोचुः किञ्चन पाण्डवम् ॥ ७५ ॥ गान्धारी त्वेव धर्म्मज्ञा मनसोद्वहती भृशम् । दुःखान्यधारय-द्राजन्नैवमित्येव चाब्रवीत् ॥ ७६ ॥ इतरास्तु स्त्रियः सर्वाः कुन्त्या

सह सुदुःखिताः । नैत्रैरागतविक्लेदैः परिवार्य स्थिताभवन् ॥७७॥ अथाब्रवीत् पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम् । अनुजानीहि मां राजंस्तपस्ये भरतर्षभ ॥ ७८ ॥ ग्लायते मे मनस्तात भूयोभूयः प्रजल्पतः । न मामतः परं पुत्र परिक्लिष्टुमिहार्हसि ॥ ७९ ॥ तस्मिंस्तु कौरवेन्द्रे तं तथा ब्रुवति पाण्डवम् । सर्वेषामेव योधानामार्त्तनादोऽभवन्महान् ॥ ८० ॥ दृष्ट्वा कृशं विवर्णञ्च राजानमतथोचितम् । उपवासपरिश्रान्तं त्वगस्थिपरिवारणम् ॥ ८१ ॥ धर्मपुत्रः स्वपितरं परिष्वज्य महाप्रभम् । शोकजं वास्पमुत्सृज्य पुनर्वचनमब्रवीत् ॥ ८२ ॥ न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा । यथा तव प्रियं राजंश्चिकीर्षामि परन्तप ॥ ८३ ॥ यदि चाहमनुग्राह्यो भवतो दयितोऽपि वा । क्रियतां तावदाहारस्ततो वेत्स्याम्यहं परम् ॥ ८४ ॥ ततोऽब्रवीन्महातेजा धृतराष्ट्रो युधिष्ठिरम् । अनुज्ञातस्त्वया पुत्र भुञ्जीयामिति कामये ॥ ८५ ॥ इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम् । ऋषिः सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत् ॥ ८६ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि

तृतीयोऽध्यायः ॥ ३ ॥

---

व्यास उवाच । युधिष्ठिर महाबाहो यथाह कुरुनन्दनः । धृतराष्ट्रो महातेजास्तत् कुरुष्वाविचारयन् ॥ १ ॥ अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषतः । नेदं कृच्छ्रं विचरितुं सहेदिति मतिर्मम ॥ २ ॥ गान्धारी च महाभागा प्राज्ञा करुणवेदिनी । पुत्रशोकं महाराज धैर्य्येणोद्वहते भृशम् ॥ ३ ॥ अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः । अनुज्ञां लभतां राजा मा वृथेह मरि-

ष्यति ॥ ४ ॥ राजर्षीणां पुराणानामनुयातु गतिं नृपः । राजर्षीणां हि सर्व्वेषामन्ते वनमुपाश्रयः ॥ ५ ॥

वैशम्पायन उवाच । इत्युक्तः स तदा राजा व्यासेनाद्भुतकर्म्मणा । प्रत्युवाच महातेजा धर्म्मराजो महामुनिम् ॥ ६ ॥ भगवानेव नो मान्यो भगवानेव नो गुरुः । भगवानस्य राज्यस्य कुलस्य च परायणम् ॥ ७ ॥ अहं तु पुत्रो भगवन् पिता राजा गुरुश्च मे । निर्द्देशवर्त्ती च पितुः पुत्रो भवति धर्म्मतः ॥ ८ ॥

वैशम्पायन उवाच । इत्युक्तः स तु तं प्राह व्यासो वेदविदाम्बरः । युधिष्ठिरं महातेजाः पुनरेव महाकविः ॥ ९ ॥ एवमेतन्महाबाहो यथा वदसि भारत । राजायं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः ॥ १० ॥ सोऽयं मयाभ्यनुज्ञातस्त्वया च पृथिवीपतिः । करोतु स्वमभिप्रायं मास्य विघ्नकरो भव ॥ ११ ॥ एष एव परो धर्मो राजर्षीणां युधिष्ठिर । समरे वा भवेन्मृत्युर्वने वा विधिपूर्व्वकम् ॥ १२ ॥ पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता । शिष्यवृत्तेन राजायं गुरुवत् पर्य्युपासितः ॥ १३ ॥ क्रतुभिर्द्दक्षिणावद्भीरत्नपर्वतशोभितैः । महद्भिरिष्टं गौर्भुक्ता प्रजाश्च परिपालिताः ॥ १४ ॥ पुत्रसंस्थञ्च विपुलं राज्यं विप्रोषिते त्वयि । त्रयोदशसमाभुक्तं दत्तञ्च विविधं वसु ॥ १५ ॥ त्वया चायं नरव्याघ्र गुरुशुश्रूषयानघ । आराधितः सभृत्येन गान्धारी च यशस्विनी ॥ १६ ॥ अनुजानीहि पितरं समयोऽस्य तपोविधौ । न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥ १७ ॥

वैशम्पायन उवाच । एतावदुक्त्वा वचनमनुमान्य च पार्थिवम् । तथास्त्विति च तेनोक्तः कौन्तेयेन ययौ वनम् ॥ १८ ॥ गते भगवति व्यासे राजा पाण्डुसुतस्तदा । प्रोवाच पितरं वृद्धं मन्दं मन्दमिवानतः ॥ १९ ॥ यदाह भगवान् व्यासो यच्चापि भवतो मतम् । यथाह च महेष्वासः कृपो विदुर एव च ॥ २० ॥ युयुत्सुः

सञ्जयश्चैव तत् कर्त्तास्मद्रहमञ्जसा। सर्व एव हि मान्या मे कुलस्यास्य हितैषिणः ॥ २१ ॥ इदन्तु याचे नृपते त्वामहं शिरसा नतः। क्रियतां तावदाहारस्ततो गच्छाश्रमं प्रति ॥ २२ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
चतुर्थोऽध्यायः ॥ ४ ॥

---

वैशम्पायन उवाच। ततो राज्ञाभ्यनुज्ञातो धृतराष्ट्रः प्रतापवान्। ययौ स्वभवनं राजा गान्धार्य्यानुगतस्तदा ॥ १ ॥ मन्दप्राणगतिर्धीमान् कृच्छ्रादिव समुद्वहन्। पदानि स महीपालो जीर्णो गजपतिर्यथा ॥ २ ॥ तमन्वगच्छद्विदुरो विद्वान् सूतश्च सञ्जयः। स चापि परमेष्वासः कृपः शारद्वतस्तथा ॥ ३ ॥ स प्रविश्य गृहं राजन् कृतपूर्व्वाह्णिकक्रियः। तर्पयित्वा द्विजश्रेष्ठानाहारमकरोत्तदा ॥ ४ ॥ गान्धारी चैव धर्म्मज्ञा कुन्त्या सह मनस्विनी। वधूभिरुपचारेण पूजिताभुङ्क्त भारत ॥ ५ ॥ कृताहारं कृताहाराः सर्व्वे ते विदुरादयः। पाण्डवाश्च कुरुश्रेष्ठमुपातिष्ठन्त तं नृपम् ॥ ६ ॥ ततोऽब्रवीन्महाराज कुन्तीपुत्रमुपह्वरे। निषण्णं पाणिना पृष्ठे संस्पृशन्नम्बिकासुतः ॥ ७ ॥ अप्रमादस्त्वया कार्य्यः सर्व्वथा कुरुनन्दन। अष्टाङ्गे राजशार्दूल राज्ये धर्म्मपुरस्कृते ॥ ८ ॥ यत्तु शक्यं महाराज रक्षितुं पाण्डुनन्दन। राज्यं धर्म्मेण कौन्तेय विद्वानसि निबोध तत् ॥ ९ ॥ विद्यावृद्धान् सदैव त्वमुपासीथा युधिष्ठिर। शृणुयास्ते च यद्ब्रूयुः कुर्य्याश्चैवाविचारयन् ॥ १० ॥ प्रातरुत्थाय तान् राजन् पूजयित्वा यथाविधि। कृत्यकाले समुत्पन्ने पृच्छेथाः कार्य्यमात्मनः ॥ ११ ॥ ते तु सम्मानिता राजंस्त्वया कार्य्यं हितार्थिना। प्रवक्ष्यन्ति हितं तात सर्व्वथा तव भारत ॥ १२ ॥ इन्द्रियाणि च सर्व्वाणि वाजिवत्

परिपालयेः । हितायैव भविष्यन्ति रक्षितुं द्रविणं यथा ॥ १३ ॥ अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् । दान्तान् कर्म्मसु मुख्यांश्च मुख्यान् सर्व्वेषु योजयेः ॥ १४ ॥ चारयेथाश्च सततं चारैरविदितैः परैः । परीक्षितैर्बहुविधैः स्वराष्ट्रप्रतिवासिभिः ॥ १५ ॥ पुरञ्च ते सुगुप्तं स्याद् दृढ़प्राकारतोरणम् । अट्टाट्टालकसम्बाधं षट्पदं सर्व्वतो दिशम् ॥ १६ ॥ तस्य द्वाराणि सर्व्वाणि पर्य्याप्तानि वृहन्ति च । सर्व्वतः सुविभक्तानि यन्त्रैरारक्षितानि च ॥ १७ ॥ पुरुषैरलमर्थस्ते विदितैः कुलशीलतः । आत्मा च रक्ष्यः सततं भोजनादिषु भारत ॥ १८ ॥ विहाराहारकालेषु माल्यशय्यासनेषु च । स्त्रियश्च ते सुगुप्ताः स्युर्वृद्धैराप्तैरधिष्ठिताः । शीलवद्भिः कुलीनैश्च विद्वद्भिश्च युधिष्ठिर ॥ १९ ॥ मन्त्रिणश्चैव कुर्व्वीथा द्विजान् विद्याविशारदान् । विनीतांश्च कुलीनांश्च धर्म्मार्थकुशलानृजून् ॥ २० ॥ तैः सार्द्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिः सह । समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् ॥ २१ ॥ सुसंवृत्तं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः । अरण्ये निःशलाके वा न च रात्रौ कथञ्चन ॥ २२ ॥ वानराः पक्षिणश्चैव ये मनुष्यानुसारिणः । सर्व्वे मन्त्रगृहे वर्ज्या ये चापि जड़पङ्गवः ॥ २३ ॥ मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीक्षिताम् । न ते शक्याः समाधातुं कथञ्चिदिति मे मतिः ॥ २४ ॥ दोषांश्च मन्त्रभेदस्य ब्रूयास्त्वं मन्त्रिमण्डले । अभेदे च गुणा राजन् पुनः पुनररिन्दम ॥ २५ ॥ पौरजानपदानाञ्च शौचाशौचे युधिष्ठिर । यथा स्याद्विदितं राजंस्तथा कार्य्यं कुरूद्वह ॥ २६ ॥ व्यवहाराश्च ते तात नित्यमाप्तैरधिष्ठितः । योज्यस्तुष्टैर्हितै राजन् नित्यञ्चारैरधिष्ठितः ॥ २७ ॥ परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत । प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर ॥ २८ ॥ आदानरुचयश्चैव परदारावमर्षिणः । उग्रदण्डप्रधानाश्च मिथ्याव्याहारिणस्तथा । आक्रोष्टारश्च लुब्धाश्च

हर्त्तारः साहसप्रियाः ॥ २९ ॥ सभाविहारभेत्तारो वर्णानाञ्च प्रदूषकाः । हिरण्यदण्डग्रवध्याश्च कर्त्तव्या देशकालतः ॥ ३० ॥ प्रातरेव हि पश्येथा ये कुर्य्युर्व्ययकर्म्म ते । अलङ्कारमथो भोज्यमत ऊर्द्धं समाचरेः ॥ ३१ ॥ पश्येथाश्च ततो योधान् सदा त्वं प्रतिहर्षयन् । दूतानाञ्च चराणाञ्च प्रदोषस्ते सदा भवेत् ॥ ३२॥ सदा चापररात्रन्ते भवेत् कार्य्यार्थनिर्णये । मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् । सर्व्वे त्वौपयिकाः कालाः कार्य्याणां भरतर्षभ ॥ ३३ ॥ तथैवालङ्कृतः काले तिष्ठेथा भूरिदक्षिण । चक्रवत्तात कार्य्याणां पर्य्यायो दृश्यते सदा ॥ ३४ ॥ कोषस्य निचये यत्नं कुर्वीथा न्यायतः सदा । विविधस्य महाराज विपरीतं विवर्ज्जयेः ॥ ३५ ॥ चारैर्व्विदित्वा शत्रूंश्च ये राज्ञामन्तरैषिणः । तानाप्तैः पुरुषैर्दूराद्घातयेथा नराधिप ॥ ३६ ॥ कर्म्म दृष्ट्वाथ भृत्यांस्त्वं वरयेथाः कुरूद्वह । कारयेथाश्च कर्माणि युक्तायुक्तैरधिष्ठितैः ॥ ३७ ॥ सेनाप्रणेता च भवेत्तव तात दृढ़व्रतः । शूरः क्लेशसहश्चैव हितो भक्तश्च पूरुषः ॥ ३८ ॥ सर्व्वे जनपदाश्चैव तव कर्माणि पाण्डव । गोवद्रासभवच्चैव कुर्य्युर्य्ये व्यवहारिणः ॥ ३९॥ स्वरन्ध्रं पररन्ध्रञ्च स्वेषु चैव परेषु च । उपलक्षयितव्यन्ते नित्यमेव युधिष्ठिर ॥ ४० ॥ देशजाश्चैव पुरुषा विक्रान्ताः स्वेषु कर्मसु । यात्राभिरनुरूपाभिरनुग्राह्या हितास्त्वया ॥ ४१ ॥ गुणार्थिनां गुणः कार्य्यो विदुषा वै जनाधिप । अविचाल्याश्च ते ते स्युरचला इव नित्यशः ॥ ४२ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
पञ्चमोऽध्यायः ॥ ५ ॥

---

धृतराष्ट्र उवाच । मण्डलानि च बुध्येथाः परेषामात्मन-

स्तथा । उदासीनगणानाञ्च मध्यस्थानाञ्च भारत ॥ १ ॥ चतुर्णां शत्रुजातानां सर्व्वेषामाततायिनाम् । मित्रञ्चामित्रमित्रञ्च बोद्धव्यन्तेऽरिकर्षण ॥ २ ॥ तथामात्या जनपदा दुर्गाणि विविधानि च । बलानि च कुरुश्रेष्ठ भवन्त्येषां यथेच्छकम् ॥ ३ ॥ ते च द्वादश कौन्तेय राज्ञां वै विषयात्मकाः । मन्त्रिप्रधानाश्च गणाः षष्टिर्द्दश च प्रभो ॥ ४ ॥ एतन्मण्डलमित्याहुराचार्य्या नीतिकोविदाः । तत्र षाड़्गुण्यमायत्तं युधिष्ठिर निबोध तत् ॥ ५ ॥ वृद्धिक्षयौ च विज्ञेयौ स्थानञ्च कुरुसत्तम । द्विसप्तत्या महाबाहो ततः षाड़्गुण्यजा गुणाः ॥ ६ ॥ यदा स्वपक्षो बलवान् परपक्षस्तथाबलः । विगृह्य शत्रून् कौन्तेय जेयः क्षितिपतिस्तदा ॥ ७ ॥ यदा परे तु बलिनः स्वपक्षश्चैव दुर्बलः । सार्द्धं विद्वांस्तदा क्षीणः परैः सन्धिं समाश्रयेत् ॥ ८ ॥ द्रव्याणां सञ्चयश्चैव कर्त्तव्यः स्यान्महांस्तथा । यदा समर्थो यानाय न चिरेणैव भारत ॥ ९ ॥ तदा सर्व्वं विधेयं स्यात् स्थानेन स विचारयेत् । भूमिरल्पफला देया विपरीतस्य भारत ॥ १० ॥ हिरण्यं कुप्यभूयिष्ठं मित्रं क्षीणमथो बलम् । विपरीतानि गृह्णीयात् स्वयं सन्धिविशारदः ॥११॥ सन्ध्यर्थं राजपुत्रं वा लिप्सेथा भरतर्षभ । विपरीतं न तत् श्रेयः पुत्र कस्याञ्चिदापदि ॥ १२ ॥ तस्य प्रमोक्षे यत्नञ्च कुर्य्याः सोपायमन्त्रवित् । प्रकृतीनाञ्च राजेन्द्र राजादीनां विभावयेत् ॥ १३ ॥ क्रमेण युगपत् सर्व्वं व्यवसायं महाबलः । पीड़नं स्तम्भनञ्चैव कोषभङ्गस्तथैव च । कार्य्यं यत्नेन शत्रूनां स्वराज्यं रक्षता स्वयम् ॥ १४ ॥ न च हिंस्योऽभ्युपगतः सामन्तो वृद्धिमिच्छता । कौन्तेय तं न हिंसेथा यो महीं विजिगीषते ॥ १५ ॥ गणानां भेदेन योगमीप्सेथाः सह मन्त्रिभिः । साधुसंग्रहणाच्चैव पापनिग्रहणात्तथा ॥ १६ ॥ दुर्बलाश्चापि सततं नान्वेष्टव्या बलीयसा । तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमास्थितः ॥ १७ ॥ यद्येनमभि-

यायाच्च बलवान् दुर्बलं नृपः। सामादिभिरुपायैस्तं क्रमेण विनिवर्त्तयेः॥ १८॥ अशक्नुवंश्च युद्धाय निष्पतेत् सह मन्त्रिभिः। कोषेण पौरैर्दण्डेन ये चास्य प्रियकारिणः॥ १९॥ असम्भवे तु सर्वस्य यथामुख्येन निष्पतेत्। क्रमेणानेन मुक्तिः स्यात् शरीरमिति केवलम्॥ २०॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
षष्ठोऽध्यायः॥ ६॥

---

धृतराष्ट्र उवाच। सन्धिविग्रहमप्यत्र पश्येथा राजसत्तम। द्वियोनिं द्विविधोपायं बहुकल्पं युधिष्ठिर॥ १॥ कौरव्य पर्य्युपासीथास्थित्वा द्वैविध्यमात्मनः। तुष्टपुष्टबलः शत्रुरात्मवानिति च स्मरेत्॥ २॥ पर्य्युपासनकाले तु विपरीतं विधीयते। आमर्द्दकाले राजेन्द्र व्यपसर्पेत्ततः परम्॥ ३॥ व्यसनं भेदनञ्चैव शत्रूणां कारयेत्ततः। कर्षणं भीषणञ्चैव युद्धे चैव बलक्षयम्॥ ४॥ प्रयास्यमानो नृपतिस्त्रिविधां परिचिन्तयेत्। आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः॥ ५॥ उत्साहप्रभुशक्तिभ्यां मन्त्रशक्तया च भारत। उपपन्नो नृपो यायाद्विपरीतश्च वर्ज्जयेत्॥ ६॥ आददीत बलं राजा मौलं मित्रबलन्तथा। अटवीबलं भृतञ्चैव तथा श्रेणीबलं प्रभो॥ ७॥ तत्र मित्रबलं राजन् मौलञ्चैव विशिष्यते। श्रेणीबलं भृतञ्चैव तुल्ये एवेति मे मतिः॥ ८॥ तथा चारबलञ्चैव परस्परसमं नृप। विज्ञेयं बहुकालेषु राज्ञा काल उपस्थिते॥ ९॥ आपदश्चापि बोद्धव्या बहुरूपा नराधिप। भवन्ति राज्ञां कौरव्य यास्ताः पृथगतः शृणु॥ १०॥ विकल्पा बहुधा राजन्नापदां पाण्डुनन्दन। सामादिभिरुपन्यस्य गणयेत्तान्नृपः सदा॥ ११॥ यात्राञ्चच्छेदलैर्युक्तो राजा सद्भिः परन्तप। युक्तश्च

कालदेशाभ्यां रणैरात्मगुणैस्तथा ॥ १२ ॥ हृष्टपुष्टबलो गच्छे-
द्राजा वृद्ध्युदये रतः। अल्पश्चाप्यथो यायादनृतावपि पाण्डव ॥१३॥
तृणाम्भानं वाजिरथप्रवाहां ध्वजद्रुमैः संवृतकूलरोधसम्। पदा-
तिनागैर्बहुकर्दमां नदीं सपत्ननाशे नृपतिः प्रयोजयेत् ॥ १४ ॥
अथोपपत्त्या शकटं पद्मवज्रञ्च भारत। उशना वेद यच्छास्त्रं
तत्रैतत् विहितं विभो ॥ १५ ॥ चारयित्वा परबलं कृत्वा स्वबल-
दर्शनम्। स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥ १६ ॥ बलं
प्रसादयेद्राजा निक्षिपेद्बलिनो नरान्। ज्ञात्वा स्वविषयं तत्र
सामादिभिरुपक्रमेत् ॥ १७ ॥ सर्व्वथैव महाराज शरीरं धारये-
दिह। प्रेत्य चेह च कर्त्तव्यमात्मनिःश्रेयसं परम् ॥ १८ ॥ एव-
मेतन्महाराज राजा सम्यक् समाचरन्। प्रेत्य स्वर्गमवाप्नोति
प्रजा धर्म्मेण पालयन् ॥ १९ ॥ एवं त्वया कुरुश्रेष्ठ वर्त्तितव्यं
प्रजाहितम्। उभयोर्लोकयोस्तात प्राप्तये नित्यमेव हि ॥ २० ॥
भीष्मेण सर्वमुक्तोऽसि कृष्णेन विदुरेण च। मयाप्यवश्यं वक्तव्यं
प्रीत्या ते नृपसत्तम ॥ २१ ॥ एतत् सर्वं यथान्यायं कुर्व्वीथा भूरि-
दक्षिण। प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि ॥ २२ ॥
अश्वमेधसहस्रेण योजयेत् पृथिवीपतिः। पालयेद्वापि धर्म्मेण
प्रजास्तुल्यफलं भवेत् ॥ २३ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
सप्तमोऽध्यायः ॥ ७ ॥

---

युधिष्ठिर उवाच। एवमेतत् करिष्यामि यथात्थ पृथिवीपते।
भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ ॥ १ ॥ भीष्मे स्वर्गमनु-
प्राप्ते गते च मधुसूदने। विदुरे सञ्जये चैव कोऽन्यो मां वक्तु-

मर्हति ॥ २ ॥ यत्तु मामनुशास्तीह भवानद्य हिते स्थितः। कर्त्तास्मि तन्महीपाल निर्वृतो भव पार्थिव ॥ ३ ॥

वैशम्पायन उवाच। एवमुक्तः स राजर्षिर्धर्मराजेन धीमता। कौन्तेयं समनुज्ञातुमियेष भरतर्षभ ॥ ४ ॥ पुत्र संशाम्यतां तावन्ममापि बलवान् श्रमः। इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ॥ ५ ॥ तमासनगतं देवी गान्धारी धर्मचारिणी। उवाच काले कालज्ञा प्रजापतिसमं पतिम् ॥ ६ ॥ अनुज्ञातः स्वयं तेन व्यासेन त्वं महर्षिणा! युधिष्ठिरस्यानुमते कदारण्यं गमिष्यसि ॥ ७ ॥

धृतराष्ट्र उवाच। गान्धार्यहमनुज्ञातः स्वयं पित्रा महात्मना। युधिष्ठिरस्यानुमते गन्तास्मि न चिरादनम् ॥ ८ ॥ अहं हि तावत् सर्वेषां तेषां दुर्द्यूतदेविनाम्। पुत्राणां दातुमिच्छामि प्रेतभावानुगं वसु। सर्वं प्रकृतिसान्निध्यं कारयित्वा स्ववेश्मनि ॥ ९ ॥

वैशम्पायन उवाच। इत्युक्त्वा धर्मराजाय प्रेषयामास वै तदा। स च तद्वचनात् सर्वं समानिन्ये महीपतिः ॥ १० ॥ ततः प्रतीतमनसो ब्राह्मणाः कुरुजाङ्गलाः। क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समाययुः ॥ ११ ॥ ततो निष्क्रम्य नृपतिस्तस्मादन्तःपुरात्तदा। ददृशे तं जनं सर्वं सर्वाश्च प्रकृतीस्तथा ॥ १२ ॥ समवेतांश्च तान् सर्वान् पौरान् जानपदांस्तथा। तानागतानभिप्रेक्ष्य समस्तञ्च सुहृज्जनम् ॥ १३ ॥ ब्राह्मणांश्च महीपाल नानादेशसमागतान्। उवाच मतिमान् राजा धृतराष्ट्रो विशाम्पते ॥ १४ ॥ भवन्तः कुरवश्चैव चिरकालं सहोषिताः। परस्परस्य सुहृदः परस्परहिते रताः ॥ १५ ॥ यदिदानीमहं ब्रूयामस्मिन् काल उपस्थिते। तथा भवद्भिः कर्त्तव्यमविचार्य्य वचो मम ॥ १६ ॥ अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे। व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य मे ॥ १७ ॥ भवन्तोऽप्यनुजानन्तु मा च वो भूद्विचारणा। अस्माकं भवताञ्चैव येयं प्रीतिर्हि शाश्वती ॥ १८ ॥ न च साऽन्येषु देशेषु

रान्ज्ञामिति मतिर्मम। श्रान्तोऽस्मि वयसानेन तथा पुत्रविनाकृतः ॥ १९ ॥ उपवासकृशश्चास्मि गान्धारीसहितोऽनघाः। युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत् ॥ २० ॥ मन्ये दुर्य्योधनैश्वर्य्याद्विशिष्टमिति सत्तमाः। मम चान्धस्य वृद्धस्य हतपुत्रस्य का गतिः। ऋते वनं महाभागास्तन्मानुज्ञातुमर्हथ ॥ २१ ॥ तस्य तद्वचनं श्रुत्वा सर्व्वे ते कुरुजाङ्गलाः। वाष्पसन्दिग्धया वाचा रुरुदुर्भरतर्षभ ॥ २२ ॥ तानावब्रुवतः किञ्चित् सर्व्वान् शोकपरायणान्। पुनरेव महातेजा धृतराष्ट्रोऽब्रवीदिदम् ॥ २३ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
अष्टमोऽध्यायः ॥ ८ ॥

---

धृतराष्ट्र उवाच। शान्तनुः पालयामास यथावद्वसुधामिमाम्। तथा विचित्रवीर्य्यश्च भीष्मेण परिपालितः। पालयामास वस्तात विदितं वो न संशयः ॥ १ ॥ यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत्। स चापि पालयामास यथावत्तच्च वेत्थ ह ॥ २ ॥ मया च भवतां सम्यक् शुश्रूषा या कृतानघाः। असम्यग्वा महाभागास्तत् क्षन्तव्यमतन्द्रितः ॥ ३ ॥ यथा दुर्य्योधनेनेदं भुक्तं राज्यमकण्टकम्। अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ॥४॥ तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षिताम्। विमर्द्दः सुमहानासीदनयात् स्वकृतादथ ॥ ५ ॥ तन्मया साधु वापीदं यदि वासाधु वै कृतम्। तद्वो हृदि न कर्त्तव्यं मया बद्धोऽयमञ्जलिः ॥ ६ ॥ वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं नराधिपः। पूर्व्वमाज्ञाञ्च पुत्रोऽयमिति कृत्वा तु जानथ ॥ ७ ॥ इयञ्च कृपणा वृद्धा हतपुत्रा तपस्विनी। गान्धारी पुत्रशोकार्त्ता युष्मान् याचति वै मया ॥८॥ हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा। अनुजानीत भद्रं

वो व्रजामः शरणञ्च वः ॥ ९ ॥ अयञ्च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः। सर्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च ॥ १० ॥ न जातु विषमञ्चैव गमिष्यति कदाचन। चत्वारः सचिवा यस्य भ्रातरो विपुलौजसः। लोकपालसमा ह्येते सर्वधर्मार्थदर्शिनः ॥ ११ ॥ ब्रह्मेव भगवानेष सर्वभूतजगत्पतिः। युधिष्ठिरो महातेजा भवतः पालयिष्यति ॥ १२ ॥ अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः। एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः। भवन्तोऽस्य च वीरस्य न्यासभूताः कृता मया ॥ १३ ॥ यद्येव तैः कृतं किञ्चिद्व्यलीकं वः सुतैर्मम। यदन्येन मदीयेन तदनुज्ञातुमर्हथ ॥ १४॥ भवद्भिर्न हि मे मन्युः कृतपूर्वः कथञ्चन। अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः ॥ १५ ॥ तेषामस्थिरबुद्धीनां लुब्धानां कामचारिणाम्। कृते याचेऽद्य वः सर्वान् गान्धारीसहितोऽनघाः ॥ १६ ॥ इत्युक्तास्ते ततः सर्वे पौरजानपदा जनाः। नोचुर्वाष्पाकुलाः किञ्चिद्वीक्षाञ्चक्रुः परस्परम् ॥ १७ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
नवमोऽध्यायः ॥ ९ ॥

---

वैशम्पायन उवाच। एवमुक्तास्तु ते तेन पौरजानपदा जनाः। वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् ॥ १ ॥ तूष्णीं भूतांस्ततस्तांस्तु वाष्पकण्ठान्महीपतिः। धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत ॥ २ ॥ वृद्धञ्च हतपुत्रञ्च धर्म्मपत्न्या सहानया। विलपन्तं बहुविधं कृपणञ्चैव सत्तमाः ॥ ३ ॥ पित्रा स्वयमनुज्ञातं कृष्णद्वैपायनेन वै। वनवासाय धर्म्मज्ञा धर्म्मज्ञेन नृपेण ह ॥४॥ सोऽहं पुनः पुनश्चैव शिरसावनतोऽनघाः। गान्धार्य्या सहितं तन्मां समनुज्ञातुमर्हथ ॥ ५ ॥

वैशम्पायन उवाच। तत् श्रुत्वा कुरुराजस्य वाक्यानि करुणानि ते। रुरुदुः सर्व्वशो राजन् समेताः कुरुजाङ्गलाः॥ ६॥ उत्तरीयैः करैश्चापि संच्छाद्य वदनानि ते। रुरुदुः शोकसन्तप्ता मुहूर्त्तं पितृमातृवत्॥ ७॥ हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजम्। दुःखं संधारयन्तो हि नष्टसंज्ञा इवाभवन्॥ ८॥ ते विनीय तमायासं धृतराष्ट्रवियोगजम्। शनैः शनैस्तदान्योऽन्यमब्रुवन् स्वमतान्युत॥ ९॥ ततः सन्धाय ते सर्व्वे वाक्यानथ समासतः। एकस्मिन् ब्राह्मणे राजन्निवेश्योचु र्नराधिप॥ १०॥ ततः स्वाचरणो विप्रः संमतोऽर्थविशारदः। शम्बाख्यो बह्वृचो राजन् वक्तुं समुपचक्रमे॥ ११॥ अनुमान्य महाराज तत् सदः संप्रसाद्य च। विप्रः प्रगल्भो मेधावी स राजानमुवाच ह॥ १२॥ राजन् वाक्यं जनस्यास्य मयि सर्व्वं समर्पितम्। वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप॥ १३॥ यथा वदसि राजेन्द्र सर्व्वमेतत्तथा विभो। नात्र मिथ्या वचः किञ्चित् सुहृत् त्वं नः परस्परम्॥ १४॥ न जात्वस्य च वंशस्य राज्ञां कश्चित् कदाचन। राजासीद्यः प्रजापालः प्रजानामप्रियोऽभवत्॥ १५॥ पितृवद्भ्रातृवच्चैव भवन्तः पालयन्ति नः। न च दुर्य्योधनः किञ्चिदयुक्तं कृतवान्नृपः॥ १६॥ यथाब्रवीति धर्म्मात्मा मुनिः सत्यवतीसुतः। तथा कुरु महाराज स हि नः परमो गुरुः॥ १७॥ त्यक्ता वयन्तु भवता दुःखशोकपरायणाः। भविष्यामश्चिरं राजन् भवद्गुणशतैर्युताः॥ १८॥ यथा शान्तनुना गुप्ता राज्ञा चित्राङ्गदेन च। भीष्मवीर्य्योपगूढ़ेन पित्रा तव च पार्थिव॥ १९॥ भवद्बीक्षणाच्चैव पाण्डुना पृथिवीक्षिता। तथा दुर्य्योधनेनापि राज्ञा सुपरिपालिताः॥ २०॥ न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान् नृप। पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिपे॥ २१॥ वयमास्म यथा सम्यग् भवतो विदितं तथा। तथा वर्षसहस्राणि कुन्तीपुत्रेण धीमता॥ २२॥

पाल्यमाना धृतिमता सुखं विन्दामहे नृप। राजर्षीणां पुराणानां भवतां पुण्यकर्म्मणाम् ॥ २३ ॥ कुरुसम्वरणादीनां भरतस्य च धीमतः। वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः ॥२४॥ नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते। उषिताः स्म सुखं नित्यं भवता परिपालिताः ॥ २५ ॥ सुसूक्ष्मञ्च व्यलीकन्ते सपुत्रस्य न विद्यते। यत्तु ज्ञातिविमर्द्देऽस्मिन्नात्थ दुर्य्योधनं प्रति ॥ २६ ॥ भवन्तमनुनेष्यामि तत्रापि कुरुनन्दन ॥ २७ ॥

ब्राह्मण उवाच। न तद्दुर्य्योधनकृतं न च तद्भवता कृतम्। न कर्णसौवलाभ्याञ्च कुरवो यत् क्षयं गताः ॥ २८ ॥ दैवतन्तु विजानामो यन्न शक्यं प्रबाधितुम्। दैवं पुरुषकारेण न शक्यमपि बाधितुम् ॥ २९ ॥ अक्षौहिण्यो महाराज दशाष्टौ च समागताः। अष्टादशाहेन हताः कुरुभिर्योधपुङ्गवैः ॥ ३० ॥ भीष्मद्रोणकृपाद्यैश्च कर्णेन च महात्मना। युयुधानेन वीरेण धृष्टद्युम्नेन चैव ह ॥ ३१ ॥ चतुर्भिः पाण्डुपुत्रैश्च भीमार्जुनयमैस्तथा। न च क्षयोऽयं नृपते ऋते दैवबलादभूत् ॥ ३२ ॥ अवश्यमेव संग्रामे क्षत्रियेण विशेषतः। कर्त्तव्यं निधनं काले मर्त्तव्यं क्षत्रबन्धुना ॥ ३३ ॥ तैरियं पुरुषव्याघ्रैर्विद्याबाहुबलान्वितैः। पृथिवी निहता सर्वा सहया सरथद्विपा ॥ ३४ ॥ न स राज्ञां वधे सूनुः कारणं ते महात्मनाम्। न भवान्न च ते भृत्या न कर्णो न च सौवलः ॥ ३५ ॥ यद्विशस्ताः कुरुश्रेष्ठा राजानश्च सहस्रशः। सर्वं दैवकृतं विद्धि कोऽत्र किं वक्तुमर्हति ॥ ३६ ॥ गुरुर्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः। धर्मात्मानमतस्तुभ्यमनुजानीमहे सुतम् ॥ ३७ ॥ लभतां वीरलोकान् स ससहायो नराधिपः। द्विजाग्र्यैः समनुज्ञातस्त्रिदिवे मोदतां सुखम् ॥ ३८ ॥ प्राप्स्यते च भवान् पुण्यं धर्मे च परमां स्थितिम्। वेदधर्म्मञ्च कृत्स्नेन सम्यक् च भव सुव्रत ॥ ३९ ॥ दृष्टिप्रदानमपि ते पाण्डवान् प्रति नो वृथा।

समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः ॥ ४० ॥ अनुवत्स्यन्ति वा भीमान् समेषु विषमेषु च । प्रजाः कुरुकुलश्रेष्ठ पाण्डवान् शीलभूषणान् ॥ ४१ ॥ ब्रह्मदेयाग्रहारांश्च परिवर्हांश्च पार्थिव । पूर्वराजाभिपन्नांश्च पालयत्येव पाण्डवः ॥ ४२ ॥ दीर्घदर्शी मृदुर्दान्तः सदा वैश्रवणो यथा । अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः ॥ ४३ ॥ अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभः । ऋजु पश्यति मेधावी पुत्रवत् पाति नः सदा ॥ ४४ ॥ विप्रियञ्च जनस्यास्य संसर्गाद्धर्म्मजस्य वै । न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः ॥ ४५ ॥ मन्दा मृदुषु कौरव्य तीक्ष्णेष्वाशीविषोपमाः । वीर्य्यवन्तो महात्मानः पौराणाञ्च हिते रताः ॥ ४६ ॥ न कुन्ती तव पाञ्चाली न चोलूपी न सात्वती । अस्मिन् जने करिष्यन्ति प्रतिकूलानि कर्हिचित् ॥ ४७ ॥ भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्द्धितम् । न पृष्ठतः करिष्यन्ति पौरजानपदा जनाः ॥ ४८ ॥ अधर्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः । मानवान् पालयिष्यन्ति भूत्वा धर्म्मपरायणाः ॥ ४९ ॥ सराजमानसं दुःखमपनीय युधिष्ठिरात् । कुरु कार्य्याणि धर्म्याणि नमस्ते पुरुषर्षभ ॥ ५० ॥

वैशम्पायन उवाच । तस्य तद्वचनं धर्म्यमनुमान्य गुणोत्तरम् । साधु साध्विति सर्वः स जनः प्रतिगृहीतवान् ॥ ५१ ॥ धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनः पुनः । विसर्ज्जयामास तदा प्रकृतीस्तु शनैः शनैः ॥ ५२ ॥ स तैः सम्पूजितो राजा शिवेनावेक्षितस्तथा । प्राञ्जलिः पूजयामास तं जनं भरतर्षभ ॥ ५३ ॥ ततो विवेश भवनं गान्धार्य्या सहितो निजम् । व्युष्टायाञ्चैव शर्वर्य्यां यच्चकार निबोध तत् ॥ ५४ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
दशमोऽध्यायः ॥ १० ॥

वैशम्पायन उवाच। ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽम्बिकासुतः। विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ १ ॥ स गत्वा राजवचनादुवाचाच्युतमीश्वरम्। युधिष्ठिरं महातेजाः सर्वबुद्धिमतां वरः ॥ २ ॥ धृतराष्ट्रो महाराजो वनवासाय दीक्षितः। गमिष्यति वनं राजन्नागतां कार्त्तिकीमिमाम् ॥ ३ ॥ स त्वां कुरुकुलश्रेष्ठ किञ्चिदर्थमभीप्सति। श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ॥ ४ ॥ द्रोणस्य सोमदत्तस्य वाह्लीकस्य च धीमतः। पुत्राणाञ्चैव सर्वेषां ये चान्ये सुहृदो हताः। यदि वाप्यनुजानीषे सैन्धवापसदस्य च ॥ ५ ॥ एतत् श्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः। हृष्टः सम्पूजयामास गुड़ाकेशश्च पाण्डवः ॥ ६ ॥ न तु भीमो दृढ़क्रोधस्तद्वचो जगृहे तदा ॥ ७ ॥ विदुरस्य महातेजा दुर्य्योधनकृतं स्मरन्। अभिप्रायं विदित्वा तु भीमसेनस्य फाल्गुनः ॥ ८ ॥ किरीटी किञ्चिदानम्य तमुवाच नरर्षभम्। भीम राजा पिता वृद्धो वनवासाय दीक्षितः ॥ ९ ॥ दातुमिच्छति सर्वेषां सुहृदामौर्द्ध्वदेहिकम्। भवता निर्ज्जितं वित्तं दातुमिच्छति कौरव ॥ १० ॥ भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि। दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचते ॥ ११ ॥ याचितो यः पुरास्माभिः पश्य कालस्य पर्य्ययम्। योऽसौ पृथिव्याः कृत्स्नाया भर्त्ता भूत्वा नराधिपः ॥ १२ ॥ परैर्विनिहतामात्यो वनं गन्तुमभीप्सति। मा तेऽन्यत् पुरुषव्याघ्र दानाद्भवतु दर्शनम् ॥ १३ ॥ अयशस्यमतोऽन्यत् स्यादधर्म्मश्च महाभुज। राजानमुपशिक्षस्व ज्येष्ठं भ्रातरमीश्वरम् ॥ १४ ॥ अर्हस्त्वमसि दातुं वै नादातुं भरतर्षभ। एवं ब्रुवाणं वीभत्सुं धर्म्मराजोऽप्यपूजयत् ॥ १५ ॥ भीमसेनस्तु सक्रोधः प्रोवाचेदं वचस्तदा। वयं भीष्मस्य दास्यामः प्रेतकार्य्यञ्च फाल्गुन ॥ १६ ॥ सोमदत्तस्य नृपतेर्भूरिश्रवस एव च। वाह्लीकस्य च राजर्षेर्द्रोणस्य च महात्मनः ॥ १७ ॥ अन्येषाञ्चैव

सर्व्वेषां कुन्ती कर्म्माय दास्यति । श्राद्धानि पुरुषव्याघ्र मा प्रादात् कौरवो नृपः ॥ १८ ॥ इति मे वर्त्तते बुद्धिर्मा नो नन्दन्तु शत्रवः । कष्टात् कष्टतरं यान्तु सर्व्वे दुर्य्योधनादयः ॥ १९ ॥ यैरियं पृथिवी कृत्स्ना घातिता कुलपांशनैः । कुतस्त्वमसि विस्मृत्य वैरं द्वादशवार्षिकम् ॥ २० ॥ अज्ञातवासं गहनं द्रौपदीशोकवर्द्धनम् । क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मास्वभवत्तदा ॥ २१ ॥ कृष्णाजिनोपसम्वीतो हृताभरणभूषणः । सार्द्धं पाञ्चालपुत्त्र्या त्वं राजानमुपजग्मिवान् ॥ २२ ॥ क्व तदा द्रोणभीष्मौ तौ सोमदत्तोऽपि वाभवत् । यत्र त्रयोदशसमा वने वन्येन जीवथ ॥ २३ ॥ न तदा त्वां पिता ज्येष्ठः पितृत्वेनाभिवीक्ष्यते । किन्ते तद्विस्मृतं पार्थ यदेष कुलपांसनः ॥ २४ ॥ दुर्बुद्धिर्विदुरं प्राह द्यूते किं जितमित्युत । तदेवं वादिनं राजा कुन्तीपुत्त्रो युधिष्ठिरः । उवाच वचनं धीमान् जोषमास्वेति भर्त्सयन् ॥ २५ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
एकादशोऽध्यायः ॥ ११ ॥

---

अर्ज्जुन उवाच । भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे । धृतराष्ट्रस्तु राजर्षिः सर्व्वथा मानमर्हति ॥ १ ॥ न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि । असंभिन्नार्य्यमर्य्यादाः साधवः पुरुषोत्तमाः ॥ २ ॥ इति तस्य वचः श्रुत्वा फाल्गुनस्य महात्मनः । विदुरं प्राह धर्म्मात्मा कुन्तीपुत्त्रो युधिष्ठिरः ॥ ३ ॥ इदं मद्वचनात् क्षत्तः कौरवं ब्रूहि पार्थिवम् । यावदिच्छति पुत्त्राणां श्राद्धं तावद्ददाम्यहम् ॥ ४ ॥ भीष्मादीनाञ्च सर्व्वेषां सुहृदामाप्तकारिणाम् । मम कोषादिति विभो मा भूद्भीमः सुदुर्म्मनाः ॥ ५ ॥

वैशम्पायन उवाच । इत्युक्त्वा धर्म्मराजस्तमर्ज्जुनं प्रत्यपूजयत् ।

भीमसेनः कटाक्षेण वीक्षाञ्चक्रे धनञ्जयम्॥ ६॥ ततः स विदुरं धीमान् वाक्यमाह युधिष्ठिरः। भीमसेने न कोपं स नृपतिः कर्त्तुमर्हति॥ ७॥ परिक्लिष्टो हि भीमोऽयं हिमवृष्ट्यातपादिभिः। दुःखैर्बहुविधैर्धीमानरण्ये विदितं तव॥ ८॥ किन्तु मद्वचनाद्ब्रूहि राजानं भरतर्षभ। यद्यदिच्छसि यावच्च गृह्यतां मद्गृहादिति॥ ९॥ यन्मात्सर्य्यमयं भीमः करोति भृशदुःखितः। न तन्मनसि कर्त्तव्यमिति वाच्यः स पार्थिवः॥ १०॥ यन्ममास्ति धनं किञ्चिदर्ज्जुनस्य च वेश्मनि। तस्य स्वामी महाराज इति वाच्यः स पार्थिव॥ ११॥ ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्ययम्। पुत्राणां सुहृदाञ्चैव गच्छत्वानृण्यमद्य सः॥ १२॥ इदञ्चापि शरीरं मे तवायत्तं जनाधिप। धनानि चेति विद्धि त्वं न मे तत्रास्ति संशयः॥ १३॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
द्वादशोऽध्यायः॥ १२॥

---

वैशम्पायन उवाच। एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः। धृतराष्ट्रमुपेत्यैवं वाक्यमाह महार्थवत्॥ १॥ उक्तो युधिष्ठिरो राजा भवद्वचनमादितः। स च संश्रुत्य वाक्यन्ते प्रशशंस महाद्युतिः॥ २॥ वीभत्सुश्च महातेजा निवेदयति ते गृहान्। वसु तस्य गृहे यच्च प्राणानपि च केवलान्॥ ३॥ धर्म्मराजश्च पुत्रस्ते राज्यं प्राणान् धनानि च। अनुजानाति राजर्षे यच्चान्यदपि किञ्चन॥ ४॥ भीमस्तु सर्व्वदुःखानि संस्मृत्य बहुलान्युत। कृच्छ्रादिव महाबाहुरनुजज्ञे विनिश्वसन्॥ ५॥ स राजन् धर्म्मशीलेन राज्ञा वीभत्सुना तथा। अनुनीतो महाबाहुः सौहृदे स्थापितोऽपि च॥ ६॥ न च मन्युस्त्वया कार्य्य इति त्वां प्राह धर्म्मराट्।

संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरत् ॥ ७ ॥ एवं प्रायो हि धर्मोऽयं क्षत्रियाणां नराधिप । युद्धे क्षत्रियधर्म्मे च निरतोऽयं वृकोदरः ॥ ८ ॥ वृकोदरकृते चाहमर्जुनश्च पुनः पुनः । प्रसीद याचे नृपते भवान् प्रभुरिहास्ति यत् ॥ ९ ॥ तद्ददातु भवान् वित्तं यावदिच्छति पार्थिव । त्वमीश्वरोऽस्य राज्यस्य प्राणानामपि भारत ॥ १० ॥ ब्रह्मदेयाग्रहारांश्च पुत्राणामौर्द्ध्वदेहिकम् । इतो रत्नानि गाश्चैव दासी दासमजाविकम् ॥ ११ ॥ आनयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु । दीनान्धकृपणेभ्यश्च तत्र तत्र नृप त्वया ॥ १२ ॥ बह्वन्नरसपानाढ्याः सभा विदुर कारय । गवां निपानान्यन्यच्च विविधं पुण्यकं कुरु ॥ १३ ॥ इति मामब्रवीद्राजा पार्थश्चैव धनञ्जयः । यदत्रानन्तरं कार्य्यं तद्भवान् वक्तुमर्हति ॥ १४ ॥ इत्युक्ते विदुरेणाथ धृतराष्ट्रोऽभिनन्द्य तान् । मनश्चक्रे महादाने कार्त्तिक्यां जनमेजय ॥ १५ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
त्रयोदशोऽध्यायः ॥ १३ ॥

---

वैशम्पायन उवाच । विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः । प्रीतिमानभवद्राजन् राज्ञो जिष्णोश्च कर्म्मणि ॥ १ ॥ ततोऽभिरूपान् भीष्माय ब्राह्मणानृषिसत्तमान् । पुत्रार्थं सुहृदश्चैव स समीक्ष्य सहस्रशः ॥ २ ॥ कारयित्वान्नपानानि यानान्याच्छादनानि च । सुवर्णमणिरत्नानि दासीदासमजाविकम् ॥ ३ ॥ कम्बलानि च रत्नानि ग्रामान् क्षेत्राण्यजाविकम् । सालङ्कारान् गजानश्वान् कन्याश्चैव वरस्त्रियः ॥ ४ ॥ उद्दिश्योद्दिश्य सर्व्वेभ्यो ददौ स नृपसत्तमः । द्रोणं संकीर्त्य भीष्मञ्च सोमदत्तञ्च वाह्लिकम् ॥ ५ ॥ दुर्य्योधनञ्च राजानं पुत्रांश्चैव पृथक् पृथक् । जय-

द्रथपुरोगांश्च सुहृदश्चापि सर्वशः ॥ ६ ॥ स आह्वयन्तो बहूनि बहुशो धनदक्षिणाः । अनेकधनरत्नौघो युधिष्ठिरमते तदा ॥ ७ ॥ अनिशं यत्र पुरुषा गणका लेखकास्तथा । युधिष्ठिरस्य वचनादपृच्छन्त स्म तं नृपम् ॥ ८ ॥ आज्ञापय किमेतेभ्यः प्रदायं दीयतामिति । तदुपस्थितमेवात्र वचनान्ते ददुस्तदा ॥ ९ ॥ शतदेये दशशतं सहस्रे चायुतन्तथा । दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ॥ १० ॥ एवं स वसुधाराभिर्वर्षमाणो नृपाम्बुदः । तर्पयामास विप्रांस्तान् वर्षन् शस्यमिवाम्बुदः ॥ ११ ॥ ततोऽनन्तरमेवात्र सर्ववर्णान्महामते । अन्नपानरसौघेन प्लावयामास पार्थिवः ॥ १२ ॥ सवस्त्रधनरत्नौघो मृदङ्गनिनदो महान् । गवाश्वमकरावर्त्तो नानारत्नमहाकरः ॥ १३ ॥ ग्रामाग्रहारद्वीपाढ्यो मणिहेमजलार्णवः । जगत् संप्लावयामास धृतराष्ट्रोडुपोद्धतः ॥ १४ ॥ एवं स पुत्रपौत्राणां पितॄणामात्मनस्तथा । गान्धार्याश्च महाराज प्रददावौर्द्ध्वदेहिकम् ॥ १५ ॥ परिश्रान्तो यदासीत् स ददद्दानान्यनेकशः । निवर्त्तयामास तदा दानयज्ञं नराधिपः ॥ १६ ॥ एवं स राजा कौरव्यश्चक्रे दानमहाक्रतुम् । नटनर्त्तकलास्याढ्यं बह्वन्नरसदक्षिणम् ॥ १७ ॥ दशाहमेवं दानानि दत्त्वा राजाम्बिकासुतः । बभूव पुत्रपौत्राणामनृणो भरतर्षभ ॥ १८ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

वैशम्पायन उवाच । ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः । आहूय पाण्डवान् वीरान् वनवासे कृतक्षणः ॥ १ ॥ गान्धारीसहितो धीमानभ्यनन्दद्यथाविधि । कार्त्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः ॥ २ ॥ अग्निहोत्रं पुरस्कृत्य वल्कला-

जिनसंवृतः । वधूजनवृतो राजा निर्ययौ भवनात्ततः ॥ ३ ॥
ततः स्त्रियः कौरवपाण्डवानां याश्चापराः कौरवराजवंश्याः ।
तासां नादः प्रादुरासीत्तदानीं वैचित्रवीर्य्ये नृपतौ प्रयाते ॥ ४ ॥
ततो लाजैः सुमनोभिश्च राजा विचित्राभिस्तद्गृहं पूजयित्वा ।
सम्पूज्यार्थैर्भृत्यवर्गञ्च सर्वं ततः समुत्सृज्य ययौ नरेन्द्रः ॥ ५ ॥
ततो राजा प्राञ्जलिर्वेपमानो युधिष्ठिरः सस्वरं वाष्पकण्ठः ।
विमुच्योच्चैर्महानादं हि साधो क्व यास्यसीत्यपतत्तात भूमौ ॥ ६ ॥
तथार्जुनस्तीव्रदुःखाभितप्तो मुहुर्मुहुर्निश्वसन् भारताग्र्यः । युधि-
ष्ठिरं मैवमित्येवमुक्त्वा निगृह्याथो दीनवत् सीदमानः ॥ ७ ॥ वृको-
दरः फाल्गुनश्चैव वीरो माद्रीपुत्रौ विदुरः सञ्जयश्च । वैश्यापुत्रः
सहितो गौतमेन धौम्यो विप्राश्चान्वयुर्वाष्पकण्ठाः ॥ ८ ॥ कुन्ती
गान्धारीं बद्धनेत्रां व्रजन्तीं स्कन्धासक्तं हस्तमथोद्वहन्ती । राजा
गान्धार्य्याः स्कन्धदेशेऽवसज्य पाणिं ययौ धृतराष्ट्रः प्रतीतः ॥ ९ ॥
तथा कृष्णा द्रौपदी सात्वती च बालापत्या चोत्तरा कौरवी च ।
चित्राङ्गदा याश्च काश्चित् स्त्रियोन्याः सार्द्धं राज्ञा प्रस्थितास्ता
वधूभिः ॥ १० ॥ तासां नादो रुदतीनां तदासीद्राजन् दुःखात्
कुररीणामिवोच्चैः । ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां विशां शूद्रा-
णाञ्चैव भार्य्याः समन्तात् ॥ ११ ॥ तन्निर्याणे दुःखितः पौरवर्गो
गजाह्वये चैव बभूव राजन् । यथा पूर्वं गच्छतां पाण्डवानां
द्यूते राजन् कौरवाणां सभायाः ॥ १२ ॥ या नापश्यंश्चन्द्रमसं न
सूर्य्यं रामाः कदाचिदपि तस्मिन्नरेन्द्रे । महावनं गच्छति
कौरवेन्द्रे शोकेनार्त्ता राजमार्गं प्रपेदुः ॥ १३ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि धृतराष्ट्रवन-
गमने पञ्चदशोऽध्यायः ॥ १५ ॥

---

वैशम्पायन उवाच । ततः प्रासादहर्म्येषु वसुधायाञ्च पार्थिव । नारीणाञ्च नराणाञ्च निःस्वनः सुमहानभूत् ॥ १ ॥ स राजा राजमार्गेण नृनारीसंकुलेन च । कथञ्चिन्निर्ययौ धीमान् वेपमानः कृताञ्जलिः ॥ २ ॥ स वर्द्धमानद्वारेण निर्ययौ गजसाह्वयात् । विसर्ज्जयामास च तं जनौघं स मुहुर्मुहुः ॥ ३ ॥ वनं गन्तुञ्च विदुरो राज्ञा सह कृतक्षणः । सञ्जयश्च महामात्रः सूतो गावल्गणिस्तथा ॥ ४ ॥ कृपं निवर्त्तयामास युयुत्सुञ्च महारथम् । धृतराष्ट्रो महीपालः परिदाप्य युधिष्ठिरे ॥ ५ ॥ निवृत्ते पौरवर्गे च राजा सान्तःपुरस्तदा । धृतराष्ट्राभ्यनुज्ञातो निवर्त्तितुमियेष ह ॥ ६ ॥ सोऽब्रवीन्मातरं कुन्तीं वने तमनुजग्मुषीम् । अहं राजानमन्विष्ये भवती विनिवर्त्तताम् ॥ ७ ॥ वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि । राजा यात्येष धर्म्मात्मा तापस्ये कृतनिश्चयः ॥ ८ ॥ इत्युक्ता धर्म्मराजेन वाष्पव्याकुललोचना । जगामैव तदा कुन्ती गान्धारीं परिगृह्य ह ॥ ९ ॥

कुन्त्युवाच । सहदेवे महाराज मा प्रमादं कृथाः क्वचित् । एष मामनुरक्तो हि राजंस्त्वाञ्चैव सर्वदा ॥ १० ॥ कर्णं स्मरेथाः सततं संग्रामेष्वपलायिनम् । अवकीर्णो हि समरे वीरो दुष्प्रज्ञया तदा ॥ ११ ॥ आयसं हृदयं नूनं मन्दाया मम पुत्रक । यत् सूर्य्यजमपश्यन्त्याः शतधा यन्न दीर्य्यते ॥ १२ ॥ एवं गते तु किं शक्यं मया कर्त्तुमरिन्दम । मम दोषोऽयमत्यर्थं ख्यापितो यन्न सूर्य्यजः ॥१३॥ तन्निमित्तं महाबाहो दानं दद्यास्त्वनुत्तमम् । सहैव भ्रातृभिः सार्द्धं सूर्य्यजस्यारिमर्द्दन ॥ १४ ॥ द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्षण । भीमसेनोऽर्जुनश्चैव नकुलश्च कुरूद्वह । समाधेयास्त्वया राजंस्त्वय्यद्य कुलधूर्गता ॥ १५॥ श्वश्रूश्वशुरयोः पादान् शुश्रूषन्ती वनेऽन्वहम् । गान्धारीसहिता वत्स्ये तापसी मलपङ्किनी ॥ १६ ॥

वैशम्पायन उवाच । एवमुक्तः स धर्म्मात्मा भ्रातृभिः सहितो

वशी । विषादमगमद्धीमान् न च किञ्चिदुवाच ह ॥ १७ ॥ मुहूर्त्तमिव तु ध्यात्वा धर्म्मराजो युधिष्ठिरः । उवाच मातरं दीनश्चिन्ताशोकपरायणः ॥ १८ ॥ किमिदन्ते व्यवसितं नैव त्वं कर्त्तुमर्हसि । नत्वामभ्यनुजानामि प्रसादं कर्त्तुमर्हसि ॥ १९ ॥ पुरोद्यतान् पुरा ह्यस्मानुत्साह्य प्रियदर्शने । विदुलाया वचोभिस्त्वं नास्मान् संत्यक्तुमर्हसि ॥ २० ॥ निहत्य पृथिवीपालान् राज्यं प्राप्तमिदं मया । तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् ॥ २१ ॥ क्व सा बुद्धिरियं चाद्य भवत्या यत् श्रुतं मया । क्षत्रधर्म्मे स्थितिं चोक्त्वा तस्य च्यवितुमिच्छसि ॥ २२ ॥ अस्मानुत्सृज्य राज्यञ्च स्नुषा चेषा यशस्विनी । कथं वत्स्यसि दुर्गेषु वनेष्वद्य प्रसीद मे ॥ २३ ॥ इति वाष्पाकुला वाचः कुन्ती पुत्रस्य शृखती । सा जगामाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् ॥ २४ ॥ यदा राज्यमिदं कुन्ती भोक्तव्यं पुत्रनिर्ज्जितम् । प्राप्तव्या राजधर्म्माश्च तदेयन्ते कुतो मतिः ॥ २५ ॥ किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम् । कस्य हेतोः परित्यज्य वनं गन्तुमभीप्ससि ॥ २६ ॥ वनाच्चापि किमानीता भवत्या बालका वयम् । दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तथा ॥ २७ ॥ प्रसीद मातर्मा गास्त्वं वनमद्य यशस्विनि । श्रियं यौधिष्ठिरीं मातर्भुङ्क्ष तावद्बलार्ज्जिताम् ॥ २८ ॥ इति सा निश्चितैवाशु वनवासाय भाविनी । लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः ॥ २९ ॥ द्रौपदी चान्वयात् श्वश्रूं विषस्नवदना तदा । वनवासाय गच्छन्तीं रुदती भद्रया सह ॥ ३० ॥ सा पुत्रान् रुदतः सर्व्वान् मुहुर्म्मुहुरवेक्षती । जगामैव महाप्राज्ञा वनाय कृतनिश्चया ॥ ३१ ॥ अन्वयुः पाण्डवास्तांस्तु सभृत्यान्तःपुरस्तथा । ततः प्रमृज्य साश्रूणि पुत्रान् वचनमब्रवीत् ॥ ३२ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि धृतराष्ट्रवनगमने षोड़शोऽध्यायः ॥ १६ ॥

कुन्त्युवाच। एवमेतन्महाबाहो यथा वदसि पाण्डव। कृतमुद्धर्षणं पूर्वं मया वः सीदतां नृपाः ॥ १ ॥ द्यूतापहृतराज्यानां पतितानां सुखादपि। ज्ञातिभिः परिभूतानां कृतमुद्धर्षणं मया ॥ २ ॥ कथं पाण्डोर्न नश्येत सन्ततिः पुरुषर्षभाः। यशश्च वो न नश्येत इति चोद्धर्षणं कृतम् ॥ ३ ॥ यूयमिन्द्रसमाः सर्वे देवतुल्यपराक्रमाः। मा परेषां सुखप्रेक्षाः स्थेत्येवं तत् कृतं मया ॥ ४ ॥ कथं धर्मभृतां श्रेष्ठो राजा त्वं वासवोपमः। पुनर्वने न दुःखी स्यादिति चोद्धर्षणं कृतम् ॥ ५ ॥ नागायुतसमप्राणः ख्यातविक्रमपौरुषः। नायं भीमोऽत्ययं गच्छेदिति चोद्धर्षणं कृतम् ॥ ६ ॥ भीमसेनादवरजस्तथायं वासवोपमः। विजयो नावसीदेत इति चोद्धर्षणं कृतम् ॥ ७ ॥ नकुलः सहदेवश्च तथेमौ गुरुवर्त्तिनौ। क्षुधा कथं न सीदेतामिति चोद्धर्षणं कृतम् ॥ ८ ॥ इयञ्च बृहती श्यामा तथात्यायतलोचना। वृथा सभातले क्लिष्टा माभूदिति च तत् कृतम् ॥ ९ ॥ प्रेक्षतामेव वो भीम वेपन्तीं कदलीमिव। स्त्रीधर्मिणीमरिष्टाङ्गीं तथा द्यूतपराजिताम् ॥१०॥ दुःशासनो यदा मौर्ख्याद्दासीवत् पर्य्यकर्षत। तदैव विदितं मह्यं पराभूतमिदं कुलम् ॥ ११ ॥ विषण्णाः कुरवश्चैव तदा मे श्वशुरादयः। यदैव नाथमिच्छन्ती व्यलपत् कुररी यथा ॥ १२ ॥ केशपक्षे परामृष्टा पापेन हतबुद्धिना। यदा दुःशासनेनैषा तदा मुह्याम्यहं नृप ॥ १३ ॥ युष्मत्तेजोविवृद्ध्यर्थं मया ह्युद्धर्षणं कृतम्। तदानीं विदुलावाक्यैरिति तद्वित्त पुत्रकाः ॥ १४ ॥ कथं न राजवंशोऽयं नश्येत् प्राप्य सुतान् मम। पाण्डोरिति मया पुत्रास्तस्मादुद्धर्षणं कृतम् ॥ १५ ॥ न तस्य पुत्राः पौत्रा वा कुरवस्ते च पार्थिवाः। लभन्ते सुकृताँल्लोकान् यस्माद्वंशः प्रणश्यति ॥ १६ ॥ भुक्तं राज्यफलं पुत्रा भर्त्तुर्मे विपुलं पुरा। महादानानि दत्तानि पीतः सोमो यथाविधि ॥ १७ ॥ नाहमात्मफलार्थं वै वासुदेव-

मचूचुदम्। विदुलायाः प्रलापैस्तैः पालनार्थञ्च तत् कृतम्॥ १८॥ नाहं राज्यफलं पुत्राः कामये पुत्रनिर्ज्जितम्। पतिलोकानहं पुण्यान् कामये तपसा विभो॥ १९॥ श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः। तपसा शोषयिष्यामि युधिष्ठिर कलेवरम्॥ २०॥ निवर्त्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह। धर्मे ते धीयतां बुद्धिर्मनस्ते महदस्तु च॥ २१॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि धृतराष्ट्रवन-
गमने सप्तदशोऽध्यायः॥ १७॥

---

वैशम्पायन उवाच। कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम। व्रीड़िताः संन्यवर्त्तन्त पाञ्चाल्या सहितानघाः॥ १॥ ततः शब्दो महानेव सर्व्वेषामभवत् तदा। अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथा गताम्॥ २॥ प्रदक्षिणमथावृत्य राजानं पाण्डवास्तदा। अभिवाद्य न्यवर्त्तन्त पृथां तामनिवर्त्त्य वै॥ ३॥ ततोऽब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः। गान्धारीं विदुरञ्चैव समाभाष्यावगृह्य च॥ ४॥ युधिष्ठिरस्य जननी देवी साधु निवर्त्त्यताम्। यथा युधिष्ठिरः प्राह तत् सर्वं सत्यमेव हि॥ ५॥ पुत्रैश्वर्य्यं महदिदमपास्य च महाफलम्। क्व नु गच्छेदनं दुर्गं पुत्रानुत्सृज्य मूढ़वत्॥ ६॥ राज्यस्थया तपस्तप्तं दानव्रतकृतं महत्। अनया शक्यमेवाद्य श्रूयताञ्च वचो मम॥ ७॥ गान्धारि परितुष्टोऽस्मि वध्वाः शुश्रूषणेन वै। तस्मात्त्वमेनां धर्म्मज्ञे समनुज्ञातुमर्हसि॥ ८॥ इत्युक्ता सौवलेयी तु राज्ञा कुन्तीमुवाच ह। तत्सर्वं राजवचनं स्वञ्च वाक्यं विशेषवत्॥ ९॥ न च सा वनवासाय देवीं कृतमतिन्तदा। शक्नोत्युपावर्त्तयितुं कुन्तीं धर्म्मपरां सतीम्॥ १०॥ तस्यास्तान्तु स्थितिं ज्ञात्वा व्यवसायं कुरु-

स्त्रियः । निवृत्तांश्च कुरुश्रेष्ठान् दृष्ट्वा प्ररुरुदुस्तदा ॥ ११ ॥ उपा-
वृत्तेषु पार्थेषु सर्वास्वेव वधूषु च । ययौ राजा महाप्राज्ञो धृत-
राष्ट्रो वनं तदा ॥ १२ ॥ पाण्डवाश्चातिदीनास्ते दुःखशोकपरा-
यणाः । यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा ॥ १३ ॥
तदाहृष्टमिवानन्दं गतोत्सवमिवाभवत् । नगरं हास्तिनपुरं स-
स्त्रीवृद्धकुमारकम् ॥ १४ ॥ सर्वे चासन्निरुत्साहाः पाण्डवा जात-
मन्यवः । कुन्त्या हीनाः सुदुःखार्त्ता वत्सा इव विना गवा ॥ १५ ॥
धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम् । ततो भागीरथीतीरे
निवासमकरोत् प्रभुः ॥ १६ ॥ प्रादुष्कृता यथान्यायमग्नयो वेद-
पारगैः । व्यराजन्त द्विजश्रेष्ठैस्तत्र तत्र तपोवने । प्रादुष्कृताग्नि-
रभवत् स च वृद्धो नराधिपः ॥ १७ ॥ स राजाग्नीन् पर्य्युपास्य
हुत्वा च विधिवत्तदा । सन्ध्यागतं सहस्रांशुमुपातिष्ठत भारत
॥ १८ ॥ विदुरः सञ्जयश्चैव राज्ञः शय्यां कुशैस्ततः । चक्रतुः
कुरुवीरस्य गान्धार्य्याश्चाविदूरतः ॥ १९ ॥ गान्धार्य्याः सन्निकर्षे
तु निषसाद कुशे सुखम् । युधिष्ठिरस्य जननी कुन्ती साधुव्रते
स्थिता ॥ २० ॥ तेषां संश्रवणे चापि निषेदुर्विदुरादयः । याज-
काश्च यथोद्देशं द्विजा ये चानुयायिनः ॥ २१ ॥ प्राधीतद्विजमुख्या
सा संप्रज्वलितपावका । बभूव तेषां रजनी ब्राह्मीव प्रीति-
वर्द्धिनी ॥ २२ ॥ ततो रात्र्यां व्यतीतायां कृतपूर्वाह्णिकक्रियाः ।
हुत्वाग्निं विधिवत् सर्वे प्रययुस्ते यथाक्रमम् । उदङ्मुखा निरी-
क्षन्त उपवासपरायणाः ॥ २३ ॥ स तेषामतिदुःखोऽभून्निवासः
प्रथमेऽहनि । शोचतां शोच्यमानानां पौरजानपदैर्जनैः ॥ २४ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि धृतराष्ट्रवन-
गमने अष्टादशोऽध्यायः ॥ १८ ॥

---

वैशम्पायन उवाच। ततो भागीरथीतीरे मेध्ये पुण्यजनोचिते। निवासमकरोद्राजा विदुरस्य मते स्थितः॥ १॥ तत्रैनं पर्य्युपातिष्ठन् ब्राह्मणा वनवासिनः। चत्रविट्शूद्रसङ्घाश्च बहवो भरतर्षभ॥ २॥ स तैः परिवृतो राजा कथाभिः परिनन्द्य तान्। अनुजज्ञे सशिष्यान् वै विधिवत् प्रतिपूज्य च॥ ३॥ सायाह्ने स महीपालस्ततो गङ्गामुपेत्य च। चकार विधिवत् शौचं गान्धारी च यशस्विनी॥ ४॥ ते चैवान्ये पृथक् सर्व्वे तीर्थेष्वाप्लुत्य भारत। चक्रुः सर्व्वाः क्रियास्तत्र पुरुषा विदुरादयः॥ ५॥ कृतशौचं ततो वृद्धं श्वशुरं कुन्तिभोजजा। गान्धारीं च तथा राजन् गङ्गातीरमुपानयत्॥ ६॥ राज्ञस्तु याजकैस्तत्र कृतो वेदीपरिस्तरः। जुहाव तत्र वह्निं स नृपतिः सत्यसङ्गरः॥ ७॥ ततो भागीरथीतीरात् कुरुक्षेत्रं जगाम सः। सानुगो नृपतिर्वृद्धो नियतः संयतेन्द्रियः॥ ८॥ तत्राश्रमपदं धीमानभिगम्य स पार्थिवः। आससादाथ राजर्षिं शतयूपं मनीषिणम्॥ ९॥ स हि राजा महानासीत् केकयेषु परन्तप। स पुत्रं मनुजैश्वर्य्ये निवेश्य वनमाविशत्॥ १०॥ तेनासौ सहितो राजा ययौ व्यासाश्रमं प्रति। तत्रैनं विधिवद्राजा प्रत्यगृह्णात् कुरूद्वहम्॥ ११॥ स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः। शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा॥ १२॥ तस्मै सर्व्वं विधिं राज्ञे राजाचख्यौ महामतिः। आरण्यकं महाराज व्यासस्यानुमते तदा॥ १३॥ एवं स तपसा राजा धृतराष्ट्रो महामनाः। योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा॥ १४॥ तथैव देवी गान्धारी वल्कलाजिनधारिणी। कुन्त्या सह महाराज समानव्रतचारिणी॥ १५॥ कर्म्मणा मनसा वाचा चक्षुषा चैव ते नृप। सन्नियम्येन्द्रियग्राममास्थिते परमं तपः॥ १६॥ त्वगस्थिभूतः परिशुष्कमांसो जटाजिनी वल्कलसंवृताङ्गः। स पार्थिवस्तत्र तपश्चचार महर्षिवत्तीव्रमपेतमोहः

॥ १७॥ क्षत्ता च धर्मार्थविदग्रबुद्धिः स सञ्जयस्तं नृपतिं सदारम्।
उपाचरद्घोरतपो जितात्मा तदा कृशो वल्कलचीरवासाः ॥ १८ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि धृतराष्ट्रवन-
गमने ऊनविंशोऽध्यायः ॥ १९ ॥

---

वैशम्पायन उवाच। ततस्तत्र मुनिश्रेष्ठो राजानं द्रष्टुमभ्ययुः।
नारदः पर्वतश्चैव देवलश्च महातपाः ॥ १ ॥ द्वैपायनः सशिष्यश्च
सिद्धाश्चान्ये मनीषिणः। शतयूपश्च राजर्षिर्वृद्धः परमधार्मिकः
॥ २ ॥ तेषां कुन्ती महाराज पूजाञ्चक्रे यथाविधि। ते चापि
तुतुषुस्तस्यास्तापसाः परिचर्य्यया ॥ ३ ॥ तत्र धर्म्याः कथास्तात
चक्रुस्ते परमर्षयः। रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम्
॥ ४ ॥ कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्ततः। कथामिमा-
मकथयत् सर्वप्रत्यक्षदर्शिवान् ॥ ५ ॥

नारद उवाच। केकयाधिपतिः श्रीमान् राजासीदकुतो-
भयः। सहस्रचित्य इत्युक्तः शतयूपपितामहः ॥ ६ ॥ स्वपुत्रे
राज्यमासज्य ज्येष्ठे परमधार्मिके। सहस्रचित्यो धर्मात्मा प्रवि-
वेश वनं नृपः ॥ ७ ॥ स गत्वा तपसः पारं दीप्तस्य वसुधाधिपः।
पुरन्दरस्य संस्थानं प्रतिपेदे महाद्युतिः ॥ ८ ॥ दृष्टपूर्वः सुबहुशो
राजन् सम्पतता मया। महेन्द्रसदने राजा तपसा दग्धकिल्बिषः
॥ ९ ॥ तथा शैलालयो राजा भगदत्तपितामहः। तपोबलेनैव
नृपो महेन्द्रसदनं गतः ॥ १० ॥ तथा पृषध्रो राजासीद्राजन्
वज्रधरोपमः। स चापि तपसा यातो नाकपृष्ठमितो नृपः ॥११ ॥
अस्मिन्नरण्ये नृपते मान्धातुरपि चात्मजः। पुरुकुत्सो नृपः सिद्धिं
महतीं समवाप्तवान् ॥ १२ ॥ भार्य्या समभवद्यस्य नर्म्मदा सरितां
वरा। सोऽस्मिन्नरण्ये नृपतिस्तपस्तप्त्वा दिवं गतः ॥ १३ ॥ शश-

सोमा स राजासीद्राजन् परमधार्मिकः । सम्यगस्मिन् वने तप्त्वा ततो दिवमवाप्तवान् ॥ १४ ॥ द्वैपायनप्रसादाच्च त्वमपीदं तपोवनम् । राजन्नवाप्य दुष्प्रापां गतिमग्र्यां गमिष्यसि ॥ १५ ॥ त्वञ्चापि राजशार्दूल तपसोऽन्ते श्रिया वृतः । गान्धारीसहितो गन्ता गतिं तेषां महात्मनाम् ॥ १६ ॥ पाण्डुः स्मरति ते नित्यं बलहन्तुः समीपगः । त्वां सदैव महाराज श्रेयसा स च योक्ष्यति ॥ १७ ॥ तव शुश्रूषया चैव गान्धार्य्याश्च यशस्विनी । भर्त्तुः सलोकतामेषा गमिष्यति वधूस्तव ॥ १८ ॥ युधिष्ठिरस्य जननी स हि धर्म्मः सनातनः । वयमेतत् प्रपश्यामो नृपते दिव्यचक्षुषा ॥ १९ ॥ प्रवेक्ष्यति महात्मानं विदुरश्च युधिष्ठिरम् । सञ्जयस्तदनुध्यानादितः स्वर्गमवाप्स्यति ॥ २० ॥

वैशम्पायन उवाच । एतत् श्रुत्वा कौरवेन्द्रो महात्मा सार्द्धं पत्न्या प्रीतिमान् सम्बभूव । विद्वान् वाक्यं नारदस्य प्रशस्य चक्रे पूजां चातुलां नारदस्य ॥ २१ ॥ ततः सर्वे नारदं विप्रसङ्घाः सम्पूजयामासुरतीव राजन् । राज्ञः प्रीत्या धृतराष्ट्रस्य ते वै पुनः पुनः संप्रहृष्टास्तदानीम् ॥ २२ ॥ नारदस्य तु तद्वाक्यं प्रशशंसुर्द्विजसत्तमाः । शतयूपस्तु राजर्षिर्नारदं वाक्यमब्रवीत् ॥ २३ ॥ अहो भगवता श्रद्धा कुरुराजस्य वर्द्धिता । सर्वस्य च जनस्यास्य मम चैव महाद्युते ॥ २४ ॥ अस्ति काचिद्विवक्षा तु तां मे निगदतः शृणु । धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजित ॥ २५ ॥ सर्ववृत्तान्ततत्त्वज्ञो भवान् दिव्येन चक्षुषा । युक्तः पश्यसि विप्रर्षे गतिर्या विविधा नृणाम् ॥ २६ ॥ उक्तवान्नृपतीनां त्वं महेन्द्रस्य सलोकताम् । न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने ॥ २७ ॥ स्थानमप्यस्य नृपतेः श्रोतुमिच्छाम्यहं विभो । त्वत्तः कीदृक्कदा चेति तन्ममाख्याहि तत्त्वतः ॥ २८ ॥ इत्युक्तो नारदस्तेन वाक्यं सर्वमनोनुगम् । व्याजहार सभामध्ये दिव्यदर्शी महातपाः ॥२९॥

नारद उवाच । यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम् ।
दृष्टवानस्मि राजर्षिं तत्र पाण्डुं नराधिपम् ॥ ३० ॥ तत्रेयं धृत-
राष्ट्रस्य कथा समभवन्नृप । तपसो दुष्करस्यास्य यदयं नश्यते
तपः ॥ ३१ ॥ तत्राहमिदमश्रौषं शक्रस्य वदतः स्वयम् । वर्षाणि
त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ॥ ३२ ॥ ततः कुवेरभवनं
गान्धारीसहितो नृपः । प्रयातो धृतराष्ट्रोऽयं राजराजाभिसत्-
कृतः । कामगेन विमानेन दिव्याभरणभूषितः ॥ ३३ ॥ ऋषिपुत्रो
महाभागस्तपसा दग्धकिल्बिषः । सञ्चरिष्यति लोकांश्च देवगन्धर्व-
रक्षसाम् ॥ ३४ ॥ स्वच्छन्देनेति धर्मात्मा यन्मां त्वमनुपृच्छसि ।
देवगुह्यमिदं प्रीत्या मया वः कथितं महत् ॥ ३५ ॥ भवन्तो हि
श्रुतधनास्तपसा दग्धकिल्बिषाः ॥ ३६ ॥

वैशम्पायन उवाच । इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः ।
सर्वे सुमनसः प्रीता बभूवुः स च पार्थिवः ॥ ३७ ॥ एवं कथाभि-
रन्वास्य धृतराष्ट्रं मनीषिणम् । विप्रजग्मुर्यथाकामं ते सिद्धगति-
मास्थिताः ॥ ३८ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि धृतराष्ट्रवन-
गमने विंशोऽध्यायः ॥ २० ॥

---

वैशम्पायन उवाच । वनं गते कौरवेन्द्रे दुःखशोकसमन्विताः ।
बभूवुः पाण्डवा राजन् मातृशोकेन चान्विताः ॥ १ ॥ तथा पौर-
जनः सर्वः शोचन्नास्ते जनाधिपम् । कुर्वाणाश्च कथास्तत्र ब्राह्मणा
नृपतिं प्रति ॥ २ ॥ कथं नु राजा वृद्धः स वने वसति निर्जने ।
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ॥ ३ ॥ सुखार्हः
स हि राजर्षिरसुखी तद्वनं महत् । किमवस्थः समासाद्य प्रज्ञा-
चक्षुर्हतात्मजः ॥ ४ ॥ सुदुष्करं कृतवती कुन्ती पुत्रानपश्यती ।

राजश्रियं परित्यज्य वनवासमरोचयत् ॥ ५ ॥ विदुरः क्षिप्तस्य भ्रातुः शुश्रूषुरात्मवान्। स च गावल्गणिर्धीमान् भर्तृपिण्डानुपालकः ॥ ६ ॥ आकुमारञ्च पौरास्ते चिन्ताशोकसमाहताः। तत्र तत्र कथाश्चक्रुः समासाद्य परस्परम् ॥ ७ ॥ पाण्डवाश्चैव ते सर्वे भृशं शोकपरायणाः। शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ॥ ८ ॥ तथैव वृद्धपितरं हतपुत्रं जनेश्वरम्। गान्धारीञ्च महाभागां विदुरञ्च महामतिम् ॥ ९ ॥ नैषां बभूव संप्रीतिस्तान् विचिन्तयतां तदा। न राज्ये न च नारीषु न वेदाध्ययनेषु च ॥ १० ॥ परं निर्वेदमगमंश्चिन्तयन्तो नराधिपम्। तञ्च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ॥ ११ ॥ अभिमन्योश्च बालस्य विनाशं रणमूर्द्धनि। कर्णस्य च महाबाहोः संग्रामेष्वपलायिनः ॥ १२ ॥ तथैव द्रौपदेयानामन्येषां सुहृदामपि। वधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ॥ १३ ॥ हतप्रवीरां पृथिवीं हतरत्नाञ्च भारत। सदैव चिन्तयन्तस्ते न शमं चोपलेभिरे ॥ १४ ॥ द्रौपदी हतपुत्रा च सुभद्रा चैव भाविनी। नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् ॥ १५ ॥ वैराटग्रास्तनयं दृष्ट्वा पितरं ते परीक्षितम्। धारयन्ति स्म ते प्राणांस्तव पूर्वपितामहाः ॥ १६ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि धृतराष्ट्रवनगमने एकविंशोऽध्यायः ॥ २१ ॥

---

वैशम्पायन उवाच। एवं ते पुरुषव्याघ्राः पाण्डवा मातृनन्दनाः। स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः ॥ १ ॥ ये राजकार्य्येषु पुरा व्यासक्ता नित्यशोऽभवन्। ते राजकार्य्याणि तदा नाकार्षुः सर्वतः पुरे ॥ २ ॥ आविष्टा इव शोकेन नाभ्यनन्दन्त किञ्चन। सम्भाष्यमाणा अपि ते न किञ्चित् प्रत्यपूजयन्

॥ ३ ॥ ते स्म वीरा दुराधर्षा गाम्भीर्य्ये सागरोपमाः। शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन् ॥ ४ ॥ अचिन्तयंश्च जननीं ततस्ते पाण्डुनन्दनाः। कथन्नु वृद्धमिथुनं वहत्यतिकृशा पृथा ॥ ५ ॥ कथं स च महीपालो हतपुत्रो निराश्रयः। पत्न्या सह वसत्येको वने श्वापदसेविते ॥ ६ ॥ सा च देवी महाभागा गान्धारी हतबान्धवा। पतिमन्धं कथं वृद्धमन्वेति विजने वने ॥ ७ ॥ एवं तेषां कथयतामौत्सुक्यमभवत्तदा। गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया ॥ ८ ॥ सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत्। अहो मे भवतो दृष्टं हृदयं गमनं प्रति ॥ ९ ॥ न हि त्वां गौरवेणाहमशकं वक्तुमञ्जसा। गमनं प्रति राजेन्द्र तदिदं समुपस्थितम् ॥१०॥ दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्त्तयन्तीं तपस्विनीम्। जटिलां तापसीं वृद्धां कुशकाशपरिक्षिताम् ॥ ११ ॥ प्रासादहर्म्यसंवृद्धामत्यन्तसुखभागिनीम्। कदा नु जननीं श्रान्तां द्रक्ष्यामि भृशदुःखिताम् ॥ १२ ॥ अनित्याः खलु मर्त्त्यानां गतयो भरतर्षभ। कुन्ती राजसुता यत्र वसत्यसुखिता वने ॥ १३ ॥ सहदेववचः श्रुत्वा द्रौपदी योषितां वरा। उवाच देवी राजानमभिपूज्याभिनन्द्य च ॥ १४ ॥ कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा। जीवन्त्या ह्यद्य मे प्रीतिर्भविष्यति जनाधिप ॥ १५ ॥ एषा तेऽस्तु मतिर्नित्यं धर्म्मे ते रमतां मनः। योऽद्य त्वमस्मान् राजेन्द्र श्रेयसा योजयिष्यसि ॥ १६ ॥ अग्रपादस्थितञ्चेमं विद्धि राजन् वधूजनम्। काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्य्याः श्वशुरस्य च ॥ १७ ॥ इत्युक्तः स नृपो देव्या द्रौपद्या भरतर्षभ। सेनाध्यक्षान् समानाय्य सर्वानिदमुवाच ह ॥ १८ ॥ निर्यातयत मे सेनां प्रभूतरथकुञ्जराम्। द्रक्ष्यामि वनसंस्थञ्च धृतराष्ट्रं महीपतिम् ॥ १९ ॥ स्त्र्यध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे। सज्जीक्रियन्तां सर्वाणि शिविकाश्च सहस्रशः ॥ २० ॥ शकटापणवेशाश्च कोषः शिल्पिन

एव च । निर्यान्तु कोषपालाश्च कुरुक्षेत्राश्रमं प्रति ॥ २१ ॥ यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवम् । अनावृतः स विहितः स च यातु सुरक्षितः ॥ २२ ॥ सूदाः पौरोगवाश्चैव सर्व्वञ्चैव महानसम् । विविधं भक्ष्यभोज्यञ्च शकटे रुह्यतां मम ॥ २३ ॥ प्रयाणं घुष्यताञ्चैव श्वोभूत इति मा चिरम् । क्रियन्तां पथि चाप्यद्य वेश्मानि विविधानि च ॥ २४ ॥ एवमाज्ञापयामास भ्रातृभिः सह पाण्डवः । श्वोभूते निर्ययौ राजन् सस्त्रीवृद्धपुरःसरः ॥ २५ ॥ स वहिर्द्दिवसानेव जनौघं परिपालयन् । न्यवसन् नृपतिः पञ्च ततोऽगच्छद्वनं प्रति ॥ २६ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
द्वाविंशोऽध्यायः ॥ २२ ॥

---

वैशम्पायन उवाच । आज्ञापयामास ततः सेनां भरतसत्तमः । अर्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः ॥ १ ॥ योगो योग इति प्रीत्या ततः शब्दो महानभूत् । क्रोशतां सादिनां तत्र युज्यतामिव भारत ॥ २ ॥ केचिद्यानैर्नरा जग्मुः केचिदश्वैर्महाजवैः । काञ्चनैश्च रथैः केचिज्ज्वलितज्वलनोपमैः ॥ ३ ॥ गजेन्द्रैश्च तथैवान्ये केचिदुष्ट्रैर्नराधिप । पदातिनस्तथैवान्ये नखरप्रासयोधिनः ॥ ४ ॥ पौरजानपदाश्चैव यानैर्बहुविधैस्तथा । अन्वयुः कुरुराजानं धृतराष्ट्रं दिदृक्षवः ॥ ५ ॥ स चापि राजवचनादाचार्य्यो गौतमः कृपः । सेनामादाय सेनानीः प्रययावाश्रमं प्रति ॥ ६ ॥ ततो द्विजैः परिवृतः कुरुराजो युधिष्ठिरः । संस्तूयमानो बहुभिः सूतमागधवन्दिभिः ॥७॥ पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि । रथानीकेन महता निर्ज्जगाम कुरूद्वहः ॥ ८ ॥ गजैश्चाचलसङ्काशैर्भीमकर्मा वृकोदरः । सज्जयन्त्रायुधोपेतैः प्रययौ पवना-

त्मजः ॥ ९ ॥ माद्रीपुत्रावपि तथा हयारोहौ सुसंवृतौ । जग्मतुः शीघ्रगमनौ सन्नद्धकवचध्वजौ ॥ १० ॥ अर्जुनश्च महातेजा रथेनादित्यवर्च्चसा । वशी श्वेतैर्हयैर्युक्तैर्दिव्येनान्वगमन्नृपम् ॥ ११ ॥ द्रौपदीप्रमुखाश्चापि स्त्रीसङ्घाः शिबिकायुताः । स्त्र्यध्यक्षगुप्ताः प्रययुर्विसृजन्तोऽमितं वसु ॥ १२ ॥ समृद्धरथहस्त्यश्वं वेणुवीणानुनादितम् । शुशुभे पाण्डवं सैन्यं तत्तदा भरतर्षभ ॥ १३ ॥ नदीतीरेषु रम्येषु सरःसु च विशाम्पते । वासान् कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुङ्गवाः ॥ १४ ॥ युयुत्सुश्च महातेजा धौम्यश्चैव पुरोहितः । युधिष्ठिरस्य वचनात् पुरगुप्तिं प्रचक्रतुः ॥ १५ ॥ ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत् । क्रमेणोत्तीर्य्य यमुनां नदीं परमपावनीम् ॥ १६ ॥ स ददर्शाश्रमं दूराद्राजर्षेस्तस्य धीमतः । शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव हि ॥ १७ ॥ ततः प्रमुदितः सर्वो जनस्तद्वनमञ्जसा । विवेश सुमहानादैरापूर्य्य भरतर्षभ ॥ १८ ॥

इत्याश्रमवासिकपर्वणि आश्रमवासपर्वणि
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

वैशम्पायन उवाच । ततस्ते पाण्डवा दूरादवतीर्य्य पदातयः । अभिजग्मुर्नरपतेराश्रमं विनयानताः ॥ १ ॥ स च योधजनः सर्वो ये च राष्ट्रनिवासिनः । स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा ॥ २ ॥ आश्रमन्ते ततो जग्मुर्धृतराष्ट्रस्य पाण्डवाः । पुण्यं मृगगणाकीर्णं कदलीवनशोभितम् ॥ ३ ॥ ततस्तत्र समाजग्मुस्तापसा नियतव्रताः । पाण्डवानागतान् द्रष्टुं कौतूहलसमन्विताः ॥ ४ ॥ तानपृच्छत्ततो राजा क्वासौ कौरववंशभृत् । पिता ज्येष्ठो गतोऽस्माकमिति वाष्पपरिप्लुतः ॥ ५ ॥ ते तमूचुस्ततो

वाक्यं यमुनामवगाहितुम् । पुष्पाणामुदकुम्भस्य चार्थे गत इति प्रभो ॥ ६ ॥ तैराख्यातेन मार्गेण ततस्ते जग्मुरञ्जसा । ददृशुश्चापि दूरे तान् सर्वानथ पदातयः ॥ ७ ॥ ततस्ते सत्वरा जग्मुः पितुर्दर्शनकाङ्क्षिणः । सहदेवस्तु वेगेन प्राधावद्यत्र सा पृथा ॥८॥ सस्वरं रुरुदे धीमान् मातुः पादावुपस्पृशन् । सा च बाष्पाकुलमुखी ददर्श दयितं सुतम् ॥ ९ ॥ बाहुभ्यां संपरिष्वज्य समुन्नाम्य च पुत्रकम् । गान्धार्य्याः कथयामास सहदेवमुपस्थितम् ॥ १० ॥ अनन्तरञ्च राजानं भीमसेनमथार्जुनम् । नकुलञ्च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ॥ ११ ॥ सा ह्यग्रे गच्छति तयोर्दम्पत्योर्हतपुत्रयोः । कर्षन्ती तौ ततस्ते तां दृष्ट्वा संन्यपतन् भुवि ॥ ११ ॥ राजा तान् स्वरयोगेन स्पर्शेन च महामनाः । प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभुः ॥ १३ ॥ ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपम् । उपतस्थुर्महात्मानो मातरञ्च यथाविधि ॥ १४ ॥ सर्व्वेषान्तोयकलसान् जगृहुस्ते स्वयन्तदा । पाण्डवा लब्धसंज्ञास्ते मात्रा चाश्वासिताः पुनः ॥ १५ ॥ तथा नार्य्यो नृसिंहानां सोऽवरोधजनस्तदा । पौरजानपदाश्चैव ददृशुस्तं जनाधिपम् ॥ १६ ॥ निवेदयामास तदा जनन्तं नामगोत्रतः । युधिष्ठिरो नरपतिः स चैनं प्रत्यपूजयत् ॥ १७ ॥ स तैः परिवृतो मेने हर्षबाष्पाविलेक्षणः । राजात्मानं गृहगतं पुरेव गजसाह्वये ॥ १८ ॥ अभिवादितो वधूभिश्च कृष्णाद्याभिः स पार्थिवः । गान्धार्य्या सहितो धीमान् कुन्त्या च प्रत्यनन्दत ॥ १९ ॥ ततश्चाश्रममागच्छत् सिद्धचारणसेवितम् । दिदृक्षुभिः समाकीर्णं नभस्तारागणैरिव ॥ २० ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
चतुर्विंशोऽध्यायः ॥ २४ ॥

वैशम्पायन उवाच। स तैः सह नरव्याघ्रैर्भ्रातृभिर्भरतर्षभ। राजा रुचिरपद्माचैरासाञ्चक्रे तदाश्रमे ॥ १ ॥ तापसैश्च महाभागैर्नानादिग्भ्यः समागतैः। द्रष्टुं कुरुपतेः पुत्रान् पाण्डवान् पृथुवचसः ॥ २ ॥ तेऽब्रुवन् ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः। भीमार्जुनौ यमौ चैव द्रौपदी च यशस्विनी ॥ ३ ॥ तानाचख्यौ तदा सूतः सर्वांस्तानभिनामतः। सञ्जयो द्रौपदीञ्चैव सर्वाश्चान्याः कुरुस्त्रियः ॥ ४ ॥

सञ्जय उवाच। य एष जाम्बूनदशुद्धगौरस्तनुर्महासिंह इव प्रवृद्धः। प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायताचः कुरुराज एषः ॥ ५ ॥ अयं पुनर्मत्तगजेन्द्रगामी प्रतप्तचामीकरशुद्धगौरः। पृथ्वायतांसः पृथुदीर्घबाहुर्वृकोदरः पश्यत पश्यतेमम् ॥ ६ ॥ यस्त्वेष पार्श्वेऽस्य महाधनुष्मान् श्यामो युवा वारणयूथपाभः। सिंहोन्नतांसो गजखेलगामी पद्मायताचोऽर्जुन एष वीरः ॥ ७॥ कुन्तीसमीपे पुरुषोत्तमौ तु यमाविमौ विष्णुमहेन्द्रकल्पौ। मनुष्यलोके सकले समोऽस्ति ययोर्न रूपे न बले न शीले ॥ ८ ॥ इयं पुनः पद्मदलायताची मध्यं वयः किञ्चिदिव स्पृशन्ती। नीलोत्पलाभा सुरदेवतेव कृष्णा स्थिता मूर्त्तिमतीव लक्ष्मीः ॥ ९ ॥ अस्यास्तु पार्श्वे कनकोत्तमाभा यैषा प्रभा मूर्त्तिमतीव सौमी। मध्यस्थिता सा भगिनी द्विजाग्र्याश्चक्रायुधस्याप्रतिमस्य तस्य ॥ १० ॥ इयञ्च जाम्बूनदशुद्धगौरी पार्थस्य भार्य्या भुजगेन्द्रकन्या। चित्राङ्गदा चैव नरेन्द्रकन्या यैषा सवर्णाग्र्यमधूकपुष्पैः ॥ ११ ॥ इयं स्वसा राजचमूपतेश्च प्रवृद्धनीलोत्पलदामवर्णा। पस्पर्द्ध कृष्णेन सदा नृपो यो वृकोदरस्यैष परिग्रहोऽग्र्यः ॥ १२ ॥ इयञ्च राज्ञो मगधाधिपस्य सुता जरासन्ध इति श्रुतस्य। यवीयसो माद्रवतीसुतस्य भार्य्या मता चम्पकदामगौरी ॥ १३ ॥ इन्दीवरश्यामतनुः स्थिता तु यैषा परासन्नमहीतले च। भार्य्या मता माद्र-

वतीसुतस्य ज्येष्ठस्य सेयं कमलायताक्षी ॥ १४ ॥ इयन्तु निष्टप्त-सुवर्णगौरी राज्ञो विराटस्य सुता सपुत्रा । भार्य्याभिमन्योर्निहतो रणे यो द्रोणादिभिस्तैर्विरथो रथस्थैः ॥ १५ ॥ एतास्तु सीमन्त-शिरोरुहा याः शुक्लोत्तरीया नरराजपत्न्यः । राज्ञोऽस्य वृद्धस्य परःशताख्याः स्नुषा नृवीरा हतपुत्त्रनाथाः ॥ १६ ॥ एता यथा मुख्यमुदाहृता वो ब्राह्मण्यभावादृजुबुद्धिसत्त्वाः । सर्वा भवद्भिः परिपृच्छ्यतो या नरेन्द्रपत्न्यः सुविशुद्धसत्त्वाः ॥ १७ ॥

वैशम्पायन उवाच । एवं स राजा कुरुवृद्धवर्य्यः समागतस्तै-र्नरदेवपुत्त्रैः । पप्रच्छ सर्वं कुशलं तदानीं गतेषु सर्व्वेष्वथ तापसेषु ॥ १८ ॥ योधेषु चाप्याश्रममण्डलन्तं मुक्त्वा निविष्टेषु विमुच्य पत्रम् । स्त्रीवृद्धबाले च सुसंनिविष्टे यथार्हतस्तान् कुशला-न्यपृच्छत् ॥ १९ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

धृतराष्ट्र उवाच । युधिष्ठिर महाबाहो कच्चित्त्वं कुशली ह्यसि । सहितो भ्रातृभिः सर्वैः पौरजानपदैस्तथा ॥ १ ॥ ये च त्वामनुजीवन्ति कच्चित्तेऽपि निरामयाः । सचिवा भृत्यवर्गाश्च गुरव-श्चैव ते नृप ॥ २ ॥ कच्चित्तेऽपि निरातङ्का वसन्ति विषये तव । कच्चिद्वर्त्तसि पौराणीं वृत्तिं राजर्षिसेविताम् ॥ ३ ॥ कच्चिन्न्याया-ननुच्छिद्य कोशस्तेऽभिप्रपूर्य्यते । अरिमध्यस्थमित्रेषु वर्त्तसे चानु-रूपतः ॥ ४ ॥ ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि । कच्चित्ते परितुष्यन्ति शीलेन भरतर्षभ ॥ ५ ॥ शत्रवोऽपि कुतः पौरा भृत्या वा स्वजनोऽपि वा । कच्चिद्यजसि राजेन्द्र श्रद्धावान् पितृ-देवताः ॥ ६ ॥ अतिथीनन्नपानेन कच्चिदर्चसि भारत । कच्चि-

श्रयपथे विप्राः स्वकर्मनिरतास्तव ॥ ७ ॥ क्षत्रिया वैश्यवर्गा वा शूद्रा वापि कुटुम्बिनः। कच्चित् स्त्रीबालवृद्धन्ते न शोचति न याचते ॥ ८ ॥ जामयः पूजिताः कच्चित् तव गेहे नरर्षभ। कच्चिद्राजर्षिवंशोऽयं त्वामासाद्य महीपतिम्। यथोचितं महाराज यशसा नावसीदति ॥ ९ ॥

वैशम्पायन उवाच। इत्येवं वादिनन्तं स न्यायवित् प्रत्यभाषत। कुशलप्रश्नसंयुक्तं कुशलो वाक्यकर्म्मणि ॥ १० ॥

युधिष्ठिर उवाच। कच्चित्ते वर्द्धते राजंस्तपो दमः शमश्च ते। अपि मे जननी चेयं शुश्रूषुर्विगतक्लमा ॥ ११ ॥ अथास्याः सफलो राजन् वनवासो भविष्यति। इयञ्च माता ज्येष्ठा मे शीतवाताध्वकर्षिता ॥ १२ ॥ घोरेण तपसा युक्ता देवी कच्चिन्न शोचति! हतान् पुत्रान्महावीर्य्यान् क्षत्रधर्म्मपरायणान् ॥१३॥ नापध्यायति वा कच्चिदस्मान् पापकृतः सदा। क्व चासौ विदुरो राजन् नेमं पश्यामहे वयम्। सञ्जयः कुशली चायं कच्चिन्नु तपसि स्थितः ॥१४॥

वैशम्पायन उवाच। इत्युक्तः प्रत्युवाचेदं धृतराष्ट्रो जनाधिपम्। कुशली विदुरः पुत्र तपो घोरं समाश्रितः ॥ १५ ॥ वायुभक्षो निराहारः कृशो धमनिसन्ततः। कदाचिद्दृश्यते विप्रैः शून्येऽस्मिन् कानने क्वचित् ॥ १६ ॥ इत्येवं ब्रुवतस्तस्य जटी वीटामुखः कृशः। दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः ॥ १७ ॥ दूरादालक्षितः क्षत्ता तत्राख्यातो महीपतेः। निवर्त्तमानः सहसा राजन् दृष्ट्वाश्रमं प्रति ॥ १८ ॥ तमन्वधावन्नृपतिरेक एव युधिष्ठिरः। प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं क्वचित् क्वचित् ॥ १९ ॥ भो भो विदुर राजाहं दयितस्ते युधिष्ठिरः। इति ब्रुवन्नरपतिस्तं यत्नादभ्यधावत ॥ २० ॥ ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः। विदुरो वृक्षमाश्रित्य कञ्चित्तत्र वनान्तरे ॥ २१ ॥ तं राजा क्षीणभूयिष्ठमाकृतिमात्रसूचितम्। अभिजज्ञे महाबुद्धिं महाबुद्धि-

युधिष्ठिरः ॥ २२ ॥ युधिष्ठिरोऽहमस्मीति वाक्यमुक्ताग्रतः स्थितः । विदुरस्य श्रवे राजा तञ्च प्रत्यभिपूजयत् ॥ २३ ॥ ततः सोऽनिमिषो भूत्वा राजानं तमुदैचत । संयोज्य विदुरस्तस्मिन् दृष्टिं दृष्ट्या समाहितः ॥ २४ ॥ विवेश विदुरो धीमान् गात्रैर्गात्राणि चैव ह । प्राणान् प्राणेषु च दधदिन्द्रियाणीन्द्रियेषु च ॥ २५ ॥ स योगबलमास्थाय विवेश नृपतेस्तनुम् । विदुरो धर्म्मराजस्य तेजसा प्रज्वलन्निव ॥ २६ ॥ विदुरस्य शरीरन्तु तथैव स्तब्धलोचनम् । वृक्षाश्रितं तदा राजा ददर्श गतचेतनम् । बलवन्तं तथात्मानं मेने बहुगुणन्तदा ॥ २७ ॥ धर्म्मराजो महातेजास्तच्च सस्मार पाण्डवः । पौराणमात्मनः सर्वं विद्यावान् स विशाम्पते ॥ २८ ॥ योगधर्म्मं महातेजा व्यासेन कथितं यथा ॥ २९ ॥ धर्म्मराजश्च तत्रैनं सञ्चिस्कारयिषुस्तदा । दग्धुकामोऽभवद्विद्वानथ वागभ्यभाषत ॥ ३० ॥ भो भो राजन्न दग्धव्यमेतद्विदुरसंज्ञकम् । कलेवरमिहैवन्ते धर्म्म एष सनातनः ॥ ३१ ॥ लोकाः सन्तानिका नाम भविष्यन्त्यस्य भारत । यतिधर्म्ममवाप्तोऽसौ नैष शोच्यः परन्तप ॥ ३२ ॥ इत्युक्तो धर्म्मराजः स विनिवृत्य ततः पुनः । राज्ञो वैचित्रवीर्य्यस्य तत् सर्वं प्रत्यवेदयत् ॥ ३३ ॥ ततः स राजा द्युतिमान् स च सर्वो जनस्तदा । भीमसेनादयश्चैव परं विस्मयमागताः ॥ ३४ ॥ तत्श्रुत्वा प्रीतिमान् राजा भूत्वा धर्म्मजमब्रवीत् । आपो मूलं फलञ्चैव ममेदं प्रतिगृह्यताम् । यदर्थो हि नरो राजंस्तदर्थोऽस्यातिथिः स्मृतः ॥ ३५ ॥ इत्युक्तः स तथेत्येवं प्राह धर्मात्मजो नृपम् । फलं मूलञ्च बुभुजे राज्ञा दत्तं सहानुजः ॥३६॥ ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः । तां रात्रिमवसन् सर्व्वे फलमूलजलाशनाः ॥ ३७ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
षड्विंशोऽध्यायः ॥ २६ ॥

वैशम्पायन उवाच। ततस्तु राजन्नेतेषामाश्रमे पुण्यकर्मणाम्। शिवानक्षत्रसम्पन्ना सा व्यतीताथ शर्वरी ॥ १ ॥ ततस्तत्र कथाश्चासंस्तेषां धर्मार्थलक्षणाः। विचित्रपदसञ्चारा नानाश्रुतिभिरन्विताः ॥ २ ॥ पाण्डवास्त्वभितो मातुर्धरण्यां सुषुपुस्तदा। उत्सृज्य सुमहार्हाणि शयनानि नराधिप ॥ ३ ॥ यदाहारोऽभवद्राजा धृतराष्ट्रो महामनाः। तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ॥ ४ ॥ व्यतीतायान्तु शर्वर्यां कृतपूर्वाह्णिकक्रियः। भ्रातृभिः सहितो राजा ददर्शाश्रममण्डलम् ॥ ५ ॥ सान्तःपुरपरीवारः सभृत्यः सपुरोहितः। यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया ॥ ६ ॥ ददर्श तत्र वेदीश्च सम्प्रज्वलितपावकाः। कृताभिषेकैर्मुनिभिर्हुताग्निभिरुपस्थिताः ॥ ७ ॥ वानेयपुष्पनिकरैराज्यधूमोद्गमैरपि। ब्राह्मेण वपुषा युक्ता युक्ता मुनिगणैश्च ताः ॥ ८ ॥ मृगयूथैरनुद्विग्नैस्तत्र तत्र समाश्रितैः। अशङ्कितैः पक्षिगणैः प्रगीतैरिव च प्रभो ॥ ९ ॥ केकाभिर्नीलकण्ठानां दात्यूहानाञ्च कूजितैः। कोकिलानां कुहुरवैः सुखैः श्रुतिमनोहरैः ॥ १० ॥ प्राधीतद्विजघोषैश्च क्वचित् क्वचिदलङ्कृतम्। फलमूलसमाहारैर्महद्भिश्चोपशोभितम् ॥ ११ ॥ ततः स राजा प्रददौ तापसार्थमुपाहृतान्। कलसान् काञ्चनान् राजंस्तथैवोडुम्बरानपि ॥ १२ ॥ अजिनानि प्रवेणीश्च स्रुक् स्रुवञ्च महीपतिः। कमण्डलूंश्च स्थालीश्च पिठराणि च भारत ॥ १३ ॥ भाजनानि च लौहानि पात्रीश्च विविधा नृप। यद्यदिच्छति यावच्च यच्चान्यदपि भाजनम् ॥ १४ ॥ एवं स राजा धर्मात्मा परीत्याश्रममण्डलम्। वसु विश्राण्य तत् सर्वं पुनरायान्महीपतिः ॥ १५ ॥ कृताह्णिकञ्च राजानं धृतराष्ट्रं महीपतिम्। ददर्शासीनमव्यग्रं गान्धारीसहितं तदा ॥ १६ ॥ मातरञ्चाविदूरस्थां शिष्यवत् प्रणतस्थिताम्। कुन्तीं ददर्श धर्मात्मा शिष्टाचारसम-

न्विताम् ॥ १७ ॥ स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः। निषीदेत्यभ्यनुज्ञातो वृष्यामुपविवेश ह ॥ १८ ॥ भीमसेनादयश्चैव पाण्डवा भरतर्षभ। अभिवाद्योपसंगृह्य निषेदुः पार्थिवाज्ञया ॥ १९ ॥ स तैः परिवृतो राजा शुशुभेऽतीव कौरवः। बिभ्रद्-ब्राह्मीं श्रियं दीप्तां देवैरिव वृहस्पतिः ॥ २० ॥ तथा तेषूपविष्टेषु समाजग्मुर्महर्षयः। शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः ॥ २१ ॥ व्यासश्च भगवान् विप्रो देवर्षिगणसेवितः। वृतः शिष्यैर्महातेजा दर्शयामास पाण्डवम् ॥ २२ ॥ ततः स राजा कौरव्यः कुन्ती-पुत्रश्च वीर्य्यवान्। भीमसेनादयश्चैव प्रत्युत्थायाभ्यवादयन् ॥ २३ ॥ समागतस्ततो व्यासः शतयूपादिभिर्वृतः। धृतराष्ट्रं महीपाल-मास्यतामित्यभाषत ॥ २४ ॥ वरन्तु विष्टरं कौश्यं कृष्णाजिन-कुशोत्तरम्। प्रतिपेदे तदा व्यासस्तदर्थमुपकल्पितम् ॥ २५ ॥ ते च सर्व्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः। द्वैपायनाभ्यनुज्ञाता निषेदु-र्विपुलौजसः ॥ २६ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि
सप्तविंशोऽध्यायः ॥ २७ ॥

---

वैशम्पायन उवाच। ततः समुपविष्टेषु पाण्डवेषु महात्मसु। व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् ॥ १ ॥ धृतराष्ट्र महाबाहो कच्चित्ते वर्त्तते तपः। कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप ॥ २ ॥ कच्चिद्धृदि न ते शोको राजन् पुत्रविनाशजः। कच्चिज्-ज्ञानानि सर्व्वाणि सुप्रसन्नानि तेऽनघ ॥ ३ ॥ कच्चिद्बुद्धिं दृढ़ां कृत्वा चरस्यारण्यकं विधिम्। कच्चिद्वधूश्च गान्धारी न शोकेनाभि-भूयते ॥ ४ ॥ महाप्राज्ञा बुद्धिमती देवी धर्म्मार्थदर्शिनी। आग-मापायतत्त्वज्ञा कच्चिदेषा न शोचति ॥ ५ ॥ कच्चित् कुन्ती च

राजंस्त्वां शुश्रूषत्यनहङ्कृता। या परित्यज्य स्वं पुत्रं गुरुशुश्रूषणे रता ॥ ६ ॥ कच्चिद्धर्म्मसुतो राजा महात्मा सुमहामनाः। भीमार्जुनयमाश्चैव कच्चिदेतेऽपि सान्त्विताः ॥ ७ ॥ कच्चिन्नन्दसि दृष्ट्वैतान् कच्चित्ते निर्म्मलं मनः। कच्चिच्च शुद्धभावोऽसि जातज्ञानो नराधिप ॥ ८ ॥ एतद्धि त्रितयं श्रेष्ठं सर्वभूतेषु भारत। निर्वैरता महाराज सत्यमक्रोध एव च ॥ ९ ॥ कच्चित्ते न च मोहोऽस्ति वनवासेन भारत। स्ववशे वन्यमन्नं वा उपवासोऽपि वा भवेत् ॥१०॥ विदितञ्चापि राजेन्द्र विदुरस्य महात्मनः। गमनं विधिनानेन धर्म्मस्य सुमहात्मनः ॥ ११ ॥ माण्डव्यशापाद्धि स वै धर्म्मो विदुरतां गतः। महाबुद्धिर्महायोगी महात्मा सुमहामनाः ॥ १२ ॥ वृहस्पतिर्वा देवेषु शुक्रो वाप्यसुरेषु च। न तथा बुद्धिसम्पन्नो यथा स पुरुषर्षभः ॥ १३ ॥ तपोबलव्ययं कृत्वा सुचिरात् सम्भृतन्तदा। माण्डव्येनर्षिणा धर्म्मो ह्यभिभूतः सनातनः ॥ १४ ॥ नियोगाद्ब्रह्मणः पूर्वं मया स्वेन बलेन च। वैचित्रवीर्य्यके क्षेत्रे जातः स सुमहामतिः ॥ १५॥ भ्राता तव महाराज देवदेवः सनातनः। धारणान्मनसा ध्यानात् यं धर्मं कवयो विदुः ॥ १६ ॥ सत्येन सम्वर्द्धयति यो दमेन शमेन च। अहिंसया च दानेन तप्यमानः सनातनः ॥ १७ ॥ तेन योगबलाज्जातः कुरुराजो युधिष्ठिरः। धर्म्म इत्येष नृपते प्राज्ञेनामितबुद्धिना ॥ १८ ॥ यथा वह्निर्यथा वायुर्यथापः पृथिवी यथा। यथाकाशं तथाधर्म्म इह चामुत्र स्थितः ॥ १९ ॥ सर्वगश्चैव राजेन्द्र सर्वं व्याप्य चराचरम्। दृश्यते देवदेवैः स सिद्धैर्निर्मुक्तकल्मषैः ॥ २० ॥ यो हि धर्म्मः स विदुरो विदुरो यः स पाण्डवः। स एष राजन् दृश्यस्ते पाण्डवः प्रेष्यवत् स्थितः ॥ २१ ॥ प्रविष्टः सुमहात्मानं भ्राता ते बुद्धिसत्तमः। दृष्ट्वा महात्मा कौन्तेयं महायोगबलान्वितः ॥ २२ ॥ त्वाञ्चापि श्रेयसा योक्ष्ये न चिराद्भरतर्षभ। संशयच्छेदनार्थाय प्राप्तं मां

विद्धि पुत्रक ॥ २३ ॥ न कृतं यैः पुरा कैश्चित् कर्म्म लोके महर्षिभिः । आश्चर्य्यभूतं तपसः फलं तद्दर्शयामि वः ॥ २४ ॥ किमिच्छसि महीपाल मत्तः प्राप्तमभीप्सितम् । द्रष्टुं प्रष्टुमथ श्रोतुं तत् कर्त्तास्मि तवानघ ॥ २५ ॥

इत्याश्रमवासिकपर्व्वणि आश्रमवासपर्व्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥ समाप्तञ्चेदमाश्रमवासपर्व्व ॥

---

## अथ पुत्रदर्शनपर्व्व ।

जनमेजय उवाच । वनवासं गते विप्र धृतराष्ट्रे महीपतौ । सभार्य्ये नृपशार्द्दूले वध्वा कुन्त्या समन्विते ॥ १ ॥ विदुरे चापि संसिद्धे धर्म्मराजं व्यपाश्रिते । वसत्सु पाण्डुपुत्रेषु सर्व्वेष्वाश्रममण्डले ॥ २ ॥ यत्तदाश्चर्य्यमिति वै करिष्यामीत्युवाच ह । व्यासः परमतेजस्वी महर्षिस्तद्वदस्व मे ॥ ३ ॥ वनवासे च कौरव्यः कियन्तं कालमच्युतः । युधिष्ठिरो नरपतिर्न्यवसत् सजनस्तदा ॥ ४ ॥ किमाहाराश्च ते तत्र ससैन्या न्यवसन् प्रभो । सान्तःपुरा महात्मान इति तद्ब्रूहि मेऽनघ ॥ ५ ॥

वैशम्पायन उवाच । तेऽनुज्ञातास्तदा राजन् कुरुराजेन पाण्डवाः । विविधान्यन्नपानानि विश्राम्यानुभवन्ति ते ॥ ६ ॥ मासमेकं विजह्रुस्ते ससैन्यान्तःपुरा वने । अथ तत्रागमद्व्यासो यथोक्तं ते मयानघ ॥ ७ ॥ तथा च तेषां सर्व्वेषां कथाभिर्नृपसन्निधौ । व्यासमन्वासतां राजन्नाजग्मुर्मुनयोऽपरे ॥ ८ ॥ नारदः पर्व्वतश्चैव देवलश्च महातपाः । विश्वावसुस्तुम्बुरुश्च चित्रसेनश्च भारत ॥ ९ ॥ तेषामपि यथान्यायं पूजाञ्चक्रे महातपाः । धृतराष्ट्राभ्यनुज्ञातः कुरुराजो युधिष्ठिरः ॥ १० ॥ निषेदुस्ते ततः

सर्वे पूजां प्राप्य युधिष्ठिरात्। आसनेष्वथ पुण्येषु वर्हिणेषु वरेषु च ॥ ११ ॥ तेषु तत्रोपविष्टेषु स तु राजा महामतिः। पाण्डुपुत्रैः परिवृतो निषसाद कुरूद्वह ॥ १२ ॥ गान्धारी चैव कुन्ती च द्रौपदी सात्त्वती तथा। स्त्रियश्चान्यास्तथान्याभिः सहोपविविशु-स्ततः ॥ १३ ॥ तेषां तत्र कथा दिव्या धर्मिष्ठाश्चाभवन्नृप। ऋषी-णाञ्च पुराणानां देवासुरविमिश्रिताः ॥ १४ ॥ ततः कथान्ते व्यासन्तं प्रज्ञाचक्षुषमीश्वरम्। प्रोवाच वदतां श्रेष्ठः पुनरेव स तद्वचः ॥ १५ ॥ प्रीयमाणो महातेजाः सर्ववेदविदां वरः। विदितं मम राजेन्द्र यत्ते हृदि विवक्षितम् ॥ १६ ॥ दह्यमानस्य शोकेन तव पुत्रकृतेन वै। गान्धार्य्याश्चैव यद्दुःखं हृदि तिष्ठति नित्यदा ॥ १७ ॥ कुन्त्याश्च यन्महाराज द्रौपद्याश्च हृदि स्थितम्। यच्च धारयते तीव्रं दुःखं पुत्रविनाशजम् ॥ १८ ॥ सुभद्रा कृष्णभगिनी तच्चापि विदितं मम। श्रुत्वा समागममिदं सर्वेषां वस्ततो नृप ॥ १९ ॥ संशयच्छेदनार्थाय प्राप्तः कौरवनन्दन। इमे च देव-गन्धर्वाः सर्वे चेमे महर्षयः ॥ २० ॥ पश्यन्तु तपसो वीर्य्यमद्य मे चिरसम्भृतम्। तदुच्यतां महाराज कं कामं प्रददामि ते ॥ २१ ॥ प्रवणोऽस्मि वरं दातुं पश्य मे तपसः फलम्। एवमुक्तः स राजेन्द्रो व्यासेनामितबुद्धिना ॥ २२ ॥ मुहूर्त्तमिव सञ्चिन्त्य वचनायोप-चक्रमे। धन्योऽस्म्यनुगृहीतश्च सफलं जीवितञ्च मे ॥ २३ ॥ यन्मे समागमोऽद्येह भवद्भिः सह साधुभिः। अद्य चाप्यवगच्छामि गतिमिष्टामिहात्मनः ॥ २४ ॥ ब्रह्मकल्पैर्भवद्भिर्यत् समेतोऽहं तपो-धनाः। दर्शनादेव भवतां पूतोऽहं नात्र संशयः ॥ २५ ॥ विद्यते न भयञ्चापि परलोकान्ममानघाः। किन्तु तस्य सुदुर्बुद्धेर्मन्दस्याप-नयैर्भृशम् ॥ २६ ॥ दूयते मे मनो नित्यं स्मरतः पुत्रगृद्धिनः। अपापाः पाण्डवा येन निकृताः पापबुद्धिना ॥ २७ ॥ घातिता पृथिवी येन सहया सनरद्विपा। राजानश्च महात्मानो नाना-

जनपदेश्वराः ॥ २८ ॥ आगम्य मम पुत्रार्थे सर्व्वे मृत्युवशङ्गताः । ये ते पितॄंश्च दारांश्च प्राणांश्च मनसः प्रियान् ॥ २९ ॥ परित्यज्य गताः शूराः प्रेतराजनिवेशनम् । का नु तेषां गतिर्ब्रह्मन् मित्रार्थे ये हता मृधे ॥ ३० ॥ तथैव पुत्रपौत्राणां मम ये निहता युधि । दूयते मे मनोऽभीक्ष्णं घातयित्वा महाबलम् ॥ ३१ ॥ भीष्मं शान्तनवं वृद्धं द्रोणञ्च द्विजसत्तमम् । मम पुत्रेण मूढ़ेन पापेन सुहृद्द्विषा ॥ ३२ ॥ क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता । एतत् सर्व्वमनुस्मृत्य दह्यमानो दिवानिशम् ॥ ३३ ॥ न शान्तिमधिगच्छामि दुःखशोकसमाहतः । इति मे चिन्तयानस्य पितः शान्तिर्न विद्यते ॥ ३४ ॥

वैशम्पायन उवाच । तच्छ्रुत्वा विविधन्तस्य राजर्षेः परिदेवितम् । पुनर्नवीकृतः शोको गान्धार्य्या जनमेजय ॥ ३५ ॥ कुन्त्या द्रुपदपुत्र्याश्च सुभद्रायास्तथैव च । तासाञ्च नरनारीणां वधूनां कौरवस्य ह ॥ ३६ ॥ पुत्रशोकसमाविष्टा गान्धारी त्विदमब्रवीत् । श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता ॥ ३७ ॥ षोड़शेमानि वर्षाणि गतानि मुनिपुङ्गव । अस्य राज्ञो हतान् पुत्रान् शोचतो न शमो विभो ॥ ३८ ॥ पुत्रशोकसमाविष्टो निश्वसन् ह्येष भूमिपः । न शेते वसतीः सर्व्वा धृतराष्ट्रो महामुने ॥३९॥ लोकानन्यान् समर्थोऽसि स्रष्टुं सर्व्वं तपोबलात् । किमु लोकान्तरगतान् राज्ञो दर्शयितुं सुतान् ॥ ४० ॥ इयञ्च द्रौपदी कृष्णा हतज्ञाति सुता भृशम् । शोचत्यतीव सर्व्वासां स्नुषाणां दयिता स्नुषा ॥ ४१ ॥ तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी । सौभद्रवधसन्तप्ता भृशं शोचति भाविनी ॥ ४२ ॥ इयञ्च भूरिश्रवसो भार्य्या परमसम्मता । भर्त्तृव्यसनशोकार्त्ता भृशं शोचति भाविनी ॥ ४३ ॥ यस्यास्तु श्वशुरो धीमान् वाह्लिकः स कुरूद्वहः । निहतः सोमदत्तश्च पिता सह महारणे ॥ ४४ ॥ श्रीम-

सोऽस्य महाबुद्धेः संग्रामेष्वपलायिनः । पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे ॥ ४५ ॥ तस्य भार्य्याशतमिदं दुःखशोकसमाहतम् । पुनः पुनर्वर्द्धयानं शोकं राज्ञो ममैव च । तेनारम्भेण महता मामुपास्ते महामुने ॥ ४६ ॥ ये च शूरा महात्मानः श्वशुरा मे महारथाः । सोमदत्तप्रभृतयः का नु तेषां गतिः प्रभो ॥ ४७ ॥ तव प्रसादाद्भगवन् विशोकोऽयं महीपतिः । यथा स्याद्भविता चाहं कुन्ती चेयं वधूस्तव ॥ ४८ ॥ इत्युक्तवत्यां गान्धार्य्यां कुन्ती व्रतकृशानना । प्रच्छन्नजातं पुत्रन्तु सस्मारादित्यसन्निभम् ॥ ४९ ॥ तामृषिर्वरदो व्यासो दूरश्रवणदर्शनः । अपश्यद्दुःखितां देवीं मातरं सव्यसाचिनः ॥ ५० ॥ तमुवाच ततो व्यासो यत्ते कार्य्यं विवक्षितम् । तद्ब्रूहि त्वं महाभागे यत्ते मनसि वर्त्तते ॥ ५१ ॥ श्वशुराय ततः कुन्ती प्रणम्य शिरसा तदा । उवाच वाक्यं सव्रीड़ा विवृण्वाना पुरातनम् ॥ ५२ ॥

इत्याश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि

ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

कुन्त्युवाच । भगवन् श्वशुरो मेऽसि दैवतस्यापि दैवतम् । स मे देवातिदेवस्त्वं शृणु सत्यां गिरं मम ॥ १ ॥ तपस्वी कोपनो विप्रो दुर्वासा नाम मे पितुः । भिक्षामुपागतो भोक्तुं तमहं पर्य्यतोषयम् ॥ २ ॥ शौचेन त्यागयुक्ताभिः शुद्धेन मनसा तथा । कोपस्थानेष्वपि महत्स्वकुप्यं न कदाचन ॥ ३ ॥ सुप्रीतो वरदो मेऽभूत् कृतकृत्यो महामुनिः । अवश्यन्ते ग्रहीतव्यमिति मां सोऽब्रवीद्वचः ॥ ४ ॥ ततः शापभयाद्विप्रमवोचं पुनरेव तम् । एवमस्त्विति च प्राह पुनरेव स मे द्विजः ॥ ५ ॥ धर्म्मस्य जननी भद्रे

र्भवित्री त्वं शुभानने। वशे स्थास्यन्ति ते देवा यांस्त्वमावाहयिष्यसि ॥ ६ ॥ इत्युक्त्वान्तर्हितो विप्रस्ततोऽहं विस्मिताभवम्। न च सर्वास्ववस्थासु स्मृतिर्मे विप्रणश्यति ॥ ७ ॥ अथ हर्म्यतलस्थाहं रविमुद्यन्तमीक्षती। संस्मृत्य तदृषेर्वाक्यं स्पृहयन्ती दिवाकरम् ॥ ८ ॥ स्थिताहं बालभावेन तत्र दोषमबुध्यती। अथ देवः सहस्रांशुर्मत्समीपगतोऽभवत् ॥ ९ ॥ द्विधा कृत्वात्मनो देहं भूमौ च गगनेऽपि च। तताप लोकानेकेन द्वितीयेनागमत् स माम् ॥१०॥ स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व ह। गम्यतामिति तञ्चाहं प्रणम्य शिरसावदम् ॥ ११ ॥ स मामुवाच तिग्मांशुर्वृथाह्वानं न मे क्षमम्। धक्ष्यामि त्वाञ्च विप्रञ्च येन दत्तो वरस्तव ॥ १२ ॥ तमहं रक्षती विप्रं शापादनपकारिणम्। पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रुवम् ॥ १३ ॥ ततो मां तेजसाविश्य मोहयित्वा च भानुमान्। उवाच भविता पुत्रस्तवेत्यभ्यगमद्दिवम् ॥ १४ ॥ ततोऽहमन्तर्भवने पितुर्वृत्तान्तरक्षिणी। गूढोत्पन्नं सुतं बालं जले कर्णमवासृजम् ॥ १५ ॥ नूनं तस्यैव देवस्य प्रसादात् पुनरेव तु। कन्याहमभवं विप्र यथा प्राह स मामृषिः ॥ १६ ॥ स मया मूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः। तन्मां दहति विप्रर्षे यथा सुविदितं तव ॥ १७ ॥ यदि पापमपापं वा तदेतद्विवृतं मया। तं द्रष्टुमिच्छामि भगवन् व्यपनेतुं त्वमर्हसि ॥ १८ ॥ यच्चास्य राज्ञो विदितं हृदिस्थं भवतोऽनघ। तच्चायं लभतां काममद्यैव मुनिसत्तम ॥१९॥ इत्युक्तः प्रत्युवाचेदं व्यासो वेदविदाम्वरः। साधु सर्वमिदं भाव्यमेवमेतद्यथात्थ माम् ॥ २० ॥ अपराधश्च ते नास्ति कन्याभावं गता ह्यसि। देवाश्चैश्वर्य्यवन्तो वै शरीराण्याविशन्ति वै ॥ २१ ॥ सन्ति देवनिकायाश्च सङ्कल्पाज्जनयन्ति वै। वाचा दृष्ट्या तथा स्पर्शात् संहर्षेणेति पञ्चधा ॥ २२ ॥ मनुष्यधर्मो वर्त्तन्त्यास्तव मोहो न विद्यते। इति कुन्ति विजानीहि व्येतु ते मानसो ज्वरः ॥ २३ ॥

सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि। सर्वं बलवतां धर्म्मः सर्वं बलवतां स्वकम्॥ २४ ॥

इत्याश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
त्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

व्यास उवाच। भद्रे द्रच्यसि गान्धारि पुत्रान् भ्रातॄन् सखींस्तथा। बन्धूंश्च पितृभिः सार्द्धं निशि सुप्तोत्थितानिव ॥ १ ॥ कर्णं द्रच्यति कुन्ती च सौभद्रञ्चापि यादवी। द्रौपदी पञ्च पुत्रांश्च पितॄन् भ्रातॄंस्तथैव च ॥ २ ॥ पूर्वमेवैष हृदये व्यवसायोऽभवन्मम। यदास्मि चोदितो राज्ञा भवत्या पृथयैव च ॥ ३ ॥ न ते शोच्या महात्मानः सर्व एव नरर्षभाः। चत्रधर्म्मपराः सन्तस्तथा हि निधनं गताः ॥ ४ ॥ भवितव्यमवश्यन्तत् सुरकार्य्यमनिन्दिते। अवतेरुस्ततः सर्वे देवभागा महीतलम् ॥ ५ ॥ गन्धर्वाप्सरसश्चैव पिशाचा गुह्यराचसाः। तथा पुण्यजनाश्चैव सिद्धा देवर्षयोऽपि च ॥ ६ ॥ देवाश्च दानवाश्चैव तथा देवर्षयोऽमलाः। तत्र ते निधनं प्राप्ताः कुरुचेत्रे रणाजिरे ॥ ७॥ गन्धर्वराजो यो धीमान् धृतराष्ट्र इति श्रुतः। स एव मानुषे लोके धृतराष्ट्रः पतिस्तव ॥ ८ ॥ पाण्डुं मरुद्गणाद्विद्धि विशिष्टतममच्युतः। धर्म्मस्यांशोऽभवत् चत्ता राजा चैव युधिष्ठिरः ॥ ९ ॥ कलिं दुर्य्योधनं विद्धि शकुनिं द्वापरं तथा। दुःशासनादीन् विद्धि त्वं राचसान् शुभदर्शने ॥ १० ॥ मरुद्गणाद्भीमसेनं बलवन्तमरिन्दमम्। विद्धि त्वन्तु नरमृषिमिमं पार्थं धनञ्जयम् ॥ ११ ॥ नारायणं हृषीकेशमश्विनौ यमजौ तथा। द्विधा कृत्वात्मनो देहमादित्यं तपतां वरम् ॥ १२ ॥ लोकांश्च तापयानं वै विद्धि कर्णञ्च शोभने। यः स वै पार्थ उद्भूतः संहर्षजननस्तथा ॥ १३ ॥ यश्च पाण्डव-

द्रावादी हतः षड्भिर्म्महारथैः । स सोम इव सौभद्रो योगादेवा-
भवद्विधा ॥ १४ ॥ द्रौपद्या सह संभूतं धृष्टद्युम्नञ्च पावकात् ।
अग्नेर्भागं शुभं विद्धि राक्षसन्तु शिखण्डिनम् ॥ १५ ॥ द्रोणं
बृहस्पतेर्भागं विद्धि द्रौणिञ्च रुद्रजम् । भीष्मञ्च विद्धि गाङ्गेयं
वसुं मानुषतां गतम् ॥ १६ ॥ एवमेते महाप्राज्ञ देवा मानुष्य-
मेत्य हि । ततः पुनर्गताः स्वर्गं कृते कर्म्मणि शोभने ॥ १७ ॥
यच्च वै हृदि सर्व्वेषां दुःखमेतच्चिरं स्थितम् । तदद्य व्यपनेष्यामि
परलोककृताद्भयात् ॥ १८ ॥ सर्व्वे भवन्तो गच्छन्तु नदीं भागीरथीं
प्रति । तत्र द्रक्ष्यथ तान् सर्व्वान् ये हतास्मिन् रणाजिरे ॥१९ ॥

वैशम्पायन उवाच । इति व्यासस्य वचनं श्रुत्वा सर्व्वो जन-
स्तदा । महता सिंहनादेन गङ्गामभिमुखो ययौ ॥ २० ॥ धृत-
राष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः । सहितो मुनिशार्दूलै-
र्गन्धर्व्वैश्च समागतैः ॥ २१ ॥ ततो गङ्गां समासाद्य क्रमेण स जना-
र्णवः । निवासमकरोत् सर्व्वो यथाप्रीति यथासुखम् ॥ २२ ॥
राजा च पाण्डवैः सार्द्धमिष्टे देशे सहानुगः । निवासमकरोद्धीमान्
सस्त्रीवृद्धपुरःसरः ॥ २३॥ जगाम तदहश्चापि तेषां वर्षशतं यथा ।
निशां प्रतीक्षमाणानां दिदृक्षूणां मृतान्नृपान् ॥ २४ ॥ अथ पुण्यं
गिरिवरमस्तमभ्यगमद्रविः । ततः कृताभिषेकास्ते नैशं कर्म्म
समाचरन् ॥ २५ ॥

इत्याश्रमवासिकपर्व्वणि पुत्रदर्शनपर्व्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

वैशम्पायन उवाच । ततो निशायां प्राप्तायां कृतसायाह्निक-
क्रियाः । व्यासमभ्यगमन् सर्व्वे ये तत्रासन् समागताः ॥ १ ॥ धृत-
राष्ट्रस्तु धर्म्मात्मा पाण्डवैः सहितस्तदा । शुचिरेकमनाः सार्द्ध-

ऋषिभिस्तैरुपाविशत ॥ २ ॥ गान्धार्य्या सह नार्य्यस्तु रहिताः समुपाविशन्। पौरजानपदाश्चापि जनः सर्वो यथावयः ॥ ३ ॥ ततो व्यासो महातेजाः पुण्यं भागीरथीजलम्। अवगाह्यजुहावाथ सर्वान् लोकान् महामुनिः ॥ ४ ॥ पाण्डवानाञ्च ये योधाः कौरवाणाञ्च सर्वशः। राजानश्च महाभागा नानादेशनिवासिनः ॥ ५ ॥ ततः स तुमुलः शब्दो जलान्ते जनमेजय। प्रादुरासीद्यथा पूर्वं कुरुपाण्डवसेनयोः ॥ ६ ॥ ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः। ससैन्याः सलिलात्तस्मात् समुत्तस्थुः सहस्रशः ॥७॥ विराटद्रुपदौ चैव सहपुत्रौ ससैनिकौ। द्रौपदेयाश्च सौभद्रो राक्षसश्च घटोत्कचः ॥ ८ ॥ कर्णदुर्य्योधनौ चैव शकुनिश्च महारथः। दुःशासनादयश्चैव धार्त्तराष्ट्रा महाबलाः ॥ ९ ॥ जारासन्धिर्भगदत्तो जलसन्धश्च वीर्य्यवान्। भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः ॥ १० ॥ लक्ष्मणो राजपुत्रश्च धृष्टद्युम्नस्य चात्मजः। शिखण्डिपुत्राः सर्वे च धृष्टकेतुश्च सानुजः ॥ ११ ॥ अचलो वृषकश्चैव राक्षसश्चाप्यलायुधः। वाह्लिकः सोमदत्तश्च चेकितानश्च पार्थिवः ॥ १२ ॥ एते चान्ये च बहवो बहुत्वाद्ये न कीर्त्तिताः। सर्वे भासुरदेहास्ते समुत्तस्थुर्जलात्ततः ॥ १३ ॥ यस्य वीरस्य यो वेशो यो ध्वजो यच्च वाहनम्। तेन तेन व्यदृश्यन्त समुपेता नराधिपाः ॥ १४ ॥ दिव्याम्बरधराः सर्वे सर्वे भ्राजिष्णुकुण्डलाः। निर्वैरा निरहङ्कारा विगतक्रोधमत्सराः ॥ १५ ॥ गन्धर्वैरुपगीयन्त स्तूयमानाश्च वन्दिभिः। दिव्यमाल्याम्बरधरा वृताश्चाप्सरसाङ्गणैः ॥ १६ ॥ धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप। मुनिः सत्यवतीपुत्रः प्रीतः प्रादात्तपोबलात् ॥ १७ ॥ दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी। ददर्श पुत्रांस्तान् सर्वान् ये चान्येऽपि मृधे हताः ॥ १८॥ तदद्भुतमचिन्त्यञ्च सुमहल्लोमहर्षणम्। विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः ॥ १९ ॥ तदुत्सवमहोदग्रं हृष्ट-

नारीनराकुलम्। आश्चर्य्यभूतं ददृशे चित्रं पटगतं यथा॥ २०॥
धृतराष्ट्रस्तु तान् सर्वान् पश्यन् दिव्येन चक्षुषा। मुमुदे भरतश्रेष्ठ
प्रसादात्तस्य वै मुनेः॥ २१॥

इत्याश्रमवासिकपर्वणि पुत्त्रदर्शनपर्वणि
द्वात्रिंशोऽध्यायः॥ ३२॥

---

वैशम्पायन उवाच। ततस्ते पुरुषश्रेष्ठाः समाजग्मुः पर-
स्परम्। विगतक्रोधमात्सर्य्याः सर्वे विगतकल्मषाः॥ १॥ विधिं
परममास्थाय ब्रह्मर्षिविहितं शुभम्। संहृष्टमनसः सर्वे देवलोक
इवामराः॥ २॥ पुत्त्रः पित्रा च मात्रा च भार्य्याश्च पतिभिः सह।
भ्रात्रा भ्राता सखा चैव सख्या राजन् समागताः॥३॥ पाण्डवास्तु
महेष्वासं कर्णं सौभद्रमेव च। संप्रहर्षात् समाजग्मुर्द्रौपदेयांश्च
सर्वशः॥ ४॥ ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः। समेत्य
पृथिवीपाल सौहृद्ये च स्थिताभवन्॥ ५॥ परस्परं समागम्य
योधास्ते भरतर्षभ। मुनेः प्रसादात्ते ह्येवं क्षत्रिया नष्टमन्यवः
॥ ६॥ असौहृदं परित्यज्य सौहृद्ये पर्य्यवस्थिताः। एवं समा-
गताः सर्वे कुरुभिर्बान्धवैः सह॥ ७॥ पुत्त्रैश्च पुरुषव्याघ्राः कुर-
वोऽन्ये च पार्थिवाः। तां रात्रिमखिलामेवं विहृत्य प्रीतमानसाः
॥ ८॥ मेनिरे परितोषेण नृपाः स्वर्गसदो यथा। नात्र शोको
भयं त्रासो नारतिर्नायशोऽभवत्॥ ९॥ परस्परं समागम्य
योषानां भरतर्षभ। समागतास्ताः पितृभिर्भ्रातृभिः पतिभिः
सुतैः॥ १०॥ मुदं परमिकां प्राप्य नार्य्यो दुःखमथात्यजन्। एकां
रात्रिं विहृत्यैव ते वीरास्ताश्च योषितः॥ ११॥ आमन्त्र्यान्योऽ-
न्यमाश्लिष्य ततो जग्मुर्यथागतम्। ततो विसर्ज्जयामास लोकां-
स्तान्मुनिपुङ्गवः॥ १२॥ क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन्।

अवगाह्य महात्मानः पुण्यां भागीरथीं नदीम् ॥ १३ ॥ सरथाः सध्वजाश्चैव स्वानि वेश्मानि भेजिरे। देवलोकं ययुः केचित् केचिद्ब्रह्मसदस्तथा ॥ १४ ॥ केचिच्च वारुणं लोकं केचित् कौवेरमाप्नुवन्। ततो वैवस्वतं लोकं केचिच्चैवाप्नुवन् नृपाः ॥ १५ ॥ राक्षसानां पिशाचानां केचिच्चाप्युत्तरान् कुरून्। विचित्रगतयश्चान्ये यानवाप्यामरैः सह ॥१६॥ आजग्मुस्ते महात्मानः सवाहाः सपदानुगाः। गतेषु तेषु सर्व्वेषु सलिलस्थो महामुनिः ॥ १७ ॥ धर्म्मशीलो महातेजाः कुरूणां हितकृत्तथा। ततः प्रोवाच ताः सर्व्वाः क्षत्रिया निहतेश्वराः ॥ १८ ॥ या याः पतिकृताँल्लोकानिच्छन्ति परमस्त्रियः। ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिताः ॥ १९ ॥ ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः। श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् ॥ २० ॥ विमुक्ता मानुषैर्द्देहैस्ततस्ता भर्त्तृभिः सह। समाजग्मुस्तदा साध्व्यः सर्व्वा एव विशाम्पते ॥ २१ ॥ एवं क्रमेण सर्व्वास्ताः शीलवत्यः पतिव्रताः। प्रविश्य क्षत्रिया मुक्ता जग्मुर्भर्त्तृसलोकताम् ॥ २२ ॥ दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः। दिव्यमाल्याम्बरधरा यथाषां पतयस्तथा ॥ २३ ॥ ताः शीलगुणसम्पन्ना विमानस्था गतक्लमाः। सर्व्वाः सर्व्वगुणोपेताः स्वस्थानं प्रतिपेदिरे ॥ २४ ॥ यस्य यस्य तु यः कामस्तस्मिन् काले बभूव ह। तं तं विसृष्टवान् व्यासो वरदो धर्म्मवत्सलः ॥ २५ ॥ तत् श्रुत्वा नरदेवानां पुनरागमनं नराः। जहृषुर्मुदिताश्चासन्नानादेशगता अपि ॥ २६ ॥ प्रियैः समागमन्तेषां यः सम्यक् शृणुयान्नरः। प्रियाणि लभते नित्यमिह च प्रेत्य चैव ह ॥ २७ ॥ इष्टबान्धवसंयोगमनायासमनामयम्। यश्चैतत् श्रावयेद्विद्वान् विदुषो धर्म्मवित्तमः ॥ २८ ॥ स यशः प्राप्नुयाल्लोके परत्र च शुभां गतिम्। स्वाध्याययुक्ता मनुजास्तपोयुक्ताश्च भारत ॥ २९ ॥ साध्वाचारा दमोपेता दाननिर्धूत-

कल्मषाः । ऋजवः शुचयः शान्ता हिंसानृतविवर्ज्जिताः ॥ ३० ॥ आस्तिकाः श्रद्दधानाश्च धृतिमन्तश्च मानवाः । श्रुत्वाश्चर्य्यमिदं पर्व ह्यवाप्स्यन्ति पराङ्गतिम् ॥ ३१ ॥

इत्याश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

सौतिरुवाच । एतत् श्रुत्वा नृपो विद्वान् हृष्टोऽभूज्जनमेजयः । पितामहानां सर्व्वेषां गमनागमनं तदा ॥ १ ॥ अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति । कथन्नु त्यक्तदेहानां पुनस्तद्रूपदर्शनम् ॥ २ ॥ इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान् । प्रोवाच वदतां श्रेष्ठस्तं नृपं जनमेजयम् ॥ ३ ॥

वैशम्पायन उवाच । अविप्रणाशः सर्व्वेषां कर्म्मणामिति निश्चयः । कर्म्मजानि शरीराणि तथैवाकृतयो नृप ॥ ४ ॥ महाभूतानि नित्यानि भूताधिपतिसंश्रयात् । तेषाञ्च नित्यसम्वासो न विनाशे वियुज्यताम् ॥ ५ ॥ अनायासकृतं कर्म्म सत्यश्रेष्ठः फलागमः । आत्मा चैभिः समायुक्तः सुखदुःखमुपाश्नुते ॥ ६ ॥ अविनाश्यस्तथा युक्तः क्षेत्रज्ञ इति निश्चयः । भूतानामात्मको भावो यथासौ न वियुज्यते ॥ ७ ॥ यावन्न क्षीयते कर्म्म तावत्तस्य स्वरूपता । क्षीणकर्म्मा नरो लोके रूपान्यत्वं नियच्छति ॥ ८ ॥ नानाभावास्तथैकत्वं शरीरं प्राप्य संहताः । भवन्ति ते तथा नित्याः पृथग्भावं विजानताम् ॥ ९ ॥ अश्वमेधे श्रुतिश्चेयमश्व-संज्ञपनं प्रति । लोकान्तरगता नित्यं प्राणा नित्यं शरीरिणाम् ॥ १० ॥ अहं हितं वदाम्येतत् प्रियञ्चेत्तव पार्थिव । देवयाना हि पन्थानः श्रुतास्ते यज्ञसंस्तरे ॥ ११ ॥ आहूतो यत्र यज्ञस्ते तत्र देवा हितास्तव । यदा समन्विता देवाः पशूनां गमनेश्वराः

॥ १२ ॥ गतिमन्तश्च तेनेष्टा नान्ये नित्या भवन्त्युत । नित्येऽस्मिन् पञ्चके वर्गे नित्ये चात्मनि पूरुषः ॥ १३ ॥ अस्य नानासमायोगं यः पश्यति वृथामतिः । वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः ॥ १४ ॥ वियोगे दोषदर्शी यः संयोगं स विवर्जयेत् । असङ्गे सङ्गमो नास्ति दुःखं भुवि वियोगजम् ॥ १५ ॥ परापरज्ञस्त्वपरो नाभिमानादुदीरितः । अपरज्ञः परां बुद्धिं ज्ञात्वा मोहाद्विमुच्यते ॥ १६ ॥ अदर्शनादपि ततः पुनश्चादर्शनं गतः । नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता ॥ १७ ॥ येन येन शरीरेण करोत्ययमनीश्वरः । तेन तेन शरीरेण तदवश्यमुपाश्नुते ॥ १८ ॥ मानसं मनसाप्नोति शारीरञ्च शरीरवान् ॥ १९ ॥

इत्याश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

वैशम्पायन उवाच । अदृष्ट्वा तु नृपः पुत्रान् दर्शनं प्रतिलब्धवान् । ऋषेः प्रसादात् पुत्राणां स्वरूपाणां कुरूद्वह ॥ १ ॥ स राजा राजधर्म्मांश्च ब्रह्मोपनिषदन्तथा । अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च ॥ २ ॥ विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात् । धृतराष्ट्रः समासाद्य व्यासञ्चैव तपस्विनम् ॥ ३ ॥

जनमेजय उवाच । ममापि वरदो व्यासो दर्शयेत् पितरं यदि । तद्रूपवेशवयसं श्रद्दध्यां सर्वमेव ते ॥ ४ ॥ प्रियं मे स्यात् कृतार्थश्च स्यामहं कृतनिश्चयः । प्रसादादृषिमुख्यस्य मम कामः समृध्यताम् ॥ ५ ॥

सौतिरुवाच । इत्युक्तवचने तस्मिन् नृपे व्यासः प्रतापवान् । प्रसादमकरोद्धीमानानयच्च परिक्षितम् ॥ ६ ॥ ततस्तद्रूपवयसमागतं नृपतिं दिवः । श्रीमन्तं पितरं राजा ददर्श जनमेजयः

॥ ७ ॥ शमीकञ्च महात्मानं पुत्रन्तं चास्य शृङ्गिणम् । अमात्या ये बभूवुश्च राज्ञस्तांश्च ददर्श ह ॥ ८ ॥ ततः सोऽवभृथे राजा मुदितो जनमेजयः । पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ॥ ९ ॥ स्नात्वा स नृपतिर्विप्रमास्तीकमिदमब्रवीत् । यायावरकुलोत्पन्नं जरत्कारुसुतं तदा ॥ १० ॥ आस्तीक विविधाश्चर्य्यो यज्ञोऽयमिति मे मतिः । यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः ॥ ११ ॥

आस्तीक उवाच । ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः । यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ ॥ १२ ॥ श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन । सर्पाश्च भस्मसान्नीता गतश्च पदवीं पितुः ॥ १३ ॥ कथञ्चित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव । ऋषयः पूजिताः सर्वे गतिर्दृष्टा महात्मनः ॥ १४ ॥ प्राप्तः सु विपुलो धर्म्मः श्रुत्वा पापविनाशनम् । विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात् ॥ १५ ॥ ये च पक्षधरा धर्मे सद्वृत्तरुचयश्च ये । यान् दृष्ट्वा हीयते पापं तेभ्यः कार्य्या नमस्क्रिया ॥ १६ ॥

सौतिरुवाच । एतत् श्रुत्वा द्विजश्रेष्ठात् स राजा जनमेजयः । पूजयामास तमृषिमनुमान्य पुनः पुनः ॥ १७ ॥ पप्रच्छ तमृषिञ्चापि वैशम्पायनमच्युतम् । कथावशेषं धर्म्मज्ञो वनवासस्य सत्तम ॥ १८ ॥

इत्याश्रमवासिकपर्व्वणि पुत्रदर्शनपर्व्वणि
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

जनमेजय उवाच । दृष्ट्वा पुत्रांस्तथा पौत्रान् सानुबन्धान् जनाधिपः । धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः ॥ १ ॥

वैशम्पायन उवाच । तद्दृष्ट्वा महदाश्चर्य्यं पुत्राणां दर्शनं नृपः ।

वीतशोकः स राजर्षिः पुनराश्रममागमत् ॥ २ ॥ इतरस्तु जनः सर्व्वस्ते चैव परमर्षयः । प्रतिजग्मुर्यथाकामं धृतराष्ट्राभ्यनुज्ञया ॥ ३ ॥ पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः । पुनर्जग्मुर्महात्मानं सदारास्तं महीपतिम् ॥ ४ ॥ तमाश्रमपदं धीमान् ब्रह्मर्षिर्लोकपूजितः । मुनिः सत्यवतीपुत्रो धृतराष्ट्रमभाषत ॥ ५ ॥ धृतराष्ट्र महाबाहो शृणु कौरवनन्दन । श्रुतास्ते ज्ञानवृद्धानामृषीणां पुण्यकर्म्मणाम् ॥ ६ ॥ ऋद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनाम् । धर्म्मज्ञानां पुराणानां वदतां विविधाः कथाः ॥ ७ ॥ मा स्म शोके मनः कार्षीर्द्दिष्टे न व्यथते बुधः । श्रुतं देवरहस्यन्ते नारदाद्देवदर्शनात् ॥ ८ ॥ गतास्ते क्षत्रधर्म्मेण शस्त्रपूतां गतिं शुभाम् । यथा दृष्टास्त्वया पुत्रास्तथा कामविहारिणः ॥ ९ ॥ युधिष्ठिरस्त्वयं धीमान् भवन्तमनुरुध्यते । सहितो भ्रातृभिः सर्व्वैः सदारः ससुहृज्जनः ॥ १० ॥ विसर्ज्जयैनं यात्वेष स्वराज्यमनुशासताम् । मासः समधिकस्तेषामतीतो वसतां वने ॥ ११ ॥ एतद्धि नित्यं यत्नेन पदं रक्ष्यं नराधिप । बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह ॥ १२ ॥ इत्युक्तः कौरवो राजा व्यासेनातुलतेजसा । युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ॥ १३ ॥ अजातशत्रो भद्रन्ते शृणु मे भ्रातृभिः सह । त्वत्प्रसादान्महीपाल शोको नास्मान् प्रबाधते ॥ १४ ॥ रमे चाहं त्वया पुत्र पुरेव गजसाह्वये । नाथेनानुगतो विद्वान् प्रियेषु परिवर्त्तिना ॥ १५ ॥ प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे परमा त्वयि । न मे मन्युर्महाबाहो गम्यतां पुत्र मा चिरम् ॥ १६ ॥ भवन्तञ्चेह संप्रेक्ष्य तपो मे परिहीयते । तपोयुक्तं शरीरञ्च त्वां दृष्ट्वा धारितं मनः ॥ १७ ॥ मातरौ ते तथैवेमे शीर्णपर्णकृताशने । मम तुल्यव्रते पुत्र न चिरं वर्त्तयिष्यतः ॥ १८ ॥ दुर्य्योधनप्रभृतयो दृष्टा लोकान्तरं गताः । व्यासस्य तपसो वीर्य्याद्भवतश्च समागमात् ॥ १९ ॥ प्रयोजनन्तु निर्वृत्तं

जीवितस्य ममानघ। उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि
॥ २० ॥ त्वय्यद्य पिण्डः कीर्त्तिश्च कुलञ्चेदं प्रतिष्ठितम्। श्वो वाद्य
वा महाबाहो गम्यतां पुत्र मा चिरम् ॥२१॥ राजनीतिः सुबहुशः
श्रुता ते भरतर्षभ। सन्देष्टव्यं न पश्यामि कृतं मे भवता प्रभो॥२२॥

वैशम्पायन उवाच। इत्युक्तवचनन्तन्तु नृपो राजानमब्रवीत्।
न मामर्हसि धर्म्मज्ञ परित्यक्तुमनागसम् ॥ २३ ॥ कामं गच्छन्तु
मे सर्वे भ्रातरोऽनुचरास्तथा। भवन्तमहमन्विष्ये मातरौ च यत-
व्रतः ॥ २४ ॥ तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व च। त्वय्य-
धीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ॥ २५ ॥ गम्यतां पुत्र पर्य्याप्त-
मेतावत् पूजिता वयम्। राजा यदाह तत् कार्य्यं त्वया पुत्र
पितुर्वचः ॥ २६ ॥

वैशम्पायन उवाच। इत्युक्तः स तु गान्धार्य्या कुन्तीमिदमभा-
षत। स्नेहवाष्पाकुले नेत्रे प्रमृज्य रुदतीं वचः ॥ २७ ॥ विस-
र्ज्जयति मां राजा गान्धारी च यशस्विनी। भवत्यां बद्धचित्तस्तु
कथं यास्यामि दुःखितः ॥ २८ ॥ न चोत्सहे तपोविघ्नं कर्त्तुं ते
धर्म्मचारिणि। तपसो हि परं नास्ति तपसा विन्दते महत् ॥२९॥
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा। तपस्येवानुरक्तं
मे मनः सर्वात्मना तथा ॥ ३० ॥ शून्येयञ्च मही कृत्स्ना न मे
प्रीतिकरी शुभे। बान्धवा नः परिक्षीणा बलं नो न यथा पुरा
॥ ३१ ॥ पाञ्चालाः सुभृशं क्षीणाः कथामात्रावशेषिताः। न तेषां
कुलकर्त्तारं कञ्चित् पश्याम्यहं शुभे ॥ ३२ ॥ सर्वे हि भस्मसा-
न्नीतास्ते द्रोणेन रणाजिरे। अवशिष्टाश्च निहता द्रोणपुत्रेण
वै निशि ॥ ३३ ॥ चेदयश्चैव मत्स्याश्च दृष्टपूर्व्वास्तथैव नः। केवलं
वृष्णिचक्रञ्च वासुदेवपरिग्रहात् ॥ ३४ ॥ यद्दृष्ट्वा स्थातुमिच्छामि
धर्म्मार्थं नार्थहेतुतः। शिवेन पश्य नः सर्व्वान् दुर्लभं तव दर्श-
नम् ॥ ३५ ॥ अविषह्यं च राजा हि तीव्रं चारप्स्यते तपः।

एतत् श्रुत्वा महाबाहुः सहदेवो युधां पतिः ॥ ३६ ॥ युधिष्ठिरमुवाचेदं बाष्पव्याकुललोचनः । नोत्सहेऽहं परित्यक्तुं मातरं भरतर्षभ ॥ ३७ ॥ प्रतियातु भवान् क्षिप्रं तपस्तप्स्याम्यहं विभो । इहैव शोषयिष्यामि तपसेदं कलेवरम् ॥ ३८ ॥ पादशुश्रूषणे रक्तो राज्ञो मात्रोस्तथानयोः । तमुवाच ततः कुन्ती परिष्वज्य महाभुजम् ॥ ३९॥ गम्यतां पुत्र मैवं त्वं वोचः कुरु वचो मम । आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः ॥ ४० ॥ उपरोधो भवेदेवमस्माकं तपसः कृते । त्वत्स्नेहपाशबद्धा च हीयेयं तपसः परात् ॥ ४१ ॥ तस्मात् पुत्रक गच्छ त्वं शिष्टमल्पञ्च नः प्रभो ! एवं संस्तम्भितं वाक्यैः कुन्त्या बहुविधैर्मनः ॥ ४२ ॥ सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः । ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः । अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् ॥ ४३ ॥

युधिष्ठिर उवाच । राज्यं प्रति गमिष्यामः शिवेन प्रतिनन्दिताः । अनुज्ञातास्त्वया राजन् गमिष्यामो विकल्मषाः ॥ ४४ ॥ एवमुक्तः स राजर्षिर्धर्मराज्ञा महात्मना । अनुजज्ञे स कौरव्यमभिनन्द्य युधिष्ठिरम् ॥ ४५ ॥ भीमञ्च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः । स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्य्यवान् ॥ ४६ ॥ अर्जुनञ्च समाश्लिष्य यमौ च पुरुषर्षभौ । अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ॥ ४७ ॥ गान्धार्य्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः । जनन्या समुपाघ्राताः परिमुक्ताश्च ते नृपम् ॥४८॥ चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे । पुनः पुनर्निरीक्षन्तः प्रचक्रुस्ते प्रदक्षिणम् ॥ ४९ ॥ द्रौपदीप्रमुखाश्चैव सर्वाः कौरवयोषितः । न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः ॥ ५० ॥ श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः । सन्दिष्टाश्चेतिकर्त्तव्यं प्रययुर्भर्त्तृभिः सह ॥ ५१ ॥ ततः प्रजज्ञे निनदः सूतानां युज्यतामिति । उष्ट्राणां क्रोशताञ्चापि हयानां ह्रेषतामपि ॥५२॥

ततो युधिष्ठिरो राजा सदारः सहसैनिकः । नगरं हास्तिनपुरं पुनरायात् सबान्धवः ॥ ५३ ॥

इत्याश्रमवासिकपर्व्वणि पुत्रदर्शनपर्व्वणि युधिष्ठिरप्रत्यागमने षट्त्रिंशोऽध्यायः ॥ ३६॥ समाप्तञ्चेदं पुत्रदर्शनपर्व्व ॥

---

## अथ नारदागमनपर्व्व ।

वैशम्पायन उवाच । द्विवर्षोपनिवृत्तेषु पाण्डवेषु यदृच्छया । देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् ॥ १ ॥ तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः । आसीनं परिविश्वस्तं प्रोवाच वदतां वरः ॥२॥ चिरान्न नानुपश्यामि भगवन्तमुपस्थितम् । कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितम् ॥३॥ के देशाः परिदृष्टास्ते किञ्च कार्य्यं करोमि ते । तद्ब्रूहि द्विजमुख्यस्त्वं त्वं ह्यस्माकं परा गतिः ॥ ४ ॥

नारद उवाच । चिरदृष्टोऽसि मेत्येवमागतोऽहं तपोवनात् । परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप ॥ ५ ॥

युधिष्ठिर उवाच । वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः । धृतराष्ट्रं महात्मानमास्थितं परमं तपः ॥ ६ ॥ परिदृष्टस्त्वया तत्र कुशली स कुरूद्वहः । गान्धारी च पृथा चैव सूतपुत्रश्च सञ्जयः ॥ ७ ॥ कथञ्च वर्त्तते चाद्य पिता मम स पार्थिवः । श्रोतुमिच्छामि भगवन् यदि दृष्टस्त्वया नृपः ॥ ८ ॥

नारद उवाच । स्थिरीभूय महाराज शृणु वृत्तं यथातथम् । यथाश्रुतञ्च दृष्टञ्च मया तस्मिंस्तपोवने ॥ ९ ॥ वनवासनिवृत्तेषु भवत्सु कुरुनन्दन । कुरुक्षेत्रात् पिता तुभ्यं गङ्गाद्वारं ययौ नृप ॥ १० ॥ गान्धार्य्या सहितो धीमान् वध्वा कुन्त्या समन्वितः । सञ्जयेन च सूतेन साग्निहोत्रः सयाजकः ॥ ११ ॥ आतस्थे स तपस्तीव्रं पिता तव तपोधनः । वीटां मुखे समादाय वायुभक्षो-

ऽभवन्मुनिः॥ १२॥ वने स मुनिभिः सर्वैः पूज्यमानो महातपाः। त्वगस्थिमात्रशेषः स षण्मासानभवन्नृपः॥ १३॥ गान्धारी तु जलाहारी कुन्ती मासोपवासिनी। सञ्जयः षष्ठभक्तेन वर्त्तयामास भारत॥ १४॥ अग्नींस्तु याजकास्तत्र जुहुवुर्विधिवत् प्रभो। दृश्यतो दृश्यतश्चैव वने तस्मिन् नृपस्य वै॥ १५॥ अनिकेतोऽथ राजा स बभूव वनगोचरः। ते चापि सहिते देव्यौ सञ्जयश्च तमन्वयुः॥ १६॥ सञ्जयो नृपतेर्नेता समेषु विषमेषु च। गान्धार्याश्च पृथा राजन् चक्षुरासीदनिन्दिता॥ १७॥ ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः। गङ्गायामाप्लुतो धीमानाश्रमाभिमुखोऽभवत्॥ १८॥ अथ वायुः समुद्भूतो दावाग्निरभवन्महान्। ददाह तद्वनं सर्वं परिगृह्य समन्ततः॥ १९॥ दह्यत्सु मृगयूथेषु द्विजिह्वेषु समन्ततः। वराहाणाञ्च यूथेषु संश्रयत्सु जलाशयान्॥ २०॥ समाविद्धे वने तस्मिन् प्राप्ते व्यसन उत्तमे। निराहारतया राजा मन्दप्राणविचेष्टितः॥ २१॥ असमर्थोपसरणे सुकृशे मातरौ च ते। ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात्॥२२॥ इदमाह ततः सूतं सञ्जयं जयतां वरम्। गच्छ सञ्जय यत्राग्निर्न त्वां दहति कर्हिचित्॥ २३॥ वयमत्राग्निना युक्ता गमिष्यामः परां गतिम्। तमुवाच किलोद्विग्नः सञ्जयो वदतां वरः॥२४॥ राजन्मृत्युरनिष्टोऽयं भविता ते ह्यथाग्निना। न चोपायं प्रपश्यामि मोक्षणे जातवेदसः॥ २५॥ यदत्रानन्तरं कार्य्यं तद्भवान् वक्तुमर्हति। इत्युक्तः सञ्जयेनेदं पुनराह स पार्थिवः॥ २६॥ नैष मृत्युरनिष्टो नो निःसृतानां गृहात् स्वयम्। जलमग्निस्तथा वायुरथ वापि विकर्षणम्॥ २७॥ तापसानां प्रशस्यन्ते गच्छ सञ्जय मा चिरम्। इत्युक्त्वा सञ्जयं राजा समाधाय मनस्तथा॥ २८॥ प्राङ्मुखः सह गान्धार्य्या कुन्त्या चोपाविशत्तदा। सञ्जयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत्॥ २९॥ उवाच चैनं मेधावी युङ्क्ष्वा-

ध्यानमिति प्रभो । ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः
॥ ३० ॥ स निरुध्येन्द्रियग्राममासीत् काष्ठोपमस्तदा । गान्धारी
च महाभागा जननी च पृथा तव ॥ ३१ ॥ दावाग्निना समायुक्तौ
स च राजा पिता तव । सञ्जयस्तु महामात्रस्तस्माद्दावादमुच्यत
॥ ३२ ॥ गङ्गाकूले मया दृष्टस्तापसैः परिवारितः । स ताना-
मन्त्र्य तेजस्वी निवेद्यैतच्च सर्व्वशः । प्रययौ सञ्जयो धीमान् हिम-
वन्तं महीधरम् ॥ ३३ ॥ एवं स निधनं प्राप्तः कुरुराजो महा-
मनाः । गान्धारी च पृथा चैव जनन्यौ ते विशाम्पते ॥ ३४ ॥
यदृच्छयानुव्रजता मया राज्ञः कलेवरम् । तयोश्च देव्योरुभयो-
र्मया दृष्टानि भारत ॥ ३५ ॥ ततस्तपोवने तस्मिन् समाजग्मु-
स्तपोधनाः । श्रुत्वा राज्ञस्तदा निष्ठां न त्वशोचन् गतीश्च ते ॥३६॥
तत्राश्रौषमहं सर्व्वमेतत् पुरुषसत्तम । यथा च नृपतिर्द्दग्धो देव्यौ
ते चेति पाण्डव ॥ ३७ ॥ न शोचितव्यं राजेन्द्र स्वतः स पृथिवी-
पतिः । प्राप्तवानग्निसंयोगं गान्धारी जननी च ते ॥ ३८ ॥

वैशम्पायन उवाच । एतत् श्रुत्वा च सर्व्वेषां पाण्डवानां महा-
त्मनाम् । निर्य्याणं धृतराष्ट्रस्य शोकः समभवन्महान् ॥ ३९ ॥ अन्तः-
पुराणाञ्च तदा महानार्त्तस्वरोऽभवत् । पौराणाञ्च महाराज श्रुत्वा
राज्ञस्तदा गतिम् ॥ ४० ॥ अहो धिगिति राजा तु विक्रुश्य भृश-
दुःखितः । ऊर्द्ध्वबाहुः स्मरन्मातुः प्ररुरोद युधिष्ठिरः । भीमसेन-
पुरोगाश्च भ्रातरः सर्व्व एव ते ॥ ४१॥ अन्तःपुरेषु च तदा सुमहान्
रुदितस्वनः । प्रादुरासीन्महाराज पृथां श्रुत्वा तथागताम् ॥४२॥
तञ्च वृद्धं तथा दग्धं हतपुत्रं नराधिपम् । अन्वशोचन्त ते सर्व्वे
गान्धारीञ्च तपस्विनीम् ॥ ४३ ॥ तस्मिन्नुपरते शब्दे मुहूर्त्तादिव
भारत । निगृह्य वाष्पं धैर्य्येण धर्म्मराजोऽब्रवीदिदम् ॥ ४४ ॥

इत्याश्रमवासिकपर्व्वणि नारदागमनपर्व्वणि वनाग्निना
धृतराष्ट्रादिदाहे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

युधिष्ठिर उवाच। तथा महात्मनस्तस्य तपस्युग्रे च वर्त्ततः। अनाथस्येव च वने तिष्ठत्स्वस्मासु बन्धुषु ॥ १ ॥ दुर्विज्ञेया गतिर्ब्रह्मन् पुरुषाणां मतिर्मम। यत्र वैचित्रवीर्य्योऽसौ दग्ध एवं वनाग्निना ॥ २ ॥ यस्य पुत्रशतं श्रीमद्भगवद्बाहुशालिनः। नागायुतबलो राजा स दग्धो हि दवाग्निना ॥ ३ ॥ यं पुरा पर्य्यवीजन्त तालवृन्तैर्वरस्त्रियः। तं गृध्राः पर्य्यवीजन्त दावाग्निपरिकालितम् ॥ ४ ॥ सूतमागधसङ्घैश्च शयानो यः प्रबोध्यते। धरण्यां स नृपः शेते पापस्य मम कर्म्मभिः ॥ ५ ॥ न च शोचामि गान्धारीं हतपुत्रां यशस्विनीम्। पतिलोकमनुप्राप्तां तथा भर्त्तृव्रते स्थिताम् ॥ ६ ॥ पृथामेव च शोचामि या पुत्रैश्वर्य्यमृद्धिमत्। उत्सृज्य सुमहद्दीप्तं वनवासमरोचरत् ॥ ७ ॥ धिग्राज्यमिदमस्माकं धिग्बलं धिक् पराक्रमम्। क्षत्रधर्म्मञ्च धिग्यस्मान्मृता जीवामहे वयम् ॥ ८ ॥ सुसूक्ष्मा किल कालस्य गतिर्द्विजवरोत्तम। यत् समुत्सृज्य राज्यं सा वनवासमरोचयत् ॥ ९॥ युधिष्ठिरस्य जननी भीमस्य विजयस्य च। अनाथवत् कथं दग्धा इति मुह्यामि चिन्तयन् ॥ १० ॥ वृथा संतर्पितो वह्निः खाण्डवे सव्यसाचिना। उपकारमजानन् स कृतघ्न इति मे मतिः ॥ ११ ॥ यत्रादहत् स भगवान्मातरं सव्यसाचिनः। कृत्वा यो ब्राह्मणच्छद्म भिक्षार्थी समुपागतः। धिगग्निं धिक् च पार्थस्य विश्रुतां सत्यसन्धताम् ॥१२॥ इदं कष्टतरं चान्यद्भगवन् प्रतिभाति मे। वृथाग्निना समायोगो यदभूत् पृथिवीपतेः। तथा तपस्विनस्तस्य राजर्षेः कौरवस्य ह ॥ १३ ॥ कथमेवंविधो मृत्युः प्रशास्य पृथिवीमिमाम्। तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने। तथाग्निना समायुक्तो निष्ठां प्राप्तः पिता मम ॥ १४ ॥ मन्ये पृथा वेपमाना कृशा धमनिसन्तता। हा तात धर्म्मराजेति समाक्रन्दन्महाभये ॥ १५ ॥ भीम पर्य्याप्नु हि भयादिति चैवाभिवाशती। समन्ततः परिक्षिप्ता माताभून्मे दवा-

ग्निना ॥ १६ ॥ सहदेवः प्रियस्तस्याः पुत्रेभ्योऽधिक एव तु । न चैनां मोक्षयामास वीरो माद्रवतीसुतः ॥ १७ ॥ तत् श्रुत्वा रुरुदुः सर्व्वे समालिङ्ग्य परस्परम् । पाण्डवाः पञ्च दुःखार्त्ता भूतानीव युगक्षये ॥ १८ ॥ तेषान्तु पुरुषेन्द्राणां रुदतां रुदितस्वनः । प्रासादाभोगसंवृद्धो अन्वरौत्सीत् सरोदसी ॥ १९ ॥

इत्याश्रमवासिकपर्व्वणि नारदागमनपर्व्वणि युधिष्ठिर-विलापे अष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

---

नारद उवाच । नासौ वृथाग्निना दग्धो यथा तत्र श्रुतं मया । वैचित्रवीर्य्यो नृपतिस्तत्ते वक्ष्यामि भारत ॥ १ ॥ वनं प्रविशतानेन वायुभक्षेण धीमता । अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् ॥ २ ॥ याजकास्तु ततस्तस्य तानग्नीन्निर्ज्जने वने । समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम ॥ ३ ॥ स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत् किल । तेन तद्वनमादीप्तमिति ते तापसाब्रुवन् ॥४॥ स राजा जाह्नवीकच्छे यथा ते कथितं मया । तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ ॥ ५ ॥ एवमावेदयामासुर्मुनयस्ते ममानघ । ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ॥६॥ एवं स्वेनाग्निना राजा समायुक्तो महीपते । मा शोचिथास्त्वं नृपतिं गतः स परमां गतिम् ॥ ७ ॥ गुरुशुश्रूषया चैव जननी ते जनाधिप । प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशयः ॥ ८ ॥ कर्त्तुमर्हसि राजेन्द्र तेषान्त्वमुदकक्रियाम् । भ्रातृभिः सहितः सर्व्वैरेतदत्र विधीयताम् ॥ ९ ॥

वैशम्पायन उवाच । ततः स पृथिवीपालः पाण्डवानां धुरन्धरः । निर्य्ययौ सहसोदर्य्यैः सदारश्च नरर्षभः ॥ १० ॥ पौरजानपदाश्चैव राजभक्तिपुरस्कृताः । गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ॥ ११ ॥ ततोऽवगाह्य सलिलं सर्व्वे ते नरपुङ्गवाः । युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने । गान्धार्य्याश्च पृथायाश्च

विधिवन्नामगोत्रतः ॥ १२ ॥ शौचं निवर्त्तयन्तस्ते तत्रोषुर्नगरा-
द्वहिः । प्रेषयामास स नरान् विधिज्ञानाप्तकारिणः ॥ १३ ॥
गङ्गाद्वारं नरश्रेष्ठो यत्र दग्धोऽभवन्नृपः । तत्रैव तेषां कृत्यानि
गङ्गाद्वारेऽन्वशात्तदा । कर्त्तव्यानीति पुरुषान् दत्तदेयान् महौ-
पतिः ॥ १४ ॥ द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः । ददौ
श्राद्धानि विधिवत् दक्षिणावन्ति पाण्डवः ॥ १५ ॥ धृतराष्ट्रं
समुद्दिश्य ददौ न पृथिवीपतिः । सुवर्णं रजतं गाश्च शय्याश्च
सुमहाधनाः ॥ १६ ॥ गान्धार्य्याश्चैव तेजस्वी पृथायाश्च पृथक्
पृथक् । संकीर्त्त्य नामनी राजा ददौ दानमनुत्तमम् ॥ १७ ॥
यो यदिच्छति यावच्च तावत् स लभते नरः । शयनं भोजनं यानं
मणिरत्नमयो धनम् ॥ १८ ॥ यानमाच्छादनं भोगान् दासीश्च
समलङ्कृताः । ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः ॥ १९ ॥
ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः । प्रविवेश पुरं राजा
नगरं वारणाह्वयम् ॥ २० ॥ ते चापि राजवचनात् पुरुषा ये
गताभवन् । संकल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः ॥ २१ ॥
माल्यैर्गन्धैश्च विविधैरर्चयित्वा यथाविधि । कुल्यानि तेषां संयोज्य
तदाचख्युर्महीपतेः ॥ २२ ॥ समाश्वास्य तु राजानं धर्मात्मानं
युधिष्ठिरम् । नारदोऽप्यगमद्राजन् परमर्षिर्यथेप्सितम् ॥ २३ ॥
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः । वनवासे तथा त्रीणि
नगरे दश पञ्च च ॥ २४ ॥ हतपुत्रस्य संग्रामे दानानि ददतः
सदा । ज्ञातिसम्बन्धिमित्राणां भ्रातॄणां स्वजनस्य च ॥ २५ ॥
युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा । धारयामास तद्राज्यं
निहतज्ञातिबान्धवः ॥ २६ ॥ तथाश्रमवासिके तु पर्वण्यपि समा-
हितः । गन्धमाल्यादियुक्तश्च हविष्यं भोजयेद्द्विजान् ॥ २७ ॥

इत्याश्रमवासिकपर्वणि नारदागमनपर्वणि ऊन-
चत्वारिंशोऽध्यायः ॥ ३९ ॥ समाप्तञ्चेदं आश्रमवासिकपर्व ।

# श्रीमहाभारतम्।

## मौसलपर्व ॥



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।

देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

वैशम्पायन उवाच। षड्‌विंशे त्वथ सम्प्राप्ते वर्षे कौरवनन्दनः। ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥ १ ॥ ववुर्वाताश्च निर्घाता रूक्षाः शर्करवर्षिणः। अपसव्यानि शकुना मण्डलानि प्रचक्रिरे ॥ २ ॥ प्रत्यगूहुर्महानद्यो दिशो नीहारसंवृताः। उल्काश्चाङ्गारवर्षिण्यः प्रापतन् गगनाद्भुवि ॥ ३ ॥ आदित्यो रजसा राजन् समवच्छन्नमण्डलः। विरश्मिरुदये नित्यं कवन्धैः समदृश्यत ॥ ४ ॥ परिवेशाश्च दृश्यन्ते दारुणाश्चन्द्रसूर्य्ययोः। त्रिवर्णाः श्यामरूक्षान्तास्तथा भस्मारुणप्रभाः ॥ ५ ॥ एते चान्ये च बहव उत्पाता भयशंसिनः। दृश्यन्ते बहवो राजन् हृदयोद्वेगकारकाः ॥ ६ ॥ कस्यचित्त्वथ कालस्य कुरुराजो युधिष्ठिरः। शुश्राव वृष्णिचक्रस्य मौषले कदनं कृतम् ॥ ७ ॥ विमुक्तं वासुदेवञ्च श्रुत्वा रामञ्च पाण्डवः। समानीयाब्रवीद्भ्रातॄन् किं करिष्याम इत्युत ॥८॥ परस्परं समासाद्य ब्रह्मदण्डबलात् कृतान्। वृष्णीन् विनष्टांस्ते श्रुत्वा व्यथिताः पाण्डवाभवन् ॥ ९ ॥ निधनं वासुदेवस्य समुद्रस्येव शोषणम्। वीरा न श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः ॥ १० ॥ मौषलं ते समाश्रित्य दुःखशोकसमन्विताः। विषण्णा हतसङ्कल्पाः पाण्डवाः समुपाविशन् ॥ ११ ॥

जनमेजय उवाच। कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह। पश्यतो वासुदेवस्य भोजाश्चैव महारथाः ॥ १२ ॥

वैशम्पायन उवाच। षड्विंशेऽथ ततो वर्षे वृष्णीनामनयो महान्। अन्योऽन्यं मुषलैस्ते तु निजघ्नुः कालचोदिताः ॥ १३ ॥

जनमेजय उवाच। केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका गताः। भोजाश्च द्विजवर्य्य त्वं विस्तरेण वदस्व मे ॥ १४ ॥

वैशम्पायन उवाच। विश्वामित्रञ्च कण्वञ्च नारदञ्च तपोधनम्। सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् ॥ १५ ॥ ते तान् शाम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा। अब्रुवन्नुपसंगम्य दैवदण्डनिपीड़िताः ॥ १६ ॥ इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः। ऋषयः साधु जानीत किमियं जनयिष्यति ॥ १७ ॥ इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः। प्रत्यब्रुवंस्तान्मुनयो यत्तत् शृणु नराधिप ॥ १८ ॥ वृष्ण्यन्धकविनाशाय मुषलं घोरमायसम्। वासुदेवस्य दायादः शाम्बोऽयं जनयिष्यति ॥ १९ ॥ येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः। उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्द्दनौ ॥ २० ॥ समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः। जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति ॥ २१ ॥ इत्यब्रुवंस्ततो राजन् प्रलब्धास्तैर्दुरात्मभिः। मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम्। तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः ॥ २२ ॥ अथाब्रवीत्तदा वृष्णीन् श्रुत्वैवं मधुसूदनः। अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् ॥ २३ ॥ एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा। कृतान्तमन्यथा नैच्छत् कर्त्तुं स जगतः प्रभुः ॥ २४ ॥ श्वोभूतेऽथ ततः शाम्बो मुषलं तदसूत वै। येन वृष्ण्यन्धककुले पुरुषा भस्मसात् कृताः ॥ २५ ॥ वृष्ण्यन्धकविनाशाय किङ्करवलिभं महत्। असूत शापजं घोरं तच्च राज्ञे न्यवेदयन् ॥ २६ ॥ विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत्। तच्चूर्णं सागरे

चापि प्राक्षिपन् पुरुषा नृप ॥ २७ ॥ अघोषयंश्च नगरे वचना-
दाहुकस्य ते । जनार्द्दनस्य रामस्य बभ्रोश्चैव महात्मनः ॥ २८ ॥
अद्य प्रभृति सर्व्वेषु वृष्ण्यन्धककुलेष्विह । सुरासवो न कर्त्तव्यः
सर्व्वैर्नगरवासिभिः ॥ २९ ॥ यश्च नो विदितं कुर्य्यात् पेयं कश्चि-
न्नरः क्वचित् । जीवन् स शूलमारोहेत् स्वयं कृत्वा सबान्धवः
॥ ३० ॥ ततो राजभयात् सर्व्वे नियमञ्चक्रिरे तदा । नराः शासन-
माज्ञाय रामस्याक्लिष्टकर्म्मणः ॥ ३१ ॥

इति मौसलपर्व्वणि मुसलोत्पत्तौ प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच । एवं प्रयतमानानां वृष्णीनामन्धकैः सह ।
कालो गृहाणि सर्व्वेषां परिचक्राम नित्यशः ॥ १ ॥ करालो विकटो
मुण्डः पुरुषः कृष्णपिङ्गलः । गृहाण्यवेक्ष्य वृष्णीनां नादृश्यत
क्वचित् क्वचित् ॥ २ ॥ तमघ्नन्त महेष्वासाः शरैः शतसहस्रशः ।
न चाशक्यत वेद्धुं स सर्व्वभूतात्ययस्तदा ॥ ३ ॥ उत्पेदिरे महा-
वाता दारुणाश्च दिने दिने । वृष्ण्यन्धकविनाशाय बहवो लोम-
हर्षणाः ॥ ४ ॥ विवृद्धमूषिका रथ्या विभिन्नमणिकास्तथा । केशा
नखाश्च सुप्तानामद्यन्ते मूषिकैर्निशि ॥ ५ ॥ चीचीकुचीति वाशन्ति
सारिका वृष्णिवेश्मसु । नोपशाम्यति शब्दः स सदिवारात्रमेव
हि ॥ ६ ॥ अन्वकुर्व्वन्नुलूकानां सारसा विरुतं तथा । अजाः
शिवानां विरुतमन्वकुर्व्वत भारत ॥ ७ ॥ पाण्डुरा रक्तपादाश्च
विहङ्गाः कालचोदिताः । वृष्ण्यन्धकानां गेहेषु कपोता व्यचरं-
स्तदा ॥ ८ ॥ व्यजायन्त खरा गोषु करभाश्वतरीषु च । शुनी-
ष्वपि विड़ालाश्च मूषिका नकुलीषु च ॥ ९ ॥ नापत्रपन्त पापानि
कुर्व्वन्तो वृष्णयस्तदा । प्राद्विषन् ब्राह्मणांश्चापि पितॄन् देवांस्तथैव
च ॥ १० ॥ गुरूंश्चाप्यवमन्यन्त न तु रामजनार्द्दनौ । पत्नः पतो-

नुच्चरन्त पत्नीश्च पतयस्तथा ॥ ११ ॥ विभावसुः प्रज्वलितो वामं विपरिवर्त्तते। नीललोहितमञ्जिष्ठा विसृजन्नर्च्चिषः पृथक् ॥ १२ ॥ उदयास्तमने नित्यं पुर्य्यां तस्यां दिवाकरः। व्यदृश्यतासकृत् पुंभिः कबन्धैः परिवारितः ॥ १३ ॥ महानसेषु सिद्धेषु संस्कृतेऽतीव भारत। आहार्य्यमाणे कृमयो व्यदृश्यन्त सहस्रशः ॥ १४ ॥ पुण्याहे वाच्यमाने तु जपत्सु च महात्मसु। अभिधावन्तः श्रूयन्ते न चादृश्यत कश्चन ॥ १५ ॥ परस्परञ्च नक्षत्रं हन्यमानं पुनः पुनः। ग्रहैरपश्यन् सर्व्वे ते नात्मनस्तु कथञ्चन ॥ १६ ॥ नदन्तं पाञ्चजन्यञ्च वृष्ण्यन्धकनिवेशने। समन्तात् पर्य्यवाश्यन्त रासभा दारुणस्वराः ॥ १७ ॥ एवं पश्यन् हृषीकेशः सम्प्राप्तं कालपर्य्ययम्। त्रयोदश्याममावास्यां तान् दृष्ट्वा प्राब्रवीदिदम् ॥ १८ ॥ चतुर्द्दशी पञ्चदशी कृतेयं राहुणा पुनः। प्राप्ते वै भारते युद्धे प्राप्ता चाद्य क्षयाय नः ॥ १९ ॥ विमृशन्नेव कालन्तं परिचिन्त्य जनार्द्दनः। मेने प्राप्तं स षट्त्रिंशं वर्षं वै केशिसूदनः ॥ २० ॥ पुत्रशोकाभिसन्तप्ता गान्धारी हतबान्धवा। यदनुव्याजहारार्त्ता तदिदं समुपागमत् ॥ २१ ॥ इदञ्च तदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः। पुरा व्यूढेष्वनीकेषु दृष्टोत्पातान् सुदारुणान् ॥ २२ ॥ इत्युक्त्वा वासुदेवस्तु चिकीर्षुः सत्यमेव तत्। आज्ञापयामास तदा तीर्थयात्रामरिन्दमः ॥ २३ ॥ अघोषयन्त पुरुषास्तत्र केशवशासनात्। तीर्थयात्रा समुद्रे वः कार्य्येति पुरुषर्षभाः ॥ २४ ॥

इति मौसलपर्व्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

वैशम्पायन उवाच। काली स्त्री पाण्डुरैर्द्दन्तैः प्रविश्य हसती निशि। स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति ॥ १ ॥ अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु। वृष्ण्यन्धकानखादन्त

स्वप्ने दृष्टा भयानकाः ॥ २ ॥ अलङ्काराश्च छत्रञ्च ध्वजाश्च कवचानि च । ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः ॥ ३ ॥ तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयोमयम् । दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ॥ ४ ॥ युक्तं रथं दिव्यमादित्यवर्णं हया हरन् पश्यतो दारुकस्य । ते सागरस्योपरिष्टादवर्त्तयन् मनोजवाश्चतुरो वाजिमुख्याः । तालः सुपर्णश्च महाध्वजौ तौ सुपूजितौ रामजनार्द्दनाभ्याम् । उच्चैर्जह्रुरप्सरसो दिवानिशं वाचश्चोचुर्गम्यतां तीर्थयात्राम् ॥ ६ ॥ ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः । सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ॥ ७ ॥ ततो भोज्यञ्च भक्ष्यञ्च पेयं चान्धकवृष्णयः । बहु नानाविधञ्चक्रुर्मद्यं मांसमनेकशः ॥ ८ ॥ ततः सैनिकवर्गाश्च निर्ययुर्नगराद्बहिः । यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ॥ ९ ॥ ततः प्रभासे न्यवसन् यथोद्दिष्टं यथागृहम् । प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ १० ॥ निविष्टांस्तान्निशम्याथ समुद्रान्ते स योगवित् । जगामामन्त्र्य तान्वीरानुद्धवोऽर्थविशारदः ॥ ११ ॥ तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिः । जानन् विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः ॥ १२ ॥ ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः । अपश्यन्नुद्धवं यान्तं तेजसावृत्य रोदसी ॥ १३ ॥ ब्राह्मणार्थेषु तत् सिद्धमन्नं तेषां महात्मनाम् । तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितम् ॥ १४ ॥ ततस्तूर्य्यशताकीर्णं नटनर्त्तकसंकुलम् । आवर्त्तत महापानं प्रभासे तिग्मतेजसाम् ॥ १५ ॥ कृष्णस्य सन्निधौ रामः सहितः कृतवर्म्मणा । अपिवद्युयुधानश्च गदो वभ्रुस्तथैव च ॥ १६ ॥ ततः परिषदो मध्ये युयुधानो मदोत्कटः । अब्रवीत् कृतवर्म्माणमवहस्यावमन्य च ॥ १७ ॥ कः क्षत्रियो हन्यमानः सुप्तान् हन्यान्मृतानिव । तन्न मृष्यन्ति हार्द्दिक्य यादवा यत्त्वया कृतम् ॥ १८ ॥ इत्युक्ते युयुधानेन पूजयामास तद्वचः । प्रद्युम्नो

रथिनां श्रेष्ठो हार्दिक्यमवमन्य च ॥ १९ ॥ ततः परमसंक्रुद्धः कृतवर्मा तदाब्रवीत् । निर्दिशन्निव सावज्ञं तथा सव्येन पाणिना ॥ २० ॥ भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया । वधेन सुनृशंसेन कथं वीरेण पातितः ॥ २१ ॥ इति तस्य वचः श्रुत्वा केशवः परवीरहा । तिर्य्यक् सरोषया दृष्ट्या वीक्षाञ्चक्रे स मन्युमान् ॥ २२ ॥ मणिः स्यमन्तकश्चैव यः स सत्राजितोऽभवत् । तां कथां श्रावयामास सात्यकिर्मधुसूदनम् ॥ २३ ॥ तत् श्रुत्वा केशवस्याङ्कमगमद्रुदती तदा । सत्यभामा प्रकुपिता कोपयन्ती जनार्द्दनम् ॥ २४ ॥ तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत् । पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः ॥ २५ ॥ एष गच्छामि पदवीं सत्येन च तथा शपे । सौप्तिके ये च निहताः सुप्ता येन दुरात्मना ॥ २६ ॥ द्रोणपुत्रसहायेन पापेन कृतवर्म्मणा । समाप्तमायुरस्याद्य यशश्चैव सुमध्यमे ॥ २७ ॥ इत्येवमुक्त्वा खड्गेन केशवस्य समीपतः । अभिद्रुत्य शिरः कोपाच्चिच्छेद कृतवर्म्मणः ॥ २८ ॥ तथान्यानपि निघ्नन्तं युयुधानं समन्ततः । अभ्यधावद्धृषीकेशो विनिवारयितुं तदा ॥२९॥ एकीभूतास्ततः सर्वे कालपर्य्यायचोदिताः । भोजान्धका महाराज शैनेयं पर्य्यवारयन् ॥ ३० ॥ तान् दृष्ट्वा पततस्तूर्णमभिक्रुद्धान् जनार्द्दनः । न चुक्रोध महातेजा जानन् कालस्य पर्य्ययम् ॥ ३१ ॥ ते तु पानमदाविष्टाश्चोदिताः कालधर्म्मणा । युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ॥ ३२ ॥ हन्यमाने तु शैनेये क्रुद्धो रुक्मिणीनन्दनः । तदनन्तरमागच्छन्मोचयिष्यन् शिनेः सुतम् । स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह ॥ ३३ ॥ व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ । बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ॥ ३४ ॥ हतं दृष्ट्वा तु शैनेयं पुत्रञ्च यदुनन्दनः । एरकानां तदा मुष्टिं कोपाज्जग्राह केशवः ॥ ३५ ॥ तदभून्मुषलं घोरं वज्रकल्पमयोमयम् । जघान कृष्ण-

स्तांस्तेन ये ये प्रभुस्ततोऽभवन् ॥ ३६ ॥ ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा । जघ्नुरन्योऽन्यमाक्रन्दे मुषलैः कालचोदिताः ॥ ३७ ॥ यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप । वज्रभूतेव सा राजन्नदृश्यत तदा विभो ॥ ३८ ॥ तृणञ्च मुषलीभूतमपि तत्र व्यदृश्यत । ब्रह्मदण्डकृतं सर्व्वमिति तद्विद्धि पार्थिव ॥ ३९ ॥ अविध्यान् विध्यते राजन् प्रक्षिपन्ति स्म यत्तृणम् । तद्वज्रभूतं मुषलं व्यदृश्यत तदा दृढ़म् ॥ ४० ॥ अवधीत् पितरं पुत्रः पिता पुत्रञ्च भारत । मत्ताः परिपतन्ति स्म योधयन्तः परस्परम् ॥४१॥ पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः । नासीत् पलायने बुद्धिर्वध्यमानस्य कस्यचित् ॥ ४२ ॥ तत्रापश्यन्महाबाहुर्ज्जानन् कालस्य पर्य्ययम् । मुषलं समवष्टभ्य तस्थौ स मधुसूदनः ॥ ४३ ॥ शाम्बञ्च निहतं दृष्ट्वा चारुदेष्णञ्च माधवः । प्रद्युम्नञ्चानिरुद्धञ्च ततश्चुक्रोध माधवः ॥ ४४ ॥ गदं वीक्ष्य शयानञ्च भृशं कोपसमन्वितः । स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ४५ ॥ तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः । दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् ॥ ४६ ॥ भगवन् निहताः सर्व्वे त्वया भूयिष्ठशो नराः । रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ॥ ४७ ॥

इति मौसलपर्व्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच । ततो ययुर्द्दारुकः केशवश्च बभ्रुश्च रामस्य पदं पतन्तः । तथापश्यन् राममनन्तवीर्य्यं वृक्षे स्थितं चिन्तयानं विविक्ते ॥ १ ॥ ततः समासाद्य महानुभावं कृष्णस्तदा दारुकमन्वशासत् । गत्वा कुरून् सर्व्वमिदं महान्तं पार्थाय शंसस्व वधं यदूनाम् ॥ २ ॥ ततोऽर्जुनः क्षिप्रमिहोपयातु श्रुत्वा मृतान् यादवान् ब्रह्मशापात् । इत्येवमुक्तः स ययौ रथेन कुरूंस्तदा दारुको

नष्टचेताः॥ ३॥ ततो गते दारुके केशवोऽथ दृष्ट्वान्तिके बभ्रुमुवाच वाक्यम्। स्त्रियो भवान्रक्षितुं यातु शीघ्रं नैता हिंस्युर्दस्यवो वित्तलोभात्॥ ४॥ स प्रस्थितः केशवेनानुशिष्टो मदार्त्तो ज्ञातिबधार्द्दितश्च। तं विश्रान्तं सन्निधौ केशवस्य दुरन्तमेकं सहसैव बभ्रुम्। ब्रह्मानुशप्तमवधीन्महद्वै कूटे युक्तं मुषलं लुब्धकस्य॥ ५॥ ततो दृष्ट्वा निहतं बभ्रुमाह कृष्णोऽग्रजं भ्रातरमुग्रतेजाः। इहैव त्वं मां प्रतीक्षस्व राम यावत् स्त्रियो ज्ञातिवशाः करोमि॥ ६॥ ततः पुरीं द्वारवतीं प्रविश्य जनार्द्दनः पितरं प्राह वाक्यम्। स्त्रियो भवान्रक्षतु नः समग्रा धनञ्जयस्यागमनं प्रतीक्षन्॥ ७॥ रामो वनान्ते प्रतिपालयन्मामास्तेऽद्याहं तेन समागमिष्ये। दृष्टं मयेदं निधनं यदूनां राज्ञाञ्च पूर्वं कुरुपुङ्गवानाम्॥ ८॥ नाहं विना यदुभिर्यादवानां पुरीमिमामशकं द्रष्टुमद्य। तपश्चरिष्यामि निबोध तन्मे रामेण सार्द्धं वनमभ्युपेत्य॥ ९॥ इतीदमुक्त्वा शिरसा च पादौ संस्पृश्य कृष्णस्त्वरितो जगाम। ततो महान्निनदः प्रादुरासीत् सस्त्रीकुमारस्य पुरस्य तस्य॥ १०॥ अथाब्रवीत् केशवः सन्निवर्त्त्य शब्दं श्रुत्वा योषितां क्रोशतीनाम्। पुरीमिमामेष्यति सव्यसाची स वो दुःखान्मोचयिता नराग्र्यः॥ ११॥ ततो गत्वा केशवस्तं ददर्श रामं वने स्थितमेकं विविक्ते। तथापश्यद्योगयुक्तस्य तस्य नागं मुखान्निःसरन्तं महान्तम्॥ १२॥ श्वेतं ययौ स ततः प्रेक्ष्यमाणो महार्णवो येन महानुभावः। सहस्रशीर्षः पर्वताभोगवर्ष्मा रक्ताननः स्वान्तनुं तां विमुच्य॥ १३॥ सम्यक् च तं सागरः प्रत्यगृह्णान्नागा दिव्याः सरितश्चैव पुण्याः। कर्कोटको वासुकिस्तक्षकश्च पृथुश्रवा वरुणः कुञ्जरश्च॥ १४॥ मिश्री शङ्खः कुमुदः पुण्डरीकस्तथा नागो धृतराष्ट्रो महात्मा। ह्रादः क्राथः शितिकण्ठोग्रतेजास्तथा नागौ चक्रमन्दातिषण्डौ॥ १५॥ नागश्रेष्ठो दुर्मुखश्चाम्बरीषः स्वयं राजा

वरुणश्चापि राजन्। प्रत्युद्गम्य स्वागतेनाभ्यनन्दंस्तेऽपूजयंश्चार्घ्यपाद्यक्रियाभिः ॥ १६ ॥ ततो गते भ्रातरि वासुदेवो जानन् सर्वा गतयो दिव्यदृष्टिः। वने शून्ये विचरंश्चिन्तयानो भूमौ चाथ सन्विवेशाग्र्यतेजाः ॥ १७ ॥ सर्व्वं तेन प्राक् तदा चिन्त्यमासीद्गान्धार्य्या यद्वाक्यमुक्तः स पूर्व्वम्। दुर्व्वाससा पायसोच्छिष्टलिप्ते यच्चाप्युक्तं तच्च सस्मार वाक्यम् ॥ १८ ॥ सञ्चिन्तयन्नन्धकवृष्णिनाशं कुरुक्षयञ्चैव महानुभावः। मेने ततः संक्रमणस्य कालं ततश्चकारेन्द्रियसन्निरोधम् ॥ १९ ॥ तथा च लोकत्रयपालनार्थमात्रेयवाक्यप्रतिपालनाय। देवोऽपि सन्देहविमोक्षहेतोर्निर्य्यातमैच्छत् सकलार्थतत्त्ववित् ॥ २० ॥ स संनिरुद्धेन्द्रियवाङ्मनास्तु शिश्ये महायोगमुपेत्य कृष्णः। जराथ तं देशमुपाजगाम लुब्धस्तदानीं मृगसंलिप्सुरुग्रः ॥ २१ ॥ स केशवं योगयुक्तं शयानं मृगाशङ्की लुब्धकः सायकेन। जराविध्यत् पादतले त्वरावांस्तञ्चाभितस्तज्जिघृक्षुर्जगाम ॥ २२ ॥ अथापश्यत् पुरुषं योगयुक्तं पीताम्बरं लुब्धकोऽनेकबाहुम्। मत्वात्मानं त्वपराद्धं स तस्य पादौ जरा जगृहे शङ्कितात्मा ॥ २३ ॥ आश्वासयंस्तं महात्मा तदानीं गच्छन्नूर्द्ध्वं रोदसी व्याप्य लक्ष्म्या ॥ २४ ॥ दिवं प्राप्तं वासवोऽथाश्विनौ च रुद्रादित्या वसवश्चाथ विश्वे। प्रत्युद्ययुर्मुनयश्चापि सिद्धा गन्धर्व्वमुख्याश्च सहाप्सरोभिः ॥ २५ ॥ ततो राजन् भगवानुग्रतेजा नारायणः प्रभवश्चाव्ययश्च। योगाचार्य्यो रोदसी व्याप्य लक्ष्म्या स्थानं प्राप स्वं महात्माप्रमेयम् ॥ २६ ॥ ततो देवैर्ऋषिभिश्चापि कृष्णः समागतश्चारणैश्चैव राजन्। गन्धर्व्वाग्र्यैरप्सरोभिर्वराभिः सिद्धैः साध्यैश्चानतैः पूज्यमानः ॥ २७ ॥ तं वै देवाः प्रत्यनन्दन्त राजन्मुनिश्रेष्ठा ऋग्भिरानर्च्चुरीशम्। तं गन्धर्व्वाश्चापि तस्थुः स्तुवन्तः प्रीत्या चैनं पुरुहूतोऽभ्यनन्दत् ॥ २८ ॥

इति मौसलपर्व्वणि चतुर्थोऽध्यायः ॥ ४ ॥

वैशम्पायन उवाच। दारुकोऽपि कुरून् गत्वा दृष्ट्वा पार्थान् महारथान्। आचष्ट मौषले वृष्णीनन्योऽन्येनोपसंहृतान्॥ १॥ श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान्धककौकुरान्। पाण्डवाः शोकसन्तप्ता वित्रस्तमनसोऽभवन्॥ २॥ ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा। प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत्॥ ३॥ स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो। ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम्॥ ४॥ याः स्म ता लोकनाथेन नाथवत्यः पुराभवन्। तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः॥ ५॥ षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहः। तासामासीन्महानादो दृष्ट्वैवार्जुनमागतम्॥ ६॥ तास्तु दृष्ट्वैव कौरव्यो वाष्पेणापिहितेक्षणः। हीनाः कृष्णेन पुत्रैश्च नाशकत् सोऽभिवीक्षितुम्॥ ७॥ स तां वृष्ण्यन्धकजलां हयमीनां रथोडुपाम्। वादित्ररथघोषौघां वेश्मतीर्थमहाकृताम्॥ ८॥ रत्नशैवलसङ्घातां वज्रप्राकारमालिनीम्। रथ्यास्रोतोजलावर्त्तां चत्वरस्तिमितह्रदाम्॥ ९॥ रामकृष्णमहाग्राहां द्वारकां सरितं तदा। कालपाशग्रहां भीमां नदीं वैतरणीमिव॥ १०॥ ददर्श वासविर्धीमान् विहीनां वृष्णिपुङ्गवैः। गतश्रियं निरानन्दां पद्मिनीं शिशिरे यथा॥ ११॥ तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः। सस्वनं वाष्पमुत्सृज्य निपपात महीतले॥ १२॥ सात्राजिती ततः सत्या रुक्मिणी च विशाम्पते। अभिपत्य प्ररुरुदुः परिवार्य्य धनञ्जयम्॥ १३॥ ततस्तं काञ्चने पीठे समुत्थाप्योपवेश्य च। अब्रुवन्त्यो महात्मानं परिवार्य्योपतस्थिरे॥ १४॥ ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः। आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात्॥ १५॥

इति मौसलपर्व्वणि पञ्चमोऽध्यायः॥ ५॥

---

वैशम्पायन उवाच । तं शयानं महात्मानं वीरमानकदुन्दुभिम् । पुत्रशोकेन सन्तप्तं ददर्श कुरुपुङ्गवः ॥ १ ॥ तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः । आर्त्तस्यार्त्ततरः पार्थः पादौ जग्राह भारत ॥ २ ॥ तस्य मूर्द्धानमाघ्रातुमियेषानकदुन्दुभिः । स्वस्रीयस्य महाबाहुर्न शशाक च शत्रुहन् ॥ ३ ॥ समालिङ्ग्यार्जुनं वृद्धः स भुजाभ्यां महाभुजः । रुदन् पुत्रान् स्मरन् सर्वान् विललाप सुविह्वलः । भ्रातॄन् पुत्रांश्च पौत्रांश्च दौहित्रान् स सखीनपि ॥ ४॥

वासुदेव उवाच । यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्जुन । तान् दृष्ट्वा नेह पश्यामि जीवाम्यर्जुन दुर्म्मरः ॥ ५ ॥ यौ तावर्जुनशिष्यौ ते प्रियौ बहुमतौ तदा । तयोरपनयात् पार्थ वृष्णयो निधनं गताः ॥ ६ ॥ यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ । प्रद्युम्नो युयुधानश्च कथयन् कत्थसे च यौ ॥ ७ ॥ तौ तदा कुरुशार्दूल कृष्णस्य प्रियभाजनौ । तावुभौ वृष्णिनाशस्य मुखमास्तां धनञ्जय ॥ ८ ॥ न तु गर्हामि शैनेयं हार्द्दिक्यञ्चाहमर्जुन । अक्रूरं रौक्मिणेयं वै शापो ह्येवात्र कारणम् ॥ ९ ॥ केशिनं यस्तु कंसञ्च विक्रम्य जगतः प्रभुः । विदेहावकरोत् पार्थ चैद्यञ्च बलगर्वितम् ॥ १० ॥ नैषादिमेकलव्यञ्च चक्रे कालिङ्गमागधान् । गान्धारान् काशिराजञ्च मरुभूमौ च पार्थिवान् ॥११॥ प्राच्यांश्च दाक्षिणात्यांश्च पार्वतीयांस्तथा नृपान् । सोऽभ्युपेक्षितवानेतमनयान्मधुसूदनः ॥ १२ ॥ त्वं हितं नारदश्चैव मुनयश्च सनातनम् । गोविन्दमनघं देवमभिजानीध्वमच्युतम् ॥ १३ ॥ प्रत्यपश्यच्च स विभुर्ज्ञातिक्षयमधोक्षजः । समुपेक्षितवान्नित्यं स्वयं स मम पुत्रकः ॥ १४ ॥ गान्धार्य्या वचनं यत्तद्दृषीणाञ्च परन्तप । तन्नूनमन्यथा कर्त्तुं नैच्छत् स जगतः प्रभुः ॥ १५ ॥ प्रत्यक्षं भवतश्चापि तव पौत्रः परन्तप । अश्वत्थाम्ना हतश्चापि जीवितस्तस्य तेजसा ॥ १६ ॥ इमांस्तु नैच्छत् स्वान् ज्ञातीन् रक्षितुं स सखा

तव। ततः पुत्रांश्च पौत्रांश्च भ्रातृनथ सखीनयम् ॥ १७ ॥ शयाना-न्निहतान् दृष्ट्वा ततो मामब्रवीदिदम्। संप्राप्तोऽयमस्यान्तः कुलस्य भरतर्षभ ॥ १८ ॥ आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम्। आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत् ॥ १९ ॥ स तु श्रुत्वा महातेजा यदूनां निधनं प्रभो। आगन्ता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा ॥ २० ॥ योऽहं तमर्जुनं विद्धि योऽर्जुनः सोऽहमेव तु। यद्ब्रूयात्तत्तथा कार्य्यमिति बुध्यस्व भारत ॥२१ ॥ स स्त्रीषु प्राप्तकालासु पाण्डवो बालकेषु च। प्रतिपत्स्यति बीभत्-सुर्भवतश्चौर्द्ध्वदैहिकम् ॥ २२ ॥ इमाञ्च नगरीं सद्यः प्रतियाते धनञ्जये। प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ २३ ॥ अहं देशे तु कस्मिंश्चित् पुण्ये नियममास्थितः। कालं कर्त्ता सद्य एव रामेण सह धीमता ॥ २४ ॥ एवमुक्त्वा हृषीकेशो मामचिन्त्य-पराक्रमः। हित्वा मां बालकैः सार्द्धं दिशं कामप्यगात् प्रभुः ॥ २५ ॥ सोऽहन्तौ च महात्मानौ चिन्तयन् भ्रातरौ तव। घोरं ज्ञातिवधञ्चैव न भुञ्जे शोककर्षितः ॥ २६ ॥ न भोक्ष्ये न च जीविष्ये दिष्ट्या प्राप्तोऽसि पाण्डव। यदुक्तं पार्थ कृष्णेन तत् सर्वमखिलं कुरु ॥ २७ ॥ एतत्ते पार्थ राज्यञ्च स्त्रियो रत्नानि चैव हि। इष्टान् प्राणानहं हीमांस्त्यक्ष्याम्यरिनिसूदन ॥ २८ ॥

इति मौसलपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

वैशम्पायन उवाच। एवमुक्तः स बीभत्सुर्मातुलेन परन्तपः। दुःखेन दीनमनसं वसुदेवमुवाच ह ॥ १ ॥ नाहं वृष्णिप्रवीरेण बन्धुभिश्चैव मातुल। विहीनां पृथिवीं द्रष्टुं शक्ष्यामीह कथञ्चन ॥ २ ॥ राजा च भीमसेनश्च सहदेवश्च पाण्डवः। नकुलो याज्ञसेनी च षडेकमनसो वयम् ॥ ३ ॥ राज्ञः संक्रमणे चापि

कालोऽयं वर्त्तते ध्रुवम्। तमिमं विद्धि संप्राप्तं कालं कालविदां-
वर ॥ ४ ॥ सर्व्वथा वृष्णिदारांस्तु बालं वृद्धं तथैव च। गमिष्ये
परिगृह्याहमिन्द्रप्रस्थमरिन्दम ॥ ५ ॥ इत्युक्ता दारुकमिदं वाक्य-
माह धनञ्जयः। अमात्यान् वृष्णिवीराणां द्रष्टुमिच्छामि मा
चिरम् ॥ ६ ॥ इत्येवमुक्ता वचनं सुधर्म्मां यादवीं सभाम्। प्रवि-
वेशार्ज्जुनः शूरः शोचमानो महारथान् ॥ ७ ॥ तमासनगतं तत्र
सर्व्वाः प्रकृतयस्तथा। ब्राह्मणा नैगमास्तत्र परिवार्य्योपतस्थिरे
॥ ८ ॥ तान् दीनमनसः सर्व्वान् निहतान् गतचेतसः। उवाचेदं
वचः काले पार्थो दीनतरस्तथा ॥ ९ ॥ शक्रप्रस्थमहं नेष्ये वृष्ण्य-
न्धकजनं स्वयम्। इदन्तु नगरं सर्व्वं समुद्रः प्लावयिष्यति ॥ १० ॥
सज्जीकुरुत यानानि रत्नानि विविधानि च। वज्रोऽयं भवतां
राजा शक्रप्रस्थे भविष्यति ॥ ११ ॥ सप्तमे दिवसे चैव रवौ विमल-
मुद्गते। बहिर्वत्स्यामहे सर्व्वे सज्जीभवत मा चिरम् ॥ १२ ॥
इत्युक्तास्तेन ते सर्व्वे पार्थेनाक्लिष्टकर्म्मणा। सज्जमाशु ततश्चक्रुः
स्वसिद्ध्यर्थं समुत्सुकाः ॥ १३ ॥ तां रात्रिमवसत् पार्थः केशवस्य
निवेशने। महता शोकमोहेन सहसाभिपरिप्लुतः ॥ १४ ॥ श्वो-
भूतेऽथ ततः शौरिर्व्वसुदेवः प्रतापवान्। युक्तात्मानं महातेजा
जगाम गतिमुत्तमाम् ॥ १५ ॥ ततः शब्दो महानासीत् वसुदेव-
निवेशने। दारुणः क्रोशतीनाञ्च रुदतीनाञ्च योषिताम् ॥ १६ ॥
प्रकीर्णमूर्द्धजाः सर्व्वाः विमुक्ताभरणस्रजः। उरांसि पाणिभिर्घ्नन्त्यो
व्यलपन् करुणं स्त्रियः ॥ १७ ॥ तं देवकी च भद्रा च रोहिणी
मदिरा तथा। अन्वारोहन्त च तदा भर्त्तारं योषितांवराः ॥१८॥
ततः शौरिं नृयुक्तेन बहुमौल्येन भारत। यानेन महता पार्थो
बहिर्निष्क्रामयत्तदा ॥ १९ ॥ तमन्वयुस्तत्र तत्र दुःखशोकसमा-
हताः। द्वारकावासिनः सर्व्वे पौरजानपदा हिताः ॥ २० ॥
तस्याश्वमेधिकं छत्रं दीप्यमानाश्च पावकाः। पुरस्तात्तस्य यानस्य

याजकाश्च ततो ययुः॥ २१॥ अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलङ्कृताः। स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः॥ २२॥ यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः। तत्रैनमुपसंकल्प्य पितृमेधं प्रचक्रिरे॥ २३॥ तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः। ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः॥ २४॥ तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः। अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि॥ २५॥ ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः। सामगानाञ्च निर्घोषो नराणां रुदतामपि॥ २६॥ ततो वज्रप्रधानास्ते वृष्ण्यन्धककुमारकाः। सर्व्वे चैवोदकं चक्रुः स्त्रियश्चैव महात्मनः॥ २७॥ अलुप्तधर्म्मस्तं धर्म्मं कारयित्वा स फाल्गुनः। जगाम वृष्णयो यत्र विनष्टा भरतर्षभ॥ २८॥ स तान् दृष्ट्वा निपतितान् कदने भृशदुःखितः। बभूवातीव कौरव्यः प्राप्तकालं चकार ह॥ २९॥ यथा प्रधानतश्चैव चक्रे सर्व्वास्तथा क्रियाः। ये हता ब्रह्मशापेन मुषलैरेरकोद्भवैः॥ ३०॥ ततः शरीरे रामस्य वासुदेवस्य चोभयोः। अन्विष्य दाहयामास पुरुषैराप्तकारिभिः॥ ३१॥ स तेषां विधिवत् कृत्वा प्रेतकार्य्याणि पाण्डवः। सप्तमे दिवसे प्रायात् रथमारुह्य सत्वरः॥ ३२॥ अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि। स्त्रियस्ता वृष्णिवीराणां रुदन्त्यः शोककर्षिताः॥ ३३॥ अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनञ्जयः। भृत्यास्त्वन्धकवृष्णीनां सादिनो रथिनश्च ये॥ ३४॥ वीरहीनं वृद्धबालं पौरजानपदास्तथा। ययुस्ते परिवार्य्याथ कलत्रं पार्थशासनात्॥ ३५॥ कुञ्जरैश्च गजारोहा ययुः शैलनिभैस्तथा। स पादरक्षैः संयुक्ताः सान्तरायुधिका ययुः॥ ३६॥ पुत्राश्चान्धकवृष्णीनां सर्व्वे पार्थमनुव्रताः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महाधनाः॥ ३७॥ दश षट् च सहस्राणि वासुदेवावरोधनम्। पुरस्कृत्य ययुर्वज्रं पौत्रं कृष्णस्य धीमतः॥ ३८॥ बहूनि च सहस्राणि

प्रयुतान्यर्बुदानि च । भोजवृष्ण्यन्धकस्त्रीणां हतनाथा विनिर्ययुः ॥ ३९ ॥ तत् सागरसमप्रख्यं वृष्णिचक्रमहर्द्धिमत् उवाह रथिनां श्रेष्ठः पार्थः परपुरञ्जयः ॥ ४० ॥ निर्याते तु जने तस्मिन् सागरो मकरालयः । द्वारकां रत्नसम्पूर्णां जलेनाप्लावयत्तदा ॥ ४१ ॥ यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत । तत्तत् संप्लावयामास सलिलेन स सागरः ॥ ४२ ॥ तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः । तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ॥ ४३ ॥ काननेषु च रम्येषु पर्वतेषु नदीषु च । निवसन्नानयामास वृष्णिदारान् धनञ्जयः ॥ ४४ ॥ स पञ्चनदमासाद्य धीमानतिसमृद्धिमत् । देशे गोपशुधान्याढ्ये निवासमकरोत् प्रभुः ॥ ४५ ॥ ततो लोभः समभवद्दस्यूनां निहतेश्वराः । दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ ४६ ॥ ततस्ते पापकर्म्माणो लोभोपहतचेतसः । आभीरा मन्त्रयामासुः समेत्याशुभदर्शिनः ॥ ४७ ॥ अयमेकोऽर्जुनो धन्वी वृद्धबालं हतेश्वरम् । नयत्यस्मानतिक्रम्य योधाश्चेमे हतौजसः ॥ ४८ ॥ ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः । अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः ॥ ४९ ॥ महता सिंहनादेन त्रासयन्तः पृथग्जनम् । अभिपेतुर्वधार्थं ते कालपर्य्यायचोदिताः ॥५०॥ ततो निवृत्तः कौन्तेयः सहसा सपदानुगः । उवाच तान्महाबाहुरर्जुनः प्रहसन्निव ॥ ५१ ॥ निवर्त्तध्वमधर्म्मज्ञा यदि जीवितुमिच्छथ । इदानीं शरनिर्भिन्नाः शोचध्वं निहता मया ॥ ५२ ॥ तथोक्तास्तेन वीरेण कदर्थीकृत्य तद्वचः । अभिपेतुर्जनं मूढ़ा वार्य्यमाणाः पुनः पुनः ॥ ५३ ॥ ततोऽर्जुनो धनुर्द्दिव्यं गाण्डीवमजरं महत् । आरोपयितुमारेभे यत्नादिव कथञ्चन ॥ ५४ ॥ चकार सज्यं कृच्छ्रेण सम्भ्रमे तुमुले सति । चिन्तयामास चास्त्राणि न च सस्मार तान्यपि ॥ ५५ ॥ वैकृत्यन्तन्महद्दृष्ट्वा भुजवीर्य्ये तथा युधि । दिव्यानां महदस्त्राणां विनाशाद्व्रीडितोऽभवत् ॥ ५६ ॥

वृष्णियोधाश्च ते सर्वे गजाश्च रथयोधिनः । न शेकुरावर्त्तयितुं ह्रियमाणञ्च तं जनम् ॥ ५७ ॥ कलत्रस्य बहुत्वाद्धि संपतत्सु ततस्ततः । प्रयत्नमकरोत् पार्थो जनस्य परिरक्षणे ॥ ५८ ॥ मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः । समन्ततो व्यकृष्यन्त कामाच्चान्याः प्रवव्रजुः ॥ ५९ ॥ ततो गाण्डीवनिर्मुक्तैः शरैः पार्थो धनञ्जयः । जघान दस्यून् सोद्वेगो वृष्णिभृत्यैः सह प्रभुः ॥ ६० ॥ क्षणेन तस्य ते राजन् क्षयं जग्मुरजिह्मगाः । अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ॥ ६१ ॥ स शरक्षयमासाद्य दुःखशोकसमाहतः । धनुष्कोट्या तदा दस्यूनवधीत् पाकशासनिः ॥६२॥ प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः । जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ॥ ६३ ॥ धनञ्जयस्तु दैवं तत् मनसाचिन्तयत् प्रभुः । दुःखशोकसमाविष्टो निश्वासपरमोऽभवत् ॥ ६४ ॥ अस्त्राणाञ्च प्रणाशेन बाहुवीर्य्यस्य संक्षयात् । धनुषश्चाविधेयत्वात् शराणां संक्षयेण च ॥ ६५ ॥ बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन् । न्यवर्त्तत ततो राजन्नेदमस्तीति चाब्रवीत् ॥ ६६ ॥ ततः स शेषमादाय कलत्रस्य महामतिः । हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ॥ ६७ ॥ एवं कलत्रमानीय वृष्णीनां हृतशेषितम् । न्यवेशयत कौरव्यस्तत्र तत्र धनञ्जयः ॥ ६८ ॥ हार्द्दिक्यतनयं पार्थो नगरं मार्त्तिकावतम् । भोजराजकलत्रञ्च हृतशेषं नरोत्तमः ॥ ६९ ॥ ततो बालांश्च वृद्धांश्च स्त्रियश्चादाय पाण्डवः । वीरैर्विहीनान् सर्वांस्तान् शक्रप्रस्थे न्यवेशयत् ॥ ७० ॥ यौयुधानिं सरस्वत्यां पुत्रं सात्यकिनः प्रियम् । न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ॥ ७१ ॥ इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा । वज्रेणाक्रूरदारास्तु वार्य्यमानाः प्रवव्रजुः ॥ ७२ ॥ रुक्मिणी त्वथ गान्धारी शैव्या हैमवतीत्यपि । देवी जाम्बवती चैव विविशुर्जातवेदसम् ॥७३॥ सत्यभामा तथैवान्या देव्यः कृष्णस्य

सम्मताः । वनं प्रविविशू राजंस्तापस्ये धृतनिश्चयाः ॥ ७४ ॥ फलमूलादि भोजिन्यो हरिध्यानैकतत्पराः । हिमवन्तमतिक्रम्य कलापग्राममाविशन् ॥ ७५ ॥ द्वारकावासिनो ये तु पुरुषाः पार्थमभ्ययुः । यथार्हं संविभज्यैनान् वज्रे पर्य्यददज्जयः ॥ ७६ ॥ स तत् कृत्वा प्राप्तकालं बाष्पेणापिहितोऽर्जुनः । कृष्णद्वैपायनं व्यासं ददर्शासीनमाश्रमे ॥ ७७ ॥

इति मौसलपर्व्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

वैशम्पायन उवाच । प्रविशन्नर्जुनो राजन्नाश्रमं सत्यवादिनः । ददर्शासीनमेकान्ते मुनिं सत्यवतीसुतम् ॥ १ ॥ स तमासाद्य धर्म्मज्ञमुपतस्थे महाव्रतम् । अर्जुनोऽस्मीति नामास्मै निवेद्याभ्यवदत्ततः ॥ २ ॥ स्वागतन्तेऽस्त्विति प्राह मुनिः सत्यवतीसुतः । आस्यतामिति चोवाच प्रसन्नात्मा महामुनिः ॥ ३ ॥ तमप्रतीतमनसं निश्वसन्तं पुनः पुनः । निर्व्विसमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदम् ॥ ४ ॥ नखकेशदशाकुम्भवारिणा किं समुक्षितः । अवीरजानुगमनं ब्राह्मणो वा हतस्त्वया ॥ ५ ॥ युद्धे पराजितो वासि गतश्रीरिव लक्ष्यसे । न त्वां प्रभिन्नं जानामि किमिदं भरतर्षभ । श्रोतव्यञ्चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि ॥ ६ ॥

अर्जुन उवाच । यः स मेघवपुः श्रीमान् वृहत्पङ्कजलोचनः । स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ॥ ७ ॥ मौषले वृष्णिवीराणां विनाशो ब्रह्मशापजः । बभूव वीरान्तकरः प्रभासे लोमहर्षणः ॥ ८ ॥ ये ते शूरा महात्मानः सिंहदर्पा महाबलाः । भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ॥ ९ ॥ गदापरिघशक्तीनां सहाः परिघबाहवः । त एरकाभिर्निहताः पश्य कालस्य पर्य्ययम् ॥ १० ॥ हतं पञ्चशतं तेषां सहस्रं बाहुशालिनम् ।

निधनं समनुप्राप्तं समासाद्येतरेतरम् ॥ ११ ॥ पुनः पुनर्न मृष्यामि विनाशममितौजसाम् । चिन्तयानो यदूनाञ्च कृष्णस्य च यशस्विनः ॥ १२ ॥ शोषणं सागरस्येव पर्वतस्येव चालनम् । नभसः पतनञ्चैव शैत्यमग्नेस्तथैव च ॥ १३ ॥ अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः । न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः ॥ १४ ॥ इतः कष्टतरं चान्यत् शृणु तद्वै तपोधन । मनो मे दीर्य्यते येन चिन्तयानस्य वै मुहुः ॥ १५ ॥ पश्यतो वृष्णिदाराश्च मम ब्रह्मन् सहस्रशः । आभीरैरनुसृत्याजौ हृताः पञ्चनदालयैः ॥ १६ ॥ तदाहं धनुरादाय नाशकं तस्य पूरणे । यथा पुरा च मे वीर्य्यं भुजयोर्न तथाभवत् ॥ १७ ॥ अस्त्राणि मे प्रनष्टानि विविधानि महामुने । शराश्च क्षयमापन्नाः क्षणेनैव समन्ततः ॥ १८ ॥ पुरुषश्चाप्रमेयात्मा शङ्खचक्रगदाधरः । चतुर्भुजः पीतवासाः श्यामः पद्मदलेक्षणः । तं न पश्यामि गोविन्दं किं नु जीवामि दुःखितः ॥ १९ ॥ यश्च याति पुरस्तान्मे रथस्य सुमहाद्युति । प्रदहन् रिपुसैन्यानि न पश्याम्यहमच्युतम् ॥ २० ॥ येन पूर्वं प्रदग्धानि शत्रुसैन्यानि तेजसा । शरैर्गाण्डीवनिर्मुक्तैरहं पश्चाद्व्यनाशयम् ॥ २१ ॥ तमपश्यन् विषीदामि घूर्णामीव च सत्तम । परिनिर्विस्सचेताश्च शान्तिं नोपलभेऽपि च ॥ २२ ॥ विना जनार्द्दनं वीर नाहं जीवितुमुत्सहे । श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्द्दिशः ॥२३॥ प्रनष्टज्ञातिवीर्य्यस्य शून्यस्य परिधावतः । उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ॥ २४ ॥

व्यास उवाच । ब्रह्मशापविनिर्द्दग्धा वृष्ण्यन्धकमहारथाः । विनष्टाः कुरुशार्दूल न ताञ्छोचितुमर्हसि ॥ २५ ॥ भवितव्यं तथा तच्च दृष्टमेतन्महात्मनाम् । उपेक्षितञ्च कृष्णेन शक्तेनापि व्यपोहितुम् ॥ २६ ॥ त्रैलोक्यमपि गोविन्दः कृत्स्नं स्थावरजङ्गमम् । प्रसहेदन्यथा कर्त्तुं कुतः शापं महात्मनाम् ॥ २७ ॥ रथस्य पुरतो

याति यः स चक्रगदाधरः । तत्र स्नेहात् पुराणर्षिर्वासुदेवश्चतु-
र्भुजः ॥ २८ ॥ कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः । मोक्ष-
यित्वा तनुं प्राप्तः कृष्णः स्वस्थानमुत्तमम् ॥ २९ ॥ त्वयापीह
महत् कर्म्म देवानां पुरुषर्षभ । कृतं भीमसहायेन यमाभ्याञ्च
महाभुज ॥ ३० ॥ कृतकृत्यांश्च वो मन्ये संसिद्धान् कुरुपुङ्गव ।
गमनं प्राप्तकालञ्च इदं श्रेयस्करं विभो ॥ ३१ ॥ एवं बुद्धिश्च तेजश्च
प्रतिपत्तिश्च भारत । भवन्ति भवकालेषु विपद्यन्ते विपर्य्यये ॥ ३२ ॥
कालमूलमिदं सर्वं जगद्बीजं धनञ्जय । काल एव समादत्ते पुन-
रेव यदृच्छया ॥ ३३ ॥ स एव बलवान् भूत्वा पुनर्भवति दुर्ब्बलः ।
स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ॥ ३४ ॥ कृतकृत्यानि
चास्त्राणि गतान्यद्य यथागतम् । पुनरेष्यन्ति ते हस्तं यदा कालो
भविष्यति ॥ ३५ ॥ कालो गन्तुं गतिं मुख्यां भवतामपि भारत ।
एतत् श्रेयो हि वो मन्ये परमं भरतर्षभ ॥ ३६ ॥

वैशम्पायन उवाच । एतद्वचनमाज्ञाय व्यासस्यामिततेजसः ।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ ३७ ॥ प्रविश्य च
पुरीं वीरः समासाद्य युधिष्ठिरम् । आचष्ट तद्यथा वृत्तं वृष्ण्य-
न्धककुलं प्रति ॥ ३८ ॥

इति मौसलपर्व्वणि अष्टमोऽध्यायः ॥ ८ ॥

---

समाप्तञ्च मौसलपर्व्व ॥

---

# श्रीमहाभारतम्।

अथ महाप्रस्थानिकपर्व।



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

जनमेजय उवाच। एवं वृष्ण्यन्धककुले श्रुत्वा मौषलमाहवम्। पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवङ्गते॥ १॥

वैशम्पायन उवाच। श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत्। प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत्॥ २॥ कालः पचति भूतानि सर्वाण्येव महामते। कालपाशमहं मन्ये त्वमपि द्रष्टुमर्हसि॥ ३॥ इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन्। अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः॥ ४॥ अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा। अन्वपद्यत तद्वाक्यं यदुक्तं सव्यसाचिना॥ ५॥ ततो युयुत्सुमानाय्य प्रव्रजन् धर्मकाम्यया। राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः॥६॥ अभिषिच्य स्वराज्ये च राजानञ्च परिक्षितम्। दुःखार्त्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः॥ ७॥ एष पुत्रस्य ते पुत्रः कुरुराजो भविष्यति। यदूनां परिशेषश्च वज्रो राजा कृतश्च ह॥ ८॥ परिक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः। वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः॥ ९॥ इत्युक्त्वा धर्मराजः स वासुदेवस्य धीमतः। मातुलस्य च वृद्धस्य रामादीनां तथैव च॥१०॥ भ्रातृभिः सह धर्मात्मा

[illegible] चकार विधिवत्तदा ॥११॥
[illegible] । भारद्वाजं याज्ञवल्क्यं
[illegible]त् स्वादु भोज्यं कीर्त्तयित्वा
च [illegible] ग्रामानश्वान्रथांस्तथा ॥१३॥
स्त्रिय [illegible]मः । कृपमभ्यर्च्च च गुरुमथ
पौरपु [illegible] परिच्चितं तस्मै ददौ भरतसत्तम ।
ततस्तु [illegible] सर्वाः समानाय्य युधिष्ठिरः ॥ १५ ॥ सर्वमाचष्ट
राजर्षिश्चिकीर्षितमथात्मनः । ते श्रुत्वैव वचस्तस्य पौरजानपदा
जनाः ॥ १६ ॥ भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः । नैवं
कर्त्तव्यमिति ते तदोचुस्तं नराधिपम् ॥ १७ ॥ न च राजा तथा-
कार्षीत् कालपर्य्यायधर्म्मवित् । ततोऽनुमान्य धर्मात्मा पौरजान-
पदं जनम् ॥ १८ ॥ गमनाय मतिञ्चक्रे भ्रातरश्चास्य ते तदा ।
ततः स राजा कौरव्यो धर्म्मपुत्रो युधिष्ठिरः ॥ १९ ॥ उत्सृज्या-
भरणान्यङ्गाज्जगृहे वल्कलान्युत । भीमार्जुनयमाश्चैव द्रौपदी च
यशस्विनी ॥ २० ॥ तथैव जगृहुः सर्वे वल्कलानि नराधिप ।
विधिवत् कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ ॥ २१ ॥ समुत्सृज्याप्सु
सर्वेऽग्नीन् प्रतस्थुर्नरपुङ्गवाः । ततः प्ररुरुदुः सर्वाः स्त्रियो दृष्ट्वा
नरोत्तमान् ॥ २२ ॥ प्रस्थितान् द्रौपदीषष्ठान् पुरा द्यूतजितान्
यथा । हर्षोऽभवच्च सर्वेषां भ्रातॄणां गमनं प्रति ॥ २३ ॥ युधि-
ष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च । भ्रातरः पञ्च कृष्णा च षष्ठी
श्वा चैव सप्तमः ॥ २४ ॥ आत्मना सप्तमो राजा निर्ययौ गजसा-
ह्वयात् । पौरैरनुगतो दूरं सर्वैरन्तःपुरैस्तथा ॥ २५ ॥ न चैन-
मशकत् कश्चिन्निवर्त्तस्वेति भाषितुम् । न्यवर्त्तन्त ततः सर्वे नरा
नगरवासिनः ॥ २६ ॥ कृपप्रभृतयश्चैव युयुत्सुं पर्य्यवारयन् ।
विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा ॥ २७ ॥ चित्राङ्गदा
ययौ चापि मणिपूरपुरं प्रति । शिष्टाः परिच्चितं त्वन्या मातरः

पर्थ्यवारयन् ॥ २८ ॥ पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी ।
कृतोपवासाः कौरव्य प्रययुः प्राङ्मुखास्ततः ॥ २९ ॥ योगयुक्ता
महात्मानस्त्यागधर्म्ममुपेयुषः । अभिजग्मुर्बहून् देशान् सरितः
सागरांस्तथा ॥ ३० ॥ युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम् ।
अर्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमम् ॥ ३१ ॥ पृष्ठतस्तु
वरारोहा श्यामा पद्मदलेक्षणा । द्रौपदी योषितां श्रेष्ठा ययौ
भरतसत्तम ॥ ३२ ॥ श्वा चैवानुययावेकः प्रस्थितान् पाण्डवान्
वनम् । क्रमेण ते ययुर्वीरा लौहित्यं सलिलार्णवम् ॥ ३३ ॥
गाण्डीवन्तु धनुर्दिव्यं न मुमोच धनञ्जयः । रत्नलोभान्महाराज
ते चाक्षय्ये महेषुधी ॥ ३४ ॥ अग्निं ते ददृशुस्तत्र स्थितं शैल-
मिवाग्रतः । मार्गमावृत्य तिष्ठन्तं साक्षात् पुरुषविग्रहम् ॥ ३५ ॥
ततो देवः स सप्तार्च्चिः पाण्डवानिदमब्रवीत् । भो भोः पाण्डुसुता
वीराः पावकं मां निबोधत ॥ ३६ ॥ युधिष्ठिर महाबाहो भीम-
सेन परन्तप । अर्जुनाश्विसुतौ वीरौ निबोधत वचो मम ॥ ३७ ॥
अहमग्निः कुरुश्रेष्ठा मया दग्धञ्च खाण्डवम् । अर्जुनस्य प्रभावेण
तथा नारायणस्य च ॥ ३८ ॥ अयं वः फाल्गुनो भ्राता गाण्डीवं
परमायुधम् । परित्यज्य वने यातु नानेनार्थोऽस्ति कश्चन ॥ ३९ ॥
चक्ररत्नन्तु यत् कृष्णे स्थितमासीन्महात्मनि । गतं तच्च पुनर्हस्ते
कालेनैष्यति तस्य ह ॥ ४० ॥ वरुणादाहृतं पूर्वं मयैतत् पार्थ-
कारणात् । गाण्डीवं धनुषां श्रेष्ठं वरुणायैव दीयताम् ॥ ४१ ॥
ततस्ते भ्रातरः सर्व्वे धनञ्जयमचोदयन् । स जले प्राक्षिपच्चैतत्
तथाक्षय्ये महेषुधी ॥ ४२ ॥ ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत ।
ययुश्च पाण्डवा वीरास्ततस्ते दक्षिणामुखाः ॥ ४३ ॥ ततस्ते तूत्त-
रेणैव तीरेण लवणाम्भसः । जग्मुर्भरतशार्दूल दिशं दक्षिण-
पश्चिमाम् ॥ ४४ ॥ ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते ।
ददृशुर्द्वारकाञ्चापि सागरेण परिप्लुताम् ॥ ४५ ॥ उदीचीं पुन-

रावृत्य ययुर्भरतसत्तमाः। प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योग-धर्म्मिणः॥ ४६॥

इति महाप्रस्थानिकपर्व्वणि प्रथमोऽध्यायः॥ १॥

---

वैशम्पायन उवाच। ततस्ते नियतात्मान उदीचीं दिश-मास्थिताः। ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम्॥ १॥ तञ्चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम्। अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम्॥ २॥ तेषान्तु गच्छतां शीघ्रं सर्व्वेषां योग-धर्म्मिणाम्। याज्ञसेनी भ्रष्टयोगा निपपात महीतले॥ ३॥ तान्तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः। उवाच धर्म्मराजानं याज्ञसेनीमवेक्ष्य ह॥ ४॥ नाधर्म्मश्चरितः कश्चिद्राजपुत्र्या पर-न्तप। कारणं किन्नु तद्ब्रूहि यत् कृष्णा पतिता भुवि॥ ५॥

युधिष्ठिर उवाच। पक्षपातो महानस्या विशेषेण धनञ्जये। तस्यैतत् फलमद्यैषा भुङ्क्ते पुरुषसत्तम॥ ६॥

वैशम्पायन उवाच। एवमुक्त्वानवेक्ष्यैनां ययौ भरतसत्तमः। समाधाय मनो धीमान् धर्म्मात्मा पुरुषर्षभः॥ ७॥ सहदेवस्ततो विद्वान् निपपात महीतले। तञ्चापि पतितं दृष्ट्वा भीमो राजान-मब्रवीत्॥ ८॥ योऽयमस्मासु सर्व्वेषु शुश्रूषुरनहङ्कृतः। सोऽयं माद्रवतीपुत्रः कस्मान्निपतितो भुवि॥ ९॥

युधिष्ठिर उवाच। आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कञ्चन। तेन दोषेण पतितस्तस्मादेष नृपात्मजः॥ १०॥

वैशम्पायन उवाच। इत्युक्त्वा तं समुत्सृज्य सहदेवं ययौ तदा। भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः॥ ११॥ कृष्णां निपतितां दृष्ट्वा सहदेवञ्च पाण्डवम्। आर्त्तो बन्धुप्रियः शूरो नकुलो निपपात ह॥ १२॥ तस्मिन्निपतिते वीरे नकुले चारु-

दर्शने। पुनरेव तदा भीमो राजानमिदमब्रवीत् ॥ १३ ॥ योऽयमच्वतधर्मात्मा भ्राता वचनकारकः। रूपेणाप्रतिमो लोके नकुलः पतितो भुवि ॥ १४ ॥ इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः। नकुलं प्रति धर्मात्मा सर्वबुद्धिमताम्वरः ॥ १५ ॥ रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम्। अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम् ॥ १६ ॥ नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर। यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते ॥ १७ ॥ तांस्तु प्रपतितान् दृष्ट्वा पाण्डवः श्वेतवाहनः। पपात शोकसन्तप्तस्ततोऽनु परवीरहा ॥१८॥ तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि। म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् ॥ १९ ॥ अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः। अथ कस्य विकारोऽयं येनायं पतितो भुवि ॥ २० ॥

युधिष्ठिर उवाच। एकाह्ना निर्द्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत्। न च तत् कृतवानेष शूरमानी ततोऽपतत् ॥ २१ ॥ अवमेने धनुर्ग्राहानेष सर्वांश्च फाल्गुनः। तथा चैतन्न तु तथा कर्त्तव्यं भूमिमिच्छता ॥ २२ ॥

वैशम्पायन उवाच। इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह। पतितश्चाब्रवीद्भीमो धर्म्मराजं युधिष्ठिरम् ॥ २३ ॥ भो भो राजन्नवेचस्व पतितोऽहं प्रियस्तव। किं निमित्तञ्च पतनं ब्रूहि मे यदि वेत्थ ह ॥ २४ ॥

युधिष्ठिर उवाच। अतिभुक्तञ्च भवता प्राणेन तु विकत्थसे। अनवेच्य परं पार्थ तेनासि पतितः चितौ ॥ २५ ॥ इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन्। श्वाप्येकोऽनुययौ यस्ते बहुशः कीर्त्तितो मया ॥ २६ ॥

इति महाप्रस्थानिकपर्वणि द्रौपद्यादिपतने
द्वितीयोऽध्यायः ॥ २ ॥

वैशम्पायन उवाच। ततः सन्नादयन् शक्रो दिवं भूमिञ्च सर्वशः। रथेनोपाययौ पार्थमारोहेत्यब्रवीच्च तम् ॥ १ ॥ स भ्रातॄन् पतितान् दृष्ट्वा धर्मराजो युधिष्ठिरः। अब्रवीच्छोक-सन्तप्तः सहस्राक्षमिदं वचः ॥ २ ॥ भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह। न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ॥ ३ ॥ सुकुमारी सुखार्हा च राजपुत्री पुरन्दर। साऽस्माभिः सह गच्छेत तद्भवाननुमन्यताम् ॥ ४ ॥

शक्र उवाच। भ्रातॄन् द्रक्ष्यसि स्वर्गे त्वमग्रतस्त्रिदिवं गतान्। कृष्णया सहितान् सर्वान्मा शुचो भरतर्षभ ॥५॥ निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ। अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥६॥

युधिष्ठिर उवाच। अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह। स गच्छेत मया सार्द्धमानृशंस्या हि मे मतिः ॥ ७ ॥

शक्र उवाच। अमर्त्त्यत्वं मत्समत्वञ्च राजन् श्रियञ्च कृत्स्नां महतीञ्चैव सिद्धिम्। संप्राप्तोऽद्य स्वर्गसुखानि च त्वं त्यज श्वानं नात्र नृशंसमस्ति ॥ ८ ॥

युधिष्ठिर उवाच। अनार्य्यमार्य्येण सहस्रनेत्र शक्यं कर्त्तुं दुष्करमेतदार्य्य। मा मे श्रिया सङ्गमनं तथास्तु यस्याः कृते भक्तजनं त्यजेयम् ॥ ९ ॥

इन्द्र उवाच। स्वर्गे लोके श्ववतां नास्ति धिष्ण्यमिष्टापूर्त्तं क्रोधवशा हरन्ति। ततो विचार्य्य क्रियतां धर्मराज त्यज श्वानं नात्र नृशंसमस्ति ॥ १० ॥

युधिष्ठिर उवाच। भक्तत्यागं प्राहुरनन्तपापं तुल्यं लोके ब्रह्म वध्याकृतेन। तस्मान्नाहं जातु कथञ्चनाद्य त्यक्ष्याम्येनं स्वसुखार्थं महेन्द्र ॥ ११ ॥ भीतं भक्तं नान्यदस्तीति चार्त्तं प्राप्तं क्षीणं रक्षणे प्राणलिप्सुम्। प्राणत्यागादप्यहं नैव मोक्तुं यतेयं वै नित्यमेतद्व्रतं मे ॥ १२ ॥

इन्द्र उवाच । शुना दृष्टं क्रोधवशा हरन्ति यद्दत्तमिष्टं विवृतमथो हुतञ्च । तस्मात् शुनस्त्यागमिमं कुरुष्व शुनस्त्यागात् प्राप्स्यसे देवलोकम् ॥ १३ ॥ त्यक्त्वा भ्रातॄन् दयिताञ्चापि कृष्णां प्राप्तो लोकः कर्म्मणा स्वेन वीर । श्वानञ्चैनं न त्यजसे कथन्तु त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ १४ ॥

युधिष्ठिर उवाच । न विद्यते सन्धिरथापि विग्रहो मृतैर्म्मर्त्यैरिति लोकेषु निष्ठा । न ते मया जीवयितुं हि शक्यास्तस्त्यागस्तेषु कृतो न जीवताम् ॥ १५ ॥ भीतिप्रदानं शरणागतस्य स्त्रिया वधो ब्राह्मणस्वापहारः । मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समो मतो मे ॥ १६ ॥

वैशम्पायन उवाच । तद्धर्म्मराजस्य वचो निशम्य धर्म्मस्वरूपी भगवानुवाच । युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ १७ ॥

धर्म्म उवाच । अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया । अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ १८ ॥ पुरा द्वैतवने चासि मया पुत्र परीक्षितः । पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः ॥ १९ ॥ भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ । मात्रोः साम्यमभीप्सन् वै नकुलं जीवमिच्छसि ॥ २० ॥ अयं श्वा भक्त इत्येव त्यक्तो देवरथस्त्वया । तस्मात् स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिप ॥२१॥ अतस्तवाक्षया लोकाः स्वशरीरेण भारत । प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् ॥ २२ ॥

वैशम्पायन उवाच । ततो धर्म्मश्च शक्रश्च मरुतश्चाश्विनावपि । देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ॥ २३ ॥ प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः । सर्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्म्मिणः ॥ २४ ॥ स तं रथं समास्थाय राजा कुरुकुलोद्वहः । ऊर्द्ध्वमाचक्रमे शीघ्रं तेजसावृत्य रोदसी ॥ २५ ॥ ततो देवनिका-

यस्थो नारदः सर्वलोकवित्। उवाचोच्चैस्तदा वाक्यं वृहद्वादी वृहत्तपाः॥ २६॥ येऽपि राजर्षयः सर्वे ते चापि समुपस्थिताः। कीर्त्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति॥ २७॥ लोकानावृत्य यशसा तेजसा वृत्तसम्पदा। स्वशरीरेण संप्राप्तं नान्यं शुश्रुम पाण्डवात्॥ २८॥ नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत्। देवानामन्त्र्य धर्मात्मा स्वपक्षांश्चैव पार्थिवान्॥ २९॥ शुभं वा यदि वा पापं भ्रातृणां स्थानमद्य मे। तदेव प्राप्तुमिच्छामि लोकानन्यान्न कामये॥ ३०॥ राज्ञस्तु वचनं श्रुत्वा देवराजः पुरन्दरः। आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम्॥ ३१॥ स्थानेऽस्मिन् वस राजेन्द्र कर्मभिर्निर्ज्जितैः शुभैः। किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि॥ ३२॥ सिद्धिं प्राप्तोऽसि परमां यथा नान्यः पुमान् क्वचित्। नैव ते भ्रातरः स्थानं संप्राप्ताः कुरुनन्दन॥ ३३॥ अद्यापि मानुषो भावः स्पृशते त्वां नराधिप। स्वर्गोऽयं पश्य देवर्षीन् सिद्धांश्च त्रिदिवालयान्॥ ३४॥ युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरम्। पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत्॥ ३५॥ तैर्विना नोत्सहे वस्तुमिह दैत्यनिवर्हण। गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः॥ ३६॥ यत्र सा वृहती श्यामा बुद्धिसत्त्वगुणान्विता। द्रौपदी योषितां श्रेष्ठा यत्र चैव गता मम॥ ३७॥

इति महाप्रस्थानिकपर्व्वणि युधिष्ठिरस्वर्गारोहे तृतीयोऽध्यायः॥ ३॥

---

समाप्तञ्चेदं महाप्रस्थानिकपर्व॥

---

# श्रीमहाभारतम्।

अथ स्वर्गारोहणिकपर्व ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच । स्वर्गं त्रिपिष्टपं प्राप्य मम पूर्वं पिता-
महाः । पाण्डवा धार्त्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ १ ॥
एतदिच्छाम्यहं श्रोतुं सर्वविच्चासि मे मतः । महर्षिणाभ्यनुज्ञातो
व्यासेनाद्भुतकर्म्मणा ॥ २ ॥

वैशम्पायन उवाच । स्वर्गं त्रिविष्टपं प्राप्य तव पूर्वपितामहाः ।
युधिष्ठिरप्रभृतयो यदकुर्वत तत् शृणु ॥ ३ ॥ स्वर्गं त्रिपिष्टपं प्राप्य
धर्म्मराजो युधिष्ठिरः । दुर्य्योधनं श्रिया जुष्टं ददर्शासीनमासने
॥ ४ ॥ भ्राजमानमिवादित्यं वीरलक्ष्म्याभिसंवृतम् । देवैर्भ्राजि-
ष्णुभिः साध्यैः सहितं पुण्यकर्म्मभिः ॥ ५ ॥ ततो युधिष्ठिरो दृष्ट्वा
दुर्य्योधनममर्षितः । सहसा सन्निवृत्तोऽभूत् श्रियं दृष्ट्वा सुयोधने
॥ ६ ॥ ब्रुवन्नुच्चैर्वचस्तान् वै नाहं दुर्य्योधनेन वै । सहितः कामये
लोकान् लुब्धेनादीर्घदर्शिना ॥ ७ ॥ यत्कृते पृथिवी सर्वा सुहृदो
बान्धवास्तथा । हतास्माभिः प्रसह्याजौ क्लिष्टैः पूर्वं महावने ॥ ८ ॥
द्रौपदी च सभामध्ये पाञ्चाली धर्म्मचारिणी । पर्य्याकृष्टानवद्याङ्गी
पत्नी नो गुरुसन्निधौ ॥ ९ ॥ अस्ति देवा न मे कामः सुयोधन-
मुदीक्षितुम् । तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम ॥ १० ॥
नैवमित्यब्रवीत्तन्तु नारदः प्रहसन्निव । स्वर्गे निवासे राजेन्द्र

Swargarohanika parva (18)

विरुद्धश्चापि नश्यति॥ ११॥ युधिष्ठिर महाबाहो मैवं वोचः कथञ्चन। दुर्य्योधनं प्रतिनृपं शृणु चेदं वचो मम॥ १२॥ एष दुर्य्योधनो राजा पूज्यते त्रिदशैः सह। सद्भिश्च राजप्रवरैर्य इमे स्वर्गवासिनः॥ १३॥ वीरलोकगतिं प्राप्तो युद्धे हुत्वात्मनस्तनुम्। यूयं सर्व्वे सुरसमाः सदैवानेन हिंसिताः॥ १४॥ स एष क्षत्रधर्म्मेण स्थानमेतदवाप्तवान्। भये महति योऽभीतो बभूव पृथिवीपतिः॥ १५॥ न तन्मनसि कर्त्तव्यं पुत्र यत् द्यूतकारितम्। द्रौपद्याश्च परिक्लेशं न चिन्तयितुमर्हसि॥ १६॥ ये चान्येऽपि परिक्लेशा युष्माकं ज्ञातिकारिताः। संग्रामेष्वथ वान्यत्र न तान् संस्मर्त्तुमर्हसि॥ १७॥ समागच्छ यथान्यायं राज्ञा दुर्य्योधनेन वै। स्वर्गोऽयं नेह वैराणि भवन्ति मनुजाधिप॥ १८॥ नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः। भ्रातॄन् पप्रच्छ मेधावी वाक्यमेतदुवाच ह॥ १९॥ यदि दुर्य्योधनस्यैते वीरलोकाः सनातनाः। अधर्म्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः॥ २०॥ यत्कृते पृथिवी नष्टा सहया सनरद्विपा। वयञ्च मन्युना दग्धा वैरं प्रतिचिकीर्षवः॥ २१॥ ये ते वीरा महात्मानो भ्रातरो मे महाव्रताः। सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः॥ २२॥ तेषामिदानीं के लोका द्रष्टुमिच्छामि तानहम्। कर्णञ्चैव महात्मानं कौन्तेयं सत्यसङ्गरम्॥ २३॥ धृष्टद्युम्नं सात्यकिञ्च धृष्टद्युम्नस्य चात्मजान्। ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्म्मेण पार्थिवाः॥ २४॥ क्व नु ते पार्थिवा ब्रह्मन् नैतान् पश्यामि नारद। विराटद्रुपदौ चैव धृष्टकेतुमुखांश्च तान्॥ २५॥ शिखण्डिनन्तु पाञ्चाल्यं द्रौपदेयांश्च सर्व्वशः। अभिमन्युञ्च दुर्द्धर्षं द्रष्टुमिच्छामि नारद॥ २६॥

इति स्वर्गारोहणिकपर्व्वणि प्रथमोऽध्यायः॥ १॥

---

युधिष्ठिर उवाच । नेह पश्यामि विबुधा राधेयममितौजसम् ।
भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ ॥ १ ॥ जुहुवुर्ये शरीराणि रणवह्नौ महारथाः । राजानो राजपुत्राश्च ये मदर्थे हता रणे ॥ २ ॥ क्व ते महारथाः सर्वे शार्दूलसमविक्रमाः । तैरप्ययं जितो लोकः कच्चित् पुरुषसत्तमैः ॥ ३ ॥ यदि लोकानिमान् प्राप्तास्ते च सर्वे महारथाः । स्थितं वित्त हि मां देवाः सहितं तैर्महात्मभिः ॥ ४ ॥ कच्चिन्न तैरवाप्तोऽयं नृपैर्लोकोऽव्ययः शुभः । न तैरहं विना वत्स्ये भ्रातृभिर्ज्ञातिभिस्तथा ॥ ५ ॥ मातुर्हि वचनं श्रुत्वा तदा सलिलकर्म्मणि । कर्णस्य क्रियतां तोयमिति तप्यामि तेन वै ॥ ६ ॥ इदञ्च परितप्यामि पुनः पुनरहं सुराः । यन्मातुः सदृशौ पादौ तस्याहममितात्मनः ॥ ७ ॥ दृष्ट्वैव तौ नानुगतः कर्णं परबलार्द्दनम् । न ह्यस्मान् कर्णसहितान् जयेत् शक्रोऽपि संयुगे ॥ ८ ॥ तमहं यत्र तत्रस्थं द्रष्टुमिच्छामि सूर्य्यजम् । अविज्ञातो मया योऽसौ घातितः सव्यसाचिना ॥ ९ ॥ भीमञ्च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम । अर्जुनञ्चेन्द्रसङ्काशं यमौ चैव यमोपमौ ॥ १० ॥ द्रष्टुमिच्छामि ताञ्चाहं पाञ्चालीं धर्म्मचारिणीम् । न चेह स्थातुमिच्छामि सत्यमेव ब्रवीमि वः ॥ ११ ॥ किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः । यत्र ते मम स स्वर्गो नायं स्वर्गो मतो मम ॥ १२ ॥

देवा ऊचुः । यदि वै तत्र ते श्रद्धा गम्यतां पुत्र मा चिरम् । प्रिये हि तव वर्त्तामो देवराजस्य शासनात् ॥ १३ ॥

वैशम्पायन उवाच । इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन् । युधिष्ठिरस्य सुहृदो दर्शयेति परन्तप ॥ १४ ॥ ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः । सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः ॥ १५ ॥ अग्रतो देवदूतस्तु ययौ राजा च पृष्ठतः । पन्थानमशुभं दुर्गं सेवितं पापकर्म्मभिः ॥ १६ ॥ तमसा संवृतं घोरं

केशशैवलशाद्वलम् । युक्तं पापकृतां गन्धैर्मांसशोणितकर्द्दमम् ॥१७॥ दंशोत्पातकभल्लूकमक्षिकामशकावृतम् । इतश्चेतश्च कुणपैः समन्तात् परिवारितम् ॥ १८ ॥ अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम् । ज्वलनेन प्रदीप्तेन समन्तात् परिवेष्टितम् ॥ १९ ॥ अयोमुखैश्च काकाद्यैर्गृध्रैश्च समभिद्रुतम् । सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम् ॥ २० ॥ मेदोरुधिरयुक्तैश्च छिन्नबाहूरुपाणिभिः । निकृत्तोदरपादैश्च तत्र तत्र प्रवेरितैः ॥ २१ ॥ स तत् कुणपदुर्गन्धमशिवं लोमहर्षणम् । जगाम राजा धर्मात्मा मध्ये बहु विचिन्तयन् ॥ २२ ॥ ददर्शोष्णोदकैः कीर्णां नदीञ्चापि सुदुर्गमाम् । असिपत्रवनञ्चैव निशितक्षुरसंवृतम् ॥ २३ ॥ करम्भवालुकां तप्तामायसीश्च शिलाः पृथक् । लोहकुम्भांश्च तैलस्य क्वाथ्यमानाः समन्ततः ॥ २४ ॥ कूटशाल्मलिकञ्चापि दुःस्पर्शं तीक्ष्णकण्टकम् । ददर्श चापि कौन्तेयो यातनाः पापकर्मिणाम् ॥ २५॥ स तं दुर्गं समालक्ष्य देवदूतमुवाच ह । कियदध्वानमस्माभिर्गन्तव्यमिममीदृशम् ॥ २६ ॥ क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि । देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् ॥ २७ ॥ स सन्निववृते श्रुत्वा धर्मराजस्य भाषितम् । देवदूतोऽब्रवीच्चैनमेतावद्गमनं तव ॥ २८ ॥ निवर्त्तितव्यो हि मया तथास्म्युक्तो दिवौकसैः । यदि श्रान्तोऽसि राजेन्द्र त्वमथागन्तुमर्हसि ॥ २९ ॥ युधिष्ठिरस्तु निर्विस्रस्तेन गन्धेन मूर्च्छितः । निवर्त्तने धृतमनाः पर्य्यावर्त्तत भारत ॥ ३० ॥ स सन्निवृत्तो धर्मात्मा दुःखशोकसमाहतः । शुश्राव तत्र वदतां दीना वाचः समन्ततः ॥ ३१ ॥ भो भो धर्म्मज राजर्षे पुण्याभिजन पाण्डव । अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्त्तकम् ॥ ३२ ॥ आयाति त्वयि दुर्द्धर्षे वाति पुण्यः समीरणः । तव गन्धानुगतस्तात येनास्मान् सुखमागमत् ॥ ३३ ॥ ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ । सुखमासादयिष्यामस्त्वां

दृष्ट्वा राजसत्तम ॥ ३४ ॥ संतिष्ठस्व महाबाहो मुहूर्त्तमपि भारत। त्वयि तिष्ठति कौरव्य यातनास्मान्न बाधते ॥ ३५ ॥ एवं बहुविधा वाचः कृपणा वेदनावताम्। तस्मिन् देशे च शुश्राव समन्तात् वदतां नृप ॥ ३६ ॥ तेषान्तु वचनं श्रुत्वा दयावान् दीनभाषिणाम्। अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ॥ ३७ ॥ स ता गिरः पुरस्ताद्वै श्रुतपूर्वाः पुनः पुनः। ग्लानानां दुःखितानाञ्च नाभ्यजानत पाण्डवः ॥ ३८ ॥ अबुध्यमानस्ता वाचो धर्म्मपुत्रो युधिष्ठिरः। उवाच के भवन्तो वै किमर्थं चेह तिष्ठत ॥ ३९ ॥ इत्युक्तास्ते ततः सर्व्वे समन्तादवभाषिरे। कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ॥ ४० ॥ नकुलः सहदेवश्च धृष्टद्युम्नोऽहमित्युत। द्रौपदी द्रौपदेयाश्च इत्येवन्ते विचुक्रुशुः ॥ ४१ ॥ ता वाचः स तदा श्रुत्वा तद्देशसदृशीर्नृप। ततो विममृषे राजा किं न्विदं दैवकारितम् ॥ ४२ ॥ किन्नु तत् कलुषं कर्म्म कृतमेभिर्महात्मभिः। कर्णेन द्रौपदेयैर्व्वा पाञ्चाल्या वा सुमध्यया ॥ ४३ ॥ य इमे पापगन्धेऽस्मिन् देशे सन्ति सुदारुणे। नाहं जानामि सर्व्वेषां दुष्कृतं पुण्यकर्म्मणाम् ॥ ४४ ॥ किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः। तथा श्रिया युतः पापैः सह सर्व्वैः पदानुगैः ॥ ४५ ॥ महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः। कस्येदानीं विकारोऽयं य इमे नरकं गताः ॥ ४६ ॥ सर्व्वधर्म्मविदः शूराः सत्यागमपरायणाः। क्षत्रधर्म्मपराः सन्तो यज्वानो भूरिदक्षिणाः ॥ ४७ ॥ किन्नु सुप्तोऽस्मि जागर्म्मि चेतयामि न चेतये। अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥ ४८ ॥ एवं बहुविधं राजा विममर्ष युधिष्ठिरः। दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ॥४९॥ क्रोधमाहारयच्चैव तीव्रं धर्म्मसुतो नृपः। देवांश्च गर्हयामास धर्म्मञ्चैव युधिष्ठिरः ॥ ५० ॥ स तीव्रगन्धसन्तप्तो देवदूतमुवाच ह। गम्यतां तत्र येषां त्वं दूतस्तेषामुपान्तिकम् ॥ ५१ ॥ न ह्यहं तत्र

यास्यामि स्थितोऽस्मीति निवेद्यताम् । मत्संश्रयादिमे दूताः सुखिनो भ्रातरो हि मे ॥ ५२ ॥ इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता । जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ॥ ५३ ॥ निवेदयामास च तद्धर्मराजचिकीर्षितम् । यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ५४ ॥

इति स्वर्गारोहणिकपर्वणि युधिष्ठिरस्य नरकदर्शने द्वितीयोऽध्यायः ॥ २ ॥

---

वैशम्पायन उवाच । स्थिते मुहूर्त्तं पार्थे तु धर्मराजे युधिष्ठिरे । आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ॥ १ ॥ स च विग्रहवान् धर्मो राजानं प्रसमीक्षितुम् । तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ॥ २ ॥ तेषु भासुरदेहेषु पुण्याभिजनकर्मसु । समागतेषु देवेषु व्यगमत्तत्तमो नृप ॥ ३ ॥ नादृश्यन्त च तास्तत्र यातनाः पापकर्मिणाम् । नदी वैतरणी चैव कूटशाल्मलिना सह ॥ ४ ॥ लोहकुम्भ्यः शिलाश्चैव नादृश्यन्त भयानकाः । विकृतानि शरीराणि यानि तत्र समन्ततः । ददर्श राजा कौरव्यस्तान्यदृश्यानि चाभवन् ॥ ५ ॥ ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः । ववौ देवसमीपस्थः शीतलोऽतीव भारत ॥ ६ ॥ मरुतः सह शक्रेण वसवश्चाश्विनौ सह । साध्या रुद्रास्तथादित्या ये चान्येऽपि दिवौकसः ॥ ७ ॥ सर्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः । यत्र राजा महातेजा धर्मपुत्रः स्थितोऽभवत् ॥ ८ ॥ ततः शक्रः सुरपतिः श्रिया परमया युतः । युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ॥ ९ ॥ युधिष्ठिर महाबाहो प्रीता देवगणास्तव । एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ॥ १० ॥ सिद्धिः प्राप्ता महाबाहो लोकाश्चाप्यक्षयास्तव । न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ॥ ११ ॥ अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ।

शुभानामशुभानाञ्च द्वौ राशी पुरुषर्षभ ॥ १२ ॥ यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेव सः । पूर्वं नरकभाग्यस्तु पश्चात् स्वर्गमुपैति सः ॥ १३ ॥ भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते । तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ १४ ॥ व्याजेन हि त्वया द्रोण उपाचीर्णः सुतं प्रति । व्याजेनैव ततो राजन् दर्शितो नरकस्तव ॥१५॥ यथैव त्वं तथा भीमस्तथा पार्थौ यमौ तथा । द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ॥ १६ ॥ आगच्छ नरशार्दूल मुक्तास्ते चैव कल्मषात् ॥ १७ ॥ स्वपक्षाश्चैव ये तुभ्यं पार्थिवा निहता रणे । सर्व्वे स्वर्गमनुप्राप्तास्तान् पश्य भरतर्षभ ॥ १८ ॥ कर्णश्चैव महेष्वासः सर्व्वशस्त्रभृतांवरः । स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥ १९ ॥ तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो । स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ ॥ २० ॥ भ्रातॄंश्चान्यांस्तथा पश्य स्वपक्षांश्चैव पार्थिवान् । स्वं स्वं स्थानमनुप्राप्तान् व्येतु ते मनसो ज्वरः ॥ २१ ॥ कृच्छ्रं पूर्वं चानुभूय इतः प्रभृति कौरव । विहरस्व मया सार्द्धं गतशोको निरामयः ॥ २२ ॥ कर्म्मणां तात पुण्यानां जितानां तपसा स्वयम् । दानानाञ्च महाबाहो फलं प्राप्नुहि पार्थिव ॥ २३ ॥ अद्य त्वां देवगन्धर्व्वा दिव्याश्चाप्सरसो दिवि । उपसेवन्तु कल्याणं विरजोऽम्बरभूषणाः ॥ २४ ॥ राजसूयजितान् लोकान् स्वयमेवासि ऋद्धितान् । आप्नुहि त्वं महाबाहो तपसश्च महाफलम् ॥ २५ ॥ उपर्य्युपरि राज्ञां हि तव लोका युधिष्ठिर । हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि ॥ २६ ॥ मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः । दौसन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि ॥ २७ ॥ एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी । आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ २८ ॥ अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति । गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ २९ ॥ एवं ब्रुवति देवेन्द्रे कौर-

वेन्द्र युधिष्ठिरम्। धर्मो विग्रहवान् साक्षात् उवाच सुतमात्मनः ॥ ३० ॥ भो भो राजन् महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक। मद्भक्त्या सत्यवाक्येन क्षमया च दमेन च ॥ ३१ ॥ एषा तृतीया जिज्ञासा तव राजन् कृता मया। न शक्यसे चालयितुं स्वभावात् पार्थ-हेतुतः ॥ ३२ ॥ पूर्वं परीक्षितो हि त्वं प्रश्नात् द्वैतवने मया। अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ ३३ ॥ सोदर्य्येषु विनष्टेषु द्रौपद्यास्तत्र भारत। श्वरूपधारिणा पुत्र पुनस्त्वं मे परीक्षितः ॥ ३४ ॥ इदं तृतीयं भ्रातृणामर्थे यत् स्थातुमिच्छसि। विशुद्धोऽसि महाभाग सुखी विगतकल्मषः ॥ ३५ ॥ न च ते भ्रातरः पार्थ नरकार्हा विशाम्पते। मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ ३६ ॥ अवश्यं नरकास्तात द्रष्टव्याः सर्वराजभिः। ततस्त्वया प्राप्तमिदं मुहूर्त्तं दुःखमुत्तमम् ॥ ३७ ॥ न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ। कर्णो वा सत्यवाक् शूरो नरकार्हाश्चिरं नृप ॥ ३८ ॥ न कृष्णा राजपुत्री च नरकार्हा युधिष्ठिर। एह्येहि भरतश्रेष्ठ पश्य गङ्गां त्रिलोकगाम् ॥ ३९ ॥ एवमुक्तः स राजर्षिस्तव पूर्वपितामहः। जगाम सह धर्मेण सर्वैश्च त्रिदिवालयैः ॥ ४० ॥ गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम्। अवगाह्य ततो राजा तनुं तत्याज मानुषीम् ॥ ४१ ॥ ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः। निर्वैरो गतसन्तापो जले तस्मिन् समाप्लुतः ॥ ४२ ॥ ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः। धर्मेण सहितो धीमांस्तूयमानो महर्षिभिः ॥ ४३ ॥ यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः। पाण्डवा धार्त्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ॥ ४४ ॥

इति स्वर्गारोहणिकपर्वणि युधिष्ठिरतनुत्यागे तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच । ततो युधिष्ठिरो राजा देवैः सर्षिमरु-
द्गणैः । स्तूयमानो ययौ तत्र यत्र ते कुरुपुङ्गवाः ॥ १ ॥ ददर्श
तत्र गोविन्दं ब्राह्मेण वपुषान्वितम् । तेनैव दृष्टपूर्व्वेण सादृश्येनैव
सूचितम् ॥ २ ॥ दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम् । चक्र-
प्रभृतिभिर्घोरैर्द्दिव्यैः पुरुषविग्रहैः ॥ ३ ॥ उपास्यमानं वीरेण
फाल्गुनेन सुवर्च्चसा । तथा स्वरूपं कौन्तेयो ददर्श मधुसूदनम्
॥ ४ ॥ तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरम् । यथावत्
प्रतिपेदाते पूजया देवपूजितौ ॥ ५ ॥ अपरस्मिन्नथोद्देशे कर्णं
शस्त्रभृतां वरम् । द्वादशादित्यसदृशं ददर्श कुरुनन्दनः ॥ ६ ॥
अथापरस्मिन्नुद्देशे मरुद्गणवृतं विभुम् । भीमसेनमथापश्यत्तेनैव
वपुषान्वितम् ॥ ७ ॥ वायोर्मूर्त्तिमतः पार्श्वे दिव्यमूर्त्तिसमन्वितम् ।
श्रिया परमया युक्तं सिद्धिं परमिकाङ्गतम् ॥ ८ ॥ अश्विनोऽस्तु
तथा स्थाने दीप्यमानौ स्वतेजसा । नकुलं सहदेवञ्च ददर्श कुरु-
नन्दनः ॥ ९ ॥ तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् ।
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्च्चसम् ॥ १० ॥ अथैनां सहसा
राजा प्रष्टुमैच्छद्युधिष्ठिरः । ततोऽस्य भगवानिन्द्रः कथयामास
देवराट् ॥ ११ ॥ श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता ।
अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर ॥ १२ ॥ रत्यर्थं भवतां
ह्येषा निर्मिता शूलपाणिना । द्रुपदस्य कुले जाता भवद्भिश्चोप-
जीविता ॥ १३ ॥ एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः ।
द्रौपद्यास्तनया राजन् युष्माकममितौजसः ॥ १४ ॥ पश्य गन्धर्व-
राजानं धृतराष्ट्रं मनीषिणम् । एनञ्च त्वं विजानीहि भ्रातरं
पूर्व्वजं पितुः ॥ १५ ॥ अयं ते पूर्व्वजो भ्राता कौन्तेयः पावकद्युतिः ।
सूर्य्यपुत्रोऽग्रजः श्रेष्ठो राधेयो इति विश्रुतः ॥ १६ ॥ आदित्यसदृशो
याति पश्यैनं पुरुषर्षभम् । साध्यानामथ देवानां विश्वेषां मरुता-
मपि ॥ १७॥ गणेषु पश्य राजेन्द्र वृष्ण्यन्धकमहारथान् । सात्यकि-

प्रमुखान् वीरान् भोजांश्चैव महाबलान् ॥ १८ ॥ सोमेन सहितं पश्य सौभद्रमपराजितम्। अभिमन्युं महेष्वासं निशाकरसमद्युतिम् ॥ १९ ॥ एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च सङ्गतः। विमानेन सदाभ्येति पिता तव ममान्तिकम् ॥ २० ॥ वसुभिः सहितं पश्य भीष्मं शान्तनवं नृपम्। द्रोणं वृहस्पतेः पार्श्वे गुरुमेनं निशामय ॥ २१ ॥ एते चान्ये महीपाला योधास्तव च पाण्डव। गन्धर्वसहिता यान्ति यक्षपुण्यजनैस्तथा ॥ २२ ॥ गुह्यकानां गतिञ्चापि केचित् प्राप्ता नराधिप। त्यक्त्वा देहं जितस्वर्गाः पुण्यवाग्बुद्धिकर्म्मभिः ॥ २३ ॥

इति स्वर्गारोहणिकपर्व्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

जनमेजय उवाच। भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः। विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ॥ १ ॥ धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित्। दुर्य्योधनसुताश्चैव शकुनिश्चैव सौवलः ॥ २ ॥ कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः। घटोत्कचादयश्चैव ये चान्ये नानुकीर्त्तिताः ॥ ३॥ ये चान्ये कीर्त्तिता वीरा राजानो दीप्तमूर्त्तयः। स्वर्गे कालं कियन्तन्ते तस्थुस्तदपि शंस मे ॥ ४ ॥ आहोस्वित् शाश्वतं स्थानं तेषां तत्र द्विजोत्तम। अन्ते वा कर्म्मणां कान्ते गतिं प्राप्ता नरर्षभाः ॥ ५ ॥ एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं द्विजोत्तम। तपसा हि प्रदीप्तेन सर्व्वं त्वमनुपश्यसि ॥ ६ ॥

सौतिरुवाच। इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना। व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे ॥ ७ ॥

वैशम्पायन उवाच। न शक्यं कर्म्मणामन्ते सर्व्वेण मनुजाधिप। प्रकृतिं किन्नु सम्पत्ते पृच्छैषा संप्रयोजिता ॥ ८ ॥ शृणु

गुह्यमिदं राजन् देवानां भरतर्षभ । यदुवाच महातेजा दिव्य-
चक्षुः प्रतापवान् ॥ ९ ॥ मुनिः पुराणः कौरव्य पाराशर्य्यो महा-
व्रतः । अगाधबुद्धिः सर्वज्ञो गतिज्ञः सर्वकर्म्मणाम् ॥ १० ॥ वसू-
नेव महातेजा भीष्मः प्राप महाद्युतिः । अष्टावेव हि दृश्यन्ते
वसवो भरतर्षभ ॥ ११ ॥ बृहस्पतिं विवेशाथ द्रोणो ह्यङ्गिरसां-
वरम् । कृतवर्मा तु हार्द्दिक्यः प्रविवेश मरुद्गणान् ॥ १२ ॥ सनत्-
कुमारं प्रद्युम्नः प्रविवेश यथागतम् । धृतराष्ट्रो धनेशस्य लोकान्
प्राप दुरासदान् ॥ १३ ॥ धृतराष्ट्रेण सहिता गान्धारी च यश-
स्विनी । पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ ॥ १४ ॥ विराट-
द्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः । निशठाक्रूरशाम्बाश्च भानुः
कम्पो विदूरथः ॥ १५ ॥ भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः ।
कंसश्चैवोग्रसेनश्च वसुदेवस्तथैव च ॥ १६ ॥ उत्तरश्च सह भ्रात्रा
शङ्खेन नरपुङ्गवः । विश्वेषां देवतानान्ते विविशुर्नरपुङ्गवाः ॥१७॥
वर्च्चा नाम महातेजाः सोमपुत्रः प्रतापवान् । सोऽभिमन्युर्नृसिंहस्य
फाल्गुनस्य सुतोऽभवत् ॥ १८ ॥ स युद्ध्वा क्षत्रधर्म्मेण यथा नान्यः
पुमान् क्वचित् । विवेश सोमं धर्म्मात्मा कर्म्मणोऽन्ते महारथः ॥१९॥
आविवेश रविं कर्णो निहतः पुरुषर्षभ । द्वापरं शकुनिः प्राप
धृष्टद्युम्नस्तु पावकम् ॥ २० ॥ धृतराष्ट्रात्मजाः सर्वे यातुधाना
बलोत्कटाः । ऋद्धिमन्तो महात्मानः शस्त्रपूता दिवं गताः ॥ २१ ॥
धर्म्ममेवाविशत् क्षत्ता राजा चैव युधिष्ठिरः । अनन्तो भगवान्
देवः प्रविवेश रसातलम् ॥ २२ ॥ पितामहनियोगाद्वै यो योगा-
द्गामधारयत् । यः स नारायणो नाम देवदेवः सनातनः ।
तस्यांशो वासुदेवस्तु कर्म्मणोऽन्ते विवेश ह ॥ २३ ॥ षोड़शस्त्री-
सहस्राणि वासुदेवपरिग्रहः । अमज्जंस्ताः सरस्वत्यां कालेन
जनमेजय ॥ २४ ॥ तत्र त्यक्त्वा शरीराणि दिवमारुरुहुः पुनः ।
ताश्चैवाप्सरसो भूत्वा वासुदेवमुपागमन् ॥ २५ ॥ हतास्तस्मि-

महायुद्धे ये वीरास्तु महारथाः। घटोत्कचादयश्चैव देवान् यक्षांश्च भेजिरे ॥ २६ ॥ दुर्य्योधनसहायाश्च राक्षसाः परिकीर्त्तिताः। प्राप्तास्ते क्रमशो राजन् सर्वं लोकाननुत्तमान् ॥ २७ ॥ भवनञ्च महेन्द्रस्य कुवेरस्य च धीमतः। वरुणस्य तथा लोकान् विविशुः पुरुषर्षभाः ॥ २८ ॥ एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते। कुरूणां चरितं कृत्स्नं पाण्डवानाञ्च भारत ॥ २९ ॥

सौतिरुवाच। एतत् श्रुत्वा द्विजश्रेष्ठाः स राजा जनमेजयः। विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ॥ ३० ॥ ततः समापयामासुः कर्म तत्तस्य याजकाः। आस्तीकश्चाभवत् प्रीतः परिमोक्ष्य भुजङ्गमान् ॥ ३१ ॥ ततो द्विजातीन् सर्वांस्तान् दक्षिणाभिरतोषयत्। पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ ३२ ॥ विसर्ज्जयित्वा विप्रांस्तान् राजापि जनमेजयः। ततस्तक्षशिलायाः स पुनरायाद्गजाह्वयम् ॥ ३३ ॥ एतत्ते सर्वमाख्यातं वैशम्पायनकीर्त्तितम्। व्यासाज्ञया समाख्यातं सर्पसत्रे नृपस्य हि ॥ ३४ ॥ पुण्योऽयमितिहासाख्यः पवित्रञ्चेदमुत्तमम्। कृष्णेन मुनिना विप्र निर्मितं सत्यवादिना ॥ ३५ ॥ सर्वज्ञेन विधिज्ञेन धर्मज्ञानवता सता। अतीन्द्रियेण शुचिना तपसा भावितात्मना ॥ ३६ ॥ ऐश्वर्य्ये वर्त्तता चैव साङ्ख्ययोगवता तथा। नैकतन्त्रविबुद्धेन दृष्ट्वा दिव्येन चक्षुषा ॥ ३७ ॥ कीर्त्तिं प्रथयता लोके पाण्डवानां महात्मनाम्। अन्येषां क्षत्रियाणाञ्च भूरिद्रविणतेजसाम् ॥ ३८ ॥ यश्चेदं श्रावयेद्विद्वान् सदा पर्वणि पर्वणि। धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय कल्पते ॥ ३९ ॥ कार्ष्णं वेदमिदं सर्वं शृणुयाद्यः समाहितः। ब्रह्महत्यादिपापानां कोटिस्तस्य विनश्यति ॥ ४० ॥ यश्चेदं श्रावयेत् श्राद्धे ब्राह्मणान् पादमन्ततः। अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥ ४१ ॥ अह्ना यदेनः कुरुते इन्द्रियैर्मनसापि वा। महाभारतमाख्याय पश्चात् सन्ध्यां प्रमुच्यते ॥ ४२ ॥ यद्रात्रौ

कुरुते पापं ब्राह्मणः स्त्रीगणैर्वृतः । महाभारतमाख्याय पूर्व्वां सन्ध्यां प्रमुच्यते ॥ ४३ ॥ भरतानां महज्जन्म तस्माद्भारतमुच्यते । महत्वाद्भारतत्वाच्च महाभारतमुच्यते ॥ ४४ ॥ निरुक्तमस्य यो वेद सर्व्वपापैः प्रमुच्यते । धर्म्मे चार्थे च कामे च मोक्षे च भरतर्षभ ॥ ४५ ॥ यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् । जयो नामेतिहासोऽयं श्रोतव्यो मोक्षमिच्छता ॥ ४६ ॥ ब्राह्मणेन च राज्ञा च गर्भिण्या चैव योषिता । स्वर्गकामो लभेत् स्वर्गं जयकामो लभेज्जयम् ॥ ४७ ॥ गर्भिणी लभते पुत्रं कन्यां वा बहुभागिनीम् । तनागतश्च मोक्षश्च कृष्णद्वैपायनः प्रभुः ॥ ४८ ॥ सन्दर्भं भारतस्यास्य कृतवान् धर्म्मकाम्यया । षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ॥ ४९ ॥ त्रिंशत्शतसहस्राणि देवलोके प्रतिष्ठितम् । पित्रे पञ्चदश ज्ञेयं यक्षलोके चतुर्द्दश ॥ ५० ॥ एकं शतसहस्रन्तु मानुषेषु प्रभाषितम् । नारदोऽश्रावयद्देवानसितो देवलः पितॄन् ॥ ५१ ॥ रक्षोयक्षाञ्छुको मर्त्त्यान् वैशम्पायन एव तु । इतिहासमिमं पुण्यं महार्थं वेदसम्मितम् ॥ ५२ ॥ व्यासोक्तं श्रूयते येन कृत्वा ब्राह्मणमग्रतः । स नरः सर्व्वकामांश्च कीर्त्तिं प्राप्येह शौनक ॥ ५३ ॥ गच्छेत् परमिकां सिद्धिमत्र मे नास्ति संशयः । भारताध्ययनात् पुण्यादपि पादमधीयतः ॥ ५४ ॥ श्रद्धया परया भक्त्या श्राव्यते चापि येन तु । श्रद्दधानस्य पूयन्ते सर्व्वपापान्यशेषतः ॥ ५५ ॥ महर्षिर्भगवान् व्यासः कृत्वेमां संहितां पुरा । श्लोकैश्चतुर्भिर्धर्म्मात्मा पुत्रमध्यापयत् शुकम् ॥ ५६ ॥ मातापितृसहस्राणि पुत्रदारशतानि च । संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ ५७ ॥ हर्षस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढ़माविशन्ति न पण्डितम् ॥ ५८ ॥ ऊर्द्ध्वबाहुर्विरौम्येष न च कश्चित् शृणोति मे । धर्म्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ५९ ॥ न जातु कामान्न भयान्न लोभाद्धर्म्मं

त्यजेज्जीवितस्यापि हेतोः । नित्यो धर्म्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ६० ॥ इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् । स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥६१॥ यथा समुद्रो भगवान् यथा च हिमवान् गिरिः । ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ॥ ६२ ॥ कार्ष्णं वेदागमं विद्वान् श्रावयित्वार्थमश्नुते । इमं भारतमाख्यानं यः पठेत् सुसमाहितः । स गच्छेत् परमां सिद्धिमिति मे नास्ति संशयः ॥६३॥ द्वैपायनोष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवञ्च । यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभिषेचनेन ॥ ६४ ॥

इति स्वर्गारोहणिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

जनमेजय उवाच । भगवन् केन विधिना श्रोतव्यं भारतं बुधैः । फलं किं के च देवाश्च पूज्या वै पारणेष्विह ॥ १ ॥ देयं समाप्ते भगवन् किञ्च पर्वणि पर्वणि । वाचकः कीदृशश्चात्र एष्टव्यस्तद्ब्रवीहि मे ॥ २ ॥

वैशम्पायन उवाच । शृणु राजन् विधिमिमं फलं यच्चापि भारत । श्रुताद्भवति राजेन्द्र यत्त्वं मामनुपृच्छसि ॥ ३ ॥ दिवि देवा महीपाल क्रीडार्थमवनिं गताः । कृत्वा कार्य्यमिदञ्चैव ततश्च पुनरागताः ॥ ४ ॥ हन्त यत्ते प्रवक्ष्यामि तच्छृणुष्व समासतः । ऋषीणां देवतानाञ्च सम्भवं वसुधातले ॥ ५ ॥ अत्र रुद्रास्तथा साध्या विश्वे देवाश्च शाश्वताः । आदित्याश्चाश्विनौ देवौ लोकपाला महर्षयः ॥ ६ ॥ गुह्यकाश्च सगन्धर्वा नागा विद्याधरास्तथा । सिद्धा धर्माः स्वयम्भूश्च मुनिभिः कात्यगोचरः ॥ ७ ॥ गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः । ग्रहाः सम्वत्सराश्चैव अयना ऋतवस्तथा ॥ ८ ॥ स्थावरं जङ्गमञ्चैव जगत् सर्वं सुरासुरम् ।

भारते भरतश्रेष्ठ एकस्थमिह दृश्यते ॥ ९ ॥ तेषां श्रुत्वा प्रतिष्ठानं नामकर्मानुकीर्त्तनात् । कृत्वापि पातकं घोरं सद्यो मुच्येत मानवः ॥ १० ॥ इतिहासमिमं श्रुत्वा यथावदनुपूर्व्वशः । संयतात्मा शुचिर्भूत्वा पारं गत्वा च भारते ॥ ११ ॥ तेषां श्राद्धानि देयानि श्रुत्वा भारत भारतम् । ब्राह्मणेभ्यो यथाशक्त्या भक्त्या च भरतर्षभ ॥ १२ ॥ महादानानि देयानि रत्नानि विविधानि च । गावः कांस्योपदोहाश्च कन्याश्चैव स्वलङ्कृताः ॥ १३ ॥ सर्व्वकामगुणोपेता यानानि विविधानि च । भवनानि विचित्राणि भूमिर्वासांसि काञ्चनम् ॥ १४ ॥ वाहनानि च देयानि हया मत्ताश्च वारणाः । शयनं शिविकाश्चैव स्यन्दनाश्च स्वलङ्कृताः ॥ १५ ॥ यद्यद्गृहे वरं किञ्चिद्यदस्ति महिमद्वसु । तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः ॥ १६ ॥ श्रद्धया परया दातुं क्रमशस्तस्य पारगः । शक्तितः सुमना हृष्टः शुश्रूषुरविकल्पकः ॥ १७ ॥ सत्यार्ज्जवरतो दान्तः शुचिः शौचसमन्वितः । श्रद्दधानो जितक्रोधो यथा सिध्यति तत् शृणु ॥ १८ ॥ शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः । संस्कृतः सर्व्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ॥ १९ ॥ रूपवान् सुभगो दान्तः सत्यवादी जितेन्द्रियः । दानमानग्रहीतश्च कार्य्यो भवति वाचकः ॥ २० ॥ अविलम्बमनायस्तमद्रुतं धीरमूर्ज्जितम् । असंसक्ताक्षरपदं स्वरभावसमन्वितम् ॥ २१ ॥ त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमीरितम् । वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः ॥ २२ ॥ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥ २३ ॥ ईदृशाद्वाचकात् राजन् श्रुत्वा भारत भारतम् । नियमस्थः शुचिः श्रोता शृण्वन् स फलमश्नुते ॥ २४ ॥ पारणं प्रथमं प्राप्य द्विजान् कामैश्च तर्पयेत् । अग्निष्टोमस्य यज्ञस्य फलं वै लभते नरः ॥ २५ ॥ अप्सरोगणसङ्कीर्णं विमानं लभते महत् । प्रहृष्टः स तु देवैश्च दिवं याति

समाहितः ॥ २६ ॥ द्वितीयं पारणं प्राप्य सोऽतिरात्रफलं लभेत्। सर्वं रत्नमयं दिव्यं विमानमधिरोहति ॥ २७ ॥ दिव्यमाल्याम्बरधरो दिव्यगन्धविभूषितः। दिव्यगन्धधरो नित्यं देवलोके महीयते ॥ २८ ॥ तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत्। वसत्यमरसङ्काशो वर्षाण्ययुतशो दिवि ॥ २९ ॥ चतुर्थे वाजपेयस्य पञ्चमे द्विगुणं फलम्। उदितादित्यसङ्काशं ज्वलन्तमनलोपमम् ॥ ३० ॥ विमानं विबुधैः सार्द्धमारुह्य दिवि गच्छति। वर्षायुतानि भवने शक्रस्य दिवि मोदते ॥ ३१ ॥ षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलम्। कैलासशिखराकारं वैदूर्य्यमणिवेदिकम् ॥ ३२॥ परिक्षिप्तञ्च बहुधा मणिविद्रुमभूषितम्। विमानं समधिष्ठाय कामगं साप्सरोगणम् ॥ ३३ ॥ सर्वान् लोकान् विचरते द्वितीय इव भास्करः। अष्टमे राजसूयस्य पारणे लभते फलम् ॥ ३४ ॥ चन्द्रोदयमिदं रम्यं विमानमधिरोहति। चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ॥ ३५ ॥ सेव्यमानं वरस्त्रीणां चन्द्रात् कान्ततरैर्मुखैः। मेखलानां निनादेन नूपुराणाञ्च निस्वनैः ॥ ३६ ॥ अङ्के परमनारीणां सुखसुप्तो विबुध्यते। नवमे क्रतुराजस्य वाजिमेधस्य भारत ॥ ३७ ॥ काञ्चनस्तम्भनिर्व्यूहं वैदूर्य्यकृतवेदिकम्। जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्वतो वृतम् ॥ ३८ ॥ सेवितं चाप्सरःसङ्घैर्गन्धर्वैर्दिविचारिभिः। विमानं समधिष्ठाय श्रिया परमया ज्वलन् ॥३९॥ दिव्यमालाम्बरधरो दिव्यचन्दनभूषितः। मोदते दैवतैः सार्द्धं दिवि देव इवापरः ॥ ४० ॥ दशमं पारणं प्राप्य द्विजातीनभिवन्द्य च। किङ्किणीजालनिर्घोषं पताकाध्वजशोभितम् ॥ ४१ ॥ रत्नवेदिकसम्बाधं वैदूर्य्यमणितोरणम्। हेमजालपरिक्षिप्तं प्रवालवलभीमुखम् ॥ ४२ ॥ गन्धर्वैर्गीतकुशलैरप्सरोभिश्च शोभितम्। विमानं सुकृतावासं सुखेनैवोपपद्यते ॥४३॥ मुकुटेनाग्निवर्णेन जाम्बूनदविभूषिणा। दिव्यचन्दनदिग्धाङ्गो

दिव्यमाल्यविभूषितः ॥ ४४ ॥ दिव्यान् लोकान् विचरति दिव्यै-र्भोगैः समन्वितः । विबुधानां प्रसादेन श्रिया परमया वृतः ॥४५॥ अथ वर्षगणानेवं स्वर्गलोके महीयते । अथ गन्धर्वसहितः सह-स्राण्येकविंशतिम् ॥ ४६ ॥ पुरन्दरपुरे रम्ये शक्रेण सह मोदते । दिव्ययानविमानेषु लोकेषु विविधेषु च ॥ ४७ ॥ दिव्यनारीगणा-कीर्णो निवसत्यमरो यथा । ततः सूर्यस्य भवने चन्द्रस्य भवने तथा ॥ ४८ ॥ शिवस्य भवने राजन् विष्णोर्याति सलोकताम् । एवमेतन्महाराज नात्र कार्या विचारणा ॥ ४९ ॥ श्रद्दधानेन वै भाव्यतेवमाह गुरुर्मम । वाचकस्य तु दातव्यं मनसा यद्यदि-च्छति ॥ ५० ॥ हस्त्यश्वरथयानानि वाहनानि विशेषतः । कटके कुण्डले चैव ब्रह्मसूत्रं तथापरम् ॥ ५१ ॥ वस्त्रञ्चैव विचित्रञ्च गन्धञ्चैव विशेषतः । देववत् पूजयेत्तन्तु विष्णुलोकमवाप्नुयात् ॥ ५२ ॥ अतः परं प्रवक्ष्यामि यानि देयानि भारते । वाच्यमाने तु विप्रेन्द्रे राजन् पर्वणि पर्वणि ॥ ५३ ॥ जातिं देशञ्च सत्यञ्च माहात्म्यं भरतर्षभ । धर्मवृत्तिञ्च विज्ञाय क्षत्रियाणां नराधिप ॥ ५४ ॥ स्वस्तिवाच्य द्विजानादौ ततः कार्य्यं प्रवर्त्तिते । समाप्ते पर्वणि ततः स्वशक्त्या पूजयेद्द्विजान् ॥ ५५ ॥ आदौ तु वाचकञ्चैव वस्त्रगन्धसमन्वितम् । विधिवद्भोजयद्राजन् मधुपायसमुत्तमम् ॥५६॥ ततो मूलफलप्रायं पायसं मधुसर्पिषा । आस्तीके भोजयेद्राजन् दद्याच्चैव गुड़ोदनम् ॥५७॥ अपूपैश्चैव पूपैश्च मोदकैश्च समन्वितम् । सभापर्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ॥ ५८ ॥ आरण्यके मूलफलैस्तर्पयेत्तु द्विजोत्तमान् । अरणीपर्व आसाद्य जलकुम्भं प्रदापयेत् ॥ ५९ ॥ तर्पणानि च मुख्यानि धान्यमूलफलानि च । सर्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ॥ ६० ॥ विराटपर्वणि तथा वासांसि विविधानि च । उद्योगे भरतश्रेष्ठ सर्वकामगुणा-न्वितम् ॥ ६१ ॥ भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् ।

भीष्मपर्वणि राजेन्द्र दत्त्वा यानमनुत्तमम् ॥ ६२ ॥ ततः सर्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम् । द्रोणपर्वणि विप्रेभ्यो भोजनं परमार्चितम् ॥ ६३ ॥ शय्याश्च देया राजेन्द्र चापान्यसिवरास्तथा । कर्णपर्वण्यपि तथा भोजनं सर्वकामिकम् ॥ ६४ ॥ विप्रेभ्यः संस्कृतं सम्यक् दद्यात् संयतमानसः । शल्यपर्वणि राजेन्द्र मोदकैः सगुड़ौदनैः ॥ ६५ ॥ अपूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् । गदापर्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् ॥ ६६ ॥ स्त्रीपर्वणि तथा रत्नैस्तर्पयेत्तु द्विजोत्तमान् । घृतौदनं पुरस्ताच्च ऐषीके दापयेत् पुनः ॥ ६७॥ ततः सर्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम् । शान्तिपर्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ॥ ६८ ॥ आश्वमेधिकं समासाद्य भोजनं सार्वकामिकम् । तथाश्रमनिवासे तु हविष्यं भोजयेद्द्विजान् ॥ ६९ ॥ मौसले सर्वगुणिकं गन्धमाल्यानुलेपनम् । महाप्रस्थानिके तद्वत् सार्वकामगुणान्वितम् ॥ ७० ॥ स्वर्गपर्वण्यपि तथा हविष्यं भजयेद्द्विजान् । हरिवंशसमाप्तौ तु सहस्रं भोजयेद्द्विजान् ॥ ७१ ॥ गामेकां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत् । तदर्द्धेनापि दातव्या दरिद्रेष्वपि पार्थिव ॥ ७२ ॥ सर्वपर्वसमाप्तौ तु पुस्तकं वै विचक्षणः । सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ॥ ७३ ॥ हरिवंशे पर्वणि च पायसं तत्र भोजयेत् । पारणे पारणे राजन् यथावद्भरतर्षभ ॥ ७४ ॥ समाप्य सर्वाः प्रयतः संहिताः शास्त्रकोविदः । शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृतः ॥ ७५॥ शुक्लाम्बरधरः स्रग्वी शुचिर्भूत्वा स्वलंकृतः । अर्चयेत यथान्यायं गन्धमाल्यैः पृथक् पृथक् ॥ ७६ ॥ संहितापुस्तकान्राजन् प्रयतः सुसमाहितः । भक्ष्यैर्मांसैश्च पेयैश्च कामैश्च विविधैः शुभैः ॥ ७७ ॥ हिरण्यञ्च सुवर्णञ्च दक्षिणामथ दापयेत् । देवताः कीर्त्तयेत् सर्वा नरनारायणौ तथा ॥ ७८ ॥ ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान् । तर्पयेद्विविधैः कामैर्दानैश्चोच्चावचैस्तथा ॥ ७९ ॥

अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः। प्राप्नुयाच्च क्रतुफलं तथा पर्वणि पर्वणि ॥ ८०॥ वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः। भविष्यं श्रावयेद्विद्वान् भारतं भरतर्षभ ॥ ८१ ॥ भुक्तवत्सु द्विजेन्द्रेषु यथावत् संप्रदापयेत्। वाचकं भरतश्रेष्ठ भोजयित्वा स्वलंकृतम् ॥ ८२ ॥ वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा। ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्वदेवताः ॥ ८३ ॥ ततो हि भरणं कार्य्यं द्विजानां भरतर्षभ। सर्वकामैर्यथान्यायं साधुभिश्च पृथग्विधैः ॥ ८४ ॥ इत्येष विधिरुद्दिष्टो मया ते द्विपदां वर। श्रद्दधानेन वै भाव्यं यन्मां त्वं परिपृच्छसि ॥ ८५ ॥ भारतश्रवणे राजन् पारणे च नृपोत्तम। सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता ॥ ८६ ॥ भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत्। भारतं भवने यस्य तस्य हस्तगतो जयः ॥ ८७ ॥ भारतं पावनं पुण्यं भारते विविधाः कथाः। भारतं सेव्यते देवैर्भारतं परमं पदम् ॥ ८८ ॥ भारतं सर्वशास्त्राणामुत्तमं भरतर्षभ। भारतात् प्राप्यते मोक्षस्तत्त्वमेतद्ब्रवीमि ते ॥ ८९ ॥ महाभारतमाख्यानं क्षितिं गाञ्च सरस्वतीम्। ब्राह्मणान् केशवञ्चैव कीर्त्तयन्नावसीदति ॥९०॥ वेदे रामायणे पुण्ये भारते भरतर्षभ। आदौ चान्ते च मध्ये च हरिः सर्वत्र गीयते ॥ ९१ ॥ यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः। तत् श्रोतव्यं मनुष्येण परं पदमिहेच्छता ॥ ९२॥ एतत् पवित्रं परममेतद्धर्मनिदर्शनम्। एतत् सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ॥ ९३ ॥ कायिकं वाचिकञ्चैव मनसा समुपार्ज्जितम्। तत् सर्वं नाशमायाति तमः सूर्य्योदये यथा ॥ ९४ ॥ अष्टादशपुराणानां श्रवणाद्यत् फलं लभेत्। तत् फलं समवाप्नोति वैष्णवो नात्र संशयः ॥ ९५ ॥ स्त्रियश्च पुरुषाश्चैव वैष्णवं पदमाप्नुयुः। स्त्रीभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः ॥ ९६ ॥ दक्षिणा चात्र देया वै निष्कपञ्च सुवर्णकम्। वाचकाय यथाशक्त्या यथोक्तं

फलमिच्छता ॥ ९७ ॥ स्वर्णशृङ्गीञ्च कपिलां सवत्सां वस्त्रसं-
स्कृताम् । वाचकाय च दद्याद्धि आत्मनः श्रेयमिच्छता ॥ ९८ ॥
अलङ्कारं प्रदद्याच्च पुण्यो वै भरतर्षभ । कर्णस्याभरणं दद्यात्
दानञ्चैव विशेषतः ॥ ९९ ॥ भूमिदानं समाददात् वाचकाय नरा-
धिप । भूमिदानसमं दानं न भूतं न भविष्यति ॥ १०० ॥ शृणोति
श्रावयेद्वापि सततञ्चैव यो नरः । सर्वपापविनिर्मुक्तो वैष्णवं पद-
माप्नुयात् ॥ १०१॥ पितॄनुद्धरते सर्वानेकादश समुद्भवान् । आत्मानं
ससुतञ्चैव स्त्रियञ्च भरतर्षभ ॥ १०२ ॥ दशांशश्चैव होमोऽपि
कर्त्तव्योऽत्र नराधिप । इदं मया तवाग्रे च प्रोक्तं सर्वं नरर्षभ
॥ १०३ ॥ य इदं शृणुयाद्भक्त्या महाभारतमादितः । ब्रह्महा
गुरुतल्पी च सुरापस्तेयकारकः । अपि चाण्डालयोनिश्च सोऽपि
पापात् प्रमुच्यते ॥ १०४ ॥ विधूय सर्वपापानि तमांसीव दिवा-
करः । मोदते विष्णुलोके स विष्णुवन्नात्र संशयः ॥ १०५ ॥

इति स्वर्गारोहणिकपर्वणि सर्वपर्वानुकीर्त्तने
षष्ठोऽध्यायः ॥ ६ ॥

---

समाप्तञ्चेदं अष्टादशपर्व ।

---

इति महाभारतमाहात्म्यं समाप्तम् ।

---

